# शारदातिलकतन्त्रम्



डॉ० सुधाकर मालवीय

॥ श्रीः ॥

व्रजजीवन प्राच्यभारती ग्रन्थमाला
१००

श्रीलक्ष्मणदेशिकेन्द्रविरचितं

# शारदातिलकतन्त्रम्

श्रीमद्राघवभट्टसत्सम्प्रदायकृत-'पदार्थादर्शा'भिधा-व्याख्यासहितम्

'सुधा'-हिन्दीव्याख्योपेतञ्च

(द्वितीयो भागः)

(११ - २५ पटलात्मकः)

सम्पादक एवं व्याख्याकार

**डॉ० सुधाकर मालवीय**

एम. ए., पीएच्. डी., साहित्याचार्य
संस्कृत-विभाग : कला-संकाय
काशी हिन्दू विश्वविद्यालय, वाराणसी




**चौखम्बा संस्कृत प्रतिष्ठान**
दिल्ली

प्रकाशक

**चौखम्बा संस्कृत प्रतिष्ठान**

( भारतीय संस्कृति एवं साहित्य के प्रकाशक तथा वितरक )

38 यू . ए . बंगलो रोड, जवाहरनगर

पो० बा० नं० 2113

दिल्ली 110007

फोन : 3956391



प्रथम संस्करण 2001

(1-2 भाग सम्पूर्ण)

मूल्य 600.00

अन्य प्राप्तिस्थान

**चौखम्बा सुरभारती प्रकाशन**

के० 37/117, गोपालमन्दिर लेन

पो० बा० नं० 1129, वाराणसी 221001

फोन : 335263, 333371

*

प्रधान वितरक

**चौखम्बा विद्याभवन**

चौक ( बनारस स्टेट बैंक भवन के पीछे )

पो० बा० नं० 1069, वाराणसी 221001

फोन : 320404

---

*कम्प्यूटर टाइप सेटर :*

चित्तरञ्जन कम्प्यूटर वर्क्स

नई दिल्ली

*मुद्रक :*

ए० के० लिथोग्राफर

दिल्ली

The

VRAJAJIVAN PRACHYABHARATI GRANTHAMALA

100

# ŚĀRADĀTILAKA-TANTRAM

**Of**

## LAKṢMAṆA DEŚIKENDRA

**With the Sanskrit Commentary 'Padārthādarśa' of Rāghava Bhaṭṭa**

**&**

**'Sudhā' Hindi Translation**

**PART TWO**
**(From 11 to 25 Paṭalas)**

Edited & Translated By

Dr. SUDHAKAR MALAVIYA

*M. A., Ph. D. Sahityacarya*
Department of Sanskrit : Arts Faculty,
Banaras Hindu University
Varanasi - 5




CHAUKHAMBA SANSKRIT PRATISHTHAN
DELHI

*Publishers:*

© **CHAUKHAMBA SANSKRIT PRATISHTHAN**

*( Oriental Publishers & Distributors )*

38 U. A. Bungalow Road, Jawaharnagar

Post Box No. 2113

DELHI 110007

*Telephone : 3956391*

First Edition

2001

*Also can be had of*

**CHAUKHAMBA SURBHARATI PRAKASHAN**

K. 37 / 117, Gopal Mandir Lane

Post Box No.1129

VARANASI 221001

*Telephone* { *335263* / *333371*

*

*Sole Distributors :*

**CHOWKHAMBA VIDYABHAWAN**

CHOWK ( Behind The Benares State Bank Building )

Post Box No. 1069

VARANASI 221001

*Telephone : 320404*

---

*Computer Type-setters :*
**Chittaranjan Computer Works**
**New Delhi**

*Printers :*
**A. K. Lithographers**
**Delhi**

# समर्पणम्



पीताम्बरापीठ दतिया के स्वामी जी को समर्पित श्रद्धा सुमन *

— सुधाकर मालवीय

# अथैकादशः पटलः

अथ दुर्गाप्रकरणम्

ततो दुर्गामनुं वक्ष्ये दृष्टादृष्टफलप्रदम् ।
मायाऽत्रिः कर्णबिन्द्वाढ्यो भूयोऽसौ सर्गवान् भवेत् ॥ १ ॥
पञ्चान्तकः प्रतिष्ठावान् मारुतो भौतिकासनः ।
तारादिहृदयान्तोऽयं मन्त्रो वस्वक्षरात्मकः ॥ २ ॥

मन्त्रः । ऋष्यादिकथनम्

ऋषिश्च नारदश्छन्दो गायत्रं देवता मनोः ।
दुर्गा समीरिता सद्भिर्दुरितापन्निवारिणी ॥ ३ ॥

एवं नित्यामन्त्रानुक्त्वा द्वादशगुणिते दुर्गाबीजस्योक्तत्वात् दुर्गामन्त्रान् वक्तुमुपक्रमते तत इति । मन्त्रमुद्धरति मायेति । माया शक्तिबीजम् । अत्रिर्दकारः कर्ण उकारः बिन्दुरनुस्वार एतदाढ्य इत्यनेन दुं । भूयोऽसौ दुकारः सर्गवान् विसर्गयुक्तः । अनेन एतादृशमपि बीजमिति सूचितम् । एतदर्थमेव सर्गवानित्युक्तिः । मन्त्रे तु रेफ एव । उपसर्गस्य तादृग्रूपत्वात् । पञ्चान्तको गकारः । प्रतिष्ठावानाकारयुक्तः । तेन गा इति । मारुतो यकारः । भौतिक ऐकारस्तदासनस्तेन यै ।

तदुक्तम्— तारमायास्वबीजानि दुर्गायै हृदयान्तिकः । इति ।

साम्प्रदायिकाः मायाबीजानन्तरं कामबीजमाहुः । दुं बीजं माया शक्तिः । दुरितेत्यादिना विनियोगोक्तिः ॥ १-३ ॥

१० वें पटल में नित्या के मन्त्रों को कहने के पश्चात् अब इस ग्यारहवें पटल में दुर्गा के मन्त्रों को कहने के लिये उपक्रम करते हैं—अब मैं दृष्ट तथा अदृष्ट फल देने वाले दुर्गा के मन्त्रों को कहता हूँ । माया (ह्रीँ) कर्ण (उकार) तथा बिन्दु से युक्त अत्रि (दकार) पुन: उकार तथा विसर्ग युक्त दकार, तदनन्तर पञ्चान्तक (गकार) उसे प्रतिष्ठा (आकार) से युक्त कर तदनन्तर मारुत (यकार) उसे भौतिकासन (ऐ) से युक्त कर उसके अन्त में हृदय (नम:) शब्द तथा आदि में प्रणव, इस प्रकार आठ अक्षरों से युक्त दुर्गा मन्त्र का उद्धार कहा गया ॥१-२॥

**विमर्श**—इसका **स्वरूप** इस प्रकार होगा—'ॐ ह्रीँ दुं दुर्गायै नम:' ।

इस अष्टाक्षर दुर्गा मन्त्र के नारद ऋषि हैं, गायत्री छन्द है और सज्जनों के द्वारा पाप तथा दु:ख को दूर करने वाली दुर्गा इसकी देवता कही गयी हैं ॥ ३ ॥

**नमस्कारवियुक्तेन मूलमन्त्रेण साधकः ।**
**ह्रामाद्यैः सह कुर्वीत षडङ्गानि यथाविधि ॥ ४ ॥**

नमस्कारेति । मूलमन्त्रेण नमस्कारवियुक्तेन । ह्रामाद्यैः ह्रांह्रीमित्याद्यैः सह षडङ्गानि कुर्वीतेति सम्बन्धः । प्रयोगस्तु—ॐ ह्रीँ दुं दुर्गायै ह्रां हृदयाय नमः । ॐ ह्रीँ दुं दुर्गायै ह्रीँ शिरसे स्वाहा इत्यादि । तदुक्तम्—

तारो माया च दुर्गायै ह्रामाद्यन्ताङ्गकल्पना । इति ।

अत्र चकारेण दुर्गाबीजस्य समुच्चय इति तट्टीकाकारैर्व्याख्यातम् । यथा—विधीति । शक्तिषडङ्गमुद्रासूचनम् ॥ ४ ॥

'नमः' शब्द को छोड़कर मूल मन्त्र के आगे 'ह्राँ' आदि दीर्घ वर्णों को लगाकर साधक षडङ्गन्यास करे । यथा—'ॐ ह्रीँ दुं दुर्गायै ह्राँ हृदयाय नमः, ॐ ह्रीँ दुं दुर्गायै ह्रीँ शिरसे स्वाहा' इति शिरसि, इत्यादि ॥ ४ ॥

दुर्गाध्यानम् । पुरश्चरणादिकथनम्

**सिंहस्था शशिशेखरा मरकतप्रख्यैश्चतुर्भिर्भुजैः**
**शङ्खं चक्रधनुःशरांश्च दधती नेत्रैस्त्रिभिः शोभिता ।**
**आमुक्ताङ्गदहारकङ्कणरणत्काञ्चीरणन्नूपुरा**
**दुर्गा दुर्गतिहारिणी भवतु वो रत्नोल्लसत्कुण्डला ॥ ५ ॥**

सिंहस्थेति । आयुधध्यानं वामाद्यूर्ध्वयोराद्ये अधस्थयोः परे । आमुक्ता धृता अङ्गदादयो ययेति विग्रहः । दुर्गतिः दुष्टा गतिर्दारिद्र्यं च । सर्वदुर्गामन्त्रेषु ध्यानानन्तरमियं मुद्रा दर्शनीया—

मुष्टिं बद्ध्वा कराभ्यां तु वामस्योपरि दक्षिणम् ।
कृत्वा शिरसि सम्पूज्या दुर्गामुद्रेयमीरिता ॥ इति ।

आयुधमुद्रादर्शनं च ॥ ५ ॥

अब भगवती **दुर्गा का ध्यान** कहते हैं—जो सिंह पर आरूढ़ हैं, जिनके मस्तक में चन्द्रमा विराजमान हैं, जो मरकतमणि के सदृश अपने चार भुजाओं में शङ्ख, चक्र, धनुष और बाण धारण की हैं, जो तीन नेत्रों से सुशोभित हो रही हैं, जिनके बाहुप्रदेश में केयूर, गले में हार, कटि तट में काञ्ची तथा पैरों में शब्दायमान नूपुर एवं कानों में रत्नजटित कुण्डल शोभित हो रहे हैं ऐसी दुर्गा आपकी समस्त दुर्गतियों, दुष्ट गति एवं दारिद्र्य को नष्ट करने वाली होवें ॥ ५ ॥

**वसुलक्षं जपेन्मन्त्रं तिलैर्मधुरलोलितैः ।**
**पयोन्धसा वा जुहुयात्तत्सहस्रं जितेन्द्रियः ॥ ६ ॥**
**पीठमित्थं यजेत् सम्यक् नवशक्तिसमन्वितम् ।**
**प्रभा माया जया सूक्ष्मा विशुद्धा नन्दिनी पुनः ॥ ७ ॥**

**सुप्रभा विजया सर्वसिद्धिदा नव शक्तयः ।**
**अज्भिर्ह्रस्वत्रयक्लीबरहितैः पूजयेदिमाः ॥ ८ ॥**

वसुलक्षमष्टलक्षम् । पयोन्धसा पायसेन । तत्सहस्रमष्टसहस्रम् । इत्थं वक्ष्यमाणप्रकारेण । सर्वसिद्धिदेति शक्तिनाम । आसां ध्यानमन्यत्रोक्तम्—

आदिस्वरैर्बिन्दुयुतैरेकाराद्यैः षडक्षरैः ।
एताः सर्वा जवापुष्परक्तवर्णाः स्मिताननाः ॥
चापबाणाञ्जलिकराः शुक्लमाल्यानुलेपनाः ।
आत्मत्रयान्ते सम्पूज्या दलमध्येष्वनुक्रमाद् ॥ इति ।

अज्भिरिति । ह्रस्वत्रयं अ इ उ क्लीबाश्च । तद्रहितैरज्भिः स्वरैः नवभिरित्यर्थः । प्रयोगस्तु । आं प्रभायै नम इत्यादि ॥ ६-८ ॥

साधक अपनी इन्द्रियों को वश में रखकर उपर्युक्त दुर्गा मन्त्र का आठ लाख जप करे और त्रिमधुर मिश्रित तिलों से अथवा पायस से एक सहस्र होम करे ॥ ६ ॥

तदनन्तर नव शक्तियों से युक्त पीठ की इस प्रकार पूजा करे—प्रभा, माया, जया, सूक्ष्मा, विशुद्धा, नन्दिनी, सुप्रभा, विजया और सर्वसिद्धिदा—ये नव शक्तियाँ हैं । 'अ इ उ'—इन तीन ह्रस्वों तथा 'ऋ ॠ ऌ ॡ'—इन चार क्लीव वर्णों को छोड़कर शेष नव स्वरों में एक एक स्वर के क्रम से इन शक्तियों की पूजा करे । यथा—'आं प्रभायै नमः प्रभां पूजयामि', 'ई मायायै नमः मायां पूजयामी'त्यादि ॥ ७-८ ॥

### सिंहमन्त्रः

**प्रणवानन्तरं वज्रनखदंष्ट्रायुधाय च ।**
**महासिंहाय वर्मास्त्रं नतिः सिंहमनुर्मतः ॥ ९ ॥**
**दद्यादासनमेतेन मूर्त्तिं मूलेन कल्पयेत् ।**
**तस्यां सम्पूजयेन्मूर्तौ देवीमावाह्य मन्त्रवित् ॥ १० ॥**

सिंहमन्त्रमाह प्रणवेति । प्रणवानन्तरं प्रणवमुच्चार्य । वज्रनखदंष्ट्रायुधायेति सिंहाय इति च स्वरूपम् । वर्म हुँ अस्त्रं फट् । नतिर्नमःपदम् ॥ ९-१० ॥

इसके बाद भगवती की पूजा के लिये उनके वाहनभूत सिंह को आसन प्रदान करे । उसका मन्त्र इस प्रकार है—प्रथम प्रणव तदनन्तर 'वज्रनखदंष्ट्रायुधाय महासिंहाय' यह पद, इसके अनन्तर वर्मास्त्र (हुँ फट्) यह सिंह का मन्त्र है । इसका स्वरूप इस प्रकार है—'ॐ वज्रनखदंष्ट्रायुधाय महासिंहाय हुँ फट्' ॥ ९ ॥

इस मन्त्र को पढ़कर भगवती की पूजा के लिये सिंहासन प्रदान करे, फिर मूल मन्त्र पढ़ कर देवी का आवाहन करे । तदनन्तर मन्त्रवेत्ता उसी मूर्त्ति में देवी का आवाहन कर पूजा करे ॥ १० ॥

अङ्गावृतिं पुराऽभ्यर्च्य शक्तीः पत्रेषु पूजयेत् ।
जया च विजया कीर्त्तिः प्रीतिः पश्चात् प्रभा पुनः॥ ११ ॥
श्रद्धा मेधा श्रुतिः प्रोक्ता स्वनामाद्यक्षरादिकाः ।
पत्राग्रेष्वर्चयेदष्टावायुधानि यथाक्रमात् ॥ १२ ॥
चक्रशङ्खगदाखड्गपाशाङ्कुशशरान् धनुः ।
लोकेश्वरांस्ततो बाह्ये तेषामस्त्राण्यनन्तरम् ॥ १३ ॥

अभ्यर्च्येति तुर्योक्तरीत्या । जयेति । आसां ध्यानमुक्तमन्यत्र—

भ्राजन्मरकतप्रख्याः सर्वाश्च शशिभूषणाः ।
दधत्यः सायकं हस्तैः शूलकार्मुकतर्जनीः ।
जयाद्याः पूजनीयाः स्युर्जमित्याद्यर्णसंयुताः ॥ इति ॥ ११-१३ ॥

सर्वप्रथम अङ्ग की पूजा करे, पुनः पत्रों पर दुर्गा की शक्तियों की पूजा करे । जया, विजया, कीर्त्ति, प्रीति, प्रभा, श्रद्धा, मेधा और श्रुति—ये ८ भगवती की महाशक्तियाँ हैं । इनके नामों के आद्य अक्षरों को लगा कर क्रमशः एक एक शक्ति की पूजा करे । यथा—जं जयायै नमः इत्यादि तदनन्तर पत्र के अग्रभाग में इनके आयुधों की भी पूजा कर ॥ ११-१२ ॥

चक्र, शङ्ख, गदा, खड्ग, पाश, अंकुश, बाण तथा धनुष—ये आठ भगवती के आयुधों के नाम हैं जिन्हें उक्त शक्तियों में प्रत्येक ने अपनी आठों भुजाओं में धारण किया है । इस प्रकार आयुध की पूजा कर पत्र के बाहर लोकपालों की और उसके भी बाहर लोकपालों के अस्त्रों की पूजा करे ॥ १३ ॥

### दुर्गापूजाप्रयोगः

इत्थं जपादिभिर्मन्त्री मन्त्रे सिद्धे विधानवित् ।
कुर्यात् प्रयोगानेतेन मनुना स्वमनीषितान् ॥ १४ ॥

विधानवित् प्रयोगान् कुर्वीतेति । अनेनैतदुक्तं भवति । श्रीबीजादिः श्रिये । मृत्युञ्जयादिः दीर्घायुषि । नृसिंहबीजादिः वैरिजये । सर्वपुटितत्वे सर्वकामावाप्तिः । कामादित्वे पुत्रावाप्तिरिति । एतद्बीजयोगः शक्त्यनन्तरं ज्ञेयः ॥ १४ ॥

विधानवेत्ता इस प्रकार से प्रयोग कर सर्वप्रथम मन्त्र को सिद्ध करे । तदनन्तर अपनी अभीष्ट सिद्धि के लिये दुर्गा मन्त्रों का प्रयोग करे ॥ १४ ॥

प्रतिष्ठाप्य विधानेन कलशान् नव शोभनान् ।
रत्नहेमादिसंयुक्तान् पदेषु नवसु स्थितान् ॥ १५ ॥
मध्यस्थे पूजयेद् देवीमितरेषु जयादिकाः ।
सम्पूज्य गन्धपुष्पाद्यैरभिषिञ्चेन्नराधिपम् ॥ १६ ॥
राजा विजयते शत्रून् साधको विजयश्रियम् ।

प्राप्नोति रोगी दीर्घायुः सर्वव्याधिविवर्जितः ॥ १७ ॥
बन्ध्याऽभिषिक्ता विधिना लभते तनयं वरम् ।
मन्त्रेणाऽनेन संजप्तमाज्यं क्षुद्रज्वरापहम् ।
गर्भिणीनां विशेषेण जप्तं भस्मादिकं तथा ॥ १८ ॥

प्रतिष्ठाप्य विधानेनेति मातृकापटलोक्तविधिना । हेमादीत्यादिशब्देन शाक्तं गन्धाष्टकम् । पदेषु नवसु इति नवनाभमण्डलस्येति शेषः । गन्धपुष्पाद्यैरित्याद्यशब्देन धूपदीपनैवेद्यानि । सम्पूज्येत्युपलक्षणम् । तेन सम्पातयुक्ताः जप्ताश्चेति ज्ञेयम् ।

यदाहुः— कषायसलिलैः कुम्भानभिपूर्य यथाविधि ।
त्रिसहस्रं जपेन्मन्त्रं घृतसम्पातसंयुतम् ॥
तैश्चाभिषिक्तः शुद्धात्मा पूर्वेद्युः समुपोषितः ।
जयेच्छत्रून् क्षणाद्राजा प्राप्नोति विजयं श्रियम् ॥
रोगी तु ग्रहपीडाभ्यां मुच्यते व्याधिभिस्तथा । इति ।

आज्यं भक्षितमिति शेषः । भस्मादिकं घृतमिति शेषः । आदिशब्दाद् गन्धपुष्पादि । तथेति क्षुद्रग्रहापहमित्यर्थः ॥ १५-१८ ॥

नवनाभ मण्डल में सुन्दर सुलक्षण नव कलशों को विधानपूर्वक स्थापित करे तदनन्तर उसमें पञ्चरत्न सुवर्ण एवं अष्टगन्ध डाले ॥ १५ ॥

प्रथम मध्य कलश में देवी की पूजा करे, फिर इतर आठ में जयादि (द्र. ११, ११-१२) आठ महाशक्तियों की पूजा करे । इस प्रकार गन्धादि से पूजित नव कलशों के जल से यदि राजा का अभिषेक किया जाय तो वह राजा अपने शत्रुओं पर विजय प्राप्त करता है, साधक पुरुष विजय और श्री दोनों प्राप्त करता है, रोगी का अभिषेक करने से उसे दीर्घायु प्राप्त होती है और वह सर्वव्याधियों से रहित हो जाता है ॥ १६-१७ ॥

बन्ध्या स्त्री का अभिषेक करने से उसे उत्तम संतान प्राप्त होती है । इस मन्त्र के द्वारा जपे गये घृत के पीने से क्षुद्र रोग तथा ज्वरादि नष्ट हो जाते हैं । इस मन्त्र से अभिमन्त्रित घृतादि का पान गर्भिणी स्त्रियों को विशेष रूप से लाभदायक होता है ॥ १८ ॥

### दुर्गायन्त्रम्

मध्ये तारे बीजमन्तःस्थसाध्यं
पत्रेष्वष्टौ मन्त्रवर्णान् विलिख्य ।
त्रिष्टुब्वीतं वेष्टितं मातृकार्णै-
र्यन्त्रं दौर्गं भूपुरस्थं विदध्यात् ॥ १९ ॥
क्षुद्रभूतमहारोगचौरसर्पनिवारणम् ।
विजयश्रीप्रदं पुंसां गर्भिणीनां सुखप्रदम् ॥ २० ॥

**यन्त्रमाह मध्य इति । मध्ये तारे इति व्यधिकरणे सप्तम्यौ । मध्ये कर्णिकायाम्। तारे प्रणवे । बीजं दौर्गम् । अन्तःस्थसाध्यं मध्यस्थितसाध्यसाधकनामकर्मसहितं विलिख्येति सम्बन्धः । त्रिष्टुप् जातवेदाः स द्वाविंशे वक्ष्यते ॥ १९-२० ॥**

अब **दुर्गा का यन्त्र** कहते हैं—कर्णिका के मध्य में प्रणव से संपुटित दुर्गा बीज, मध्य में साध्य, उसका कार्य तथा साधक का नाम लिखे । तदनन्तर आठ पत्रों पर दुर्गा मन्त्र के आठों अक्षरों को एक एक अक्षर के क्रम से लिखे । फिर उसे 'त्रिष्टुप्' आदि मन्त्र (द्र. २२. १४०) द्वारा वेष्टित करे, तदनन्तर भूपुर में मातृकावर्णों को लिखे इस प्रकार दुर्गा यन्त्र का निर्माण करे ॥ १९ ॥

यह दुर्गा यन्त्र क्षुद्र ग्रह, भूत, महारोग, चोर तथा सर्पों का निवारण करने वाला है । इससे विजय तथा श्री प्राप्त होती है । यह गर्भिणियों को सुख देने वाला है ॥ २० ॥

**महिषमर्दिनीमन्त्रः**

**भान्तं वियत् सनयनं श्वेतो मर्दिनि ठद्वयम् ।**
**अष्टाक्षरीयमाख्याता विद्या महिषमर्दिनी ॥ २१ ॥**
**महिषहिंसिके हुँफट्हृदयं परिकीर्त्तितम् ।**
**महिषशत्रो शार्ङ्गी हुँफट्शिरोऽङ्गं समुदाहृतम् ॥ २२ ॥**
**महिषं भीषयद्वन्द्वं हुँफडन्तः शिखामनुः ।**
**महिषं हनयुग्मान्ते देवि हुँफट्तनुछदम् ॥ २३ ॥**
**महिषान्ते सूदनि हुँफडन्तमस्त्रमीरितम् ।**
**मन्त्रैरेतैर्जातियुक्तैः पञ्चाङ्गानि प्रकल्पयेत् ॥ २४ ॥**

**महिषमर्दिनीमन्त्रमाह भान्तमिति । भान्तं मकारः वियत् हकारः सनयनमिकारसहितस्तेन महि । श्वेतः ष । मर्दिनि स्वरूपम् । ठद्वयं स्वाहा ।**

**उक्तं हि नारायणीये—विषं हि मज्जा कालोऽग्निरात्रिनिष्ठो नि ठद्वयम् । इति । मं बीजं स्वाहा शक्तिः । अस्य शाकवत्सो नाम ऋषिः । प्रकृति छन्दः । अन्ये मार्कण्डेयमृषिमाहुः । शिखावर्मणो मन्त्रेऽपि महिषशब्दो द्वितीयान्तो ज्ञेयः ॥२१-२४॥**

अब **महिषमर्दिनि का मन्त्र** कहते हैं—मान्त (मकार), सनयन (इकार) सहित वियत् (हकार), तदनन्तर श्वेत (ष), 'मर्दि्दनि' पद, पुनः 'स्वाहा'—यह आठ अक्षरों वाली महिषमर्दिनी विद्या कही जाती है । इसका स्वरूप—'महिषमर्दिनि स्वाहा' हुआ ॥ २१ ॥

महिषमर्दिनी का न्यास इस प्रकार है—'महिषहिंसिके हुँ फट्' इति हृदि, 'महिषशत्रो शार्ङ्गी हुँ फट्' इति शिरसि, 'महिषं भीषय भीषय हुँ फट्' इति शिखायै वषट्, 'महिषं हन हन देवि हुँ फट्' कवचाय हुँ, 'महिषसूदनि हुँ फट्' अस्त्राय फट्—इस प्रकार पञ्चाङ्गन्यास करे ॥ २२-२४ ॥

महिषमर्दिनीध्यानम् । पुरश्चरणादिकथनम्

**गारुडोपलसन्निभां मणिमौलिकुण्डलमण्डितां**
**नौमि भालविलोचनां महिषोत्तमाङ्गनिषेदुषीम् ।**
**चक्रशङ्खकृपाणखेटकबाणकार्मुकशूलकान्**
**तर्जनीमपि बिभ्रतीं निजबाहुभिः शशिशेखराम्॥ २५ ॥**

ध्यानमाह गारुडेति । गारुडोपलः गरुडोद्गारमणिः । आयुधानि दक्षाद्यूर्ध्वयोराद्ये तदधोधस्थयोः परे परे । तर्जनीमिति तर्जनीमुद्राम् । तल्लक्षणं यथा—

तर्जन्येकाकिनी तूर्ध्वा शेषाः संमिलितास्त्वधः ।
मुद्रेयं तर्जनी प्रोक्ता वक्तुः श्रोतुस्तु भीतिदा ॥ इति ॥

तदुक्तमीशानसंहितायाम्—

ध्यायेच्छ्यामां महादुर्गां सर्वाभरणभूषिताम् ।
जटामुकुटशोभाढ्यां स्फुरच्चन्द्रकलान्विताम् ॥
पीताम्बरधरां देवीं पीनोन्नतकुचद्वयाम् ।
चक्रशङ्खलसद्धस्तां तदधः खड्गखेटकौ ॥
बाणचापौ च तदधः सशूलां तर्जनीमधः । इति ॥ २५ ॥

अब **महिषमर्दिनि का ध्यान** कहते हैं—गारुडोत्पल (हरिन्मणि) के समान जिनके शरीर की कान्ति हैं । जो मणिमय मुकुट तथा मणिमय कुण्डलों से शोभित हैं जिनके भाल प्रदेश में विलोचन हैं, जो महिष के उत्तमाङ्ग (शिरः प्रदेश) पर विराजमान हैं । अपने आठ हाथों में चक्र, शङ्ख, कृपाण, खेटक, बाण, धनुष, शूल और तर्जनी मुद्रा धारण की हैं ऐसी शशिशेखरा भगवती को मैं नमस्कार करता हूँ ॥ २५ ॥

**अष्टलक्षं जपेन्मन्त्रं तत्सहस्रं तिलैः शुभैः ।**
**हुत्वा प्रागीरिते पीठे यजेन्महिषमर्दिनीम् ॥ २६ ॥**

प्रागीरिते अव्यवहिते दौर्गे पीठे ॥ २६ ॥

उपर्युक्त महिषमर्दिनी मन्त्र का आठ लाख जप करना चाहिए । तदनन्तर आठ सहस्र संख्या में उत्तम तिलों का होम करे । हवन के पश्चात् बिना विलम्ब किये उसी दुर्गा पीठ पर महिषमर्दिनी की पूजा करे ॥ २६ ॥

**सम्पूज्याऽङ्गानि पत्रेषु दुर्गाख्यां वरवर्णिनीम् ।**
**आर्याह्वयां तृतीयां च चतुर्थीं कनकप्रभाम् ॥ २७ ॥**
**पञ्चमीं कृत्तिकासञ्ज्ञां षष्ठीमप्यभयप्रदाम् ।**
**कन्यां सुरूपां प्रभजेन्मन्त्री दीर्घस्वरैः क्रमात् ॥ २८ ॥**

सम्पूज्याऽङ्गानीति केसरेष्विति शेषः । पत्रेष्वित्यग्रिमेण सम्बध्यते । दीर्घ-

**स्वरैरिति क्लीबद्वयान्त्यरहितैरिति शेषः । दीर्घशब्देन पारिभाषिकग्रहणम् । तेन आ ई ऊ ए ऐ ओ औ अः एभिरष्टभिरित्यर्थः । नारायणीये पूर्वपटले—**

**अनन्तश्चार्घियोन्यादित्युक्त्वा उत्तरपटले आद्यैः स्वरैः क्रमादित्युक्तम् । एतदभिप्रायेणैवापेक्षितार्थद्योतनिकायां व्याख्यातम् आद्यैः आ ई ऊ ए ऐ ओ औ अः इति स्वरैरिति ॥ २७-२८ ॥**

साधक केशरों पर अङ्गपूजा करे । तदनन्तर पत्रों पर १. दुर्गा, २. वरवर्णिनी, ३. आर्य्या, ४. कनकप्रभा, ५. कृत्तिका, ६. अभयप्रदा, ७. कन्या और ८. सुरूपा —इन आठ शक्तियों की आ, ई, ऊ, ए, ऐ, ओ, औ एवं अ:—इन आठ दीर्घ वर्णों में से क्रमश एक एक दीर्घ वर्णों द्वारा मन्त्रज्ञ साधक पूजा करे ॥ २७-२८ ॥

**यजेदग्रेष्वायुधानि चक्रशङ्खासिखेटकान् ।**
**बाणं बाणासनं शूलं कपालं यादिभिः क्रमात् ॥ २९ ॥**

**अग्रेषु पत्राग्रेषु । यादिभिरिति हान्तैरित्यर्थः ॥ २९ ॥**

इसके बाद पत्र के अग्रभाग में चक्र, शङ्ख, खड्ग, खेटक, बाण, धनुष, शूल एवं कपाल की 'य र ल व श ष स ह' इन आठ अक्षरों में से एक एक अक्षर के साथ देवी के अस्त्रों की पूजा करे । यथा—'यँ चक्राय नमः' चक्रं पूजयामि इत्यादि ॥ २९ ॥

**लोकपालाः पुनः पूज्यास्तदस्त्राणि ततः परम् ।**
**वशयेत्तिलहोमेन नरान् नरपतीनपि ॥ ३० ॥**
**सिद्धार्थैर्जुहुयान्मन्त्री रोगान्मुच्यते तत्क्षणात् ।**
**पद्मैर्हुत्वा जयेच्छत्रून् दूर्वाभिः शान्तिमाप्नुयात् ॥ ३१ ॥**
**पलाशकुसुमैः पुष्टिं धान्यैर्धान्यश्रियं व्रजेत् ।**
**काकपक्षैः कृतो होमो द्वेषं वितनुते नृणाम् ॥ ३२ ॥**

**वशयेदिति कामबीजादित्वम् । मन्त्रीत्यनेन मृत्युञ्जयादित्वं सूचितम् । जयेदिति स्वबीजादित्वम् । शान्तिमिति नृसिंहादित्वम् । पुष्टिमिति तार्त्तीयादित्वम् । धान्यश्रियमिति श्रीबीजादित्वम् ॥ ३०-३२ ॥**

इसके बाद लोकपालों की तदनन्तर उनके अस्त्रों की पूजा करनी चाहिए । उपर्युक्त मन्त्र द्वारा तिल होम से साधक नर की बात क्या ? नरपतियों को भी अपने वश में कर लेता है ॥ ३० ॥

सिद्धार्थ (श्वेत सर्षप) के होम से मन्त्रवेत्ता तत्क्षण रोग से मुक्त हो जाता है। कमलों के होम से शत्रुविजय एवं दूर्वा होम से शान्ति प्राप्त होती है । पलाश पुष्पों के होम से पुष्टि तथा धान्य के होम से धान्य, श्री की वृद्धि होती है । काक के पंख के हवन से परस्पर मित्र मनुष्यों में द्वेष की अभिवृद्धि होती है ॥३१-३२॥

**मरीचहोमान् मरणं रिपुराप्नोति सर्वथा ।**
**क्षुद्रारिचोरभूताद्यान् ध्यात्वा देवीं विनाशयेत् ॥ ३३ ॥**

**मरीचेति । मरीचशब्दो दीर्घमध्योऽप्यस्ति । तथा च शब्दभेदप्रकाशे 'मरीचं मरिचं तथा' इति । मरणमिति स्वबीजादित्वम् ॥ ३३ ॥**

मरीच के होम से शत्रु सर्वथा मरण प्राप्त करता है । देवी का ध्यान कर मरीच के होम से क्षुद्र बाधा, शत्रु, चोर तथा भूतगण नष्ट हो जाते हैं ॥ ३३ ॥

**जयदुर्गामन्त्रः**

**तारो दुर्गेयुगं रक्तमन्त्यं ढान्तं सलोचनम् ।**
**द्विठान्ता जयदुर्गेयं विद्या वेद्या दशाक्षरी ॥ ३४ ॥**

**जयदुर्गामन्त्रमाह तार इति । तारः प्रणवः । दुर्गेयुगं दुर्गे दुर्गे । रक्तं रेफः । अन्त्यं क्षः ढान्तं णः सलोचनम् इकारसहितमित्युभयविशेषणम् । तेन क्षिणि । द्विठान्ता स्वाहान्ता । तदुक्तं नारायणीये—**

**तारो दुर्गेद्वयं वह्निरन्त्यं ढान्तं सदृक् शिरः । इति । अपेक्षितार्थद्योतनिकायां व्याख्यातम् । सदृगित्युभयविशेषणम् । तेन क्षिणीति । मार्कण्डेयो मुनिः बृहती छन्दः प्रणवो बीजं स्वाहा शक्तिः ॥ ३४ ॥**

अब **जयदुर्गा मन्त्र** कहते हैं—तार (प्रणव), 'दुर्गे दुर्गे' पद, रक्त (रेफ), अन्त्य (क्ष), सलोचन (इकार सहित) ढान्त (ण), तदनन्तर 'स्वाहा'—यह दश अक्षरों वाली जयदुर्गा विद्या समझनी चाहिए । 'ॐ दुर्गे दुर्गे रक्षिणि स्वाहा' यह इस मन्त्र का स्वरूप हुआ ॥ ३४ ॥

**तारादि दुर्गे हृदयं दुर्गे शिर उदीरितम् ।**
**दुर्गायै स्याच्छिखा वर्म भूतरक्षिणि कीर्त्तितम् ॥ ३५ ॥**
**तारादि दुर्गेद्वितयं रक्षिण्यक्षि समीरितम् ।**
**तारादि दुर्गेयुगलं रक्षिण्यस्त्रं समीरितम् ॥ ३६ ॥**

**तारादीति वर्मान्तं सम्बध्यते ॥ ३५-३६ ॥**

तारादि (प्रणव), पुनः 'दुर्गे' पद, इस प्रकार 'ॐ दुर्गे नमः' इति हृदि, 'ॐ दुर्गे शिरसि स्वाहा' इति शिरसि, 'ॐ दुर्गायै शिखायां वषट्' इति शिखायाम्, 'ॐ भूतरक्षिणि कवचाय हुँ' इति बाह्वोः, 'ॐ दुर्गे दुर्गे रक्षिणि नेत्रभ्यां वौषट्' इति नेत्रयोः, 'ॐ दुर्गे दुर्गे रक्षिणि अस्त्राय फट्' इति अस्त्रम् । इस प्रकार इसका षडङ्गन्यास कहा गया ॥ ३५-३६ ॥

**जयदुर्गाध्यानम् । पुरश्चरणादिकथनम्**

**कालाभ्राभां कटाक्षैररिकुलभयदां मौलिबद्धेन्दुरेखां**
**शङ्खं चक्रं कृपाणं त्रिशिखमपि करैरुद्वहन्तीं त्रिनेत्राम् ।**

**सिंहस्कन्धाधिरूढां त्रिभुवनमखिलं तेजसा पूरयन्तीं**
**ध्यायेद् दुर्गां जयाख्यां त्रिदशपरिवृतां सेवितां सिद्धिकामैः॥३७॥**

**कालेति । त्रिशिखं त्रिशूलम् । आयुधध्यानमष्टाक्षरीवत् । सिद्धिकामैरिति विनियोगोक्तिः ॥ ३७ ॥**

अब **जयदुर्गा का ध्यान** कहते हैं—जिनके शरीर की कान्ति काले काले बादलों के समान है, जिनके कटाक्ष मात्र से शत्रु समूहों को भय उत्पन्न हो जाता है, जिनके मस्तकस्थ किरीट में चन्द्रलेखा विराज रही है, जो अपने हाथों में शङ्ख, चक्र, कृपाण एवं बाण धारण की हुई हैं, जो तीन नेत्रों से युक्त एवं सिंह पर सवार हैं और अपने तेज से समस्त भुवन को प्रकाशित करती हैं, देवगणों से घिरी हुई हैं एवं सिद्धि प्राप्त करने की इच्छा से सिद्ध लोग जिनकी सेवा करते हैं इस प्रकार की स्वरूप वाली जय दुर्गा का ध्यान करना चाहिए ॥ ३७ ॥

**बाणलक्षं जपेन्मन्त्रं घृतेन जुहुयात्ततः ।**
**दशांशं संस्कृते वह्नौ ब्राह्मणानपि भोजयेत् ॥ ३८ ॥**
**अष्टाक्षरोदिते पीठे पूजयेत् पूर्ववत् सुधीः ।**
**मन्त्रं जपन् विशेद् युद्धे शत्रून् हन्याद्विशेषतः ॥ ३९ ॥**
**प्रजपेद् व्यवहारादौ तत्रापि विजयी भवेत् ।**
**अर्चयेदस्त्रशस्त्राणि जयार्थी विद्ययाऽनया ॥ ४० ॥**

**बाणलक्षं पञ्चलक्षम् । ब्राह्मणानपि भोजयेदित्यनेन पुरश्चरणे ये दश प्रकारास्ते सूचिताः । तदुक्तम्—**

**जपो होमस्तर्पणं च स्वाभिषेकोऽघमर्षणम् ।**
**सूर्यार्घ्यं जलपानं स्यात् प्रणामं देवपूजनम् ॥**
**ब्राह्मणानां भोजनं च पूर्वपूर्वदशांशतः । इति ।**

**इदं सर्वमन्त्रपुरश्चरणे ज्ञेयम् । केचन प्रकारपञ्चकमेवाहुः—**

**जपो होमस्तर्पणं च पूजा ब्राह्मणभोजनम् । इति !**

**सर्वत्र जपादिभिरित्यादिशब्दार्थोऽयमेव ज्ञेयः । अष्टाक्षरोदिते दुर्गाष्टाक्षरोदिते । सुधीरिति । अनेन अत्रापि प्रयोगे प्रणवानन्तरं स्वबीजादिप्रक्षेप इति ज्ञेयम् । अस्त्रं बाणादि । शस्त्रं खड्गादि ॥ ३८-४० ॥**

उपर्युक्त जय दुर्गा मन्त्र का पाँच लाख जप करे, घृत से उसका दशांश शुद्ध संस्कृत अग्नि में होम करें । तदनन्तर ब्राह्मणों को भोजन करावे ॥ ३८ ॥

पुनः पूर्ववत् कहे गये दुर्गा के अष्टाक्षर से बने यन्त्र पीठ पर साधक जय दुर्गा का पूजन करे । पुनः इस मन्त्र का जप करते हुये युद्ध में प्रवेश करे तो वह साधक अपने शत्रुओं का विशेष रूप से वध करता है ॥ ३९ ॥

मुकदमा विवाद या अन्य प्रकार के व्यवहार में इस मन्त्र का जप करने से विजय प्राप्त होती है, जप की आकांक्षा वाला पुरुष इस जय दुर्गा के मन्त्र से अपने अस्त्र शस्त्रों की नित्य पूजा करे ॥ ४० ॥

शूलिनीदुर्गामन्त्रः । ऋष्यादिकथनम्

ज्वलज्वलपदस्यान्ते शूलिनीति पदं वदेत्।
दुष्टग्रहं हुमस्त्रान्ते वह्निजायावधिर्मनुः॥ ४१ ॥
भूतेन्द्रियाक्षरैः प्रोक्तो ग्रहक्षुद्रादिनाशकः ।
ऋषिर्दीर्घतमाः प्रोक्तः ककुप् छन्द उदाहृतम् ॥ ४२ ॥
शूलिनी देवता प्रोक्ता समस्तसुरवन्दिता ।
दुर्गे हृद्वरदे शीर्षं विन्ध्यवासिनि तच्छिखा ॥ ४३ ॥
असुरान्ते मर्दिनि स्याद् युद्धपूर्वप्रिये पुनः।
त्रासयद्वितयं वर्म देवसिद्धसुपूजिते ॥ ४४ ॥
नन्दिनि स्याद्रक्षयुगं महायोगेश्वरि क्रमात्।
शूलिन्याद्या हुंफडन्ताः पञ्चाङ्गमनवः स्मृताः ॥ ४५ ॥

शूलिनीदुर्गामन्त्रमाह ज्वलेति । अत्र भूतानि पञ्च । इन्द्रियाणि ज्ञानकर्मेन्द्रियाणि दश । तेषां सङ्कलने पञ्चदशसंख्या भवन्ति । न तु 'अङ्कानां वामतो गतिः' इति क्रमेण मन्त्राक्षरगणना विधेया । तथा सति पञ्चोत्तरशताक्षरसंख्या भवति । भूतेन्द्रियाक्षरैः पञ्चदशाक्षरैः। हुँ बीजं स्वाहा शक्तिः । ग्रहेत्यादि विनियोगोक्तिः । ग्रहाणामष्टादशानाम् । क्षुद्राणां स्तम्भविद्वेषोत्सादोच्चाटनभ्रममारणव्याधीनाम् । आदिशब्दात् भूतप्रेतडाकिन्यादीनाम् । नाशक इत्यनेन विनियोगं वदता प्रणवशक्तिनृसिंहदुर्गाबीजपुटितत्वं वषडन्तत्वमपि सूचितम् । दुर्गे हृदिति हृन्मन्त्रः । एवं शीर्षेऽपि । तच्छिखेति । तस्य मन्त्रस्य शिखामन्त्र इत्यर्थः । युद्धपूर्वप्रिये युद्धप्रिये । देवेत्यादि महायोगेश्वरि पर्यन्तम् । अस्त्रमिति शेषः ।

'वर्मासुरान्ते मर्दिनि युद्धपूर्वप्रिये पुनः । त्रासयद्वितयं चास्त्रम्' ।

इति वा पाठः । पञ्चाङ्गमनवः क्रमात् प्रत्येकं शूलिन्याद्यां हुँफडन्ताः स्मृता इति सम्बन्धः । प्रयोगस्तु—शूलिनि दुर्गे हुँफट् हृदयाय नम इत्यादि । साम्प्रदायिकास्तु पूर्वपूर्वानुविद्धत्वमङ्गानां वदन्ति । तेन शूलिनि दुर्गे वरदे हुँ फट् शिरसे स्वाहा इत्यादि प्रयोगः । अन्ये तु कामनाविशेषेऽन्यथाऽङ्गान्याहुः ।

दुर्गे हृदयमाख्यातं वरदे तच्छिरः शिखा ।
विन्ध्यवासिनि वर्म स्यादसुरान्ते तु मर्दिनि ॥
युद्धप्रिये युतं चास्त्रं त्रासयद्वितयं भवेत् ।
एषामादौ शूलिनीति पदं तारादिकं वदेत् ॥
अवसाने तु सर्वेषां देवसिद्धसुपूजिते ।
नन्दिनि रक्षयुग्मं च महायोगेश्वरीत्यपि ॥

वर्मास्त्रबीजे चामूनि ग्रहरक्षाकराणि हि ।
पञ्चाशदावृत्तिन्यासाज्ज्वरस्तीव्रोऽपि नश्यति ॥ इति ।

**तत्र प्रयोगः । ॐ शूलिनि दुर्गे देवसिद्धसुपूजिते नन्दिनि रक्षरक्ष महायोगेश्वरि हुँ फडित्यादि । एतदभिप्रायेणैवाचार्यैः—**

**वर्म चासुरमर्दिन्या युद्धपूर्वप्रिये तथा । त्रासद्वितयं चास्त्रम् । इति पठित्वा देवेत्यादि पठित्वा अङ्गकमैव रक्षाकृत् प्रोक्तं ग्रहनिवारणम् । इति पठितम् । अत्रापि मल्लिखितपाठे सर्वं समञ्जसम् । क्रमादित्यनेन साम्प्रदायिकानुसारिपूर्वपूर्वानुविद्धत्वमपि सूचितमेव ॥ ४१-४५ ॥**

अब **शूलिनी दुर्गा का मन्त्र** कहते हैं—'ज्वल ज्वल' इस पद के अन्त में 'शूलिनि' यह पद कहे, पुनः 'दुष्ट ग्रहं हुँ फट्' कह कर स्वाहा कहे । इस प्रकार 'ज्वल ज्वल शूलिनि दुष्टग्रहं हुँ फट् स्वाहा'—यह १५ अक्षरों का शूलिनी मन्त्र का उद्धार कहा गया ॥ ४१ ॥

यह शूलिनी दुर्गा का मन्त्र ग्रह बाधा एवं क्षुद्र रोगों का निवारण करने वाला है । इस मन्त्र के दीर्घतमा ऋषि हैं और ककुप् छन्द है ॥ ४२ ॥

समस्त देवगणों से वन्दित शूलिनीदुर्गा इस मन्त्र की अधिष्ठात्री देवता हैं । 'दुर्गे हृदयाय नमः' इति हृदि । 'वरदे शिरसे स्वाहा' इति शिरसि । 'विन्ध्यवासिनि शिखायै वषट्' इति शिखायाम् । 'असुरमर्दिनि युद्धप्रिये त्रासय त्रासय' इति कवचाय हुँ, 'ॐ शूलिनि दुर्गे देवसिद्धसुपूजिते नन्दिनि रक्ष रक्ष महायोगेश्वरि अस्त्राय हुँ फट्' इस प्रकार इसका पञ्चाङ्गन्यास कहा गया है ॥ ४३-४५ ॥

**शालिनीदुर्गाध्यानम् । पुरश्चरणादिकथनम्**

**अध्यारूढां मृगेन्द्रं सजलजलधरश्यामलां हस्तपद्मैः**
**शूलं वाणं कृपाणमरिजलजगदाचापपाशान् वहन्तीम् ।**
**चन्द्रोत्तंसां त्रिनेत्रां चतसृभिरभितः खेटकान् बिभ्रतीभिः**
**कन्याभिः सेव्यमानां प्रतिभटभयदां शूलिनीं भावयामि ॥४६॥**

**अध्यारूढामिति । मृगेन्द्रं सिंहम् । अराणि विद्यन्ते यत्र तत् । अरि चक्रम् । जलजं शङ्खः । आचार्याश्च—**

**बिभ्राणा शूलबाणास्यरिसदरगदाचापपाशान् कराब्जैः । इति ॥**

**ग्रन्थकृच्च पूजावसरे 'दलाग्रेषु तदस्त्राणि चक्रं शङ्खमसिं पुनः' इति शङ्खपूजामेव वक्ष्यति । चतसृभिरिति । जया विजया भद्रा शूलकात्यायिन्याख्याभिरित्यर्थः। असिनेति सहार्थे तृतीया । तद्योगाभावेऽपि वृद्धो यूनेतिवत् । दक्षिणाधस्ताद्वामाधःपर्यन्तमायुधध्यानम् ॥ ४६ ॥**

अब **शूलिनी दुर्गा का ध्यान** कहते हैं—जो सिंह पर आरूढ़ हैं, सजल जलधार के समान जिनके शरीर की कान्ति है, जिन्होंने अपने आठ करकमलों में

शूल, बाण, कृपाण, चक्र, शङ्ख, गदा, धनुष तथा पाश धारण किया हुआ है, जो चन्द्रमा का आभूषण धारण की हैं, तीन नेत्रों वाली हैं, जो खेटक धारण करने वाली चार कन्याओं द्वारा निरन्तर सेव्यमान हैं, इस प्रकार की जो शूलधारिणी भगवती अपने प्रतिपक्षी शत्रुओं को भय उत्पन्न करने वाली हैं उनका मैं ध्यान करता हूँ ॥ ४६ ॥

**मनुमेनं जपेन्मन्त्री वर्णलक्षं विचक्षणः।**
**सर्पिषाऽन्नेन होमस्तु तद्दशांशमितो भवेत् ॥ ४७ ॥**

**वर्णलक्षं मन्त्रवर्णपरिमितलक्षम् । विचक्षण इति । पुरश्चरणे ये नियमास्तज्ज्ञ इत्यर्थः ॥ ४७ ॥**

मन्त्रविद्या का विद्वान् साधक प्रतिवर्ण के क्रम से एक-एक लाख इस प्रकार कुल १५ लाख जप करे । तदनन्तर उसके दशांश घी से मिश्रित अन्न द्वारा होम करे । तत्पश्चात् दुर्गा के अष्टाक्षरात्मक यन्त्रपीठ पर वक्ष्यमाण विधि से पूजा करनी चाहिए ॥ ४७ ॥

**प्रागुक्ते पूजयेत् पीठे वक्ष्यमाणेन वर्त्मना ।**
**विधाय पूजामङ्गानां पूज्याः पत्रेषु शक्तयः॥ ४८ ॥**
**दुर्गाद्या वरदा विन्ध्यवासिन्यसुरमर्दिनी।**
**युद्धप्रिया पञ्चमी स्यात् देवसिद्धसुपूजिता ॥ ४९ ॥**
**सप्तमी नन्दिनी प्रोक्ता महायोगेश्वरी परा ।**
**दलाग्रेषु तदस्त्राणि शङ्खं चक्रमसिं पुनः ॥ ५० ॥**
**गदेषुचापशूलानि पाशं पश्चाद् दिशाधिपान्।**
**इत्थं जपादिभिः सिद्धः कुर्यात् कर्म निजेप्सितम् ॥ ५१ ॥**
**अष्टोत्तरसहस्रं यस्तिलैस्त्रिमधुराप्लुतैः ।**
**नित्यं प्रजुहुयात्तस्य शक्तिः स्यादतिमानुषी ॥ ५२ ॥**
**अष्टोत्तरशतं नित्यं सर्पिषा जुहुयान्नरः।**
**वाञ्छितं वत्सरादर्वाक् प्राप्नुयान्महतीं श्रियम् ॥ ५३ ॥**

**प्रागुक्ते दुर्गाष्टाक्षरोक्ते । पूजां विधायेति केसरेष्विति शेषः । परेत्यष्टमी । आसां ध्यानमुक्तमन्यत्र—अम्बुदाभा धनुर्बाणकरा दुर्गादिका यजेत् । इति ।**

**त्रिमधुराप्लुतैः पयोमधुघृतप्लुतैः । पयःस्थाने शर्करेति केचित् । शक्तिः स्यादतिमानुषीति वत्सरादर्वागिति ज्ञेयम् ।**

**तदुक्तम्—अप्रतिहताऽस्य शक्तिर्भूयात् प्रागेव वत्सरतः । इति ॥ ४८-५३ ॥**

केशर पर अङ्गों की पूजा करे तदनन्तर पत्रों पर शक्तियों की पूजा करे । उन शक्तियों के क्रमशः १. दुर्गा, २. वरदा, ३. विन्ध्यवासिनी, ४. असुरमर्दिनी,

५. युद्धप्रिया, ६. देवसिद्धसुपूजिता, ७. नन्दिनी और ८. परा कही जाने वाली महायोगीश्वरी—ये आठ नाम हैं। पत्र के अग्र भाग में उनके अस्त्रों शङ्ख, चक्र असि, गदा, बाण, चाप, त्रिशूल तथा पाश की पूजा करे। तदनन्तर पत्र के बाहर दिक्पालों की पूजा करे। इस प्रकार जप, होम तथा पूजा द्वारा मन्त्र को सिद्ध करने वाला साधक अपना ईप्सित कार्य सिद्ध करे ॥ ४८-५१ ॥

जो पय, घृत एवं मधु से मिश्रित तिलों द्वारा नित्य प्रति १००८ संख्यक होम करता है वह (एक वर्ष में ही) अतिमानुष (अप्रतिहत) शक्ति से सम्पन्न हो जाता है ॥ ५२ ॥

जो मनुष्य घी से इस मन्त्र द्वारा प्रतिदिन १०८ बार होम करता है वह एक संवत्सर के पहले अपना मनोरथ एवं महती महालक्ष्मी प्राप्त कर लेता है ॥ ५३॥

**दूर्वाहोमो भवेन्नृणां सर्ववाञ्छितसिद्धिदः।**
**छुरिकाद्यानि शस्त्राणि जप्तानि मनुनाऽमुना ॥ ५४ ॥**
**सम्पाताज्यविलिप्तानि वितरन्ति जयश्रियम्।**
**अश्वत्थार्कसमिद्भिर्वा तिलैर्वा मधुरोक्षितैः।**
**होमो वशयति क्षिप्रमीप्सितान् मन्त्रिणो नरान् ॥ ५५ ॥**

**दूर्वाहोम इति। अष्टोत्तरशतमिति ज्ञेयम्। तदुक्तम्—**

**दूर्वया त्रिकयुजेप्सितं लभेत् सम्यगष्टशतसंख्यया हुतात्। इति।**

**छुरिकाद्यानीत्यादिशब्देन कृपाणनखराद्यानि ग्राह्याणि। सम्पाताज्यविलिप्तानि पश्चादमुना मनुना जप्तानीति सम्बन्धः। सम्पातार्थं होमः पञ्चसहस्रः। जप्तानीति। दशसाहस्रम्। तदुक्तम्—खड्गे तीक्ष्णे समावाह्य गन्धाद्यैरभिपूज्य ताम्।**
**आज्येन जुहुयात्पञ्चसहस्रं प्रोक्तमार्गतः ॥**
**सम्पाताज्यविलिप्तोऽसौ प्रजप्तो मनुनाऽमुना।**
**पंक्तिसंख्यासहस्रेण शक्तो मन्त्रविशेषवित् ॥**
**तत्खड्गहस्तो योद्धा स्याद्रिपुसेनाविमर्दकः। इति।**

**अत्र खड्ग इत्यायुधोपलक्षणम्। 'छुरिकाकृपाणनखराः' इत्याचार्योक्तेः। अश्वत्थेति। होमसंख्या द्वादशसहस्रं ज्ञेया। तदुक्तम्—**

**आर्कैर्मन्त्री त्रिमधुरयुतैरर्कसाहस्रमिध्मै-**
**राश्वत्थैर्वा त्वतिविशदचेतास्तिलैर्वा जुहोतु। इति ॥**

**क्षिप्रमित्यनेनैतदुक्तं भवति। रक्तवर्णां पाशाङ्कुशधनुर्बाणधरां देवीं ध्यात्वा पाशेन साध्यस्य बन्धः अङ्कुशेनाकर्षणमिति चिन्तयेत् मन्त्रिण इति षष्ठी। नरानिति लिङ्गमविवक्षितम् ॥ ५४-५५ ॥**

इस मन्त्र से दूर्वा द्वारा होम करने से मनुष्यों की वाञ्छासिद्धि होती है। इस मन्त्र से अभिमन्त्रित अथवा होम शेष आज्य से प्रविलिप्त छुरी, तलवार आदि

शस्त्र निरन्तर विजय श्री प्रदान करते हैं । त्रिमधुर मिश्रित अश्वत्थ अथवा अर्क (मन्दार) की समिधा, अथवा तिल द्वारा किया गया होम अपने अभीष्ट मन्त्रदाता मनुष्यों को भी वश में कर लेता है ॥ ५४-५५ ॥

ग्रहसन्त्याजनप्रकारः

**उद्यदायुधहस्तां तां देवीं कालधनप्रभाम् ।**
**ध्यात्वात्मानं जपेन्मन्त्रं स्पृष्ट्वार्त्तं मुञ्चति ग्रहः ॥ ५६ ॥**
**सर्पाखुवृश्चिकादीनां विषमाशु विनाशयेत् ।**
**मनुनाऽनेन विधिवन्मन्त्रविद्देवताधिया ॥ ५७ ॥**

उद्यदिति । एवम्भूतदेवीरूपमात्मानं ध्यात्वा आर्त्तं स्पृष्ट्वा मन्त्रं जपेदिति सम्बन्धः । मुञ्चति ग्रह इति । आवेश्य सन्त्याजित इति शेषः । आवेश्य क्षणमिवेत्युक्तेः। ग्रह इति वचनमविवक्षितम् । तेनाष्टादश ग्रहा इत्यर्थः । आवेशनप्रकारस्तु—

सम्प्रोक्तलक्षणैः सम्यग्विज्ञायाऽष्टादश ग्रहान् ।
ग्रस्तमूर्ध्नि विचिन्त्यैतान् द्विभुजान् स्रस्तलोचनान् ॥
ज्वालामयैर्मन्त्रजापी पातयेच्चुलुकोदकैः ।
आविष्टं क्षणमात्रेण त्याजयेदखिलान् ग्रहान् । इति ॥

सन्त्याजनप्रकारस्तु । आत्मरोगिणोर्मध्ये उक्तरूपां दुर्गां ध्यात्वा कनिष्ठादित्रयम् अङ्गुष्ठेनाऽवष्टभ्य दृढमुष्टिं कृत्वा तर्जनीं दक्षिणकर्णपार्श्वे प्रसार्य अतिद्रुतं चक्रवद् भ्रामयेदित्यनया चक्रमुद्रया मोचयेदिति । तदुक्तम्—

अन्तराथ पुनरात्मरोगिणोरम्बिकामपि निजायुधाकुलाम् ।
संविचिन्त्य जपतोऽरिमुद्रया विद्रवन्त्यवशविग्रहा ग्रहाः ॥ इति ।

सर्पेति । आदिशब्देन श्वादीनां ग्रहणम् । मन्त्रविद्विधिवद्देवताधिया आत्मन इति शेषः । विधिवदनेन मनुना विषं विनाशयेदिति सम्बन्धः । विधिवद्देवताबुद्धिस्तु ध्यानविशेषेण । तदुक्तम्—

अहिमूषिकवृश्चिकादिजं वा बहुपात्कुक्कुरलूतिकोद्भवं वा ।
विषमाशु विनाशयेन्नराणां प्रतिपत्त्यैव च विन्ध्यवासिनी सा ॥ इति ।

ध्यानविशेषस्त्वन्यत्रोक्तः—

शरच्छशाङ्कसङ्काशां स्मितवक्त्राम्बुजोज्ज्वलाम् ।
चक्रशङ्खसुधाकुम्भयुग्महस्ताम्बुजां शुभाम् ॥
मुग्धश्च विषमेतेन सिञ्चन्तीं सितभूषणाम् ।
अमृतार्द्रामिमां दुर्गां ध्यायन् हन्याद्विषं नरः ॥ इति ॥ ५६-५७ ॥

काले बादल के समान कान्ति वाली हाथ में शत्रुवध के लिये उद्यत शस्त्रों के लिये भगवती का ध्यान करते हुये ग्रहार्त्त रोगी को स्पर्श कर इस मन्त्र का जप करे तो ग्रह बाधा शीघ्र दूर हो जाती है ॥ ५६ ॥

मन्त्रवेत्ता साधक अपने इष्टदेवता का ध्यान करते हुये विधिपूर्वक इस मन्त्र का जप करे तो साँप, कुत्ता, मूषक एवं वृश्चिकादि का विष शीघ्र ही विनष्ट हो जाता है ॥ ५७ ॥

**मन्त्रेणानेन सञ्जप्तान् बाणानादाय साधकः ।**
**विमुञ्चेत् प्रतिसेनायां सा द्रुतं विद्रुता भवेत् ॥ ५८ ॥**

**सञ्जप्तान् बाणानिति । बाणाग्रे तां देवीं ध्यात्वेति ज्ञेयम् । तदुक्तम्—**

**आधाय बाणे निशिते च देवीं क्षेमङ्करीं मन्त्रमिमं जपित्वा । इति ॥ ५८ ॥**

साधक सैनिक यदि इस मन्त्र से अभिमन्त्रित बाण लेकर बाणाग्र में देवी का ध्यान करते हुये युद्ध स्थल में प्रयोग करे तो शत्रुओं की सेना शीघ्रातिशीघ्र रणस्थल से भाग जाती हैं ॥ ५८ ॥

**शूलपाशधरां देवीं ध्यात्वात्मानमनाकुलः ।**
**प्रविशेद् युद्धदेशं यो जित्वा याति स निर्व्रणः ॥ ५९ ॥**

**प्रविशेदिति । मन्त्रं जपन्निति शेषः । तदुक्तम्—**

**आत्मानमार्यां प्रतिपद्य शूलपाशान्वितां वैरिबलं प्रविश्य ।**
**मन्त्रं जपन्नाशु परायुधानि गृह्णाति मुष्णाति च बोधमेषाम् ॥ इति ।**

**निर्व्रणत्वं होमजननेनायुधग्रहणादिति ज्ञेयम् । तन्त्रान्तरे तु—**

**श्यामवर्णा महाकाया ज्वलद्वह्निविलोचना ।**
**पाशं डमरुकं शूलं चूर्णं मोहनसंज्ञितम् ॥**
**हस्तैश्चतुर्भिर्बिभ्राणा नागेन्द्रैः समलङ्कृता ।**
**अतिदीर्घैर्महाकेशैराकीर्णैः परितश्चमूम् ॥**
**आच्छादयन्ती कृष्णाभैरट्टहासपरायणा ।**
**ध्याता दुर्गाऽचिरेणैव मोहयेच्छत्रुवाहिनीम् ॥ इति ॥ ५९ ॥**

अपने में एकाग्रचित्त से शूल पाश धारण की हुई देवी की भावना करते हुये युद्ध स्थल में प्रवेश करने वाला पुरुष शत्रुओं को जीत कर चला आता है और स्वयं अक्षत शरीर भला चङ्गा रहता है ॥ ५९ ॥

**जुहुयात्तिलसिद्धार्थैर्लक्षमेकं यथाविधि ।**
**नामयुक्तं जपन्मन्त्रं यस्याऽसौ मृत्युमेष्यति ॥ ६० ॥**

**यथाविधि नामयुक्तं मन्त्रं जपन् जुहुयादिति सम्बन्धः यथाविधीति । पल्लवप्रकारेण जपे होमे स्वाहादावित्यर्थः । तदुक्तम्—**

**पल्लवे साध्यनामादौ भवेन्मन्त्रपदक्रमः । मारणे चैतदुद्दिष्टम् । इति ।**

**इदन्तु जपकर्मणि । होमे तु स्वाहापदात् पूर्वं नामोच्चारणम् । उक्तञ्च गौतमेन—**

**स सर्वजनमन्त्रेषु तत्र नामानि योजयेत् ।**

होमे स्वाहापदात् पूर्वं मन्त्रान्ते जपकर्मणि ॥ इति ।

तदुक्तमाचार्यैः—

तिलसिद्धार्थैर्जुहुयाल्लक्षं मन्त्री सपत्ननामयुतम् ।
स तु रोगाभिहतात्मा मृतिमेति न तत्र सन्देहः ॥ इति ॥ ६० ॥

साधक विधि के अनुसार तिल एवं सिद्धार्थक (श्वेत सर्षप) से यदि शत्रु के नाम युक्त इस मन्त्र द्वारा एक लाख होम करे तो उसका वह शत्रु अवश्य मृत्यु को प्राप्त करता है ॥ ६० ॥

**गुटिकां गोमयोत्पन्नां हुत्वाऽष्टशतसंख्यया ।**
**सप्ताहात् कुरुते मन्त्री विद्वेषं स्निग्धयोर्मिथः ॥ ६१ ॥**
**गृहीत्वा गोमयं व्याम्नि त्रिसहस्रं जपेत्ततः ।**
**गमिष्यतां द्वारदेशे निखातं स्तम्भनं भवेत् ॥ ६२ ॥**
**बहुनोक्तेन किं सर्वं साधयेन्मनुनाऽमुना ।**

अष्टशतेत्यष्टोत्तरशतम् । विद्वेषमित्यत्र वियोगमित्यपि । द्विष्टौ मिथो वियोगितौ भवतः । इत्युक्तेः । ध्यानविशेषोऽन्यत्र—

दधती मुशलं शूलं गरकुम्भद्वयं करैः ।
कृष्णा दिगम्बरा ध्येया मूर्त्तिर्विद्वेषकारिणी ॥ इति ।

गोमयमित्यानडुहमित्युपदेशात् । व्योम्नि गोमयं गृहीत्वेति । भूमिस्पृग्गोमयं न ग्राह्यमित्यर्थः । तदुक्तम्—'अस्पृष्टकुङ्गोमयन्त्वन्तरिक्षे' इति ॥ ६१-६२ ॥

गोबर की कण्डी से नित्य प्रति इस मन्त्र द्वारा विधिवत् १०८ एक सौ आठ आहुति प्रदान करे तो एक सप्ताह में ही आपस में अत्यन्त स्नेही दो मित्रों में परस्पर विद्वेष हो जाता है ॥ ६१ ॥

**विमर्श**—जप अथवा होम काल में स्वाहा पद के पूर्व स्नेहियों (मित्रों) के नाम की योजना करनी चाहिए ॥ ६१ ॥

इस विषय में बहुत क्या कहें । साधक इस मन्त्र से सब कुछ सिद्ध कर सकता है । हाथ में (भूमि का गोबर न लेकर) ऊपर ही ऊपर गोबर लेकर तीन हजार जप करे । तब यात्रा करने वाले के द्वार पर इस मन्त्र को गाड़ देने से उसकी यात्रा रुक जाती है और उसका स्तम्भन हो जाता है ॥ ६२-६३ ॥

वनदुर्गामन्त्रः

**उत्तिष्ठपदमाभाष्य पुरुषि स्यात्पदं ततः ॥ ६३ ॥**
**पितामहः सनेत्रेन्दुः स्वपिषि स्याद्भयं च मे ।**
**समुपस्थितमुच्चार्य यदि शक्यमनन्तरम् ॥ ६४ ॥**
**अशक्यं वा पुनस्तन्मे वदेद्भगवतिं ततः ।**

शमयाऽग्निवधूः सप्तत्रिंशद्वर्णात्मको मनुः॥ ६५ ॥

ऋष्यादिकथनम्

ऋषिरारण्यकश्छन्दोऽप्र(प्य)त्यनुष्टुबुदाहृतम्।
देवता वनदुर्गा स्यात् सर्वदुर्गतिमोचनी॥ ६६ ॥

वनदुर्गामन्त्रमाह उत्तिष्ठेति । ततः पुरुषि पदं स्यादित्यन्वयः । पितामहः ककारः सनेत्रेन्दुः इकारबिन्दुसहितः । तेन किमिति । भयं च मे इति चकारो न मन्त्रमध्ये । यदि शक्यमशक्यञ्चेति । अमन्तमेव स्वरूपम् । भगवतिमिति शब्दकर्मणि द्वितीया मन्त्रे तु सम्बुद्धिः । अत्र वा तन्मे अक्षराणि कीलकानि । हुँ दुर्गे इत्यकीलकानि । तदुक्तमीशानसंहितायाम्—

गुणबीजं समुद्धृत्य उत्तिष्ठेति पदं ततः ।
पुरुषीति समुद्धृत्य ब्रह्माणं सूक्ष्मसंयुतम् ॥
सबिन्दुकं समुच्चार्य स्वपिषीति पदं वदेत् ।
भयं मे च समाभाष्य तथा च समुपस्थितम् ॥
यदि शक्यमिति प्रोच्य अशक्यं समुदीर्य च ।
वर्मबीजं समुद्धृत्यदुर्गे भगवतीति च ॥
शमयेति समुद्धृत्य तथा स्वाहा पदं वदेत् ।
एवमेषा महादेवी निष्कीला सर्वसिद्धिदा ॥
गुणान्ते भुवनेशानीं दुर्गाबीजं नियोजयेत् ।
वर्मणोऽन्ते स्वकं बीजमुक्त्वा चान्ते विलोमतः ॥
पूर्वोक्तबीजत्रितयं योजयेत् क्रौञ्चदारणा ।
तदा प्रदीपिता विद्या निष्कीला सर्वसिद्धिदा ॥ इति ।

उकारो बीजं स्वाहा शक्तिः । दुरिति बीजमिति पद्मपादाचार्याः । सर्वेत्यादि विनियोगोक्तिः ॥ ६३-६६ ॥

अब **वन दुर्गा मन्त्र** का उद्धार कहते हैं—'उत्तिष्ठ' पद उच्चारण करने के बाद 'पुरुषि' पद कहे, इसके बाद पितामह (क) को 'नेत्रेन्दु' (इकार मकार) से युक्त कर (किँ) उच्चारण करे, तदनन्तर 'स्वपिषि भयं च मे समुपस्थितं यदि शक्यमशक्यं वा तन्मे शमय भगवति स्वाहा' कहे । यह वन दुर्गा मन्त्र का उद्धार कहा गया । इसका स्वरूप 'उत्तिष्ठ पुरुषि किं स्वपिषि भयं च मे समुपस्थितम् यदि शक्यमशक्यं वा तन्मे शमय भगवति स्वाहा' होगा । इस प्रकार यह ३७ अक्षरों का मन्त्र है ॥ ६३-६५ ॥

इस वनदुर्गा मन्त्र के आरण्यक ऋषि हैं अत्यनुष्टुप् छन्द है, वनदुर्गा देवता हैं जो सारी दुर्गति (दारिद्रय एवं दुःखावस्था) को दूर करने वाली हैं ॥ ६६ ॥

पादाष्टसन्धिषु गुदलिङ्गाधारोदरेषु च ।
पार्श्वहृत्स्तनकण्ठेषु पुनर्बाह्वष्टसन्धिषु॥ ६७ ॥

मुखनासाकपोलाक्षिकर्णभ्रूमध्यमूर्द्धसु ।
मन्त्राक्षराणि विन्यस्येद्देवताभावसिद्धये ॥ ६८ ॥
षड्भिश्चतुर्भिरष्टाभिरष्टाभिः षड्भिरिन्द्रियैः ।
मन्त्रार्णैरङ्गक्लृप्तिः स्याज्जातियुक्तैर्यथाक्रमम् ॥ ६९ ॥

**अक्षरन्यासमाह पादेति । पादभुजसन्धयः प्रत्येकं चत्वारः । अत्र पार्श्वस्तन-नासाकपोलाक्षिकर्णानां स्थानद्वन्द्वं ग्राह्यम् । इन्द्रियैः पञ्चभिः । यथाक्रममित्यनेनैतदुक्तं भवति । प्रत्येक दुर्गायै रक्षरक्षेत्येतदन्त्यैरङ्गमिति । तदुक्तमीशानसंहितायाम्—**

**ऋतुवेदाहिवस्वङ्गभूतसंख्याक्षरान्वितैः ।**
**दुर्गायै रक्षरक्षेति युक्तैरङ्गान्यथाचरेत् ॥ इति ॥ ६७-६९ ॥**

दोनों पैरों में मिलाकर कुल आठ सन्धियों में (१-८), ९. दुर्गा, १०. लिङ्ग, ११. आधार, १२. उदर, १४. पार्श्व, १५. हृदय, १६-१७. स्तन, १८. कण्ठ प्रदेश, १९-२६. दोनों हाथों की आठ सन्धियों में, २७. मुख, २८-२९. नासिका, ३०-३१. कपोल, ३२-३३. आँख, ३४-३५. कान, ३६. भ्रूमध्य एव ३७. शिर—इस प्रकार कुल ३७ स्थानों में वनदुर्गा के एक एक अक्षरों का क्रमेण देवता बुद्धि से अपने शरीर में न्यास करे ॥ ६७-६८ ॥

६ अक्षरों से हृदय, ४ अक्षरों से शिर, आठ अक्षरों से शिखा, ८ अक्षरों से कवच, ६ अक्षरों से नेत्रद्वय, पाँच अक्षरों से अस्त्र न्यास इस प्रकार यथाक्रम षडङ्गन्यास करे ॥ ६९ ॥

**वनदुर्गाध्यानम् । पुरश्चरणादिकथनम्**

सौवर्णाम्बुजमध्यगां त्रिनयनां सौदामिनीसन्निभां
चक्रं शङ्खवराभयानि दधतीमिन्दोः कलां बिभ्रतीम् ।
ग्रैवेयाङ्गदहारकुण्डलधरामाखण्डलाद्यैः स्तुतां
ध्यायेद्विन्ध्यनिवासिनीं शशिमुखीं पार्श्वस्थपञ्चाननाम्॥ ७०॥

**आयुधध्यानं दक्षाद्यूर्ध्वयोराद्ये तदधस्तनयोरन्त्ये । अन्ये तु दक्षोर्ध्वादि दक्षाधस्तनं यावत् ॥ ७० ॥**

अब **वन दुर्गा का ध्यान** कहते हैं—जो देवी सुवर्णमय कमल के मध्य में निवास करती हैं, तीन नेत्रों से युक्त हैं और बिजली के समान स्फुरित हो रही हैं। चक्र, शङ्ख, वर तथा अभय धारण की हैं, मस्तक पर चन्द्रमा की कला से सुशोभित हैं, ग्रैवेय, अङ्गद, हार और कुण्डल से उल्लसित हैं । इन्द्रादि देवता जिनकी स्तुति करते हैं ऐसी चन्द्रानना भगवती विन्ध्यवासिनी जिनके पार्श्व में सदाशिव निरन्तर विराजमान रहते हैं उनका ध्यान करना चाहिए ॥ ७० ॥

एवं ध्यात्वा जपेल्लक्षचतुष्कं तद्दशांशतः ।
जुहुयाद्धविषा मन्त्री शालिभिः सर्पिषा तिलैः ॥ ७१ ॥

तद्दशांशत इति अयुतचतुष्टयम् । तत्र चत्वारि द्रव्याणि एकैकेनैकैकेन युतमित्यर्थः । हविषा पायसेन । शालिभिर्हैमन्तिकैः । सर्पिषा घृतेन । तिलैश्चेति चतुर्भिः ॥ ७१ ॥

प्रागीरिते यजेत् पीठे देवीमङ्गादिभिः सह ।
अङ्गपूजा यथापूर्वं दलमूलेष्विमा यजेत् ॥ ७२ ॥
आर्या दुर्गा च भद्राख्या भद्रकाली ततोऽम्बिका ।
क्षेमाऽन्या वेदगर्भाख्या क्षेमङ्कर्यष्टशक्तयः ॥ ७३ ॥
अस्त्राणि पत्रमध्येषु शङ्खचक्रासिखेटकान् ।
बाणकोदण्डशूलानि कपालान्तानि पूजयेत् ॥ ७४ ॥
ब्राह्म्याद्याः स्युर्दलाग्रेषु लोकपालास्ततः परम् ।
सिद्धमन्त्रः प्रयोगेषु देवीमित्थं विचिन्तयेत् ॥ ७५ ॥

यथापूर्वमिति । आग्नेयादिकोशेषु पुरतो दिक्षु चेति । एतच्च पूजनं कर्णिकान्तः केसरेषु अग्रे शक्तिपूजाया उपदिष्टत्वादिति । अष्ट शक्तय इति । आसां ध्यानमन्यत्रोक्तम्—

आर्यादिशक्तयः खेटखड्गचापधनुर्धराः ।
अहिभिर्भूषिताङ्ग्यस्ताः पूजनीया भयानकाः ॥ इति ।

ततः परमिति । वज्रादिपूजोक्ता प्रयोगेष्विति । बहुवचनाच्छान्त्यादौ नृसिंहबीजादिपुटितत्वम् । युद्धमारणयोः षोडशभुजाध्यानम् । साम्बुमेघश्यामत्वं महिषोत्तमाङ्गस्थत्वं च । रक्षायामष्टभुजत्वं दूर्वाश्यामलाङ्गत्वं महिषोत्तमाङ्गस्थत्वं च ध्येयमित्युक्तम् ।

तदुक्तमाचार्यैः— चक्रदरखड्गखेटकशरकार्मुकशूलसंज्ञककपालैः ।
ऋष्टिमुशलकुन्तनन्दकवलयगदाभिण्डिपालशक्त्याख्यैः ॥
उद्यद्विकृतिभुजाढ्या माहिषके सजलजलदसङ्काशा ।
अरिशङ्खकृपाणखेटबाणान् शरधनुः शूलकतर्जनीर्दधाना ॥
भवतां महिषोत्तमाङ्गसंस्था नवदूर्वासदृशी श्रियेऽस्तु दुर्गा ॥ इति ।

अन्यत्रापि— ज्वलदग्निनिभां सिंहस्कन्धारूढां भयावहाम् ।
ध्यायेत् षोडशबाहुं तां सम्यक् वैरिविमर्दने ॥
श्यामलाङ्गीमष्टबाहुं महिषासुरसंस्थिताम् ।
आयुः सिद्ध्यै चिन्तयेत् ताम् । इति ॥ ७२-७५ ॥

इस प्रकार की वनदुर्गा का ध्यान कर ४ लाख जप करे, उसका दशांश घी, तिल, चावल तथा पायस—इन चार पदार्थों से होम करे । पश्चात् पूर्वोक्त पीठ पर पूर्व में कही गई विधि के अनुसार अङ्गादि आवरणों सहित देवी की पूजा करे । यह पूजा आग्नेयादि कोणों में एवं चारों दिशाओं में करे । तदनन्तर पत्र के मूल में नीचे लिखी इन शक्तियों की पूजा करे ॥ ७१-७२ ॥

आर्या, दुर्गा, भद्रा, भद्रकाली, अम्बिका, क्षेमा, वेदगर्भा और क्षेमकरी—ये आठ शक्तियाँ हैं ॥ ७३ ॥

पत्र के मध्य में देवी के शङ्ख, चक्र, खड्ग, खेटक, बाण, धनुष त्रिशूल और कपालादि अस्त्रों की पूजा करे ॥ ७४ ॥

दल के अग्रभाग में ब्रह्मादि देवताओं की, पुनः उसके बाहर लोकपालों की पूजा करे। इतना करने पर यह मन्त्र सिद्ध होता है। मन्त्र के सिद्ध होने पर इसका प्रयोग करना चाहिए ॥ ७५ ॥

विन्ध्यवासिनीध्यानम्

**कालपावकसन्निभां कलितार्द्धचन्द्रशिरोरुहां**
**भालनेत्रविभूषणं भयदायिसिंहनिषेदुषीम्।**
**चक्रशङ्खकृपाणखेटकचापबाणकरोटिका-**
**शूलवाहिभुजां भजे विजिताखिलासुरसैनिकाम्॥ ७६ ॥**

प्रयोगः

**प्रातःस्नानरतो नित्यमष्टोत्तरसहस्रकम्।**
**जपेत्तस्याशु सिद्ध्यन्ति धनधान्यादिसम्पदः॥ ७७ ॥**

**कालपावकः प्रलयाग्निः। करोटिका कपालम्। आयुधानि दक्षैरूर्द्धतः चक्रखड्गशरशूलानि। वामैरुर्ध्वतः शङ्खखेटकधनुःकपालानि ध्येयानि। इदं ध्यानं रक्षार्थमिति ज्ञेयम्॥ ७६-७७ ॥**

पुनः **देवी के ध्यान का दूसरा प्रकार** कहते हैं—जो भगवती प्रलयाग्नि के समान देदीप्यमान हैं, जिनके केश समूहों में अर्द्धचन्द्र युक्त मुकुट शोभा पा रहा है, भालस्थ नेत्र रूप आभूषण से भूषित हैं, महाभयानक सिंह पर सवारी करने के कारण जो अत्यन्त भयङ्कर सी प्रतीत हो रही हैं, जिन्होंने अपने हाथों में चक्र, शङ्ख, कृपाण, खेटक, धनुष, बाण, कपाल और त्रिशूल धारण किया है, ऐसी असुर सैन्य समूहों पर विजय प्राप्त करने वाली भगवती विन्ध्यवासिनी का अपनी रक्षा के लिये ध्यान करना चाहिए ॥ ७६ ॥

जो साधक निरन्तर प्रातः स्नान के पश्चात् प्रतिदिन १००८ संख्या में इस वन दुर्गा मन्त्र का जप करता है, उसे धन, धान्य आदि सभी प्रकार की संपत्तिः आञ्जस्येन प्राप्त होती है ॥ ७७ ॥

**अनेनैव विधानेन ग्रहक्षुद्ररिपूञ्जयेत्।**
**नाभिमात्रोदके स्थित्वा देवीमर्कगतां स्मरन्।**
**जपेदष्टोत्तरशतं लभेत महतीं श्रियम्॥ ७८ ॥**

अनेनैवेति । तत्र विधानम् । प्रातःस्नानादिकम् । जपस्त्वयुतम् । तदुक्तम्—

सौम्ये कर्मफलावाप्त्यै सहस्रं प्रजपेत् मनुम् ।
उच्चाटनादिक्षुद्रेषु विशेषात्तं तथाऽयुतम् ॥ इति ॥

अत्र मन्त्रे भयशब्दात् पूर्वं ग्रहपदादिदानं ज्ञेयम् । ग्रहभयं क्षुद्रभयं रिपुभयम् । एवमग्रेऽपि चौरभयमित्यादि ज्ञेयम् । क्षुद्रशब्दार्थ उक्तो नारायणीये—

स्तम्भो विद्वेषणोच्चाटावुत्सादो भ्रममारणे । व्याधिश्चेति स्मृतं क्षुद्रम् । इति ।

नाभिमात्रोदक इति नद्यादौ । देवीं स्मरन्निति तन्त्रान्तरोक्तध्यानम् । यदाहुः—

शङ्खारिनिधिपात्रेष्टकरां रक्तां स्वलङ्कृताम् ।
भानुबिम्बसरोजस्थां दुर्गामितां स्फुरत्प्रभाम् ॥
अष्टोत्तरशतं नद्यां नाभिमात्रे जले स्थितः ।
संयतः प्रजपेन् मन्त्रमचिराच्छ्रीप्रसिद्धये ॥ इति ।

महतीं श्रियमिति । श्रीबीजादित्वमपि ज्ञेयम् ॥ ७८ ॥

इसी प्रकार साधक इस मन्त्र का दस हजार जप करे तो वह ग्रह बाधा क्षुद्रभय एवं रिपु बाधा पर विजय प्राप्त करता है । नाभि मात्र जल में स्थित हो सूर्य में देवी का ध्यान करते हुये प्रतिदिन १०८ बार जप करने से साधक को महती श्री की प्राप्ति होती है ॥ ७८ ॥.

**अयुतं वटवृक्षोत्थैः सशृङ्गैरर्चितेऽनले ।**
**होमं समिद्वरैः कुर्यान्नाशयेदापदां कुलम् ॥ ७९ ॥**
**घोराभिचारभूतादीन् शमयेद्विधिनाऽमुना ।**
**अपामार्गसमिद्भिर्वा तिलैर्वा काननोद्भवैः ॥ ८० ॥**

अर्चिते अनले सशृङ्गैः साग्रभागैर्वटवृक्षोत्थैः समिद्वरैरयुतं होमं कुर्यादिति सम्बन्धः । काननोद्भवैस्तिलैर्जर्त्तिलैः ॥ ७९-८० ॥

वरोह युक्त वट की समिधा से सुसंस्कृत सुपूजित अग्नि में होम करने वाला पुरुष अपनी समस्त आपदाओं का विनाश कर देता है ॥ ७९ ॥

अपामार्ग की समिधा अथवा वन में उत्पन्न होने वाला तिल (जर्तिला) से इस मन्त्र के द्वारा किये गये होम से साधक, घोर से घोर अभिचार तथा भूतादि जन्य उपद्रवों को नष्ट कर देता है ॥ ८० ॥

**अभीष्टसिद्ध्यै जुहुयादार्कैर्मन्त्री समिद्वरैः ।**
**सहस्रमर्कवारादि दिवसान् दश संयतः ॥ ८१ ॥**

मन्त्रीति—अनेन सूर्य चतुरक्षरादित्वं सूचितम् । सहस्रमिति प्रत्यहम् ॥ ८१ ॥

अपनी अभीष्टसिद्धि के लिये साधक अर्क (मन्दार) की लकड़ी से रविवार से आरम्भ कर दश दिन पर्यन्त प्रतिदिन सहस्र संख्या में होम करे ॥ ८१ ॥

सारान् शुद्धान् समादाय शकलान्मनुनाऽमुना।
जुहुयादेधिते वह्नौ सप्तरात्रमतन्द्रितः ॥ ८२ ॥
साधयेदखिलं शश्वदभीष्टं मन्त्रवित्तमः।
कुमुदैर्वशयेद्विप्रान् नृपतीन् पद्महोमतः ॥ ८३ ॥
तत्पत्नीरुत्पलैः फुल्लैर्वैश्यान् कल्हारहोमतः।
शूद्रान् लवणहोमेन जातीपुष्पैः सभां पुनः ॥ ८४ ॥
व्रीहिभिर्जुहुयान्नित्यं वत्सरात् व्रीहिमान् भवेत्।
दूर्वाहोमेन दीर्घायुर्मधुना रत्नवान् भवेत् ॥ ८५ ॥
अन्नैरन्नसमृद्धिः स्यादाज्येन लभते धनम्।
गोदुग्धेन गवां वृद्धिमाप्नुयान्नाऽत्र संशयः ॥ ८६ ॥

सारानिति खादिरान्। अतन्द्रित इति। त्रिदिनमित्यप्युक्तं भवति। तदुक्तम्—

शुद्धैः खदिरसारैस्त्रिदिनं वा सप्तरात्रकमपि। इति।

अखिलमिति सौम्यं क्रूरं च। तत्र विशेषस्तन्त्रान्तरे—

नवकुम्भनिभां देवीं शूलं डमरुकं भुजैः।
शरं चापं सौधकुम्भयुगलं दधतीं पराम् ॥
ध्यात्वा दुर्गां महाकायां भीषणास्यां सुभूषिताम्।
आज्येन जुहुयान् मध्ये सव्ये(मध्ये)पौष्टिककर्मणि ॥
यदि क्षुद्रविधौ क्ष्वेलरसपूर्णघटद्वयम्।
दधतीं चिन्तयेद्देवीं षड्भुजां प्रोक्तलक्षणाम् ॥
विलोममनुना विद्वान् शकलैर्घृतसंयुतैः।
सारैर्विशुद्धैर्जुहुयात् पश्चिमाशामुखः सुधीः ॥ इति।

मन्त्रवित्तम इत्यनेनाऽत्रापि सूर्यचतुरक्षरादित्वं सूचितम् ॥ ८२-८६ ॥

शुद्ध खदिर की समिधा से इस मन्त्र द्वारा तीन दिन अथवा सात रात तक निरन्तर सहस्र संख्या में विशुद्ध जाज्वल्यमान अग्नि में होम करे तो वह साधक अपना सारा अभीष्ट प्राप्त कर लेता है, कुमुद के होम से ब्राह्मण तथा कमल के होम से क्षत्रिय वश में हो जाते हैं ॥ ८२-८३ ॥

लाल कमल के होम से ब्राह्मण और क्षत्रिय की पत्नियों को तथा कह्लार होम से वैश्यों को, लवण होम से शूद्रों को एवं जाती पुष्पों के हवन से सारी की सारी सभा ही वश में हो जाती है ॥ ८४ ॥

व्रीहि (धान्य) का होम निरन्तर इस मन्त्र से करे तो वह पुरुष, एक वर्ष के भीतर धान्य से पूर्ण हो जाता है, दूर्वा के होम से दीर्घायु तथा मधु के होम से रत्न की संप्राप्ति होती है ॥ ८५ ॥

अन्न के होम से अन्न की समृद्धि, घृत के होम से धन एवं गाय के दूध द्वारा होम करने से गायों की प्राप्ति होती है इसमें संशय नहीं है ॥ ८६ ॥

**ज्वरे ग्रहे गरे सर्पे तर्जन्या संस्पृशञ्जपेत्।**
**स्मृत्वा शूलकरां देवीं तत्क्षणादेव तान् हरेत्॥ ८७ ॥**

**तर्जन्येति वामया। तान् ज्वरादीन्॥ ८७ ॥**

ज्वर पीडित, ग्रह बाधायुक्त तथा सर्प के विष से संस्पृष्ट पुरुष को बायें हाथ की तर्जनी से स्पर्श करते हुये इस मन्त्र का जप करे, तो वह तत्क्षण तत्तद् बाधाओं को दूर कर देता है ॥ ८७ ॥

**दर्भितं साध्यनामार्णैः पत्रे मनुमिमं लिखेत्।**
**कुलालमृत्कृतायां तत् प्रतिमायां हृदि न्यसेत्॥ ८८ ॥**
**कृतप्राणप्रतिष्ठां तां पूजितां कुसुमादिभिः।**
**निधायाऽग्रे जपेन्मन्त्रमष्टोत्तरसहस्रकम् ॥ ८९ ॥**
**सन्ध्यासु पक्षमात्रेण ध्रुवमाप्नोति वाञ्छितम् ।**
**अभ्यर्च्य देवीमनले तीक्ष्णतैलेन मन्त्रवित् ॥ ९० ॥**

**दर्भितमिति। तत्प्रकारस्त्रयोविंशे वक्ष्यते। पत्र इति भूर्जे। कुलालमृदिति। कुम्भकारस्य पात्रघटनसमये करलग्नमृत्तिका तया कृतायां प्रतिमायां द्वादश्याङ्गुलायां हृदि तदिति लिखितमन्त्रं पत्रं न्यसेत्। निधायाऽग्रे इति। पीठादेरुपरि स्वपादतलाधः। सन्ध्यास्विति। पञ्चदशदिनसायङ्कालसन्ध्यास्वित्यर्थः। वशमायाति वाञ्छित इति क्वचित् पाठः॥ ८८-९० ॥**

भूर्जपत्र पर साध्यनाम एवं कार्य को इस मन्त्र के मध्य में लिख कर इस यन्त्र को कुलाल चक्र की मिट्टी से बनाये गये द्वादश अङ्गुल प्रमाण शत्रु की प्रतिमा के गले में बाँध देवे, पुनः प्राण प्रतिष्ठा कर उस पुत्तली की कुसुमादि से पूजा करे। पुनः उसे आसन पर अपने पैर के नीचे रख कर १००८ बार इस मन्त्र का जप पन्द्रह दिन पर्यन्त सन्ध्या काल में करे तो वह निश्चय ही अपना मनोरथ प्राप्त कर लेता है ॥ ८८-९० ॥

**हुत्वाऽयुतं निधायाऽग्रे तीक्ष्णांस्त्रिंशच्छरान् पुनः।**
**तेषु सम्पातयेद् भूयः स्पृष्ट्वा तान्त्रियुतं जपेत् ॥ ९१ ॥**
**वेधयेत् परसेनायां क्षणान्नष्टा दिशो दश।**

**अभ्यर्च्येति। वन्यकुसुमचन्दनैः। तीक्ष्णतैलेनेति कटुतैलेन राजिकातैलेनेति केचित्। हुत्वेति सम्बन्धः। मन्त्रविदित्यनेनैतदुक्तं भवति। स्वस्तिकादौ दुकूलावृतं पीठं संस्थाप्य तत्र शरान्निधाय तेषु देवीमावाह्य सम्पूज्य ततस्त्रिकोणकुण्डे अग्निमाधाय तत्रापि देवीमभ्यर्च्य हुनेदिति। तदुक्तम्—**

पीठे स्वस्तिकमध्यस्थे मायाचक्रगतेऽपि वा ।
विधिवत् पूजयेत् सूक्ष्मदुकूलादिसमावृते ॥
निधाय निशितान् स्वर्णपुङ्खास्त्रिंशच्छिलीमुखान् ।
कात्यायनीं समावाह्य गन्धाद्यैः प्रवरैर्यजेत् ॥
त्रिकोणकुण्डे पूर्वोक्तक्रमोत्पन्नविभावसोः ।
आवाह्य षोडशभुजां तामिष्ट्वा चन्दनादिभिः ॥
सिद्धार्थतैलं जुहुयात् सहस्रमथवाऽयुतम् ।
नियुतं तत्र लम्बेन सम्पातेन विलेपयेत् ॥
उद्धवास्य देवीं तत्रैव हुतसंख्यं जपेदिति ।
रक्तेन तन्तुना पुङ्खसविधे वेष्टयेद् घटम् ॥
तेषु विद्धेषु दक्षेण धन्विना वैरिवाहिनी ।
विनष्टसंज्ञा शक्रेण पालिताऽप्यनुधावति ॥ इति ॥

नियुतं लक्षम् ॥

वेधयेदिति । एतादृशं क्रूरकर्म्म प्रतिलोममन्त्रेणेति पद्मपादाचार्याः । स्वबीजाद्येनाऽनुलोमेन वा ॥ ९०-९२ ॥

मन्त्रवेत्ता साधक देवी वन्य पुष्प एवं चन्दन से पूजा कर कटु तैल से प्रदीप्त अग्नि में तीस वाण अपने आगे रख कर दश हजार हवन करे और होम शेष घृत उस बाण पर छोड़ता जाय पुनः उन बाणों को स्पर्श करते हुये एक लाख जप करे । इस प्रकार से अभिमन्त्रित वाणों को शत्रु सेना पर छोड़े तो शत्रुओं की सेना दशों दिशाओं में नष्ट हो जायगी । नष्ट होने से बची खुची सेना भाग जायगी ॥ ९०-९२ ॥

**प्राप्नुयान्नष्टसंज्ञा सा पलायनपरायणा ॥ ९२ ॥**
**जपित्वा सितगुञ्जानां कुडवं कुलिकोदये ।**
**विकिरेच्छत्रुसेनायां गूढः सन्नापणादिषु ॥ ९३ ॥**
**ज्वरमारी महारोगैः पीडिता सैन्यनायकैः ।**
**परस्परविरोधेन नश्येद् गच्छेन्म्रियेत सा ॥ ९४ ॥**

कुडवमिति । पलचतुष्टयम् । कुडवं चतुःपलं स्यादित्युक्तेः । कुलिकोदये विकिरेदिति । कुलिकस्य कालविशेषस्योदये । तल्लक्षणं ज्योतिषरत्नमालायाम्—

मन्वर्कदिग्वस्वृतुवेदपक्षैरर्कान्मुहूर्त्तैः कुलिका भवन्ति ।
दिवा निरेकैरथ यामिनीषु ते गर्हिताः कर्मसु शोभनेषु ॥ इति ।

मनु १४ अर्क १२ दिक् १० वसु ८ ऋतु ६ वेद ४ पक्ष २ । सैन्यनायकैः परस्परविरोधेन पीडितेत्येव । पूर्वहेतोर्नश्येत् भ्रश्येत् । द्वितीयहेतोर्गच्छेदिति निवृत्त्य गच्छेदित्यर्थः । समुच्चयेन तृतीयम् ॥ ९२-९४ ॥

चारपल सफेद गुञ्जा के चूर्ण को लेकर कुलिक नामक योग के उदय होने पर जप करे । पुनः गुप्त रूप से शत्रु की सेना में अथवा शत्रु की दूकान में उसे

फेंक देवे तो शत्रु की सेना अथवा दूकान का मालिक ज्वर तथा महामारी से नष्ट हो जाता है, अथवा महारोग से पीडित होता है, सैन्यनायकों के परस्पर विरोध से सारी सेना लौट कर भाग जाती है ॥ ९३-९४ ॥

पुत्तलीप्रयोगः

**सेनासंस्तम्भने मन्त्री कारस्करसमुद्भवैः।**
**पुष्पैः सहस्रं जुहुयात्तत्पत्रैस्तां निवर्त्तयेत्॥ ९५ ॥**

मन्त्रीति पृथिवीबीजादित्वं सूचितम् । ध्यानविशेषश्च—

पीतां पाशगदाशूलसायोमुष्टिलसद्भुजाम् ।
क्रूरास्यां देवतामूर्त्तिं ध्यायेत् स्तम्भनकर्मणि ॥ इति ॥

कारस्कर इति विषतिन्दुकः । कुचिला इति कान्यकुब्जभाषायाम् । तत्पत्रैस्तां निवर्त्तयेदिति । कारस्कारसहस्रपत्रहोमेन सेनानिवर्त्तनं कुर्यादित्यर्थः ॥ ९५ ॥

मन्त्रवेत्ता शत्रुसेना के संस्तभन प्रयोग में कुचिला के वृक्ष के पुष्पों अथवा पत्रों से एक एक सहस्र होम करे तो सेना स्वयमेव लौट जाती है ॥ ९५ ॥

**अङ्गारवारे कुलिके जप्त्वा भस्म चितोद्भवम् ।**
**विनिक्षिपेद्रिपोर्मूर्घ्नि विद्विष्टो देशतो व्रजेत् ॥ ९६ ॥**
**मरुन्निपातितैः पत्रैः कारस्करसमुद्भवैः ।**
**तस्य पादरजोयुक्तैर्होमादुच्चाटयेदरीन् ॥ ९७ ॥**

अङ्गारेति भौमे । तत्र च दशमो मुहूर्त्तः कुलिको भवति । तस्मिन् समये रिपोर्मूर्ध्नि भस्म निक्षिपेदिति सम्बन्धः । जपत्वेत्यष्टोत्तरशतमित्यादि । अष्टोत्तरशतं जप्तं यच्छिरसि प्रक्षिपेच्चिताभस्म । इत्युक्तेः । विनिक्षिपेदिति । देवीं ध्यायन् ।

तत्र ध्यानविशेषस्तन्त्रान्तरे—

कृष्णां करालवदनां भुजङ्गैरभिमण्डिताम् ।
मारीचूर्णादिदहनशूलराजद्भुजाकुलाम् ॥
दिगम्बरां महादुर्गां चिन्तयेद् द्वेषणादिषु ।
उत्सादभ्रमणोच्चाटकृत्येच्छाधावनोद्यताम् ॥ इति ॥

तस्य पादरजोयुक्तैरिति । तस्य वैरिणः पादरजो वामपादरज इति परमगुरवः । उच्चाटयेदिति । वायुबीजादित्वं ज्ञेयम् ॥ ९६-९७ ॥

चिता का भस्म बायें हाथ में लेकर मङ्गलवार के दिन दशम मुहूर्त्त में जब कुलिक योग आवे उस समय १०८ बार इस मन्त्र के जप से अभिमन्त्रित कर शत्रु के शिर पर डाल देवे तो वह शत्रु देश छोड़कर अन्यत्र चला जाता है ॥ ९६ ॥

साधक यदि कारस्कर (कुचिला) वृक्ष के वायु के द्वारा गिराये गये पत्तों को शत्रु के बायें पैर में लगी हुई धूलि से युक्त कर होम करे तो शत्रु का उच्चाटन हो जाता है ॥ ९७ ॥

कारस्करमयीं कृत्वा प्रतिमामतिशोभनाम् ।
जप्तां प्रतिष्ठितप्राणां छेदयेदङ्गशः पुनः ॥ ९८ ॥
काकोलूकवसायुक्तामष्टोत्तरसहस्रकम् ।
कृष्णे पक्षे चतुर्दश्यां श्मशाने हव्यवाहने ॥ ९९ ॥
जुहुयान्म्रियतेऽरातिरेवमेव दिनत्रयात् ।
उन्मत्तसमिधां होमान्मृताः स्युः शत्रवः क्षणात् ॥ १०० ॥

प्रतिमामिति षण्णवत्यङ्गुलायाम् । यदाहुः—

मारणे दारुरूपां तां द्वादशाङ्गुलसम्मिताम् ।
षण्णवत्यङ्गुलां वापि कुर्यान्मात्राङ्गुलैः क्रमात् ।
होमार्थं कल्पितायास्तु तस्याः प्रोक्तो विधिः परः ।
वश्याकर्षणयोः प्रोक्तां तां कुर्याद् द्वादशाङ्गुलैः ॥ इति ॥

जप्तामष्टोत्तरशतावृत्त्या । छेदयेदिति अष्टोत्तरसहस्रम् । अङ्गुष्ठ इति । दक्षिणाङ्गुष्ठादि वामाङ्गुष्ठानम् । श्मशाने हव्यवाहन इति व्यधिकरणे सप्तम्यौ । एवमेवेति । तदुक्तम्—

द्रुमकुड्यनिपातेन निर्वातिनाऽरिखड्गतः ।
सलिले पावके सर्पदंशान्मत्तद्विपाद् भटात् ॥
यक्षराक्षसगन्धर्वपिशाचब्रह्मराक्षसैः ।
अन्यैर्वा कारणैः क्षिप्रं नाशमेति रिपुर्ध्रुवम् ॥ इति ।

दिनत्रयादिति । चतुर्दशीत्रयादित्यर्थः । 'त्रिचतुर्दशीप्रयोगादर्वाङ्म्रियते रिपुर्न सन्देहः' इत्युक्तेः । मारणे ध्यानविशेषोऽपि तन्त्रान्तरे—

कालमेघनिभां दुर्गां दन्दशूकविभूषणाम् ।
निशितं दधतीं खड्गं निजदक्षिणपाणिना ॥
सव्येन पाणिना साध्यं केशे संगृह्य कर्षतीम् ।
सिंहस्कन्धस्थितां ध्यायेन्मन्त्री मारणकर्मणि ॥ इति ।

अन्योऽपि विशेषः—शान्तिके पौष्टिके चापि वश्ये स्तम्भनकर्मणि ।
जपेत् स्वमन्त्ररक्षायै मन्त्रमष्टोत्तरं शतम् ॥
उच्चाटनोत्सादने च द्वेषणे मोहने भ्रमे ।
मारणे च जपेन्मन्त्री मनुं तद्वत् सहस्रकम् ॥ इति ।

उन्मत्तेत्यत्र ध्यानविशेषः ।

शतभङ्गाह्वयं चूर्णं कपालं गरपूरितम् ।
दधाना शाबरी दुर्गा ध्येया मादनकर्मणि ॥ इति ।

उन्मत्त इति । धुस्तूरः ॥ ९८-१०० ॥

साधक कारस्कर वृक्ष (कुचिला) के लकड़ी की ९६ अङ्गुल की शत्रु की अत्यन्त सुन्दर प्रतिमा निर्माण करावे । तत्पश्चात् उसमें प्राण प्रतिष्ठा कर १०८

आवृत्ति जप करे । तदनन्तर उस प्रतिमा का एक एक अङ्ग छेद देवे । पुनः कौआ और उलूक के मिले हुये वसा (मेद) से १००८ संख्या में कृष्ण पक्ष के चतुर्दशी के दिन श्मशान की अग्नि में होम करे तो शत्रु तीन दिन के भीतर ही मर जाता है । धत्तूर की समिधा द्वारा होम करने से क्षण मात्र में सभी शत्रु मर जाते हैं ॥ ९८-१०० ॥

**उलूककाकयोः पत्रैः स्ववसारक्तसंयुतैः ।**
**जुहुयान्निशि कान्तारे शत्रुः कालातिथिर्भवेत् ॥ १०१ ॥**

**पत्रैरिति पक्षैः । स्ववसारक्तम् उलूककाकवसारक्तम् । कान्तार इति वने ॥ १०१ ॥**

उलूक और काक के पंखों को उनके मेद तथा रक्त में सान कर अर्द्धरात्रि में इस मन्त्र द्वारा होम करे तो शत्रु गहन वन में जाकर काल का अतिथि बन जाता है ॥ १०१ ॥

**शत्रोः प्रतिकृतिं मन्त्री प्रतिष्ठितसमीरणाम् ।**
**विषोषणविलिप्ताङ्गीमत्युष्णे निक्षिपेज्जले ॥ १०२ ॥**
**ज्वराक्रान्तो भवेच्छीघ्रं दुग्धसेकाच्छमं नयेत् ।**
**तर्जनीं त्रिशिखं दोर्भ्यां धारयन्तीं भयङ्करीम् ॥ १०३ ॥**
**रक्तां ध्यात्वा रवेर्बिम्बे प्रजपेदयुतं मनुम् ।**
**मारयेदचिरादेव रिपून् बन्धुसमन्वितान् ॥ १०४ ॥**
**खड्गखेटकरां क्रुद्धां सन्नद्धां भानुमण्डले ।**
**ध्यात्वा मन्त्रं जपेन्मन्त्री नाशयेदचिरादरीन् ॥ १०५ ॥**

**शत्रोः प्रतिकृतिमिति । यदि शत्रोर्जन्मनक्षत्रं ज्ञायते तदा तन्नक्षत्रवृक्ष काष्ठमयीम् । तदज्ञाने कारस्करमयीं द्वादशाङ्गुलाम् । नक्षत्रवृक्षा द्वाविंशे वक्ष्यन्ते । प्रतिष्ठितसमीरणामिति कृतप्राणप्रतिष्ठाम् । उषणमिति मरिचम् । 'मरिचं श्यामलं प्रोक्तं वल्लोजं चोषणं स्मृतम्' इति रुद्रः । प्रतीकारमाह दुग्धेति ।**

**तर्जनीमिति । तर्जनीमुद्रां प्रागुक्ताम् । त्रिशिखमिति त्रिशूलम् । सन्नद्धां कृतसन्नाहाम् । भानुमण्डले ध्यात्वा पूर्ववदयुतं मन्त्रं जपेदिति सम्बन्धः । मन्त्रीति । वेलाकालादिज्ञः ॥ १०२-१०५ ॥**

यदि शत्रु का नक्षत्र ज्ञात हो तो उस नक्षत्राधिदैवत वृक्ष की लकड़ी से (द्र. २२, २६०-१६३) यदि शत्रु का जन्म नक्षत्र न ज्ञात हो तो कुचिला के वृक्ष की लकड़ी से १२ अङ्गुल की शत्रु की प्रतिकृति निर्माण करवावे । तदनन्तर उसमें प्राण प्रतिष्ठा करे । फिर विष मिश्रित मरीच को पीसकर उसमें लेप करे । तत्पश्चात् खौलते हुये जल में उसे डाल देवे ॥ १०२ ॥

ऐसा करने से शत्रु शीघ्र ही ज्वराक्रान्त हो जाता है, यदि उसे स्वस्थ करना हो तो दूध में उस प्रतिकृति को डाल देवे । ऐसा करने से ज्वर शान्त हो जाता

है। एक हाथ से तर्जनी मुद्रा तथा दूसरे हाथ में त्रिशूल लिये हुये भयंकरी रक्तवर्णा श्री दुर्गा का सूर्यमण्डल में ध्यान करते हुये ऊपरोक्त मन्त्र का दस हजार जप करे तो शीघ्र ही शत्रु प्रणष्ट हो जाते हैं ॥ १०५ ॥

**चापबाणधरां भीमां सिंहस्थां ज्वलनोपमाम् ।**
**सृजन्तीं बाणनिवहान्धावन्तीं तादृशं रिपुम् ॥ १०६ ॥**
**ध्यात्वा जपेन्मनुमिममयुतं तोयमध्यगः ।**
**रिपुं च परसेनां च द्रुतमुच्चाटयेद् ध्रुवम् ॥ १०७ ॥**

तादृशमिति । धावन्तम् । तोयमध्यग इति जान्वधोभागपर्यन्तम् । कारस्करमयीं कृत्वेति । उलूककाकयोः पत्रैरिति । तर्जनीं त्रिशिखं दोर्भ्यामिति । खड्गखेटकरां सन्नद्धामिति । द्रुतमुच्चाटयेद्ध्रुवमित्यादि क्रूरकर्म वेलाकालकलातिथिनक्षत्र-रिक्तास्तस्य ग्रहर्क्षाष्टवर्गप्रातिलोम्यं पातालादियोगांश्च ज्ञात्वा तत्समये कृतं शीघ्रसिद्धिदं भवति । तत्र वेला नाम चन्द्रोदयमारभ्य पञ्चदशघटिकापर्यन्तं समुद्रस्य क्षोभो भवति सा चन्द्रवेला । तदा क्रूरकर्माणि न कुर्यात् । तदनन्तरं पुनः पञ्चदशघटिकापर्यन्तं वेला नास्ति तदा क्रूरकर्म कुर्यात् । पुनस्तदनन्तरं पञ्चदशघटिकापर्यन्तं वेला । पुनस्तावत्कालं सा नास्ति । कालस्तु—

कुलिकः स्थविरो योगस्तारा वैनाशिकी कुजः ।
अष्टमो राशिरित्याद्यास्ताराः स्युः क्षुद्रकर्मणि ॥ इति ।

कला नाम चन्द्रकला सा शुक्ले वर्द्धते कृष्णे त्रुट्यति । तदष्टमी-मारभ्याऽमावास्यापर्यन्तं कुर्यात् । तिथिरिक्ताः प्रसिद्धाः । नक्षत्ररिक्ता विषनाड्यः । अन्यत्र तु—

आयुर्दायं रिपोर्ज्ञात्वा लग्नोक्तर्क्षानुगुण्यतः ।
तदात्मिकग्रहाणां च स्थितिमष्टकवर्गकम् ॥
त्रयाणामानुकूल्येन कुर्यात्तदाभिचारकम् ।
अन्यथा क्रूरकर्माणि कुर्वाणं नाशयन्ति हि ॥
तान्येव कर्माणि ततस्तत्त्रयप्रातिकूल्यतः ।
विदध्यादन्यथा शक्त्या नैष्फल्यं चात्मनाशनम् ॥
रिपोरष्टमलग्ने च काले त्वष्टमराशिगे ।
स्थाने कुर्यादनिष्टानि तद्विनाशाय साधकः ॥
पातालयोगे नीचाख्ये विषयोगे च मृत्युजे ।
नाशयोगे च दिनजमृत्यौ क्रकचयोगके ॥
चण्डीशचण्डायुधके महाशूले च काणके ।
रक्तस्थूणे कण्टकाख्ये स्थूणे पञ्चार्कसंज्ञके ॥
कुर्यात्प्रयोगान् प्रत्यर्थिभङ्गाय निधनाय च ।
निग्रहाय निरीक्ष्यैवं कुर्यात् सिद्धिमवाप्नुयात् ॥ इति ।

अष्टमो राशिश्चक्रमन्त्रे वक्ष्यते । अन्ये योगाः ज्योतिःशास्त्रतो ज्ञेयाः ॥ १०६-१०७ ॥

धनुष बाण धारण कर सिंह के ऊपर सवार, अग्नि के समान तेजस्विनी दौड़ दौड़ कर शत्रु मण्डल पर बाणों की वर्षा करती हुई, इस प्रकार की भगवती भीमा का ध्यान कर जल के मध्य में इस मन्त्र का दस हजार जप करे तो वह शत्रु और शत्रु की सेना का निश्चित रूप से उच्चाटन कर देता है ॥१०६-१०७॥

**आनित्यकसमिद्धोमान्मुच्यते रोगशोकतः।**
**पुष्पैस्तदीयैर्वशयेन्मधुराक्तैर्मतङ्गजान् ॥ १०८ ॥**
**रक्षायै पञ्चगव्येन लिम्पेज्जप्तेन दन्तिनः।**
**गव्याज्यतिलसिद्धार्थैरानित्यकसमिद्वरैः ॥ १०९ ॥**
**दुग्धान्नपञ्चगव्याभ्यां तण्डुलेन घृतेन च।**
**एतैः पृथक् पृथक् द्रव्यैरष्टोत्तरसहस्रकम् ॥ ११० ॥**
**जुहुयाद्दिनशो विप्रान् भोजयेन्मधुरादिभिः।**
**गुरवे दक्षिणां दद्याद्वस्त्राभरणसंयुताम् ॥ १११ ॥**
**मातङ्गाश्चतुरङ्गाश्च वर्द्धन्ते विधिनाऽमुना।**
**सर्वव्याधिविनिर्मुक्ताः क्षुद्रपीडाविवर्जिताः ॥ ११२ ॥**

**अनित्यकमिति । कान्यकुब्जभाषायाम् एरच्छि इति । गव्याज्यमित्येकम् । एतैरित्यष्टभिर्द्रव्यैः । दिनशः प्रत्यहम् । पृथक् जुहुयादिति । क्रमेण प्रथमदिने प्रथमद्रव्येण द्वितीये द्वितीयेनेति ज्ञेयम् । दिनश इति विप्रान् भोजयेदित्यत्राप्यन्वेति ॥ १०८-११२ ॥**

आनित्यक (एरछी) की समिधा के होम से साधक रोग और शोक से मुक्त हो जाता है । त्रिमधुर (आज्य, दूध, मधु मिश्रित उसी वृक्ष के पुष्पों के होम से बड़े बड़े मतङ्गज वश में हो जाते हैं ॥ १०८ ॥

हाथी की रक्षा के लिये इस मन्त्र से अभिमन्त्रित पञ्चगव्य का लेप करना चाहिए । गौ का घृत, तिल, श्वेत सर्षप, श्रेष्ठ आनित्यक की समिधा, दूध में पकाये गये खीर, पञ्चगव्य, तण्डुल और घृत इन पदार्थों में पृथक् पृथक् एक एक से १००८ वार एक एक दिन के क्रम से होम करे । ब्राह्मणों को उसी प्रकार प्रतिदिन मधुर भोजन करावे और वस्त्र और आभरणों से युक्त दक्षिणा द्रव्य गुरु को प्रदान करे, तो इस प्रकार के विधान से उस पुरुष के हाथी तथा घोड़े बढ़ते रहते हैं वह सब प्रकार की व्याधियों से मुक्त रहता है और क्षुद्र ग्रह उसे पीड़ा नहीं पहुँचाते ॥ १०९-११२ ॥

**कारयेद् ब्रह्मवृक्षेण शिल्पिनायुधपञ्चकम्।**
**शङ्खखड्गरथाङ्गानि शार्ङ्गं कौमोदकीं क्रमात् ॥ ११३ ॥**

**कारयेदिति । तालप्रमाणम् । ब्रह्मवृक्षेणेति पलाशेन । द्विजभूमिस्थेन सफलेनेति ज्ञेयम् । शिल्पिनेति । निपुणतरेणेतिशेषः । तदुक्तमाचार्यैः । साधुशिल्पविदेति । रथाङ्गं चक्रम् । शार्ङ्गं धनुः । कौमोदकीं गदाम् । क्रमादित्यस्यायमर्थः । महान्तं पलाशं दिक्षु**

अङ्कयित्वा छित्त्वा क्रकचेन पञ्चधा निर्भिद्य मध्यभागेन शङ्खं पूर्वादि चतुर्दिग्भागैः खड्गादीनि कारयेदिति । तदुक्तमाचार्यैः—

द्विजभूरुहं महान्तं छित्त्वा निर्भिद्य पञ्चधा भूयः ।
आशाक्रमेण पञ्चायुधा विधेयाश्च साधु शिल्पविदा ॥ इति ॥ ११३ ॥

शिल्पी के द्वारा (ब्राह्मण भूमि में स्थित ताल प्रमाण के) पलाश वृक्ष को नाप कर छील कर आरा से उसका पाँच भाग कर शङ्ख, खड्ग, चक्र शार्ङ्ग (धनुष) तथा कौमुदकी गदा का निर्माण करावे ।। ११३ ।।

आयुधकल्पनविधिः

**पञ्चगव्येषु निःक्षिप्य तानि स्पृष्ट्वा मनुं जपेत् ।**
**सम्यक् पञ्चसहस्राणि तेषु सम्पातयन् पुनः ॥ ११४ ॥**
**तावदाज्येन जुहुयान्मन्त्रैः स्वैः पूजयेत् क्रमात् ।**
**उद्धृत्य पञ्चगव्येभ्यः पूर्ववत् प्रजपेन्मनुम् ॥ ११५ ॥**

पञ्चगव्येषु निक्षिप्येति । पलाशस्यैव पात्रं कृत्वा तन्मध्ये पञ्चगव्यं विनिक्षिप्य तत्र तानि निक्षिप्येत्यर्थः । मनुं मूलमन्त्रम् । पञ्चसहस्राणीति समुदायेन । सम्यगिति प्रत्येकं सहस्रजपः । तेषु आयुधेषु सम्यक् सम्पातयन् तावत् पञ्चसहस्रेण जुहुयात् । सम्यगिति । प्रत्यायुधमेकैकसहस्ररीत्या । मन्त्रैः स्वैरिति सप्तदशे वक्ष्यमाणैः । पूजयेदिति । प्राणप्रतिष्ठापूर्वं पात्र एव । क्रमादिति । मध्यस्थशङ्खप्रभृतीत्यर्थः । पूर्ववदिति । पुनस्तानि स्पृशन् तावत्संख्यम् । ईशानसंहितायान्तु—

द्विजभूभ्यां स्थितं छित्त्वा फलाढ्यं विप्रभूरुहम् ।
मूलाग्रहीनं निर्भिद्य पञ्चधा सर्वतः समम् ॥
मध्याद्यंशैः क्रमाच्छङ्खं नन्दकं चक्रमेव च ।
शार्ङ्गं कौमोदकीं तालप्रमाणं परिकल्पयेत् ॥
सपञ्चगव्ये तत्पात्रे निक्षिपेत्तं निधाय च ।
स्वस्तिके सम्यगभ्यर्च्य जपेत्पञ्चसहस्रकम् ॥
घृतेन तावद्धुत्वाज्यसम्पातेन यथाविधि ।
आलिप्य तावद्भूयोऽपि जपेन्मन्त्रमिदं सुधीः ॥
खात्वाऽवटान् हस्तमानान् मध्ये पूर्वादि दिक्षु च ।
तत्र पीठं समभ्यर्च्य मूलमन्त्रेण विन्यसेत् ॥
तानि शङ्खे महादुर्गामावाह्याऽस्मिन् स्थितां यजेत् ।
तत्तदायुधमूर्त्तीश्च दिशासूदितलक्षणाः ॥
अस्त्रमन्त्रेण परितः प्राकारं परिकल्पयेत् ॥इति ॥११४-११५ ॥

पुनः पलाश निर्मित पात्र में पञ्चगव्य डालकर उन अस्त्रों को उसमें डाल देवे, फिर उसका क्रमशः स्पर्श कर एक एक हजार के क्रम से पाँच हजार इस मन्त्र का जप करे और उसी प्रकार एक एक हजार के क्रम से पाँच हजार होम करे, होम शेष घृत को एक एक हजार के क्रम से प्रत्येक शस्त्रों पर गिराता रहे ।

तदनन्तर प्राणप्रतिष्ठा कर उन उन अस्त्रों के मन्त्रों से उनकी पूजा करे, तदनन्तर पञ्चगव्य से उन अस्त्रों को निकाल कर पूर्ववत् एक एक हजार के क्रम से इस मन्त्र का जप करे ॥ ११४-११५ ॥

**अवटान् पञ्च निखनेद्दिक्षु मध्यादिषु क्रमात् ।**
**अवटेष्वेषु पूर्णेषु पञ्चगव्येन साधकः ॥ ११६ ॥**
**आयुधानि प्रजप्तानि पञ्चघोषपुरःसरम् ।**
**विन्यसेत्तेषु मध्यादि पूजां कुर्याद्यथा पुरा ॥ ११७ ॥**
**वालुकाभिः समापूर्य मृद्भिः कुर्यात्समस्थलम् ।**
**बलिञ्च विकिरेत्तत्र तेषां मन्त्रैर्यथाक्रमम् ॥ ११८ ॥**
**दिक्पतिभ्यो बलिं दत्त्वा ब्राह्मणान् भोजयेत्ततः ।**
**दीनान्धकृपणादींश्च तोषयेद्भोजनादिभिः ॥ ११९ ॥**

**अवटानिति । हस्तमानान् । साधक इत्यनेन मूलमुच्चरन् विन्यसेदित्युक्तम् । प्रजप्तानीत्यनुवादः । विन्यसेदिति मूलेन । यथापुरेति । स्वस्वमन्त्रैः । यथाक्रममिति मध्यादि ॥ ११६-११९ ॥**

फिर मध्य में एक हाथ का एक गड्ढा तथा उसके चारों दिशाओं में एक एक हाथ के चार गढ्डे खोदकर उसे पञ्चगव्य से पूर्ण करे । तदनन्तर पाँच प्रकार के बाजे के साथ पूर्व प्राप्त आयुधों को मूल मन्त्र का पाठ करते हुये मध्य के क्रम से उन उन गड्ढों में स्थापित करे । पश्चात् उन उन अस्त्रों के मन्त्रों से उनकी पूजा करे। पहले बालू पश्चात् मिट्टी डाल कर उन गड्ढों को समतल कर देवे । पुनः उन उन मन्त्रों से मध्य गड्ढे के क्रम से बलि प्रदान करे । तदनन्तर दिक्पालों को बलि देकर ब्राह्मणों को भोजन करावें और दीन अन्धे तथा अशक्त लोगों को भी भोजनादि से संतुष्ट करे ॥ ११६-११९ ॥

**गुरवे दक्षिणां दद्यादात्मवित्तानुसारतः ।**
**यत्रैवं विहिता रक्षा देशे वा नगरे पुरे ॥ १२० ॥**
**ग्रामे गेहेऽथवा तत्र वर्द्धन्ते सम्पदः सदा ।**
**अश्मपातादयो दोषा भूतप्रेतादिसंयुताः ॥ १२१ ॥**
**अभिचारकृताः कृत्यारिपुचौराद्युपद्रवाः ।**
**नेक्ष्यन्ते तां दिशं भीतास्तर्जिता देवताज्ञया ॥ १२२ ॥**

अपनी शक्ति के अनुसार गुरु को दक्षिणा देकर संतुष्ट करे । जहाँ कहीं घर, गाँव देश नगर में इस प्रकार रक्षा के लिये प्रयत्न किये जाते हैं, वहाँ वहाँ उस घर गाँव, देश तथा नगर में संपत्ति की अभिवृद्धि होती है । वहाँ आकाश से होने वाले ओला, पाला तथा पत्थर का भय नहीं रहता । भूत प्रेतादिजन्य बाधा नहीं होती ॥ १२०-१२१ ॥

वहाँ अभिचार हिंसा के लिये किया जाने वाला तान्त्रिक क्रूर कर्म, कृत्या, शत्रु तथा चोरों का उपद्रव नहीं होता । देवता की आज्ञा से भयभीत होने के कारण किसी प्रकार के उपद्रव उस दिशा की ओर आँख उठा कर देख भी नहीं सकते, उपद्रव करना तो दूर रहा ॥ १२२ ॥

वनदुर्गायन्त्रम्

**पद्मं भानुदलान्वितं प्रविलिखेत्तत्कर्णिकायां पुन-**
**स्तारं शक्तिगबीज साध्यसहितं तत्केसरेषु क्रमात् ।**
**मर्दिन्या मनुसंभवान् युगलशो वर्णान् पुनः पत्रगान् -**
**मन्त्रार्णान् गुणशो विधाय विलिखेदन्त्यं तदन्त्ये दले ॥१२३॥**
**मातृकावर्णसंवीतं भूपुरद्वयमध्यगम् ।**
**यन्त्रं विन्ध्यनिवासिन्याः प्रोक्तं सर्वसमृद्धिदम् ॥ १२४ ॥**
**रक्षाकरं विशेषेण क्षुद्रभूतादिनाशनम् ।**
**राज्यदं भ्रष्टराज्यानां वश्यदं वश्यमिच्छताम् ॥ १२५ ॥**
**सुतार्थिनीनां सुतदं रोगिणां रोगशान्तिदम् ।**
**बहुना किमिहोक्तेन यन्त्रं तत् कामदो मणिः ॥ १२६ ॥**

**॥ इति श्रीलक्ष्मणदेशिकेन्द्रविरचिते शारदातिलके**
**एकादशः पटलः समाप्तः ॥ ११ ॥**



यन्त्रमाह पद्ममिति । भानुदलान्वितं द्वादशदलान्वितं पद्मं लिखेत् । तत्कर्णिकायां शक्तिगं मायाबीजगं यद्बीजं दौर्गं सविसर्गं तत्र यत् साध्यं तेन सहितं तारं लिखेत् । एतेन द्वादशदलपद्मकर्णिकायां प्रणवं विलिख्य तत्र मायाबीजं तत्र दौर्गं बीजं तत्र साध्यं लिखेदित्युक्तं भवति । मर्दिन्या इति महिषमर्दिन्याः । युगलश इत्यनेन महिषमर्दिनीमन्त्रस्यावृत्तित्रयमुक्तम् । मन्त्रार्णान् मूलमन्त्रार्णान् । गुणशस्तिस्रः । अन्त्यमेकमक्षरमन्त्ये द्वादशे लिखेत् ॥ १२३-१२६ ॥

**॥ इति श्रीराघवभट्टविरचित-शारदातिलकटीकायां सत्सम्प्रदायकृतव्याख्यायां पदार्थादर्शाभिख्यायामेकादशः पटलः ॥ ११ ॥**



**विन्ध्यवासिनी यन्त्र**—साधक द्वादशपत्रात्मक कमल का निर्माण कर उसकी कर्णिका में प्रणव लिखकर उसी में माया बीज (ह्रीँ), उसी में दुर्गा बीज (दुँः), पुन: उसी में साध्य तथा उसके कार्य को लिखे । तदनन्तर केशरों में तथा द्वादश पत्रों में महिषमर्दिनी के अष्टाक्षर मूल मन्त्र ('महिषमर्दिन्यै स्वाहा' द्र. ११. २१) को दो दो अक्षरों के क्रम से तीन आवृत्ति में लिखे । केवल अन्तिम एक अक्षर बारहवें पत्र पर लिखे ॥ १२३ ॥

तदनन्तर दो भूपुर के मध्य में मातृका वर्णों को लिख कर चारों ओर से उसे घेर देवे । इस प्रकार से निर्मित विन्ध्यवासिनी का यह यन्त्र सब प्रकार की समृद्धि प्रदान करता है ॥ १२४ ॥

विन्ध्यवासिनी का यह यन्त्र विशेष रूप से मनुष्यों को आपत्ति से बचाता है, क्षुद्रग्रह बाधा, भूतबाधा आदि उपद्रव का नाश करता है । राज्यभ्रष्टों को राज्य प्रदान करता है तथा वशीकरण करने वालों को वश में करने की शक्ति प्रदान करता है ॥ १२५ ॥

संतान चाहने वालों को सन्तान देता है, रोगियों के रोग का विनाश करता है । इस विषय में बहुत क्या कहा जाय यह यन्त्र कामनापूर्ण करने के लिये कामदमणि के समान है ॥ १२६ ॥

**॥ इस प्रकार शारदातिलक के ग्यारहवें पटल की डॉ० सुधाकर मालवीय कृत हिन्दी व्याख्या पूर्ण हुई ॥ ११ ॥**



# अथ द्वादशः पटलः

## अथ भैरवीप्रकरणम्

अज्ञानतिमिरध्वंसि संसारार्णवतारकम् ।
आनन्दबीजमवतादतर्क्यं त्रैपुरं महः ॥ १ ॥
अथ वक्ष्ये परां विद्यां त्रिपुरामतिगोपिताम् ।
यां ज्ञात्वा सिद्धिसङ्घानामधिपो जायते नरः ॥ २ ॥

एवं दुर्गामन्त्रानुक्त्वा मातृकापटले तार्त्तीयस्योद्दिष्टत्वाद्भैरवीमन्त्रं वक्तुमुपक्रमते । अज्ञानेति । त्रिपुराशब्दव्युत्पत्तिरुक्ताऽन्यत्र—

त्रिमूर्त्तिसर्गाच्च पुराभवत्वात् त्रयीमयत्वाच्च पुरैव देव्याः ।
लये त्रिलोक्या अपि पूरणत्वात् प्रायोऽम्बिकायास्त्रिपुरेति नाम ॥ इति ।

सिद्धेश्वरीमते तु— ब्रह्मविष्णुमहेशानैस्त्रिदेवैरर्चिता पुरा ।
त्रिपुरेति तदा नाम कथितं दैवतैः पुरा ॥ इति ।

अतिगोपितामित्यनेनैतदुक्तं भवति । मयाऽपि गुप्तमेव स्वरूपमुद्धृतमिति । अन्यथा विद्यां वक्ष्ये इति प्रतिज्ञाय विद्या वेद्येत्युपसंहारः अथ च मन्त्र उद्धृतः इदमसङ्गतं स्यात् । यतः 'शक्त्याद्या तु भवेद्विद्या शिवाद्यो मन्त्र उच्यते' इत्युक्तेः ।

तदुक्तम्— एषा सा शाम्भवी विद्या गुप्ता कुलवधूरिव ।
कर्णात्कर्णोपदेशेन सञ्चरत्यवनीतले ॥ इति ।

सिद्धीत्यादि विनियोगोक्तिः ॥ १-२ ॥

अज्ञान रूप अन्धकार को नष्ट करने वाला, संसार समुद्र से पार करने वाला, समस्त आनन्दों का एक मात्र बीज और मन वाणी से सर्वथा अतर्क्य कोई अनिर्वचनीय त्रिपुरा सम्बन्धि ज्योति हम लोगों की रक्षा करें ॥ १ ॥

**विमर्श**—'त्रिपुरा' शब्द की व्युत्पत्ति इस प्रकार की गई है—

त्रिमूर्त्तिसर्गाच्च पुराभवत्त्वात् त्रयीमयत्त्वाच्च पुरैव देव्याः ।
लये त्रिलोक्या अपि पूरणत्त्वात् प्रायोऽम्बिकायास्त्रिपुरेति नाम ॥

सिद्धेश्वरीमत के अनुसार यह व्युत्पत्ति है—

ब्रह्मा विष्णुमहेशानैस्त्रिदेवैरर्चिता पुरा ।
त्रिपुरेति तदा नाम कथितं दैवतैः पुरा ॥

अब अत्यन्त चिर काल से गुप्त रहने वाली 'त्रिपुरा-विद्या' को कहता हूँ। जिनके जान लेने पर मनुष्य सिद्ध समुदायों का ईश्वर बन जाता है ॥ २ ॥

त्रिपुराभैरवीमन्त्रः

**वियद्भृगुहुताशस्थो भौतिको बिन्दुशेखरः।**
**वियत्तदादि केन्द्राग्निस्थितं वामाक्षिबिन्दुमत् ।**
**आकाशभृगुवह्निस्थो मनुः सर्गेन्दुखण्डवान् ॥ ३ ॥**

मन्त्रमुद्धरति वियदिति । वियत् हः भृगुः सः हुताशो रेफः । ते तिष्ठन्त्यत्र सः सुपि स्थः बाहुलकादधिकरणे कः । भौतिक ऐ बिन्दुरनुस्वारः इत्याद्यं कूटम् । वियत् हः तदादिः सः। कः स्वरूपम् । इन्द्रो लः अग्नी रः । एते स्थिता यत्रेत्याहिताग्न्यादिः। वामाक्षि ई बिन्दुरनुस्वार इति द्वितीयं कूटम् ।

आकाशो हः भृगुः सः वह्नी रेफः मनुरौ सर्गो विसर्गः इन्दुखण्डः अनुस्वारः इति तृतीयं कूटम् । आद्यन्तयो रेफः कीलकम् । तदुक्तमाचार्यैर्भैरवीस्तवे—

आद्यं तृतीयमनलोर्जितमेव बीजं कूटं द्वितीयमनलेन विराजमानम् । इति ॥ ३ ॥

अब **त्रिपुरा विद्या का उद्धार** कहते हैं—वियत् (ह) भृगु (सः) हुताश (रेफ) उन सभी को अनुस्वार युक्त 'ऐं' से मिला देने पर त्रिपुरा का प्रथम कूट होता है । पुनः वियत् (ह) वह ह आदि में जिसके ऐसा सः पुनः कः ल् र इन अव्यवहित वर्णों को अनुस्वार युक्त ई में मिला देने पर द्वितीय कूट बनता है। पुनः आकाश, (ह) भृगु (सः) वह्नि (रेफ) इन्हें अनुस्वार विसर्ग युक्त औ में मिला देने से त्रिपुरा का तृतीय कूट होता है ॥ ३ ॥

अस्या वाक्कामशक्तित्वम्

**वाग्भवं प्रथमं बीजं कामबीजं द्वितीयकम् ।**
**तृतीयं कामराजाख्यं त्रिभिर्बीजैरितीरिता ॥ ४ ॥**

ऋष्यादिकथनम्

**पञ्चकूटात्मिका विद्या वेद्या त्रिपुरभैरवी ।**
**ऋषिः स्याद्दक्षिणामूर्त्तिश्छन्दः पङ्क्तिः समीरितः ॥ ५ ॥**

न्यासक्रमः

**देवता देशिकैरुक्ता देवी त्रिपुरभैरवी ।**
**नाभेराचरणं न्यस्येद्वाग्भवं मन्त्रवित् पुनः ॥ ६ ॥**
**हृदयान्नाभिपर्यन्तं कामबीजं प्रविन्यसेत् ।**
**शिरसो हृत्प्रदेशान्तं तार्त्तीयं विन्यसेत् ततः ॥ ७ ॥**
**आद्यं द्वितीयं करयोस्तार्त्तीयमुभयोर्न्यसेत् ।**
**मूद्ध्र्न्याधारे हृदि न्यस्येद् भूयो बीजत्रयं क्रमात् ॥ ८ ॥**

एषां प्रत्येकं नामान्याह वाग्भवमिति । पञ्चकूटात्मिकेति । हसकलरेति पञ्चव्यञ्जनसंयोगात् पञ्चकूटात्मकत्वं रेफरहितत्वेन चतुष्कूटत्वं रेफोपरि नादयोगे षट्कूटत्वं ज्ञेयम् । अस्यास्त्रिंशत्प्रस्तारभेदा ग्रन्थगौरवभयान्नोक्ताः । ते तन्त्रान्तरात् द्रष्टव्याः । आद्यं बीजं मध्यं शक्तिः अन्त्यं वा शक्तिः । व्यस्तबीजध्यानफलमुच्यते सारस्वतमतात्—

नवकुन्दनिभां देवीं मुक्ताजालविभूषणाम् ।
मुद्राकपालविद्याक्षमालाराजन्महाभुजाम् ॥
वाग्भवं यो महेशानि लक्षं जपति संयतः ।
कविता जायते तस्य नानावृत्तार्थशोभना ॥
रक्तां सुरतरोर्मूले विलसन्मणिपीठगाम् ।
सृणिपाशकपालेषुमातुलिङ्गधनुःकराम् ॥
रक्तैरलंकृतां पुष्पैर्मदाघूर्णितलोचनाम् ।
हेलाविलाससम्पन्नां नवयौवनसुन्दरीम् ॥
देवीं ध्यात्वा जपेलक्षं यो बीजं मध्यमं वशी ।
त्रैलोक्यं क्षोभयेदाशु पुरावत् सिद्धिभागसौ ॥
अक्षमालासुधाकुम्भमुद्रापुस्तकधारिणीम् ।
नवकुन्देन्दुसाङ्काशां राजन्मौक्तिकभूषणाम् ॥
शक्तिं संविन्मयीं ध्यात्वा बीजं सारस्वतं वशी ।
यो जपेत्जायते तस्य कविता भुवि सन्तता ॥ इति ॥

तन्त्रान्तरे च—विद्याकामो वाग्भवाख्यं शुक्लवस्त्रानुलेपनः ।
मौक्तिकाभरणो भूमिगृहे जप्यात् त्रिलक्षकम् ॥
गद्यपद्यान्युद्गिरन्तीं स्वं वाणीमिति भावयन् ।
पलाशैरेव जुहुयात् पुष्पैस्त्रिमधुराप्लुतैः ॥
स जायते कविश्रेष्ठः सुन्दरीणां च वल्लभः ।
त्रिलोकी वश्यकामश्चेत् कामराजं द्वितीयकम् ॥
कस्तूरीकुङ्कुमामोदमधुरोऽरुणभूषणः ।
रक्तक्षौमाम्बरधरो जपेल्लक्षत्रयं सुधीः ॥
नेत्राञ्चलैर्मदालोलैर्वशे विदधती जगत् ।
अम्बिकेति स्वकं रूपं ध्यायन् हृष्टेन चेतसा ॥
जुहुयान्मालतीपुष्पैः शीतकर्पूरसंप्लुतैः ।
जगन्ति तस्य वश्यानि भवन्ति बहुनाऽत्र किम् ॥

वाग्विलासमधिगन्तुमना यो बीजमन्त्यमपि पुष्करलक्षम्
संजपेद्विमलभूषणवस्त्रोऽसौ भवेत् कविवरोऽमितकीर्त्तिः ।
मालतीमुकुलकैर्दलद्दलैश्चन्दनाम्भसि घने निमज्जितैः
श्रीकरी कुसुमकैर्हतक्रिया सैव चाशु कविताकरी मता ॥ इति ।

अत्र ग्रन्थकृताऽतिगुप्ततरत्वाद्बीजत्रयस्य दीपन्युद्धारो न कृतः । तेन च विनेयं विद्या न सिद्धिदा । अतस्तदुद्धारः सिद्धेश्वरीतन्त्राल्लिख्यते—

**वागीश्वर्यास्तु मन्त्रे हुतवहदयितास्थानगं वाग्भवाख्यं**
**क्लिन्ने क्लेदिन्यपि स्यादिह तदनु महाक्षोभमित्येव योज्यम् ।**
**तस्मात् कुर्वित्यसौ चेन्मनुरयमुदितो रुद्धवर्णस्तदन्तस्-**
**तारान्मोक्षं तदन्ते कुरुपदमसहितं स्याच्च समोहनाख्यम् ॥**

**बीजानां दीपनानि स्युरिह हि मनवो यैः सुदीप्तः सदैव**
**त्रैबीजो मन्त्रराजो भवति जपविधौ सर्वसम्पत्तिकारी ।**
**विद्यानां पारगामी युवतिजनमनःक्षोभकारी विहारी ।**
**मन्त्री स्यात् सर्वसम्पन्नरतिपतिसदृशो मुक्तबाधश्चिरायुः ॥ इति ॥**

**चेतन्याह्लादन्युद्धारः प्रथमश्लोकव्याख्यानोक्तोऽनुसन्धेयः । उत्तरषट्के तु—**

**आदिमेन तु सा लुप्ता मध्यमेन तु कीलिता ।**
**अन्तिमेन तु सा छिन्ना तेन विद्या न सिध्यति ॥**
**आदिमादिमनादिं च मध्यं मध्यममध्यमम् ।**
**अन्त्यमन्त्यमनन्त्यं च त्रिपुरा शीघ्रसिद्धिदा ॥**
**आदिमध्ये तु मध्यादावन्त्यमध्ये तु संस्थितौ ।**
**पुरः क्षोभाय जप्तव्यं विधिनाऽनेन साधकैः ॥ इति ।**

**अन्यत्र तु—**

**आद्यं बीजं मध्यमे मध्यमादावन्त्यं चान्त्ये योजयित्वा जपेद् यः ।**
**त्रैलोक्यान्तः पातिनो भूतसङ्घा वश्यास्तस्यैश्वर्यभाजो भवेयुः ॥**
**आद्यं कृत्वा चावसानेऽन्त्यबीजं मध्ये मध्यं चादिमे साधकेन्द्रः ।**
**कुर्यान्नित्यं यो जपेन्मन्त्रमेनं जीवन्मुक्तः सोऽश्नुते दिव्यसिद्धिम् ॥ इति ।**

**करयोरिति वामदक्षिणयोः ।**

**तदुक्तम्—हस्ततले च सव्ये दक्षाह्वये द्वितीये । इति ॥ ४-८ ॥**

त्रिपुरा के प्रथम कूट को वाग्भव, द्वितीय कूट को काम बीज और तृतीय कूट को कामराज बीज कहते हैं इस प्रकार तीन बीज होने के कारण इन्हें त्रिपुरा कहा जाता है ॥ ४ ॥

इसके अतिरिक्त ह् स् क् ल् र् इन पाँच वर्णों के संयोग से पञ्चकूटात्मिका त्रिपुर भैरवी विद्या भी जाननी चाहिए ॥ ५ ॥

इस त्रिपुरा भैरवी मन्त्र के दक्षिणमूर्त्ति देवता हैं पक्ति छन्द है, आचार्यों ने त्रिपुर भैरवी देवी को इसका देवता कहा है । मन्त्रवेत्ता वाग्भव बीज से नाभि से लेकर चरणपर्यन्त भाग में वाग्भव से न्यास करे । हृदय से लेकर नाभिपर्यन्त भाग में कामबीज से न्यास करे तथा शिरः प्रदेश से लेकर हृदय पर्यन्त भाग में कामराज बीज से न्यास करे ॥ ५-७ ॥

पहले दूसरे बीज से क्रमशः बायें एवं दाहिनें हाथ पर, तृतीय बीज से दोनों हाथों में, तदनन्तर पुनः शिर में प्रथम बीज, मूलाधार में द्वितीया बीज तथा हृदय में तृतीय बीज से क्रमशः न्यास करे ॥ ८ ॥

नवयोनिन्यासः

नवयोन्यात्मकं न्यासं कुर्याद्बीजैस्त्रिभिः पुनः ।
कर्णयोश्चिबुके भूयः शङ्खयोर्वदने पुनः ॥ ९ ॥
नेत्रयोर्नसि विन्यस्येदंसयोः पिठरे पुनः ।
ततः कूर्परयोः कुक्षौ जानुनोर्ध्वजमूर्द्धनि ॥ १० ॥
पादयोर्गुह्यदेशे च पार्श्वयोर्हृदयाम्बुजे ।
स्तनयोः कण्ठदेशे च रत्यादिमथ विन्यसेत् ॥ ११ ॥

नवयोन्यात्मकमिति यदुक्तं तमेवाह कर्णेति । त्रित्रिस्थानैरेकैका योनिः । अत्र वामाङ्गादिन्यास इति केचित् । अत एव पूजायां वामकोण इत्याद्युक्तिः । शङ्खयोरिति । ललाटपार्श्वोच्चप्रदेशयोः । त्रिकाण्ड्यामपि—'शङ्खो निधौ ललाटास्थि' । नसीति नासिकायाम् । पिठरे उदरे । उच्चाकारत्वात्तस्य । कुक्षावित्यनेन नैकट्याद्योन्याकारतासिद्धये नाभिभागो लक्ष्यः । तदुक्तम् । कौर्परयोर्नाभिमण्डले न्यसेदिति । क्वचिन्नाभाविति पाठः । ध्वजो लिङ्गम् ॥ ९-११ ॥

इसके बाद इस प्रकार नवयोन्यात्मक न्यास करे (तीन तीन स्थानों में क्रमशः तीन बीजाक्षरों के एक एक अक्षर के न्यास करने से एक योनि होती है, इस प्रकार नीचे कहे गये २७ स्थानों में तीनों बीज की नव आवृत्ति होगी) दो कान और चिबुक में एक आवृत्ति, दोनों शङ्ख (गला प्रदेश) और मुख में दो आवृत्ति, दो नेत्र और नासिका में तृतीय आवृत्ति, दो कन्धे एवं उदर में चतुर्थ आवृत्ति, दो कूर्पर (केहुनी) और कुक्षि में पञ्चम आवृत्ति, दो जानु तथा लिङ्ग के ऊर्ध्व भाग में षष्ठ आवृत्ति, दो पैर एवं गुह्य भाग में सप्तम आवृत्ति, दोनों पार्श्व एवं हृदय में अष्टम आवृत्ति, दो स्तन तथा कण्ठ प्रदेश में क्रमशः तीन बीजों के न्यास से तीनों बीजाक्षरों की नव आवृत्ति सम्पन्न होती है, यही नव योन्यात्मक न्यास हुआ ॥ ९-११ ॥

मूले रतिं हृदि प्रीतिं भ्रुवोर्मध्ये मनोभवाम् ।
बालाबीजैस्त्रिभिर्न्यस्येत् स्थानेष्वेषु विलोमतः ॥ १२ ॥
अमृतेशीं च योगेशीं विश्वयोनिं क्रमादिमाः ।
विलोमबीजैर्विन्यस्येन्मूर्त्तिन्यासमथाचरेत् ॥ १३ ॥

रत्यादीति यदुक्तं तदेवाह—मूल इति । विलोमतस्त्रिभिर्बालाबीजैः विन्यसेदिति सम्बन्धः । स्थानेष्वेष्विति उत्तरत्र सम्बध्यते । तत्र विलोमत्वं नामेदं रतेर्वाग्भवं प्रीतेरन्त्यं मनोभवाया मध्यमिति । यदाहुः—

कामस्य कामबीजं रतिबीजं वाग्भवं समुद्दिष्टम् ।
समोहनाख्यमन्त्यं प्रीतेर्बीजं यथा प्रोक्तम् ॥ इति ।

एष्विति । पूर्वोक्तस्थानेषु विलोमबालाबीजैः सह अमृतेश्याद्या न्यसेदित्यन्वयः । अत्रापि विलोमत्वं पूर्ववदेव ॥ १२-१३ ॥

इसके बाद बाला के विलोम बीज से रत्यादि का न्यास करे । विलोम बीज स्वरूप इस प्रकार होगा—रति का वाग्भव, प्रीति का कामराज तथा मनोभवा का मध्यम कामबीज । अत: वाग्भव बीज युक्त रति का मूलाधार में, कामराज युक्त प्रीति का हृदय प्रदेश में और कामबीज युक्त मनोभवा का भ्रूमध्य में न्यास करे ॥ १२ ॥

इसी प्रकार बाला का विलोम बीज लगा कर, अमृतेशी, योगेशी तथा विश्वयोनि का भी उपर्युक्त स्थानों में न्यास करे ॥ १३ ॥

**स्वस्वबीजादिकं पूर्वं मूर्ध्नीशानमनोभवम् ।**
**न्यसेद्वक्त्रे तत्पुरुषं मकरध्वजमात्मवित् ॥ १४ ॥**
**हृद्यघोरकुमारादिकन्दर्पं तदनन्तरम् ।**
**गुह्यदेशे प्रविन्यस्येद्वामदेवादिमन्मथम् ॥ १५ ॥**
**सद्योजातं कामदेवं पादयोर्विन्यसेत्ततः ।**
**ऊर्द्ध्वप्राग्दक्षिणोदीच्यपश्चिमेषु मुखेषु तान् ॥ १६ ॥**

**स्वस्वबीजादिकमिति । मूर्त्तीनां वक्ष्यमाणानि बीजानि मनोभवादीनां क्रमेण वनिताचतुर्थबाणवाग्भवकाममायाबीजानि ज्ञेयानि । उभयत्र आदिशब्दः तत्पूर्वत्वमात्रं बोधयति । तेनैकपद्यम् । तान् ईशानमनोभवादीन् । तेनायं प्रयोगः । ह्स्त्रां ईशानाय स्त्रीं मनोभवाय नम इत्यादि ॥ १४-१६ ॥**

इसके बाद आत्मवेत्ता मन्त्रज्ञ स्व स्व बीजों से युक्त, ईशान मनोभव का शिर में, तत्पुरुष मकरध्वज का मुख में, तदनन्तर अघोरकुमार कन्दर्प का हृदय में, वामदेव मन्मथ का गुह्य प्रदेश में, सद्योजात कामदेव का पाद में न्यास करे । इसी प्रकार पुन: अपने शरीर में ऊर्ध्व, पूर्व, दक्षिण, उत्तर तथा पश्चिम में पञ्चमुख की कल्पना कर क्रमश: न्यास करे ।

**विमर्श**—पूर्वोक्त पाँच मनोभवादि का स्त्रीं, चतुर्थबाण (ब्लूँ), वाग्बीज (ऐं), कामबीज (क्लीँ) और माया बीज (ह्रीँ) इस प्रकार क्रमश: बीज मन्त्र जानना चाहिए ॥ १४-१६ ॥

**प्रविन्यसेद्यथापूर्वं भृगुर्व्योमाग्निसंस्थितः ।**
**सद्यादि पञ्चह्रस्वस्थो बीजमेषां प्रकीर्त्तितम् ॥ १७ ॥**

**यथापूर्वमिति । स्वस्वबीजादिकमिति च यदुक्तं तानि बीजान्युद्धरति भृगुरिति । भृगुः सः व्योम हः अग्नी रेफः ताभ्यां सम्यग्युत इति । ऊर्द्धाधोभागे क्रमेण । सद्यादिपञ्चह्रस्वा विलोमेन ओ ए उ इ अ इति ॥ १७ ॥**

इसी प्रकार ईशानादि पाँच मूर्त्तियों का क्रमश: सद्य पूर्वक ओं, ए, उ, इ अ आदि पाँच ह्रस्व बीज मन्त्र कहा गया है, इस प्रकार भृगु (स्), व्योम (ह), अग्नी (रेफ) उनसे युक्त आकार को मन्त्र भाग के आदि में उच्चारण करते हुये करे ।

यथा—हस्त्रां सद्य ओं ईशानाय स्त्रीं मनोभवाय इति मूर्ध्नि, पुनः हस्त्रां सद्य ए तत्पुरुषाय ब्लूं मकरध्वजाय वक्त्रे इत्यादि । यही क्रम ऊर्ध्वादिमुखों में भी समझना चाहिए ॥ १७ ॥

**षड्दीर्घयुक्तेनाद्येन बीजेनाऽङ्गक्रिया मता ।**
**पञ्चबाणांस्तनौ न्यस्येन्मन्त्रीं त्रैलोक्यमोहनान्॥ १८ ॥**

**षडिति । षड्दीर्घयुक्तेन बीजेन मध्यबीजेन । आद्येन बीजेन मन्त्राद्येन । सम्प्रदायात् । शाक्ताद्येनेत्यपि ज्ञेयम् । तेनायं प्रयोगः । हस्त्रोः हसकल ह्रां ह्रीँ हस्त्रौं हृत् ५ ह्रीँ ह्रीँ हस्त्रौँ शिरः ५ ह्रूँ ह्रीँ हस्त्रौँ शिखा ५ ह्रैँ ह्रीँ हस्त्रौँ वर्म ५ ह्रौँ ह्रीँ नेत्रं ५ ह्रः ह्रीँ हस्त्रौँ अस्त्रम् ॥ १८ ॥**

तदनन्तर षड्दीर्घयुक्त बीज मन्त्र से अङ्गन्यास इस प्रकार करे—हस्त्रोः हसकल ह्रां ह्रीँ हस्त्रौँ इति हृदये, हस्त्रोः ह स क ल ह्रीँ ह्रीँ हस्त्रौँ इति शिरसि, हस्त्रोः हसकल ह्रूँ ह्रीँ हस्त्रौँ इति शिखायाम् इत्यादि । इस प्रकार अङ्गन्यास करने के पश्चात् मन्त्रज्ञ त्रैलोक्य को मोहित करने वाले काम के पाँच बाणों का भी तत्तच्छक्तियों के साथ शरीर में न्यास करे ॥ १८ ॥

**द्रामाद्यां द्राविणीं मूर्ध्नि द्रीमाद्यां क्षोभिणीं पदे ।**
**क्लीं वशीकरणीं वक्त्रे गुह्ये ब्लूंबीजपूर्विकाम्॥ १९ ॥**
**आकर्षणीं हृदि पुनः सर्गान्तर्भृगुसंयुतम् ।**
**सम्मोहनीं क्रमादेवं बाणन्यासोऽयमीरितः॥ २० ॥**
**भालभ्रूमध्यवदनलम्बिकाकण्ठहृत्सु च ।**
**नाभ्यधिष्ठानयोः पञ्च ताराद्याः सुभगादिकाः॥ २१ ॥**
**न्यस्तव्या विधिना देव्यो मन्त्रिणा सुभगा भगा ।**
**भगसर्पिण्यथ परा भगमालिन्यनन्तरम् ॥ २२ ॥**
**अनङ्गाऽनङ्गकुसुमा भूयश्चाऽनङ्गमेखला ।**
**अनङ्गमदना सर्वा मदविभ्रममन्थराः ॥ २३ ॥**
**प्रधानदेवतावर्णभूषणाद्यैरलङ्कृताः ।**
**अक्षस्त्रक्पुस्तकाभीतिवरदाढ्यकराम्बुजाः ॥ २४ ॥**

**द्रामाद्यामिति । अत्र सर्वत्राचार्येण मस्थाने ङः पठितः । अन्यत्र तु द्रां द्रीं क्लीं ब्लूं स आदिका बाणा इति । तदुक्तं त्रिपुरासारे—**

**अद्रीशो मुखवृत्तवह्निसहितस्त्वाद्यं सदण्डस्त्रि-**
**मूर्त्याक्रान्ताननवृत्तमेव खलु तद्बीजं द्वितीयं भवेत् ॥**

**मुखान्तस्थितं देवराजाधिरूढं सवामेक्षणं वक्त्रपूर्वेण युक्तम् ।**
**भपूर्वं सवृत्तारिषष्टस्वरार्द्धक्षपेशं कतुर्यं कपूर्वेण युक्तम् ॥ इति ।**

अद्रीशो दः मुखवृत्तम् आ वह्नी रः सदण्डः सानुस्वारः । इदमाद्यं द्रामिति । तदेव त्रिमूर्त्तिना ईकारेण आक्रान्तमाननवृत्तमाकारो यस्येदृशं द्रीमिति द्वितीयम् । मुखान्तः कः देवराजो लः वामेक्षणम् ई । वक्त्रपूर्वम् अनुस्वारः तेन क्लीं इति तृतीयम् । भपूर्व बः वृत्तारिणा लकारेण षष्ठस्वरः ऊकारः तेन युतम् तेन ब्लूमिति बीजं भवति । कं जलं तद्बीजं वकारः तत्तुरीयं सः ककारपूर्वो विसर्गः तेन सहितम् एतावता सः इति पञ्चमम् ।

हृदीत्युत्तरत्र सम्बन्धते । सर्गान्तो भृगुः सः । लम्बिकेति । मुखमध्ये स्थानविशेषः । क्वचित्कर्णिकेति पाठः । तदा 'कर्णिका कर्णभूषणम्' इति त्रिकाण्डी । विधिनेति । चतुर्थीनमोऽन्तत्वम् । मन्त्रिणेत्यनेन समुच्चितपूर्वा इत्युक्तं भवति ॥ १९-२४ ॥

'द्रां' पूर्वक द्राविणी का हृदय में, 'द्रीं' पूर्वक क्षोभिणी का पद में, 'क्लीँ' पूर्वक वशीकरणी का मुख में, 'ब्लूँ' पूर्वक आकर्षणी का गुह्य प्रदेश में, सर्गान्त पूर्वक भृगु 'सः' पूर्वक सम्मोहनी का हृदय प्रदेश में न्यास करे । यहाँ तक हमने बाणन्यास का प्रकार कहा ॥ १९-२० ॥

तदनन्तर भाल, भ्रूमध्य, मुख लम्बिका (मुखमध्य का स्थान विशेष) कण्ठ हृदय, नाभि तथा अधिष्ठान में पञ्चतारा (द्र. १२. २५) से युक्त सुभगादि देवियों के नामों से विधिपूर्वक न्यास करे । अब सुभगादि का निर्देश करते हैं ॥ २१ ॥

सुभगा, भगा, भगसर्पिणी, परा-भगमालिनी, अनङ्गा, अनङ्गकुसुमा, अनङ्ग-मेखला, अनङ्गमदना—ये आठ देवियाँ हैं इनके नामों का न्यास भालादि (द्र. १२. २१) पूर्वोक्त स्थानों में करे ॥ २२-२३ ॥

ये सभी देवियाँ प्रधान देवता त्रिपुरा के समान ही रूप रंग वाली एवं वस्त्राभरणों से अलंकृत रहने वाली हैं और सभी के कमल सरीखे हाथों में जपमाला, पुस्तक, अभय एवं वरद मुद्रा है ॥ २४ ॥

**वाक्कामं ब्लूं पुनः स्त्रीं सस्ताराः पञ्चोदितास्त्वमी ।**
**न्यासं कुर्याद् भूषणाख्यं ततः साधकसत्तमः ॥ २५ ॥**

तारानेवाह । वागिति वाग्भवम् । कामः कामबीजम् । अन्यत् स्वरूपम् ।

भूषणाख्यमिति । भूषणरूपैर्वर्णैर्न्यासो भूषणन्यासः । तमेवाह । ततः साधक-सत्तमो न्यसेदिति । मातृकावर्णानिति शेषः । साधकसत्तम इत्यनेन सबिन्दुत्वं तत्तत्-स्थाने भूषणरूपत्वेन ध्यानं चोक्तम् ॥ २५ ॥

अब ऊपर (१२. २१) कहे गये पञ्चतारा का निर्देश करते हैं—'वाग्बीज', 'कामबीज', 'ब्लूं', तदनन्तर 'स्त्री' पुनः 'सः'—ये पाँच तारा कहे जाते हैं ॥२५॥

**न्यसेच्छिरसि भालभ्रूकर्णाक्षियुगले नसि ।**
**गण्डयोरोष्ठयोर्दन्तपङ्क्त्योरास्ये न्यसेत् स्वरान् ॥ २६ ॥**

चिबुकेऽथ गले कण्ठे पार्श्वयोः स्तनयुग्मके ।
दोर्मूलयोः कूर्परयोः पाण्योस्तत्पृष्ठदेशतः ॥ २७ ॥
नाभौ गुह्ये पुनश्चोर्वोर्जानुनोर्जङ्घयोस्ततः ।
स्फिचोः पत्तलयोः पश्चाच्चरणाङ्गुष्ठयोर्द्वयोः ॥ २८ ॥
कादिरान्तान् न्यसेद्वर्णान् स्थानेष्वेषु समाहितः ।
काञ्च्यां ग्रैवेयके पश्चात् कटके हृदि गुह्यके ॥ २९ ॥
कर्णकुण्डलयोर्मौलौ वलशान् षक्षसान् लहौ ।
अष्टाविमान् प्रविन्यस्येदेवं देशिकसत्तमः ।
एवं न्यस्तशरीरोऽसौ ध्यायेत् त्रिपुरभैरवीम् ॥ ३० ॥

न्यासस्थानान्येवाह शिरसीति । कण्ठस्तन्मणिर्गलस्तदधोभागः । अत्र कर्णादिषु द्विद्वि वर्णन्यासः। भ्रूस्थाने एकम् । पाण्योरेकम् । तत्पृष्ठदेशे एकमिति सम्प्रदायविदः। स्फिक्शब्देनोच्चत्वसाम्याद् गुल्फौ लक्ष्येते । कटके मूर्द्धन्यो लः । हृदि तालव्यः शः कर्णकुण्डलयोर्मूर्द्धन्यदन्त्याविति विवेक इति देशिकसत्तम इत्येतेनोक्तम् ॥२६-३०॥

तदनन्तर शिर, भाल, दोनों भ्रू, दोनों कर्ण, दोनों नेत्र, नासिका, दोनों गण्ड स्थल, दो ओष्ठ, दोनों ओर की दन्तपंक्तियाँ एवं मुख इन स्थानों में स्वरों का न्यास करे ॥ २६ ॥

२ चिबुक, १ गला, १ कण्ठ, २ दोनों पार्श्व, २ दोनों स्तन, २ दोनों बाहुमूल, २ दोनों कूर्पर, १ हाथ और उनका १ पृष्ठ प्रदेश, १ नाभि, १ गुह्य, २ दोनों ऊरू, २ दोनों जानु, २ दोनों जङ्घा, २ दोनों ओर के नितम्ब प्रदेश, २ दोनों पैर का तलवा और २ दोनों चरणों के दो अङ्गुष्ठों में (इस प्रकार कुल २७ स्थानों में) ककार से लेकर य र पर्यन्त २७ वर्णों का साधक एकाग्रचित्त होकर न्यास करे ॥ २७-२८ ॥

पुनः काञ्ची, ग्रैवेयक, कटक (वलय), हृदय, गुह्य, दोनों कर्ण कुण्डल और शिरः प्रदेश में क्रमशः 'वं', मूर्धन्य 'ल' 'श' ष क्ष स ल और ह इन आठ वर्णों से क्रमशः न्यास करे ॥ २९ ॥

उत्तम साधक इस प्रकार उपर्युक्त आठ स्थानों में उपर्युक्त आठ वर्णों का न्यास करे । इस प्रकार न्यस्त शरीर होकर तब त्रिपुर भैरवी का ध्यान इस प्रकार करना चाहिए ॥ ३० ॥

### ध्यानम्

उद्यद्भानुसहस्रकान्तिमरुणक्षौमां शिरोमालिनीं
रक्तालिप्तपयोधरां जपवटीं विद्यामभीतिं वरम् ।
हस्ताब्जैर्दधतीं त्रिनेत्रविलसद्वक्त्रारविन्दश्रियं
देवीं बद्धहिमांशुरत्नमुकुटां वन्दे समन्दस्मिताम् ॥ ३१ ॥

उद्यदिति । शिरसां मुण्डानां माला यस्यां सा तामिति विग्रहः । रक्तेति रक्त-चन्दनम् । आयुधध्यानं दक्षाद्यूर्द्धयोराद्ये तदधःस्थयोरन्त्ये । दक्षोर्द्धतः दक्षाधःपर्यन्त-मिति केचित् । अत्र ध्यानान्तरं बाणबीजपूर्वकं पञ्चमुद्रा गुरुवक्त्रगम्या दर्शयेत् ॥३१॥

जिनके शरीर की कान्ति उदीयमान सहस्रों सूर्य के समान है, जिन्होंने अरुणवर्ण का परिधान धारण किया है और शिर पर माला धारण की हैं, जिनके स्तनतट रक्त चन्दन से अनुलिप्त हैं और जिन्होंने अपने कमल सदृश हाथों में जप माला, विद्या, अभय तथा वरमुद्रा धारण किया है, जिनकी मुख-श्री तीन नेत्रों से जगमगा रही है, हिमांशु युक्त रत्न मुकुट धारण किये, मन्द स्मित युक्त ऐसी देवी त्रिपुर भैरवी को मैं प्रणाम करता हूँ ॥ ३१ ॥

पुरश्चरणादिकथनम् । पूजायन्त्रम्

**दीक्षां प्राप्य जपेन्मन्त्रं तत्त्वलक्षं जितेन्द्रियः।**
**पुष्पैर्भानुसहस्राणि जुहुयाद् ब्रह्मवृक्षजैः॥ ३२ ॥**
**त्रिमध्वक्तैः प्रसूनैर्वा करवीरसमुद्भवैः।**

दीक्षां प्राप्येति । शक्तिदीक्षां प्राप्येत्यर्थः । सा च तन्त्रान्तर सिद्धेश्वरीमतादितो ज्ञेया । तत्त्वभानुशब्दयोः सरूपाणामित्येकशेषः । तत्त्वलक्षं षट्त्रिंशल्लक्षम् । होमस्तु षट्त्रिंशत्सहस्रं पलाशकुसुमैः । इयं चतुःकूटस्य संख्या । त्रिमध्वक्तैः पयोमधु-घृतयुक्तैः । केचित् पयःस्थाने शर्करामाहुः । इदमुभयत्र सम्बध्यते । तत्त्वलक्षं चतु-र्विंशतिलक्षम् । होमस्तु चतुर्विंशतिसहस्रं करवीरैः । इयं संख्या पञ्चकूटस्य । तत्त्वलक्षं द्वादशलक्षम् । तन्त्रान्तरे द्वादशतत्त्वानामप्युपदिष्टत्वात् । तदुक्तं प्रयोगसारे—

अतो द्वादशतत्त्वानि वदन्त्येके विपश्चितः । इति ।

तन्मते प्रसूनैर्वेति वाशब्दः समुच्चये मिलित्वोभयैर्द्वादशसहस्रं होमः । इयं च संख्या षट्कूटस्येति ज्ञेयम् । तदुक्तमाचार्यैः—

दीक्षां प्राप्य विशिष्टलक्षणयुजः सत्सम्प्रदायाद् गुरो-
र्लब्ध्वा मन्त्रममुं जपेत् सुनियतस्तत्त्वार्द्धलक्षावधि ।
स्वाद्वक्तैश्च नवैः पलाशकुसुमैः सम्यक्समिद्धेऽनले
मन्त्री भानुसहस्रकं प्रतिहुनेदश्वारिसूनैरपि ॥ इति ॥

तत्र तत्त्वानि षट्त्रिंशच्चतुर्विंशतिः अर्द्धं द्वादश । भान्तीति भानवः षट्त्रिंश-त्तत्वानि चतुर्विंशतितत्वानि द्वादशादित्याश्चेति पद्मपादाचार्यैः व्याख्यातम् । अत्रापि भानुशब्दार्थोऽयमेव ज्ञेयः ॥ ३२-३३ ॥

साधक सर्वप्रथम त्रिपुरा की दीक्षा लेवें, पश्चात् इन्द्रियों के संयमपूर्वक जितेन्द्रिय हो २४ तत्त्व और १२ भानु कुल मिलाकर ३६ लाख त्रिपुरा मन्त्र का जप करे । तदनन्तर पलाश पुष्पों से बारह हजार संख्या में त्रिपुरा मन्त्र से होम करे । अथवा त्रिमधु (आज्य मधु, पय) पूर्ण करवीर के पुष्पों से होम करे । अब त्रिपुरा के पूजा के लिये मन्त्र का विधान कहते हैं ॥ ३२-३३ ॥

पद्मं वसुदलोपेतं नवयोन्याढ्यकर्णिकम् ॥ ३३ ॥

नवशक्तिनामानि

इच्छादिशक्तिभिर्युक्तं भैरव्याः पीठमर्चयेत्।
इच्छा ज्ञाना क्रिया पश्चात् कामिनी कामदायिनी ॥ ३४ ॥
रती रतिप्रिया नन्दा नवमी स्यान्मनोन्मनी ।
वरदाभयधारिण्यः संप्रोक्ता नव शक्तयः॥ ३५ ॥

पूजायन्त्रमाह पद्ममिति । नवयोन्याद्यकर्णिकं पद्ममस्याः पूजायन्त्रमिति शेषः । तदुद्धारप्रकार उच्यते—

द्वितीयादिद्विद्विभागे योनी सन्ध्यध्वनाग्निना ।
भित्त्वा ध्वंशगुणान् वृत्तान् बहिः पद्मं सभूगृहम् ॥

अस्यार्थः—यथेच्छप्रमाणं वृत्तं कृत्वा तत्राक्सूत्रं चतुर्धा विभज्य तत्रैकं भागम् उर्ध्वतस्त्यक्त्वा द्वितीयं भागमारभ्य तृतीयभागान्तम् अधराग्रत्र्यस्रं कृत्वा ततो मध्यादारभ्य चतुर्थान्यं द्वितीयमधराग्रं त्र्यस्रं कृत्वा तदुभयसन्धिभेदिप्रथमभागमारभ्य ऊर्ध्वाग्रं तृतीयान्तपर्यन्तं त्र्यस्रं कृत्वा तदुभयसन्धिभेदिप्रथमभागमारभ्य ऊर्ध्वाग्रं तृतीयान्तपर्यन्तं त्र्यस्रं कुर्यादिति । तदुक्तम्—

वह्नेः पुरद्वितयवासवयोनिमध्यसम्बद्धवह्निवरुणेशसमाश्रितास्त्रि । इति ।

वरदाभयधारिण्य इति स्मरणमात्रम् ।
चतुर्थपटल एवासां ध्यानस्योक्तत्वात् ॥ ३३-३५ ॥

नव योन्यात्मक कर्णिका से युक्त अष्टदल कमल का निर्माण करे, तदनन्तर इच्छादि शक्तियों का आवाहन कर त्रिपुरा के पीठ का अर्चन करे । १. इच्छा, २. ज्ञान, ३. क्रिया, ४. कामिनी, ५. कामदायिनी, ६. रति, ७. रतिप्रिया, ८. नन्दा और ९. मनोन्मनी—ये ९ पीठ शक्तियाँ हैं, ये सभी वर तथा अभयमुद्रा धारण की हुई हैं ॥ ३५ ॥

पीठमन्त्रः

वाग्भवं लोहितो रायै श्रीकण्ठः लोहितोऽनलः ।
दीर्घवान् यै परा पश्चादपरायै हसौः पुनः ॥ ३६ ॥
सदाशिवमहाप्रेतं ङेऽन्तं पद्मासनं नमः।
अनेन मनुना दद्यादासनं श्रीगुरुक्रमम् ॥ ३७ ॥

पीठमन्त्रमुद्धरति वागिति । वाग्भवं बालाद्यबीजम् । लोहितः पः । रायै स्वरूपम् । श्रीकण्ठः अकारः । अनलो रः दीर्घवानाकारयुक्तः तेन रा इति । यै परा इति स्वरूपम् । अपरायै स्वरूपम् । परा अपरायै इत्यत्र तु सन्धिः । हसौः इति पिण्डम्। सदाशिवमहाप्रेतान्तं स्वरूपम् । प्रेतमिति द्वितीया शब्दकर्मणि । ङेऽन्तं चतुर्थ्येकवचनान्तं पद्मासनं तेन पद्मासनाय ॥ ३६-३७ ॥

अब **आसनदान का मन्त्र** कहते हैं—वाग्भव (वाला का आद्य बीज) लोहित (प) तदनन्तर 'रायै' शब्द, पुन: श्री कण्ठ (अकार), लोहित पकार इसके बाद दीर्घ युक्त अनल र, तत्पश्चात् 'यै' शब्द, तदनन्तर परापरायै, इसके बाद 'हसौ', पुन: 'सदाशिव महाप्रेतम्' यह शब्द स्वरूप, इसके बाद चतुर्थ्यन्त पद्मासन शब्द इस मन्त्र से आसन दान देवे । ह्स्रौ: । इसका स्वरूप इस प्रकार है—'ह्स्रा: परायै अपरायै परापरायै हसौ: सदाशिव महाप्रेतम् पद्मासनाय नम:' ॥ ३६-३७ ॥

**प्राङ्मध्ययोन्यन्तराले पूजयेत् कल्पयेत् पुनः।**
**पञ्चभिः प्रणवैर्मूर्त्तिं तस्यामावाह्य देवताम् ॥ ३८ ॥**

**प्राङ्मध्ययोन्यन्तराले श्रीगुरुक्रमं पूजयेदिति सम्बन्धः । श्रीगुरुक्रमस्तु त्रिविधः। दिव्यौधः सिद्धौघो मानवौघश्चेति । तत्र परप्रकाशानन्द परमेशानन्दपरमशिवानन्द-कामेश्वर्यानन्दमोक्षानन्दकामानन्दामृतानन्दा दिव्यौघः । ईशान तत्पुरुषाघोरवाम-सदानन्दाः सिद्धौघः । मानवौघस्तु स्वस्वगुरुसंप्रदायात् ज्ञेयः । पीठस्योत्तरभागे गुरुपङ्क्तिं प्रपूजयेत् इति । सामान्यविधेः अपवादोऽयं प्राङ्मध्ययोन्यन्तराल इति ॥ ३८ ॥**

इसके बाद सर्वप्रथम मध्य योनि के बीच गुरु क्रम का पूजन करे । तदनन्तर आगे कहे जाने वाले पाँच प्रणव (द्र. १२. ३९) से मूर्त्ति की कल्पना कर उसमें देवता का आवाहन करे ॥ ३८ ॥

**पूजयेदागमोक्तेन विधानेन समाहितः ।**
**तारा वाक् शक्तिः कमला हसखफ्रेंहसौः स्मृताः ॥ ३९ ॥**
**वामकोणे यजेद्देव्या रतिमिन्दुसमप्रभाम् ।**
**रतिं पाशधरां सौम्यां मदविभ्रमविह्वलाम् ॥ ४० ॥**
**प्रीतिं दक्षिणकोणस्थां तप्तकाञ्चनसन्निभाम् ।**
**अङ्कुशं प्रणतिं दोर्भ्यां धारयन्तीं समर्चयेत् ॥ ४१ ॥**
**अग्रे मनोभवां रक्तां रक्तपुष्पाद्यलङ्कृताम् ।**
**इक्षुकार्मुकपुष्पेषून्धारयन्तीं शुचिस्मिताम् ॥ ४२ ॥**

**आगमोक्तेनेत्युत्तरषट्कप्रोक्तेन । आगमशब्दव्युत्पत्तिरुक्ता तन्त्रान्तरे—**

**आगतं शिववक्त्रात्तु गतं तु गिरिजामुखे ।**
**मतं च वासुदेवस्य तस्मादागम उच्यते ॥ ईति ।**

**अत एव समाहितः सावधान इत्युक्तिः । पञ्चभिः प्रणवैरिति यदुक्तं तानेवाह तारा इति। वाक् वाग्भवम् । शक्तिर्मायाबीजम् । कमला श्रीबीजम् । अन्यत्पिण्डद्वयम् । रतिप्रीत्योर्ध्याने एकहस्तेऽस्त्रं द्वितीये नमस्कारः ॥ ३९-४२ ॥**

तदनन्तर आगमशास्त्र में कही गई विधि के अनुसार एकाग्रचित्त से उन देवता का पूजन करे । वाग्बीज, मायाबीज, ह्स्रौ श्री बीज हसखफ्रें और हसौं—ये ऊपर कहे गये पञ्चप्रणव के स्वरूप हैं ॥ ३९ ॥

देवी के वामकोण में पाश धारण किये प्रणाम की मुद्रा में स्थित चन्द्रमा के समान मनोहर सौम्य स्वभाव वाली मद्य की मस्ती में विह्वल रति की पूजा करनी चाहिए ॥ ४० ॥

तदनन्तर देवी के दक्षिण कोण में तप्त काञ्चन के समान वर्ण वाली अपने दोनों हाथों में क्रमशः अंकुश और प्रणाम की मुद्रा धारण किये हुये, प्रीति का पूजन करे ॥ ४१ ॥

आगे, रक्तवर्णवाली, रक्त पुष्पालंकारादि से विभूषित इक्षु का धनुष एवं पुष्प का बाण धारण किये हुये पवित्र स्मित वाली मनोभवा का पूजन करे ॥ ४२ ॥

**अङ्गान्यभ्यर्चयेत् पश्चाद्यथापूर्वं विधानवित् ।**
**दिक्ष्वग्रे च निजैर्मन्त्रैः पूजयेद्बाणदेवताः ॥ ४३ ॥**

**यथापूर्वमिति । आग्नेयादिषु केसरेषु मध्ययोन्यन्तरे चतुर्दिक्षु च । विधानविदित्यनेन मध्ययोनिबाह्यदेश इत्युक्तम् ॥ ४३ ॥**

**हस्ताब्जैर्धृतपुष्पेषुप्रणामा भूतसप्रभाः ।**
**अष्टयोनिष्वष्ट शक्तीः पूजयेत् सुभगादिकाः ॥ ४४ ॥**

**हस्ताब्जैरिति । सव्यहस्ते बाणः अन्यहस्ते नमस्कारः । तदुक्तम्—**

**द्राविण्याद्याः क्रमशः सर्वाः सर्वाभरणशोभिताः समदाः ।**
**सव्यकरकलितबाणाः शेषकरैः कृतनमस्काराः ॥ इति ।**

**भूतसप्रभा इति । पृथिव्यादिवर्णतुल्यवर्णा इत्यर्थः । सुभगादिका इति यथान्यस्ताः ॥ ४४ ॥**

तदनन्तर विधानवेत्ता, मध्ययोनि से बाहर देवी के अङ्गों की पूजा करे, पुनः चारों दिशाओं में एवं आगे पाँच बाण देवताओं का (द्र. १२. १९-२०) पूजन करे । ये सभी पुष्पों का बाण तथा प्रणाम की मुद्रा धारण की हुई हैं । इन सभी के शरीर की कान्ति पृथ्व्यादि पञ्चमहाभूतों जैसी है (द्र. १. २१-२२) । इसके बाद शेष अष्टयोनियों में सुभगादि अष्टमातरों की (द्र. १२. २२-२३) की पूजा करनी चाहिए ॥ ४३-४४ ॥

**मातरौ भैरवाङ्कस्था मदविभ्रमविह्वलाः ।**
**अष्टपत्रेषु सम्पूज्या यथावत् कुसुमादिभिः ॥ ४५ ॥**
**लोकपालांस्ततो दिक्षु तेषामस्त्राणि तद्बहिः ।**
**पूर्वजन्मकृतैः पुण्यैर्ज्ञात्वैनां परदेवताम् ॥ ४६ ॥**
**यो भजेदुक्तमार्गेण स भवेत् संपदां पदम् ।**
**एवं सिद्धमनुर्मन्त्री साधयेदिष्टमात्मनः ॥ ४७ ॥**

जुहुयादरुणाम्भोजैरदोषैर्मधुराप्लुतैः ।
लक्षसंख्यं तदर्द्धं वा प्रत्यहं भोजयेत् द्विजान्॥ ४८ ॥
वनिता युवती रम्याः पूजयेद् देवताधिया ।
होमान्ते धनधान्याद्यैस्तोषयेद् गुरुमात्मनः ॥ ४९ ॥

मातर इति । चण्डिकान्ताः । तदुक्तमाचार्यैः—मातृगणं सचण्डिकान्तं दलेष्वपि यजेदसिताङ्गकाद्यैः । इति । यथावदित्यनेन दीर्घाद्या मातरो ह्रस्वाद्या भैरवा इत्युक्तम् । सम्पदां पदमित्यनेनास्याः सम्पत्प्रदेत्यपि नामेति सूचितं भवति ॥ ४५-४९ ॥

ये सभी मातृकायें भैरव की गोद में मद की मस्ती से विह्वल हो विराज रही हैं । इनकी अष्टपत्रों पर पुष्पादि द्वारा भली प्रकार पूजा करे ॥ ४५ ॥

इसके बाद दिशाओं में लोकपालों की उसके बाहर उनके अस्त्रों की पूजा करे । पूर्व जन्म के किये हुये पुण्य से इस प्रकार पर देवता का माहात्म्य जान कर जो पूर्वोक्त प्रकारों से उनकी पूजा करता है वह सभी प्रकार की संपत्तियों का पात्र हो जाता है । इस प्रकार साधक जब मन्त्र को सिद्ध कर ले तो अपनी अभीष्ट-सिद्धि के लिये अनुष्ठान करे ॥ ४६-४७ ॥

सर्वथा दोष रहित त्रिमधुराक्त लाल कमलों से साधक लक्ष संख्या में अथवा उसकी आधी संख्या में होम करे और प्रतिदिन ब्राह्मणों को भोजन करावे ॥ ४८॥

सुन्दर युवती स्त्रियों में देवताबुद्धि रखकर उनका पूजन करे । होम के अन्त में धन धान्यादि द्वारा दीक्षा गुरु को संतुष्ट करे ॥ ४९ ॥

एवं कृते जगद्वश्यो रमाया भवनं भवेत् ।
रक्तोत्पलैस्त्रिमध्वक्तैररुणैर्वा हयारिजैः ॥ ५० ॥
पुष्पैः पयोऽन्नैः सघृतैर्होमो विश्वं वशं नयेत् ।
वाक्सिद्धिं लभते मन्त्री पलाशकुसुमैर्हुतात्॥ ५१ ॥
कर्पूरागुरुसंयुक्तं गुग्गुलुं जुहुयात् सुधीः।
ज्ञानं दिव्यमवाप्नोति तेनैव स भवेत् कविः॥ ५२ ॥
क्षीराक्तैरमृताखण्डैर्होमः सर्वापमृत्युजित् ।
दूर्वाभिरायुषे होमः क्षीराक्ताभिर्दिनत्रयम् ॥ ५३ ॥

जगन्ति वश्यानि यस्येति बहुव्रीहिः । रमाया भवनं भवेदिति । तत्र ध्यानविशेषः—

मातुलिङ्गलिपिपात्रपङ्कजैः शोभमानकरपङ्कजां शिवाम् ।
संविचिन्त्य खलु पौष्टिकक्रियां कुर्वतो भवति भूतिरञ्जसा ॥ इति ।

हयारिजैरिति करवीरजैः । सघृतैः । पयोन्नैर्वेति तृतीयः पक्षः । वशं नयेदिति । ध्यानविशेषो यथा—

पाशाङ्कुशोद्यतकरामरुणां प्रसन्नां माणिक्यवज्रहरितैरपि भूषिताङ्गीम् । मूर्त्तिं विचिन्त्य विदधीत पुरोक्तमार्गाद्दृश्यक्रियां च नयनाञ्जनकानि मन्त्री ॥ इति । भवेत्कविरिति । ध्यानविशेषः संविच्छास्त्रे—

सारस्वतमयीं मूर्त्तिमादिमूर्त्तिसमन्विताम् ।
यः स्मरेत् द्वादशान्ते स्यात् सोऽचिराद्वाकपतिर्भवेत् ॥ इति ।

अमृता गुडूची । अपमृत्युजिदिति । ध्यानविशेषो गौतमेनोक्तः—

कुर्याच्छान्तिककर्माणि शुक्लवस्त्रां विचिन्त्य ताम् ।
वराभयसुधाकुम्भपुस्तकायुधधारिणीम् ॥ इति ॥ ५०-५३ ॥

ऐसा करने से सारा जगत् साधक के वश में हो जाता है और वह सदैव लक्ष्मी का निवास स्थान बन जाता है । यदि साधक त्रिमधुराक्त रक्त कमलों एवं रक्त करवीर के पुष्पों से अथवा अन्य सघृत पुष्पों वा सघृत खीर से होम करे तो वह समस्त विश्व को वश में कर लेता है । पलाश पुष्प के होम से वाक्सिद्धि प्राप्त होती है ॥ ५०-५१ ॥

सुधी साधक त्रिपुरा मन्त्र से कर्पूर, अगुरु, संयुक्त गुग्गुल का होम करे तो वह दिव्य ज्ञान तो प्राप्त करता ही है उसी के साथ कवि भी हो जाता है ॥ ५२ ॥

क्षीर में डुबोये गये गुडूची के टुकड़ों के होम से सभी प्रकार की अपमृत्यु दूर हो जाती है, आयु की कामना से दूध में डुबोये गये दूर्वा के द्वारा तीन दिन तक होम करे तो आयु की प्राप्ति होती है ॥ ५३ ॥

**गिरिकर्णीभवैः पुष्पैर्ब्राह्मणान् वशयेद्‌द्रुतात् ।**
**कह्लारैः पार्थिवान् पुष्पैस्तद्वधूः कर्णिकारजैः॥ ५४ ॥**
**मल्लिकाकुसुमैर्हुत्वा राजपुत्रान् वशं नयेत् ।**
**कोरण्टकुसुमैर्वैश्यान् वृषलान् पाटलोद्भवैः॥ ५५ ॥**
**अनुलोमविलोमान्तः स्थितसाध्याह्वयान्विताम् ।**
**मन्त्रमुच्चार्य जुहुयान्मन्त्री मधुरलोलितैः ॥ ५६ ॥**
**सर्षपैः पटुसंमिश्रैर्वशयेत् पार्थिवान् क्षणात् ।**
**अनेनैव विधानेन तत्पत्नीस्तत्सुतानपि॥ ५७ ॥**
**जातीबिल्वफलैः पुष्पैर्मधुरत्रयलोलितैः ।**
**नरनारीनरपतीन् होमतो वशयेद् ध्रुवम्॥ ५८ ॥**
**मालतीवकुलोद्भूतैः पुष्पैश्चन्दनलोलितैः ।**
**जुहुयात् कवितां मन्त्री लभते वत्सरान्तरे॥ ५९ ॥**
**मधुरत्रयसंयुक्तैः फलैर्बिल्वसमुद्भवैः ।**
**जुहुयाद्वशयेल्लोकं श्रियमाप्नोति वाञ्छिताम् ॥ ६० ॥**

पाटलैः कुमुदैः कुन्दैरुत्पलैर्नागचम्पकैः ।
नन्द्यावर्त्तैर्विकसितैः कृतमालैर्जुहोति यः ॥ ६१ ॥
जायते वत्सरादर्वाक् श्रिया विजितपार्थिवः ।
साज्यमन्त्रं प्रजुहुयाद्भवेदन्नसमृद्धिभाक् ॥ ६२ ॥

गिरिकर्णी अपराजिता । पटु लवणम् । नन्द्यावर्त्तैर्गन्धतगरैः । कृतमालै राजवृक्षजैः । पाटलैरित्यादिना विकसितैरिति विशेषणात् पुष्पैरिति लभ्यते ॥ ५४-६२ ॥

अपराजिता के पुष्पों के होम से ब्राह्मणों को शीघ्रातिशीघ्र वश में किया जा सकता है, कह्लार (कुमुदिनी) के पुष्पों के होम से राजा एवं कर्णिकार के पुष्पों के होम से राजपत्नी वश में हो जाती है ॥ ५४ ॥

मल्लिका पुष्पों द्वारा होम करने से राजपुत्र वश में हो जाता है, कोरण्ट के कुसुमों से वैश्य एवं गुलाब के पुष्पों के होम से शूद्र वश में हो जाता है ॥ ५५॥

अनुलोम एवं विलोम मन्त्र के बीच साध्य नाम एवं कार्य का उच्चारण करते हुये त्रिमधुर मिश्रित हवि द्वारा होम करने से साध्यकार्य सिद्ध हो जाता है ॥ ५६ ॥

लवण मिश्रित सरसों के होम से क्षण मात्र में राजा वश में हो जाता है । इसी विधान से होम करे तो राजपत्नी एवं राजपुत्र भी वश में हो जाते हैं ॥ ५७॥

त्रिमधुर मिश्रित जाती पुष्प एवं विल्वफल के होम से निश्चय ही साधक नर-नारी एवं नरपति को अपने वश में कर लेता है ॥ ५८ ॥

चन्दनानुलिप्त मालती एवं बकुल पुष्पों के होम से मन्त्रज्ञ साधक एक वर्ष के भीतर कवित्त्व शक्ति प्राप्त कर लेता है ॥ ५९ ॥

त्रिमधुर मिश्रित विल्वफल के होम करने से साधक विश्व को वश में कर लेता है और मनोवाञ्छित श्री प्राप्त करता है ॥ ६० ॥

फूले हुये पाटल (गुलाब), कुमुद, कुन्द, उत्पल (लालकमल) चम्पक गन्धतगर एवं कृतमाला (राजवृक्ष) के पुष्पों से जो साधक होम करता है उसे एक वर्ष के बीतने के पहले ही इतनी संपत्ति प्राप्त हो जाती है जो राजा के पास भी नहीं होती ॥ ६१-६२ ॥

कस्तूरीकुङ्कुमोपेतं कर्पूरं जुहुयाद्वशी ।
कन्दर्पादधिकं सद्यः सौन्दर्यमधिगच्छति ॥ ६३ ॥
लाजान् प्रजुहुयान्मन्त्री दधिक्षीरमधुप्लुतान् ।
विजित्य रोगानखिलान् स जीवेच्छरदां शतम् ॥ ६४ ॥
पादद्वयं मलयजं पादं कुङ्कुमकेसरम् ।
पादं गोरोचनायाश्च तानि पिष्ट्वा हिमाम्भसा ॥ ६५ ॥

**विदध्यात्तिलकं भूयो यान् पश्येद् यैर्विलोक्यते ।**
**यान् स्पृशेत् स्पृश्यते यैर्वा वश्याः स्युस्तस्य तेऽचिरात् ॥६६॥**

**हिमाम्भसा नीहारोदकेन ॥ ६६ ॥**

जो घृतमिश्रित खीर का होम करता है, वह अन्न से समृद्ध हो जाता है । इसी प्रकार जितेन्द्रिय हो जो साधक कस्तूरी कुंकुम युक्त कपूर से होम करता है वह कामदेव से भी अधिक सौन्दर्य प्राप्त कर लेता है ॥ ६२-६३ ॥

दधि, क्षीर, मधु परिप्लुत लाजा से जो साधक होम करता है, वह समस्त रोगों पर विजय प्राप्त कर सैकड़ों वर्ष तक जीवित रहता है ॥ ६४ ॥

दो भाग मलय चन्दन, एक भाग में कुंकुम और केशर तथा एकभाग गोरोचन लेकर उसे ओस कण के जलों में घिसे और इस मन्त्र से अभिमन्त्रित कर तिलक करे तो जो लोग उसे देखते हैं अथवा वह जिसे देखता है इसी प्रकार जो लोग उसका स्पर्श करते हैं अथवा वह जिसका स्पर्श करता है वे सभी तत्काल उसके वश में हो जाते हैं ॥ ६५-६६ ॥

**तिलकक्रिया**

**कर्पूरकपिचोराणि समभागानि कल्पयेत् ।**
**चतुर्भागा जटामांसी तावती रोचना मता ॥ ६७ ॥**
**कुङ्कुमं सप्तभागं स्याद् दिग्भागं चन्दनं मतम् ।**
**अगुरुर्नवभागः स्यादिति भागक्रमेण च ॥ ६८ ॥**
**हिमादि्भः कन्यया पिष्टमेतत् सर्वं सुसाधितम् ।**
**आदाय तिलकं भाले कुर्याद् भूमिपतीन् नरान् ॥ ६९ ॥**
**वनितां मदगर्वाढ्यां मदोन्मत्तान् मतङ्गजान् ।**
**सिंहव्याघ्रान् महासर्पान् भूतवेतालराक्षसान् ।**
**दर्शनादेव वशयेत् तिलकं धारयन्नरः॥ ७० ॥**

**कपि रक्तचन्दनम् । चोरं कचूरं शटीति यावत् । दिग्भागं दशभागम् । कन्यया पिष्टमिति । कृष्णचतुर्दशीरात्रौ श्मशाने सम्प्रदायेन पिष्टम् । सुसाधितमिति एतन्मन्त्र-जप्तम् ॥ ६७-७० ॥**

कपूर, लालचन्दन एवं कचूर बराबर बराबर भाग ले, उसका चतुर्भाग जटामांसी एवं उतना ही गोरोचना ग्रहण करे, उसका सात गुना कुंकुम और दश गुना चन्दन, नव गुना अगुरु लेवें, इस प्रकार के परिमाण वाले उक्त द्रव्यों को लेकर कन्या के द्वारा श्मशान में कृष्णपक्ष की चतुर्दशी को ओसकणों के जल में उसे घिस कर एकाकार चन्दन बना कर इस मन्त्र से अभिमन्त्रित कर तिलक लगावे तो वह भूमिपतियों को, मनुष्यों को, मद से इठलाती हुई युवतियों को,

मदोन्मत्त गजराजों को, सिंह व्याघ्रों को, महासर्पों को, भूत-वेताल एवं राक्षसों को दर्शन मात्र से अपने वश में कर लेता है ॥ ६७-७० ॥

त्रिपुरभैरवीयन्त्रम्

**मध्याद्यं नवयोनिषु प्रविलिखेद्बीजानि वर्णास्त्रिशो**
**गायत्र्याः पुनरष्टपत्रविवरेष्वालिख्य लिप्या वृतम् ।**
**भूबिम्बद्वितयेन मन्मथयुजा कोणेषु संवेष्टितं**
**यन्त्रं त्रैपुरमीरितं त्रिभुवनप्रक्षोभकं श्रीप्रदम् ॥ ७१ ॥**

**यन्त्रमाह मध्येति । प्रविलिखेत् प्रादक्षिण्येन एवं त्रिरावृत्तिर्भवति । गायत्र्या-स्त्रिपुरागायत्र्याः । लिप्या मातृकया । भूबिम्बद्वितयेन परस्परव्यतिभिन्नेन । मन्मथबीजं भैरव्या एव ॥ ७१ ॥**

नवयोन्यात्मक यन्त्र बनाकर मध्य से लेकर त्रिपुरा के वाग्बीज, कामबीज एवं कामराज बीज को एक एक के क्रम से तीन बार लिखे । भूपुर? पुनः अष्टपत्रों पर त्रिपुरा गायत्री (द्र. १२. ७८) के अक्षरों को लिखे । तदनन्तर मातृकावर्णों को लिख कर उसे घेर देवे । तत्पश्चात् भूपुर के कोणों में परस्पर उलटे क्रम से भैरवी के मन्मथ बीजों को लिखे । इस प्रकार से निर्माण किया गया यह यन्त्र श्री प्रदान करता है और त्रिभुवन को भी क्षुब्ध करता है ॥ ७१ ॥

**अस्मिन् यन्त्रे समावाह्य सम्यक् सम्पूज्य देवताम् ।**
**होमेन कृतसम्पातं लाक्षालोहत्रयावृतम् ॥ ७२ ॥**
**विधृतं बाहुना यन्त्रं युद्धेषु विजयावहम् ।**
**वादे वाग्विजयं कुर्यात् कवित्वं पुष्कलं दिशेत् ।**
**आयुरारोग्यमित्राणि पुत्रान् पौत्रान् विवर्द्धयेत् ॥ ७३ ॥**

इस यन्त्र में त्रिपुरा देवता का आवाहन कर उनकी भली प्रकार पूजा करे । पुनः होम कर प्रत्येक आहुति शेष घृत उस यन्त्र पर चुवाता रहे । तदनन्तर सुवर्ण रजत एवं ताम्र इस प्रकार त्रिलौह मिश्रित मुद्रिका में रख कर उसे लाह के द्वारा बन्द कर देवे ॥ ७२ ॥

फिर उसे अपनी बाहुओं में बाँध लेवें तो इस प्रकार का यह यन्त्र युद्ध में विजय प्रदान करता है, वाद में वाग्विजय कराता है तथा पर्याप्त कवित्त्व की शक्ति प्रदान करता है ॥ ७३ ॥

सौभाग्यदयन्त्रम्

**कामं षट्कोणमध्ये लिखतु पुनरिमं षट्सु कोणेषु पश्चात्**
**पत्रेषु द्व्यष्टसंख्येष्वमुमथ पुरतो व्योमबीजेन वीतम् ।**
**क्षौणीबिम्बान्तरस्थं भुजदललिखितं रोचनाकुङ्कुमाभ्यां**
**प्रोक्तं सौभाग्यसम्पन्निरुपमकविताकीर्त्तिदं यन्त्रमेतत् ॥ ७४ ॥**

**यन्त्रान्तरमाह काममिति । कामं भैरवीमध्यबीजम् । इमं कामम् । द्व्यष्टसंख्येषु षोडशसंख्येषु । अमुं कामम् । व्योमबीजं हं । भुजदलं भूर्जपत्रम् ॥ ७४ ॥**

अब **अन्य यन्त्र के निर्माण की विधि** कहते हैं—षट्कोण के मध्य में काम बीज (भैरवी का मध्यबीज द्र. १२. ४) लिखे । तदनन्तर ६ कोणों में भी इसी काम बीज को लिखे । पुन: १६ पत्रों पर भी इसी काम् बीज को लिखे फिर पत्र के अग्रभाग में भी इसी को लिखे । पश्चात् भूपुर के चारों ओर व्योम बीज (हँ) से परिवेष्टित करे । यह यन्त्र भूर्जपत्र पर गोरोचन एवं कुङ्कुम द्वारा लिखे । तो इस प्रकार धारण किया गया यह यन्त्र सौभाग्य, संपत्ति, निरूपम कविता एवं कीर्त्ति प्रदान करता है ॥ ७४ ॥

**मनोभवात्मकयन्त्रम्**

**वह्नेर्गेहयुगान्तरस्थमदने मायां लिखेद्वाग्भवं**
**षट्कोणेष्वथ सन्धिषु प्रविलिखेद्ब्लुङ्कारमावेष्टयेत् ।**
**स्त्रींबीजेन समीरितं त्रिभुवनप्रक्षोभकं त्रैपुरं**
**यन्त्रं पञ्चमनोभवात्मकमिदं सौन्दर्यसंपत्करम् ॥ ७५ ॥**

**यन्त्रान्तरमाह वह्नेरिति । मदने प्रसिद्धे । वाग्भवं प्रसिद्धम् । सन्धिष्विति । कोणानभितो वृत्तमध्ये । स्त्रींबीजेनेत्येकत्वं विवक्षितम् । सर्वं स्त्रींबीजमध्ये लिखेदित्यर्थः ।**

**तदुक्तम्—मनोभवस्य सकले कुक्षौ तदेतत् क्षिपेत् । इति ।**

**पञ्चमनोभवात्मकमिति । पञ्चभिः कामबीजैर्यन्त्रस्योद्धृतत्त्वात् ।**

**पञ्चकाममन्त्रा यथा—**

**कपञ्चमं शुचिनयनान्तसंयुतं सवामदृक्पवनगुणान्वितः करः ।**
**रविस्वरो हरिहयविष्णुषष्ठवद्वनं ततस्तर उपरान्वितो भृगुः ॥**

**तेषां शिरःसु विदधीत बुधोऽर्धचन्द्रानेवं मया निगदिताः खलु पञ्च कामाः ॥ इति ।**

**कं जलं तद्बीजं वः तत्पञ्चमो हः । शुची रेफः नयनान्त ई तेन मायाबीजम् । वामदृगीकारः पवनात् यकाराद् गुणः तृतीयो लः । तदन्वितः करः ककारस्तेन कामबीजम् । रविस्वरः द्वादशस्वर ऐ । हरिहयो लः विष्णुरकारः तस्मात् षष्ट ऊकारः तद्युक्तं वनं बकारस्तेन ब्लू । तरस्वरूपम् । उः परो यस्मात्तेन ई तद्युक्तो भृगुः सकारस्तेन स्त्री । सर्वे सार्धचन्द्राः सानुस्वाराः ॥ ७५ ॥**

अब **पञ्च मनोभवात्मक मन्त्र का उद्धार** कहते हैं—षट्कोण के मध्य में माया (ह्रीँ) और वाग्भव (ऐं) लिखे । पुनः वृत्त में कोणों के मध्य सन्धि में सर्वत्र पाँच बार 'ब्लूँ' लिखे तथा अन्त में 'स्त्री' लिखे । इस प्रकार पाँच काम बीजों से इस त्रिपुरा यन्त्र का निर्माण कहा गया । यह पञ्चमनोभवात्मक यन्त्र त्रिभुवन को क्षुब्ध करने वाला है तथा सौन्दर्य एवं सम्पत्ति प्रदान करता है ॥ ७५ ॥

बालामन्त्रः

अधरो बिन्दुमानाद्यो ब्रह्मेन्द्रस्थः शशीयुतः।
द्वितीयं भृगुसर्गाढ्यो मनुस्तात्तीयमीरितम् ॥ ७६ ॥
एषा बालेति विख्याता त्रैलोक्यवशकारिणी।
जपपूजादिकं सर्वमस्याः पूर्ववदाचरेत् ॥ ७७ ॥

बालाबीजैस्त्रिभिरित्युद्दिष्टं बालामन्त्रमुद्धरति अधर इति । अधरो बिन्दुमान् ऐं । ब्रह्मा ककारः इन्द्रो लः शशी बिन्दुः ई स्वरूपम् । तेन क्लीं । भृगुः सः सर्गो विसर्गः तेनाढ्यो मनुरौ तेन सौः इति । अन्यत्र सबिन्दुरुक्तः । तदुक्तं सनत्कुमारे—

अष्टमस्य तृतीयं तु चतुर्दशसमन्वितम् ।
दण्डकुण्डलमेतद्धि सारस्वतमुदाहृतम् ॥ इति ॥

अस्या विद्यायाः शाप इति त्रिपुरासारे । तदुद्धारो यथा—

देव्या शप्ता येन विद्येयमाद्या पूर्वं तेन प्राणहीनाऽभवत् सा ॥
शिवशक्तिबीजमतएव शम्भुना निहितं तयोरुपरि पूर्वबीजयोः ।
अकुलं कुलोपरि च मध्यमाधरे दहनं ततः प्रभृति सोर्जिताऽभवत् ॥ इति ।

पूर्ववदित्युक्तत्वात् । प्रथमबीजस्य वाग्भवमिति नाम । मध्यस्य कामबीजमिति । तृतीयस्य शक्तिरिति । एतत्प्रसिद्धयैव पूर्वमग्रेऽपि वाग्भवकामशब्देनोभयोर्व्यवहार इति ज्ञेयम् । अतएवांशतः अत्रोद्धारः । व्यस्ताव्यस्तजपध्यानादि पूर्वोक्तमत्राप्यनुसन्धेयम् । अन्त्यं सबिन्दु बीजं मध्यं शक्तिः । तदुक्तम्—

अमुष्य मन्त्रस्य रदान्तयुक्तं बीजं सदण्डं लकुलीशपूर्वम् ।
शक्तिस्तु साखण्डलकर्णपूर्वं सहार्द्धजैर्वा तृकमाननान्तम् ॥ इति ॥
अन्यैस्त्वेन्मध्यबीजस्य नित्यामन्त्रत्वमप्युक्तम् ।

यदाहुः— नित्या भूत्वा जपेत् कामबीजमिष्टार्थसिद्धये ।
पञ्चह्रस्वाद्यबीजेन विन्यसेन्मुखपञ्चके ॥
षड्दीर्घेण षडङ्गानि कृत्वा नित्यां निजेष्टदाम् ।
मदिराम्भोधिमध्यस्थरक्तपङ्कजमध्यगाम् ॥
सुरूपां कुङ्कुमप्रख्यामाकुञ्चितशिरोरुहाम् ।
चतुर्भुजां महादेवीं पाशाङ्कुशधरां शिवाम् ॥
वामेतरकरासक्तकपालापूरितासवाम् ।
वामहस्तसमासक्तकपालासवदायिनीम् ॥
आत्माभेदेन तां धात्वा मन्त्रं लक्षं शनैर्जपेत् ।
मधूकपुष्पैर्जुहुयाद्दशांशं मन्त्रसिद्धये ॥
नित्यत्क्लिन्नोक्तमार्गेण पूजां कुर्यादतन्द्रितः ।
राजानं राजपत्नीं च वशीकर्त्तुं य इच्छति ॥
स तस्योरः समारुह्य मनसा तन्मयो जपेत् ।
यन्नामसहितं कृत्वा नित्यां विद्यां जपेन्नरः ॥

तामाकर्षयते नित्यं वशीकुर्याच्च भूपतिम् ।
अनया मातृकां देवीं ग्रथित्वा नियुतं जपेत् ॥
त्रैलोक्यमखिलं तस्य वशे तिष्ठति दासवत् ।
न्यस्तमत्राङ्गुली बद्धा क्षोभिणीं नाम पुष्कलाम् ॥
शयागतः स्मरेन्नित्यमिष्टामाकर्षकृज्जपेत् ॥ इति ।

क्षोभिणी मुष्टिः ॥ ७६-७७ ॥

बिन्दुमान् (बिन्दुयुक्त) अधर (ए) वर्ण—यह प्रथमबीज, ब्रह्मा (क), इन्द्र (ल), शशी (ईकार) युक्त—यह द्वितीय बीज, भृगु (स) उसे सर्गयुक्त (विसर्ग युक्त) वह भी मनु (औकार) युक्त—यह तृतीय बीज । इस प्रकार 'ऐं क्लीँ सौः' यह **बाला बीज का उद्धार** कहा गया । यह बाला समस्त जगत् को वश में करने वाली हैं । इस बाला बीज का जप तथा पूजा साधक को पूर्वोक्त रीति से करनी चाहिये ॥ ७६-७७ ॥

त्रिपुरभैरवीगायत्री

**मान्मथं त्रिपुरादेवि विद्महे पदमीरयेत् ।**
**उक्त्वा कामेश्वरि पदं प्रवदेद्धीमही ततः ॥ ७८ ॥**
**तदन्ते प्रवदेद् भूयस्तन्नः क्लिन्ने प्रचोदयात् ।**
**गायत्र्येषा समाख्याता त्रैपुरी सर्वसिद्धिदा ॥ ७९ ॥**

गायत्रीमुद्धरति मान्मथमिति । प्रसिद्धं मान्मथम् । अन्यत् स्वरूपम् ॥७८-७९॥

अब **त्रिपुरा गायत्री का उद्धार** कहते हैं—मन्मथ (ऐं), पश्चात् 'त्रिपुरादेवि विद्महे' यह पद, तदनन्तर पुनः 'कामेश्वरि धीमहि' पद, पुनः 'तन्नः क्लिन्ने प्रचोदयात्' यह पद कहे, इस प्रकार 'ऐं त्रिपुरा देवि विद्महे, कामेश्वरि धीमहि तन्नः क्लिन्ने प्रचोदयात्'—यह त्रिपुरा गायत्री का स्वरूप हुआ । यह गायत्री सब प्रकार की सिद्धि प्रदान करती है । (इसके बाद साधक भगवती से इस प्रकार स्तुति करे, 'हे त्रिपुरे मैं अपने अभीष्ट की प्राप्ति के लिये आपकी स्तुति करता हूँ जिसके करने से मनुष्य देवपूजित लक्ष्मी प्राप्त करता है) ॥ ७८-७९ ॥

त्रिपुरभैरवीस्तवः

**स्तुत्याऽनया त्वां त्रिपुरे स्तोष्येऽभीष्टफलाप्तये ।**
**यया व्रजन्ति तां लक्ष्मीं मनुजाः सुरपूजिताम् ॥ ८० ॥**
**ब्रह्मादयः स्तुतिपदैरपि सूक्ष्मरूपां**
**जानन्ति नैव जगदादिमनादिमूर्त्तिम् ।**
**तस्माद्वयं कुचनतां नवकुङ्कुमाभां**
**स्थूलां स्तुमः सकलवाङ्मयमातृभूताम् ॥ ८१ ॥**

त्रिपुरास्तुतिमारभते स्तुत्येति । यया स्तुत्या ॥ ८०-८१ ॥

हे मातः त्रिपुरे ! अब मैं अपने अभीष्ट फल की प्राप्ति के लिये आगे कही जाने वाली स्तुति से आपको प्रसन्न करूँगा, जिसके करने से मनुष्य देवताओं द्वारा सुपूजित महालक्ष्मी प्राप्त करते हैं ॥ ८० ॥

हे मातः ! आप जगत् की आदिभूता होकर भी अनादि रूपा हो यतः आपके सूक्ष्म रूप को ब्रह्मादि देवगण भी स्तुति द्वारा नहीं जान सके हैं, इसलिये मैं कुचभार से नम्र, नव कुङ्कुम के समान कान्ति वाली, संपूर्ण वाङ्मय की जननी उपं स्थूल मूर्त्ति स्वरूपा आपकी स्तुति कर रहा हूँ ॥ ८१ ॥

**सद्यः समुद्यतसहस्रदिवाकराभां**
**विद्याक्षसूत्रवरदाभयचिन्हहस्ताम् ।**
**नेत्रोत्पलैस्त्रिभिरलङ्कृतपद्मवक्त्रां**
**त्वां तारहाररुचिरां त्रिपुरे भजामः॥ ८२ ॥**

**तार उज्ज्वलो यो हारस्तेन रुचिराम् । मुक्ता शुद्धौ च तारः स्यादित्यमरः ॥८२॥**

हे मातः त्रिपुरे ! सद्यः उदीयमान सहस्रों सूर्यों के समान अरुण कान्ति वाली, हाथों में विद्या (पुस्तक), अक्षसूत्र (जपमाला), वर एवं अभय मुद्रा धारण करने वाली, कमल के समान विकसित तीन नेत्रों से सुशोभित कमल के समान मुख वाली तथा श्वेत हार धारण करने के कारण अत्यन्त मनोज्ञरूपा आपकी सेवा मैं कर रहा हूँ ॥ ८२ ॥

**सिन्दूरपुञ्जरुचिरं कुचभारनम्रं**
**जन्मान्तरेषु कृतपुण्यफलैकगम्यम् ।**
**अन्योन्यभेदकलहाकुलमानभेदै-**
**र्जानन्ति किं जडधियस्तव रूपमम्ब ॥ ८३ ॥**

हे अम्बे ! सिन्दूर पुञ्ज के समान रूचिर कान्ति वाले कुचभार से विनम्र, अनेक जन्म जन्मान्तरों के किये गये पुण्य से प्राप्त होने वाले आपके स्वरूप को भला जड़बुद्धि वाला मनुष्य किस प्रकार जान सकता है ? क्योंकि उसकी बुद्धि तो परस्पर भेद के कलह से नाना प्रकार के प्रमाणों से आकुल हैं ॥ ८३ ॥

**स्थूलां वदन्ति मुनयः श्रुतयो गृणन्ति**
**सूक्ष्मां वदन्ति वचसामधिवासमन्ये ।**
**त्वां मूलमाहुरपरे जगतां भवानि**
**मन्यामहे वयमपारकृपाम्बुराशिम् ॥ ८४ ॥**

हे मातः! मुनिगण आपको स्थूल बताते हैं । जबकि श्रुतियाँ आपकी सूक्ष्म रूप से स्तुति करती हैं, अन्य लोग आपको समस्त वाङ्मय स्वरूप होने के

कारण वर्णमातृका स्वरूप मानते हैं । हे भवानि! कुछ लोग आपको जगत् का मूल कारण मानते हैं किन्तु मैं तो आपको अपार करुणा का समुद्र मानता हूँ ॥ ८४ ॥

**चन्द्रावतंसकलितां शरदिन्दुशुभ्रां**
**पञ्चाशदक्षरमयीं हृदि भावयन्ति ।**
**त्वां पुस्तकं जपवटीममृताढ्यकुम्भं**
**व्याख्यां च हस्तकमलैर्दधतीं त्रिनेत्राम् ॥ ८५ ॥**

हे मातः! वे साधक धन्य हैं जो चन्द्रकला से विभूषित, शरदिन्दु के समान गौर वर्णाः, पञ्चाशत् वर्णमातृका स्वरूपा, हाथों में पुस्तक, अक्षमाला, अमृतपूर्ण कलश तथा व्याख्या मुद्रा को धारण करने वाली, त्रिनेत्रस्वरूपा आपके इस प्रकार के रूप का हृदय में ध्यान करते हैं ॥ ८५ ॥

**शम्भुस्त्वमद्रितनयाकलितार्द्धभागो**
**विष्णुस्त्वमम्ब कमलापरिबद्धदेहः।**
**पद्मोद्भवस्त्वमसि वागधिवासभूमिस्-**
**तेषां क्रियाश्च जगति त्रिपुरे त्वमेव ॥ ८६ ॥**

**अन्योन्यं परस्परं यो भेदकलहस्तेनाकुलानि यानि मानानि प्रमाणानि तद्भेदैस्तद्विशेषैः ॥ ८३ ॥**

हे मातः! आप पर्वत राजपुत्रि स्वरूप से अर्द्धभाग स्वरूपा शम्भु हो, अर्ध भाग से कमलारूप धारण करने वाली विष्णु हो, किं बहुना आधे भाग में समस्त वाङ्मय की अधिष्ठात्री वाणी स्वरूपा ब्रह्मा भी आप ही हैं, इसी प्रकार हे त्रिपुरे ! संहार, पालन तथा पोषण रूप से उनकी क्रिया भी आप ही हैं ॥ ८६ ॥

**आश्रित्य वाग्भवभवांश्चतुरः परादीन्**
**भावान् पदेषु विहितार्थमुदीरयन्तीम्।**
**कण्ठादिभिश्च करणैः परदेवतां त्वां**
**संविन्मयीं हृदि कदापि न विस्मरामि ॥ ८७ ॥**

**वाग्भवबीजेनाकारसाम्यात् त्रिकोणमाधारमण्डलमुच्यते । तत्र भवान् तदुत्पन्नान्। तत्र यद्यपि पराया एवोत्पत्तिस्तथापि अन्यासामपिं तत्स्थूलरूपत्वात्तथोक्तिः । यद्वा वाग्भवं कुण्डलिनी तद्भवांस्तदुत्पन्नान् ।**

**'शक्तिः कुण्डलिनीति या निगदिता आईमसंज्ञा' इत्युक्तेः ।**

**एवम्भूतांश्चतुरः परादीन् परापश्यन्तीमध्यमावैखरीरूपान् भावान् । पदेषु स्थानेषु आधारनाभिकण्ठमुखेषु क्रमादाश्रित्य कण्ठादिभिः करणैर्विहितार्थमीप्सितार्थम् उदीरयन्तीम् ॥ ८७ ॥**

हे मातः ! त्रिकोण से आधारभूत, नाभि (एवं हृदय) का आश्रय लेकर कण्ठ, तालु, मुख आदि करणों के द्वारा परा, पश्यन्ती, मध्यमा एवं वैखरी वाणी से आप ही जगत् के समस्त अभीष्ट भावों को प्रगट करती हैं, परदेवता एवं मोक्ष स्वरूपा भी आप ही हैं अतः ऐसा वरदान दीजिए कि मैं आपको कभी विस्मृत न करूँ ॥ ८७ ॥

**आकुंच्य वायुमवजित्य च वैरिषट्क-**
**मालोक्य निश्चलधिया निजनासिकाग्रम् ।**
**ध्यायन्ति मूर्ध्निकलितेन्दुकलावतंसं**
**त्वद्रूपमम्ब कृतिनस्तरुणार्कबिम्बम् ॥ ८८ ॥**

**वायुं प्राणापानरूपम् । वैरिषट्कं कामक्रोधलोभमोहमदमत्सररूपम् ॥ ८८ ॥**

हे मातः ! पुण्यशाली लोग, वायु को संकुचित कर काम क्रोधादि षड् वैरियों को जीतकर, एकाग्रबुद्धि से अपनी नासिका के अग्रभाग में दृष्टि लगा कर मस्तक के सहस्रार चक्र में इन्द्रकला के भूषण से भूषित आपके स्वरूप का ध्यान करते हैं ॥ ८८ ॥

**त्वं प्राप्य मन्मथरिपोर्वपुरर्द्धभागं**
**सृष्टिं करोषि जगतामिति वेदवादः ।**
**सत्यं तदद्रितनये जगदेकमात-**
**र्नोचेदशेषजगतः स्थितिरेव न स्यात् ॥ ८९ ॥**

**मन्मथरिपोः पुरुषस्य ब्रह्मणो वाऽर्द्धभागं सन्निधिम् । तत् सत्यं वेदवादत्वात् । विपक्षे प्रतिकूलं तर्कमाह नोचेदिति । त्वदधिष्ठानाभावादिति भावः ॥ ८९ ॥**

हे मातः ! वेदों का कहना है कि आप सदाशिव की अर्धाङ्गिनी बनकर इस सारे जगत् की सृष्टि करती हैं, हे अद्रितनये ! वेदवाद होने से यह सत्य ही है कि आप अकेले इस समस्त जगत् की जननी हैं, यदि ऐसा नहीं होता, तो इस जगत् को आधारत्वेन कौन आश्रय प्रदान करता ? ॥ ८९ ॥

**पूजां विधाय कुसुमैः सुरपादपानां**
**पीठे तवाम्ब कनकाचलगह्वरेषु ।**
**गायन्ति सिद्धवनिताः सह किन्नरीभि-**
**रास्वादितासवरसारुणनेत्रपद्माः ॥ ९० ॥**

**विद्युद्विलासवपुषः श्रियमावहन्तीं**
**यान्तीं स्ववासभवनाच्छिवराजधानीम् ।**
**सौषुम्णमार्गकमलानि विकाशयन्तीं**
**देवीं भजे हृदि परामृतसिक्तगात्रीम् ॥ ९१ ॥**

**स्ववासभवनात् मूलाधारात् । शिवराजधानीं सहस्त्रदलकमलम् । सुषुम्णायां भवं सौषुम्णं तदेव मार्गं येषां तानि । क्वचित् सौषुम्णसद्मकमलानीति पाठः । कमलान्याधारादीनि सहस्त्रान्तानि ॥ ९०-९१ ॥**

हे मातः ! आसव पान से जिनके नेत्र कमल रक्त हो रहे हैं ऐसी सिद्ध गणों की ललनायें सुवर्णमय सुमेरु पर्वत की गुफा में अष्टाक्षर स्वरूप पीठ पर कल्पवृक्षों के कुसुमों से आपकी पूजा कर किन्नरियों के साथ आपके यशों का गान करती हैं ॥ ९० ॥

हे मातः ! बिजली के समान देदीप्यमान कुण्डलिनी रूप से जब आप आधार स्थान से सहस्त्रदल कमल पर स्थित परब्रह्म की ओर सुषुम्णा मार्ग से चलती हैं उस समय उसमें रहने वाले समस्त कमल खिल उठते हैं और आपका समस्त शरीर परब्रह्म के रसास्वादन से अमृतमय हो जाता है । आपके इस प्रकार के स्वरूप का ध्यान कर मैं आपका भजन करता रहूँ ॥ ९१ ॥

**आनन्दजन्मभवनं भवनं श्रुतीनां**
**चैतन्यमात्रतनुमम्ब समाश्रयामि ।**
**ब्रह्मेशविष्णुभिरभिष्टुतपादपद्मां**
**सौभाग्यजन्मवसतिं त्रिपुरे यथावत् ॥ ९२ ॥**

**आनन्दजन्मभवनं श्रुतीनां भवनमिति व्यस्तं रूपकद्वयम् ॥ ९२ ॥**

हे त्रिपुरे ! समस्त आनन्दों की एवं समस्त श्रुतियों की एक मात्र जन्मभूमि चैतन्यात्मक आपके उस शरीर का जिसके पाद पद्मों की स्तुति ब्रह्मा, विष्णु एवं सदाशिव निरन्तर करते रहते हैं और जो समस्त सौभाग्यों का एक मात्र स्थान है, मैं आश्रय लेता हूँ ॥ ९२ ॥

**शब्दार्थभावि भुवनं सृजतीन्दुरूपा**
**या तद्विभर्त्ति पुनरर्कतनुः स्वशक्त्या ।**
**वह्नयात्मिकाहरति तत् सकलं युगान्ते**
**तां शारदां मनसि जातु न विस्मरामि ॥ ९३ ॥**
**नारायणीति नरकार्णवतारिणीति**
**गौरीति खेदशमनीति सरस्वतीति ।**
**ज्ञानप्रदेति नयनत्रयभूषितेति**
**त्वामद्रिराजतनये विबुधा वदन्ति ॥ ९४ ॥**

**शब्दार्थयोर्भावः सत्ता यत्र तत् । शारं कर्मफलं द्यति खण्डयतीति शारदा चिच्छक्तिः ॥ ९३-९४ ॥**

हे मातः ! आप अपनी शक्ति से चन्द्रस्वरूप होकर शब्दार्थ रूप सत्ता वाले

इस जगत् की सृष्टि करती हैं, सूर्यरूप धारण कर उसका पोषण करती हैं, पुनः युगान्त काल में प्रलयाग्नि का स्वरूप होकर उसका संहार करती हैं, अतः आपके इस शारदा रूप को मैं कभी भी विस्मृत न करूँ ॥ ९३ ॥

हे अद्रिराजतनये ! आपको देवगण नारायणी, नरकार्णवतारिणी, गौरी, खेद-शमनी, सरस्वती, ज्ञानप्रदा एवं नयनत्रयविभूषिता आदि नामों से पुकारते हैं ॥९४

**ये स्तुवन्ति जगन्मातः श्लोकैर्द्वादशभिः क्रमात्।**
**त्वामनुप्राप्य वाक्सिद्धिं प्राप्नुयुस्ते परां गतिम् ॥ ९५ ॥**

**द्वादशभिरिति सद्य इत्यादिभिः विस्मरामीत्यन्तैः । आद्यपद्यद्वयस्य मुखबन्ध-रूपत्वाच्छेषयोरपि स्वरूपफलनिर्देशात् । अथ च द्वादशभिरिति पदेन कोशभेदात् द्युमणिमालानामकः प्रबन्ध उक्तः । तल्लक्षणमुक्तं भामहेन—**

**अथ द्युमणिमाला स्यात् पद्यैर्द्वादशभिः समैः ।**
**प्रत्येकं नायकोत्कर्षप्रकाशनपरायणैः ॥**
**मुखबन्धे श्लोकयुग्मं तथा शेषे द्वयं मतम् ।**
**कृता द्युमणिमालेयं कीर्त्तिवृद्धिकरी नृणाम् ॥ इति ॥ ९५ ॥**

हे मातः ! 'सद्यः' से (१२. ८०) आरम्भ कर 'न विस्मरामि' (१२. ९३) द्युमणि माला नामक इस प्रबन्ध स्तोत्र से जो आपकी स्तुति करते हैं वे आपको प्राप्त कर वाक्सिद्धि एवं मोक्ष दोनों ही प्राप्त करते हैं ॥ ९५ ॥

**राजमातङ्गिनीमन्त्रः**

**वाङ्मायाकमलास्तारं नमोऽन्ते भगवत्यथ ।**
**श्रीमातङ्गीश्वरि वदेत् सर्वजनमनोहरि ॥ ९६ ॥**
**सर्वादि सुखराज्यन्ते सर्वादिमुखरञ्जिनि।**
**सर्वराजवशं पश्चात् करि सर्वपदं वदेत् ॥ ९७ ॥**
**स्त्रीपुरुषवशं ब्रह्मा नेत्रमग्न्यासनं पुनः ।**
**सर्वदुष्टमृगवशङ्करि सर्वभृगुस्त्वव ॥ ९८ ॥**
**शङ्करि स्यात् सर्वलोकममुकं शिवयुग्रविः ।**
**वशमानय जायाग्नेरष्टाशीत्यक्षरो मनुः ॥ ९९ ॥**

**राजमातङ्गिनीमन्त्रमुद्धरति वागिति । वाक् वाग्भवम् माया शक्तिबीजम् । कमला श्रीबीजम् तारः प्रणवः । नमोऽन्ते नम इत्यस्यान्ते । ब्रह्मा कः । नेत्रमिकारः अग्न्यासनं तेन रि । भृगुः सः त्त्व व स्वरूपम् । रविर्मकारः शिवयुगेकारयुक्तः तेन मे । दक्षिणमूर्त्तिः ऋषिः गायत्रीच्छन्दः माया बीजं स्वाहा शक्तिः ॥ ९६-९९ ॥**

अब **राजमातङ्गिनी मन्त्र का उद्धार** कहते हैं—वाक् (वाग्भव), माया (शक्तिबीज), कमला (श्री बीज), तार (प्रणव) के पश्चात् ॐ नमो भगवति श्री मातङ्गीश्वरि सर्वजन मनोहारि सर्वसुखराजि सर्वमुखरञ्जिनि सर्वराजवशंकरि, सर्वस्त्री-

पुरुषवशं' इतना पद कह कर, ब्रह्मा (कः), नेत्र (इकारः), उससे युक्त अग्न्यासम (र), तदनन्तर 'सर्वदुष्टमृगवशंकरि' पद, सर्व पद भृगुः (स), तदनन्तर 'त्व व' स्वरूप, तदनन्तर 'शंकरि' यह पद, पुनः 'सर्वलोकममुकम्', शिव युग् (एकार), रवि (मकार), तदनन्तर 'वंशमानय' यह पद, पुनः अग्निजाया (स्वाहा)—यह ८८ अक्षरों का राजमातङ्गिनी मन्त्र का उद्धार कहा गया।

**विमर्श**—इसका **स्वरूप** इस प्रकार है—'ऐं ह्रीँ श्रीँ ॐ नमो भगवति श्रीमातङ्गीश्वरि सर्वजनमनोहारि सर्वमुखराजि सर्वमुखरञ्जिनि सर्वराजवशंकरि सर्वस्त्री-पुरुषवशंकरि सर्वदुष्टमृगवशंकरि सर्वसत्त्ववशंकरि सर्वलोकममुकं मे वशमानय स्वाहा' ॥ ९६-९९ ॥

न्यासक्रमः । पदविभागः

**न्यासान्मन्त्री तनौ कुर्याद्वक्ष्यमाणान् यथाक्रमम् ।**
**शिरो ललाटभ्रूमध्ये तालुकण्ठगलोरसि ॥ १०० ॥**
**अनाहते भुजद्वन्द्वे जठरे नाभिमण्डले ।**
**स्वाधिष्ठाने गुह्यदेशे पादयोर्दक्षिणान्ययोः॥ १०१ ॥**
**मूलाधारे गुदे न्यस्येत् पदान्यष्टादश क्रमात् ।**

कण्ठस्तन्मणिर्गलस्तदधोभागः । अनाहते हृदये । गुह्यदेशे लिङ्गे । दक्षिणान्ययोरिति सार्वत्रिकोऽपि क्रमः क्वचिद्वक्तव्य इत्यत्रोक्तः ॥ १००-१०२ ॥

**गुणैकद्विचतुः षड्भिर्वसुषट्पर्वताष्टभिः ॥ १०२ ॥**
**दशपङ्क्त्यष्ट वेदाग्निचन्द्रयुग्मगुणाक्षिभिः ।**
**पदक्लृप्तिरियं प्रोक्ता मन्त्रवर्णैर्यथाक्रमम् ॥ १०३ ॥**

पदविभागमाह गुणेति । गुणास्त्रयः पर्वताः सप्त पङ्क्तिर्दश वेदाश्चत्वारः अग्नयस्त्रयः चन्द्र एकः अक्षि द्वयम् ॥ १०२-१०३ ॥

इसके अनन्तर मन्त्रज्ञ साधक अपने शरीर के स्थानों में आगे कहे जाने वाले १८ न्यासों को यथाक्रम इस प्रकार करे—शिर, ललाट, भ्रूमध्य, तालु, कण्ठ, गला, हृदय, अनाहत चक्र स्थान दोनों भुजा, जठर, नाभिमण्डल, स्वाधिष्ठान, लिङ्ग, दाहिना एवं बायाँ पैर, मूलाधार और गुदा—इन अट्ठारह स्थानों में मन्त्र को १८ पदों में तीन, एक, दो, चार, छः, आठ, छः, सात, आठ, दश, दश, आठ, चार, तीन, एक, दो, तीन और दो इस प्रकार विभक्त कर न्यास करे ॥ १००-१०३ ॥

**रत्याद्या मूलहृदयभ्रूमध्येषु विचक्षणः ।**
**वाक्शक्तिलक्ष्मीबीजाद्या मातङ्ग्यन्ताः प्रविन्यसेत्॥ १०४ ॥**

रत्याद्या इत्यादिशब्देन प्रीतिमनोभवे । बीजाद्या इति समुचितबीजाद्या

**इत्युक्तम् । मातङ्गयन्ता इति प्रत्येकम् । ऐं ह्रीँ श्रीं रत्यै मातङ्ग्यै नम इत्यादि प्रयोगः । एवमग्रेऽपि ॥ १०४ ॥**

पुनः बुद्धिमान् मन्त्रवेत्ता, वाक्माया और श्री से युक्त क्रमशः रति, प्रीति तथा मनोभवा में चतुर्थ्यन्त लगाकर अन्त में 'मातङ्ग्यै' नमः शब्द से युक्त कर मूल, हृदय तथा भ्रूमध्य में इस प्रकार न्यास करे ।

यथा—'ऐं ह्रीँ श्रीँ रत्यै मातंग्यै नमः' इति मूले, पुनः 'ऐं ह्रीँ श्रीँ प्रीत्यै मातङ्ग्यै नमः' इति हृदये इत्यादि ॥ १०४ ॥

**शिरोवदनहृद्गुह्यपादेषु विधिवन् न्यसेत् ।**
**हृल्लेखां गगनां रक्तां भूयो मन्त्री करालिकाम् ॥ १०५ ॥**
**महोच्छुष्मां स्वनामादिवर्णबीजपुरःसराः ।**
**मातङ्ग्यन्ताः षडङ्गानि ततः कुर्वीत साधकः ॥ १०६ ॥**
**वर्णैश्चतुर्भिर्विंशत्या हृत् त्रयोदशभिः शिरः ।**
**शिखाऽष्टादशभिः प्रोक्ता वर्म तावद्भिरक्षरैः ॥ १०७ ॥**
**स्यात् त्रयोदशभिर्नेत्रं द्वाभ्यामस्त्रं समीरितम् ।**
**विभक्तैर्मूलमन्त्रार्णैर्वार्णन्यासमथाचरेत् ॥ १०८ ॥**

**विधिवदिति । पञ्चमुखेष्वपि न्यसेदित्युक्तम् । स्वनाम्नां ये आदिवर्णाः ते एव बीजानि । तत् पुरःसराः तदाद्या इति पूर्वोक्तबीजापवादः । मातङ्ग्यन्ता इत्यस्य पश्चात्तेनेन सम्बन्धः । ततः साधकः विभक्तैर्मूलमन्त्रार्णैः षडङ्गानि कुर्वीतेति सम्बन्धः । साधक इत्यनेन ज्ञानैश्वर्यादियोगः सूचितः । विभागमाह वर्णैरिति ॥ १०५-१०८ ॥**

इसके बाद मन्त्रज्ञ साधक, शिर, मुख, हृदय, गुह्य एवं पैरों में विधिपूर्वक हृल्लेखा गगना, रक्ता करालिका तथा महोच्छुष्मा नामक देवियों का नामाक्षर के आदि वर्ण के बीजाक्षरों से युक्त कर न्यास करे । यथा—हं हृल्लेखायै नमः इति शिरसि, गं गगनायै नमः मुखे इत्यादि । तदनन्तर साधक पूर्व में कहे गये ८८ अक्षरों को आगे कहीं जाने वाली विधि के अनुसार प्रविभक्त कर अन्त में मातङ्गी शब्द को चतुर्थ्यन्त जोड़कर षडङ्गन्यास करे ॥ १०५-१०६ ॥

चौबीस अक्षरों से हृदय, तेरह अक्षरों से शिर, अट्ठारह अक्षरों से शिखा, उतने ही अक्षरों से कवच, तेरह अक्षरों से नेत्र तथा दो अक्षरों से अस्त्र न्यास करे। पुनः मूल मन्त्र को पाँच भागों में विभक्त कर (नेत्र के १३ बीजाक्षरों को छोड़कर क्योंकि पञ्चाङ्ग न्यास में नेत्र न्यास नहीं किया जाता) पञ्चाङ्ग न्यास करे ॥ १०७-१०८ ॥

**मूर्द्धपादास्यगुह्येषु हृदम्भोजे प्रविन्यसेत् ।**
**द्राविणीं क्षोभिणीं भूयो वर्द्धनीं मोहनीं पुनः ॥ १०९ ॥**

**आकर्षणीं स्वनामादिबीजाद्या शुभलक्षणाः ।**

**स्वनामेति । स्वनामादौ बीजाद्याः पूर्वोक्तद्रामादिबीजादिकाः मातङ्ग्यन्ता न्यसेदिति सम्बन्धः । शुभलक्षणा इत्यन्वर्थाभिधाना इत्यर्थः ॥ १०९-११० ॥**

पुनः शिर, पैर, मुख, गुह्य प्रदेश एवं हृदय प्रदेश में शुभलक्षण द्राविणी, क्षोभिणी, वर्द्धनी, मोहनी एवं आकर्षिणी के नामों द्वारा प्रत्येक नाम के आद्य अक्षरों के बीज से युक्त कर, न्यास करे । यथा—द्रां द्राविण्यै नमः शिरसे, क्षों क्षोभिण्यै नमः पादयोः इत्यादि ॥ १०९ ॥

**मातङ्ग्यन्तांस्ततो न्यस्येन्मन्मथान् वदनांसयोः॥ ११० ॥**
**पार्श्वकट्योर्नाभिदेशे कटिपार्श्वांसके पुनः ।**
**बीजत्रयादिकान्मन्त्री मन्मथं मकरध्वजम् ॥ १११ ॥**
**मदनं पुष्पधन्वानं पञ्चमं कुसुमायुधम् ।**
**षष्ठं कन्दर्पनामानं मनोभवरतिप्रियौ ॥ ११२ ॥**

**ततो मातङ्ग्यन्तान् मन्मथान् न्यसेदिति सम्बन्धः । वदनांसयोरिति वामांसादारभ्य न्यासः । बीजत्रयादिकानिति मन्त्राद्यबीजत्रयाद्यान् ॥ ११०-११२ ॥**

तदनन्तर प्रत्येक मन्मथादि नामों के आदि में तीन बीजाक्षर एवं अन्त में 'मातंग्यै' लगा कर मुख, कन्धा, पार्श्व, कटि, नाभि, पुनः कटि एवं पार्श्वस्थानों में न्यास करे ॥ ११० ॥

अब मन्मथ के नामों को कहते हैं—मन्मथ, मकरध्वज, मदन, पुष्पधन्वा, पाँचवाँ, कुसुमायुध, छठा, कन्दर्प, सातवाँ, मनोभव, आठवाँ रतिप्रिय । यथा—ऐं ह्रीँ श्रीँ मन्मथाय मातङ्ग्यै नमः इति मुखे इत्यादि ? ॥ १११-११२ ॥

**मातङ्ग्यन्तास्तनौ न्यस्येत् स्थानेष्वेतेषु मन्त्रवित्।**
**प्रथमाऽनङ्गकुसुमा भूयोऽन्याऽनङ्गमेखला ॥ ११३ ॥**
**अनङ्गमदना तद्वदनङ्गमदनातुरा ।**
**अनङ्गमदनवेगा भूयश्चाऽनङ्गसंभवा ॥ ११४ ॥**
**सप्तम्यनङ्गभुवनपालिनी स्यादथाऽष्टमी ।**
**अनङ्गशशिरेखाऽन्या मातङ्ग्यन्ताः समीरिताः ॥ ११५ ॥**

**समीरिता एता मातङ्ग्यन्ताः ।**
**तनौ एतेषु पूर्वोक्तस्थानेषु न्यसेदिति सम्बन्धः ॥ ११३-११५ ॥**

पुनः मन्त्रवेत्ता इन्हीं आठ स्थानों में अनङ्गकुसुमा, अनङ्गमेखला, अनङ्गमदना, अनङ्गमदनातुरा, अनङ्गमदनवेगा, अनङ्गसंभवा, अनङ्गभुवनपालिनी, अनङ्गशशिरेखा—इन आठ देवियों के नामों को मातङ्गी शब्द से युक्त कर न्यास करे । यथा—'अनङ्गकुसुमायै मातङ्ग्यै नमः' मुखे इत्यादि ॥ ११३-११५ ॥

विन्यस्तव्यास्तनौ मूलेऽधिष्ठाने मणिपूरके ।
हृत्कण्ठास्ये भ्रुवोर्मध्ये मस्तके मन्त्रिणा ततः ॥ ११६ ॥
आद्ये लक्ष्मीसरस्वत्यौ रतिः प्रीतिश्च कृत्तिका ।
शान्तिः पुष्टिस्तथा तुष्टिर्मातङ्गीपदशेखराः ॥ ११७ ॥
मूलमन्त्रं प्रविन्यस्येन्निजमूर्द्धनि मन्त्रवित् ।
आधारदेशेऽधिष्ठाने नाभौ पश्चादनाहते ॥ ११८ ॥
कण्ठे वक्त्रे भ्रुवोर्मध्ये मस्तके विन्यसेत् क्रमात् ।
ब्राह्म्याद्याः पूर्वमुद्दिष्टा मातङ्गीपदपश्चिमाः ॥ ११९ ॥

**मूले मूलाधारे । अधिष्ठाने लिङ्गमूले । मणिपूरके नाभौ । मातङ्गीपदशेखरा मातङ्ग्यन्ता एता मन्त्रिणा तनौ विन्यस्तव्या इति सम्बन्धः । पूर्वमिति षष्ठे । मातङ्गीपदं पश्चिममन्तिमं यासां ताः ॥ ११६-११९ ॥**

इसके अनन्तर शरीर के मूलाधार, अधिष्ठान, मणिपूरक, हृदय, कण्ठमुख, भ्रूमध्य एवं मस्तक इन आठ स्थानों में लक्ष्मी, सरस्वती, रति, प्रीति, कृत्तिका, शान्ति, पुष्टि एवं तुष्टि—इन देवियों के नामों के अन्त में मातङ्ग्यै नमः शब्द जोड़कर न्यास करे । तदनन्तर मूल मन्त्र का उच्चारण कर शिरः प्रदेश में न्यास करे ॥ ११६-११७ ॥

पुनः आधार, अधिष्ठान, नाभि, अनाहत, कण्ठ, मुख, भ्रूमध्य एवं मस्तक में पूर्व में कही गई ब्राह्मी आदि (द्र. ६. १७-१८) देवियों के नाम के अन्त में मातंग्यै नमः शब्द जोड़कर न्यास करे ॥ ११८-११९ ॥

एषु स्थानेषु विन्यस्येदसिताङ्गादिभैरवान् ।
मातङ्ग्यन्तान् न्यसेन्मन्त्री मूलमन्त्रं स्वमूर्द्धनि ॥ १२० ॥

**एषु पूर्वोक्तस्थानेषु मातङ्ग्यन्तान् असिताङ्गादिभैरवान् नवमोक्तान् विन्यसेदिति सम्बन्धः ॥ १२० ॥**

पुनः इन्हीं स्थानों में असिताङ्गादि भैरवों (द्र. ९. ७३-७४) के नाम के अन्त में 'मातंग्यै नमः' शब्द लगा कर मन्त्रज्ञ न्यास करे और मूल मन्त्र से मस्तक पर न्यास करे ॥ १२० ॥

आधारदेशेऽधिष्ठाने नाभौ पश्चादनाहते ।
कण्ठदेशे भ्रुवोर्मध्ये बिन्दौ भूयः कलापदे ॥ १२१ ॥
निरोधिकायामर्द्धेन्दौ नादनादान्तयोः पुनः ।
उन्मन्यां विष्णुवक्त्रे च ध्रुवमण्डलके शिवे ॥ १२२ ॥

**भ्रुवोर्मध्य इत्यारभ्य शिवान्तमूर्द्धोर्द्धादिस्थानानि ज्ञातव्यानि ॥ १२१-१२२ ॥**

मातङ्ग्यन्ताः प्रविन्यस्येद्वामां ज्येष्ठामतः परम् ।
रौद्रीं प्रशान्तिं श्रद्धाख्यां पुनर्माहेश्वरीमथ ॥ १२३ ॥
क्रियाशक्तिं सुलक्ष्मीं च सृष्टिसंज्ञां च मोहिनीम् ।
प्रमथां श्वासिनीं विद्युल्लतां चिच्छक्तिमप्यथ ॥ १२४ ॥
ततश्च सुन्दरानन्दां नन्दबुद्धिमिमाः क्रमात् ।

मातङ्ग्यन्ता इमाः प्रविन्यसेदिति सम्बन्धः । क्रियाशक्तिमित्येका सृष्टिसंज्ञामित्येका प्रमथामित्येका सुन्दरानन्दामित्येका ॥ १२३-१२५ ॥

तदनन्तर मूलाधार, अधिष्ठान, नाभि, अनाहत, कण्ठ, भ्रूमध्य, बिन्दु, कलापद, निरोधिका, अर्द्धेन्दु, नाद, नादान्त, उन्मनी, विष्णु, वक्त्र, ध्रुवमण्डल एवं शिव—इन १६ स्थानों में १. वामा, २. ज्येष्ठा, ३. रौद्री, ४. प्रशान्ति, ५. श्रद्धा, ६. माहेश्वरी, ७. क्रियाशक्ति, ८. सुलक्ष्मी, ९. सृष्टि, १०. मोहिनी, ११. प्रमथा, १२. श्वासिनी, १३. विद्युल्लता, १४. चिच्छक्ति, १५. सुन्दरानन्दा और १६. नन्दबुद्धि के नाम के अन्त में मातंग्यै नमः जोड़कर न्यास करना चाहिए ॥ १२१-१२४ ॥

शिरोभालहृदाधारेष्वेता बीजत्रयादिकाः ॥ १२५ ॥
मातङ्ग्यन्ताः प्रविन्यस्येद्यथावद्देशिकोत्तमः ।
मातङ्गीं महदाद्यां तां महालक्ष्मीपदादिकाम् ॥ १२६ ॥
सिद्धलक्ष्मीपदाद्यां तां मूलमाधारमण्डले ।
न्यस्य तेनैव कुर्वीत व्यापकं देशिकोत्तमः ।
एवं न्यस्तशरीरोऽसौ चिन्तयेदात्मदेवताम् ॥ १२७ ॥

एता वक्ष्यमाणाः । यथावद्देशिकोत्तम इत्यनेन बीजत्रयादिकान् मन्त्रीत्यादौ एता बीजत्रयादिका इत्यन्ते मध्ये च मन्त्रविन् मन्त्रिणा मन्त्रविन् मन्त्रीति चोक्तत्वात् मध्ये या देवतास्तासामपि बीजत्रयादित्वं ज्ञेयमित्युक्तम् ।

आदिशब्दार्थमाह मातङ्गीमिति ।

महदाद्यां तां महामातङ्गीम् । तेनैवेति मूलेन ॥ १२५-१२७ ॥

पुनः शिर, भाल, हृदय एवं मूलाधार में बीजत्रय को आदि में तथा मातङ्गी शब्द को अन्त में लगाकर, उत्तम साधक महामातङ्गी, महालक्ष्मी एवं सिद्धलक्ष्मी के नामों से तदनन्तर मूल मन्त्र से मूलाधार का न्यास तथा व्यापक न्यास करे ।

यथा—'ऐं ह्रीँ श्रीँ महामातङ्गी मातंग्यै नमः' इति शिरसि इत्यादि । इस प्रकार ऊपर कहे गये सभी न्यास करने के पश्चात् तदनन्तर अपने इष्टदेवता का ध्यान इस प्रकार करे ॥ १२५-१२७ ॥

मातङ्गीध्यानम् । पुरश्चरणादिकथनम्

ध्यायेयं रत्नपीठे शुककलपठितं शृण्वतीं श्यामलाङ्गीं
न्यस्तैकाङ्घ्रिं सरोजे शशिशकलधरां वल्लकीं वादयन्तीम् ।
कह्लाराबद्धमालां नियमितविलसच्चूलिकां रक्तवस्त्रां
मातङ्गीं शङ्खपत्रां मधुमदविवशां चित्रकोद्भासिभालाम् ॥१२८॥
अयुतं प्रजपेन्मन्त्री तद्दशांशं मधूकजैः ।
पुष्पैस्त्रिमधुरोपेतैर्जुहुयान्मन्त्रसिद्धये ॥ १२९ ॥

ध्यायेयमिति । चूलिका केशबन्धः । शङ्खपत्रं शङ्खगताटङ्कम् । चित्रकं तिलकम्। तथा च त्रिकाण्ड्याम् । 'तमालपत्रतिलकचित्रकाणि विशेषकम्' इति । अत्र ध्यानान्तरं वीणायोनिमुद्रे दर्शयेत् ॥ १२८-१२९ ॥

जो रत्न के सिंहासन पर बैठ कर पढ़ते हुये मुख से निकले हुये मनोहर शब्दों को सुन रही हैं जिनके शरीर का वर्ण श्यामल है, जो अपना एक पैर कमल पर रखी हुई हैं, चन्द्रमा के शकल के समान स्वच्छ वीणा बजा रही हैं, कह्लार की माला से विभूषित और अपने उत्तम केशबन्ध से सुशोभित हैं, रक्तवर्ण का वस्त्र धारण किये जिन भगवती के कामों में शङ्ख निर्मित आभूषण शोभित हो रहा है, ऐसी मद्य से मदमत्त, मनोहर तिलकों से युक्त भाल वाली मातङ्गी देवी का मैं ध्यान करता हूँ ॥ १२८ ॥

मन्त्रज्ञ को उक्त गायत्री (द्र. १२. ७८-७९) का दश हजार संख्या में जप करना चाहिए तथा उसका दशांश त्रिमधुर मिश्रित मधूक पुष्पों से मन्त्रसिद्धि के लिये होम करना चाहिए ॥ १२९ ॥

त्रिकोणकर्णिकं पद्ममाष्टपत्रं प्रकल्पयेत् ।
अष्टपत्रावृतं बाह्ये वृत्तं षोडशभिर्दलैः॥ १३० ॥
चतुरस्रसमायुक्तं कान्त्या दृष्टिमनोहरम् ।
एतस्मिन् पूजयेत् पीठे नव शक्तीः क्रमादिमाः ॥ १३१ ॥
विभूतिरुन्नतिः कान्तिः सृष्टिः कीर्त्तिश्च सन्नतिः ।
व्युष्टिरुत्कृष्टिर्ऋद्धिश्च मातङ्गीपदपश्चिमाः ॥ १३२ ॥
सर्वान्ते शक्तिकमलासनाय नम इत्यथ।
वाक्शक्तिलक्ष्मीबीजाद्यो मनुरासनसंज्ञकः॥ १३३ ॥
मूलेन मूर्त्तिं सङ्कल्प्या तस्यामावाह्य देवताम् ।
अर्चयेद्विधिनाऽनेन वक्ष्यमाणेन मन्त्रवित् ॥ १३४ ॥

त्रिकोणकर्णिकमिति योनिकर्णिकम् ॥ १३० ॥

**मातङ्गीपूजन यन्त्र**—योनि (त्रिकोण) की कर्णिका से युक्त अष्टपत्र युक्त

कमल का निर्माण करे, उसके बाहर अष्टपत्र का कमल बनाकर उसे आवृत्त करे, पुनः उसके चारों ओर १६ दलों का वृत्त निर्माण करे। उसके चारों ओर चतुरस्र रेखा निर्माण करे जो देखने में मनोहर प्रतीत होता हो। इस प्रकार की पीठ पर क्रमशः इन नव शक्तियों की पूजा करे ॥ १३०-१३१ ॥

विभूति, उन्नति, कान्ति, सृष्टि, कीर्त्ति, सन्नति, व्यष्टि, उत्कृष्टि और ऋद्धि—ये नव शक्तियाँ हैं इनके प्रत्येक के नामों के अन्त में मातंग्यै नमः लगाकर पूजा करे ॥ १३२ ॥

इस प्रकार सब की पूजा कर लेने के अनन्तर, वाग्बीज, शक्तिबीज और लक्ष्मीबीज आदि में जोड़ कर 'सर्वशक्ति कमलासनाय नमः' देवी को से आसन प्रदान करे ॥ १३३ ॥

मूल मन्त्र से मूर्त्ति का संकल्प कर उस मूर्त्ति में देवता का आवाहन कर मन्त्रवेत्ता आगे कही जाने वाली विधि के अनुसार देवी की इस प्रकार पूजा करे।

**रत्याद्यास्त्रिषु कोणेषु पूजयेत् पूर्ववत् सुधीः ।**
**हृल्लेखाद्याः पञ्च पूज्या मध्ये दिक्षु च मन्त्रिणा ॥ १३५ ॥**

**पूर्ववदिति यथान्यस्ता वामकोणादि । एवमग्रेऽपि यथान्यासमेव पूजा । सा यथापूर्वमिति तुर्योक्त स्थानेषु ॥ १३५ ॥**

पूर्व में जिस प्रकार न्यास कहा गया है, उसी प्रकार के क्रम से साधक तीन कोणो में रत्यादि की मध्य में और चारों दिशाओं में हृल्लेखा आदि पाँच देवियों की पूजा करे। (द्र. १२. १०४-१०६) ॥ १३५ ॥

**पाशाङ्कुशाभयाभीष्टधारिण्यो भूतसप्रभाः ।**
**अङ्गानि पूजयेत्पश्चाद्यथापूर्वं विधानवित् ॥ १३६ ॥**
**बाणानभ्यर्चयेदि्दक्षु पञ्चमं पुरतो यजेत् ।**
**दलमध्येषु सम्पूज्या अनङ्गकुसुमादयः ॥ १३७ ॥**
**पाशाङ्कुशाभयाभीष्टधारिण्योऽरुणविग्रहाः ।**

**विधानविदिति कर्णिकायाम् । दिक्ष्विति दिक्केसरेषु । पुनरनन्तरम् । वल्लकी वीणा ॥ १३६-१३८ ॥**

ये सभी देवियाँ पाश, अंकुश, वर एवं अभय मुद्रा धारण की हैं। इनके शरीर का वर्ण क्रमशः पञ्चभूतों (१. २१-२२) के वर्ण के समान है। इसके बाद विधानवेत्ता साधक पूर्वोक्त रीति से अङ्गों की पूजा करे ॥ १३६ ॥

चारों दिशाओं में चार काम बाणों की (द्रां द्रीं क्लीँ ब्लूं सः द्र. १२. १९) एवं पञ्चम बाण की अपने आगे पूजा करे। पुनः पत्र के मध्य में अनङ्ग-कुसुमादिकों (द्र. १२. ११३-११५) की पूजा करे ॥ १३७ ॥

ये सभी देवियाँ पाश, अंकुश, अभय एवं वर मुद्रा धारण की हैं । सभी रक्तवर्ण की हैं । इसके बाद पत्र के अग्रभाग में हाथ में वीणा लिये हुये लक्ष्मी आदि देवियों की (द्र. १२. ११७) पूजा करे ॥ १३८ ॥

**पत्राग्रेषु पुनः पूज्या लक्ष्म्याद्या वल्लकीकराः ॥ १३८ ॥**
**बहिरष्टदलेष्वर्च्या मन्मथाद्या मदोद्धताः ।**
**अपराङ्गनिषङ्गाढ्याः पुष्पास्त्रेक्षुधनुर्धराः ॥ १३९ ॥**
**पत्रस्थाः मातरः पूज्या ब्राह्मयाद्याः प्रोक्तलक्षणाः ।**
**तदग्रेष्वर्चयेद्विद्वानसिताङ्गादिभैरवान् ॥ १४० ॥**
**पुनः षोडशपत्रेषु पूज्याः षोडश शक्तयः ।**
**वामाद्याः कलवीणाभिर्गायन्त्यः श्यामविग्रहाः ॥ १४१ ॥**
**चतुरस्त्रचतुर्दिक्षु चतस्त्रः पूजयेत् पुनः ।**
**मातङ्ग्याद्या मदोन्मत्ता वीणाललितपाणयः ॥ १४२ ॥**

**बहिरष्टदलेषु दलमूलेषु । अपराङ्गे पृष्ठभागे । निषङ्गस्तणीरः तेनाढ्याः । पुष्पास्त्रं पुष्पबाणः । प्रोक्तलक्षणाः षष्ठपटलोक्तध्यानाः ॥ १३८-१४२ ॥**

इसके बाद बाहर के अष्टदल में महामदोद्धव मन्मथादि की (द्र. १२. १११-११२) पूजा करे । ये सभी पीठ पर तरकस लटकाये हुये हैं और हाथ में पुष्प का बाण तथा ऊख का धनुष धारण किये हुये हैं ॥ १३९ ॥

पत्रों में ऊपर कहे गये ब्राह्मी आदि देवियों की (द्र. ६. १७-१८) पूजा करे। पुन: पत्र के अग्रभाग में विद्वान् साधक असिताङ्ग आदि (द्र. ९. ७४,९३) भैरवों की पूजा करे ॥ १४० ॥

पुन: षोडश पत्रों पर वामा आदि षोडश शक्तियों (१२. १२३-१२५) की पूजा करे । इन सभी शक्तियों का शरीर श्यामवर्ण है और सभी वीणा से मनोहर गान करने वाली हैं ॥ १४१ ॥

इसके बाद चतुरस्त्र के चारों दिशाओं में मातङ्गी आदि (द्र. १२. १२६-१२७) चार देवियों की पूजा करे । ये सभी मद से उन्मत्त हैं तथा अपने हाथों को वीणा पर रखे हुये हैं ॥ १४२ ॥

**आग्नेयकोणे विघ्नेशं दुर्गां नैशाचरे यजेत् ।**
**वायव्ये वटुकं पश्चादैशान्ये क्षेत्रपं यजेत् ॥ १४३ ॥**
**लोकपाला बहिः पूज्या वज्राद्यैरायुधैः सह ।**
**मन्त्रेऽस्मिन् साधिते मन्त्री साधयेदिष्टमात्मनः ॥ १४४ ॥**

**आग्नेयकोण इति । इयं पूजा सर्वशक्तिमन्त्रसाधारणीति ज्ञेयम् । अतएव सर्वशक्तिमन्त्राणामन्ते उक्ता ॥ १४३-१४४ ॥**

आग्नेयकोण में गणेश, नैर्ऋत्य कोण में दुर्गा, वायव्य में बटुक, तदनन्तर ईशान में क्षेत्रपाल की पूजा करे ॥ १४३ ॥

तदनन्तर वज्रादि आयुधों के सहित लोकपालों की बाहर पूजा करे । इस प्रकार जब मन्त्र सिद्ध हो जाय तब मन्त्रवेत्ता अपनी अभीष्ट सिद्धि के लिये अनुष्ठान करे ॥ १४४ ॥

**मल्लिकाजातिपुन्नागैर्होमाद्भाग्यालयो भवेत् ।**
**फलैर्बिल्वसमुद्भूतैस्तत्पत्रैर्वा हुताद्भवेत् ॥ १४५ ॥**
**राजपुत्रस्य राज्याप्तिः पङ्कजैः श्रियमाप्नुयात् ।**
**उत्पलैर्वशयेद्विश्वं लक्ष्मीपुष्पैस्तथा नरः ॥ १४६ ॥**

**मल्लिकेति त्रितयै पुष्पैरिति ज्ञेयम् । फलैरित्यग्रे वक्ष्यमाणत्वात् ॥ १४५-१४६ ॥**

मल्लिका जाति, पुन्नाग के होम से उत्कृष्ट भाग्यों वाला होता है, राजपुत्र यदि विल्वफलों से अथवा विल्व के पत्रों से होम करे तो राज्य की प्राप्ति होती है, कमल के होम से लक्ष्मी की प्राप्ति होती है । उत्पल (लालकमल) अथवा वकुल के पुष्पों के होम से मनुष्य विश्व को वश में कर सकता है ॥ १४६ ॥

**बन्धूकपुष्पैर्बकुलैर्जवोत्थैः किंशुकोद्भवैः ।**
**वश्याय जुहुयान्मन्त्री मधुना सर्वसिद्धये ॥ १४७ ॥**
**लवणैर्मधुरोपेतैर्हुत्वा कर्षति सुन्दरीम् ।**
**वंजुलस्य समिद्धोमो वृष्टिं वितनुतेऽचिरात् ॥ १४८ ॥**
**क्षीराक्तैरमृताखण्डैर्होमो नाशयति ज्वरम् ।**
**दूर्वाभिरायुराप्नोति कदम्बैर्वश्यमाप्नुयात् ॥ १४९ ॥**
**अन्नवानन्नहोमेन तण्डुलैर्धनवान् भवेत् ।**
**सर्वं त्रिमधुरोपेतं होमद्रव्यमुदाहृतम् ॥ १५० ॥**
**नन्द्यावर्त्तभवैः पुष्पैर्होमो वाक्सिद्धिदायकः ।**
**निम्बप्रसूनैर्जुहुयादीप्सितां श्रियमश्नुते ।**
**पलाशकुसुमैर्होमात्तेजस्वी जायते नरः ॥ १५१ ॥**

**बन्धूकपुष्पैरिति । पुष्पपदोपादानात् सान्निध्यात् बकुलादित्रयमपि पुष्पम् कदम्बैरित्यपि पुष्पैः । सर्वमिति । अन्यगुणानवरुद्धं पूर्वोक्तमग्निमम् ॥ १४७-१५१ ॥**

बन्धूक पुष्प, वकुल (उत्पल एवं पंकज) अथवा पलाश पुष्प का होम वशीकरण के लिये करे । सर्वसिद्धि के लिये मधु से होम करे ॥ १४७ ॥

त्रिमधुराक्त लवण के होम से सुन्दर स्त्री को अपनी ओर आकृष्ट करता है वञ्जुल (वेंत) के होम से शीघ्र ही वृष्टि होती है ॥ १४८ ॥

दूध में डुबोये गये अमृता (गुडूची) की समिधा के होम से ज्वर का विनाश होता है। दूर्वा के होम से आयु की प्राप्ति तथा कदम्ब पुष्प के होम से वशीकरण होता है ॥ १४९ ॥

अन्न के होम से अधिक अन्न की संप्राप्ति, तण्डुल होम से धनवान् होता है। यहाँ तक जितने भी होम के द्रव्य कहे गये हैं उन्हें त्रिमधुर (आज्य, दूध, मधु) से मिश्रित कर तदनन्तर होम करना चाहिए ॥ १५० ॥

नन्द्यावर्त्त के पुष्पों का होम वाक्सिद्धि प्रदान करता है, यदि निम्बपुष्प से होम करे तो अभिलषित लक्ष्मी की प्राप्ति होती है। पलाश कुसुम के होम से मनुष्य तेजस्वी होता है ॥ १५१ ॥

**चन्दनागरुकर्पूररोचनाकुङ्कुमादिभिः ।**
**वश्याय जुहुयान्मन्त्री वशयेदखिलं जगत् ॥ १५२ ॥**
**एतानि जप्त्वा तिलकं कुर्याल्लोकप्रियो भवेत् ।**
**निर्गुण्डीमूलहोमेन निगडान्मुच्यते नरः ॥ १५३ ॥**

**चन्दनेति शक्तिगन्धाष्टकम् । तेन आदिशब्देन जटामांसीकचूररक्तचन्दनानि । वशयेदिति । अष्टद्रव्यहोमसमुदायफलम् । एतानीति कर्पूरकपिचौराणि समभागानीति पूर्वमन्त्रप्रयोगोक्तभागक्लृप्तानीत्यर्थः । तिलकमिति । कन्यया हिमोदकेन कृष्णचतुर्दश्यां निशि पिष्टेन एतन्मन्त्रजप्तेन कृतम् ॥ १५२-१५३ ॥**

चन्दन, अगुरु, कर्पूर, गोरोचन तथा कंकुम आदि मिश्रित पदार्थों का होम वशीकरण के लिये करना चाहिए, इन पदार्थों के होम से सारे विश्व को वश में किया जा सकता है ॥ १५२ ॥

उपर्युक्त चन्दन कर्पूर आदि को समभाग ले उसे घिस कर उसके कर्दम को हाथ में लिये हुये जप करे तत्पश्चात् उसी से तिलक करे। ऐसा करने से वह सबका प्रिय बन जाता है। निर्गुण्डी के मूल के होम से मनुष्य जेल यातना से मुक्त हो जाता है ॥ १५३ ॥

**निम्बतैलान्वितैर्लोणैर्होमः शत्रुविनाशनः ।**
**हरिद्राचूर्णसंमिश्रैर्लवणैः स्तम्भयेत्परान् ॥ १५४ ॥**
**रसवद्भिः फलैः पक्वैः पुष्पैः परिमलान्वितैः ।**
**हुत्वा सम्यगवाप्नोति साधकः सर्वमीप्सितम् ॥ १५५ ॥**

**निम्बतैलान्वितैरिति । तत्तैलाकृष्टिप्रकारो यथा—**

**बीजानि जलपिष्टानि कांस्यपात्रे खरातपे ।**
**स्थापयेत्तस्य तत्तैलं निःसरत्येव नाऽन्यथा ॥ इति ॥**

**परान् शत्रून् ॥ १५४-१५५ ॥**

निम्ब तेल मिश्रित लवण के द्वारा किया गया होम शत्रु का विनाश करता है। हरदी के चूर्ण से मिश्रित लवण का होम शत्रु समूहों का स्तम्भन करता है ॥ १५४ ॥

रसयुक्त सुस्वादु फलों के एवं सुगन्ध युक्त पुष्पों का हवन कर साधक, अपना संपूर्ण अभिलषित मनोरथ पूर्ण कर लेता है ॥ १५५ ॥

राजमातङ्गिनीस्तुतिः

**देवतां जगतामाद्यां मातङ्गीमिष्टदायिनीम् ।**
**अवाप्तुमिष्टतां वाचं भूषयेद्रत्नमालया ॥ १५६ ॥**

**मातङ्गीस्तुतिमारभते देवतामिति । रत्नमालेति प्रबन्धनाम । तद्योगात् स्तुतिनामापि । तल्लक्षणमुक्तं भामहेन—**

**नेतृप्रसिद्धनामाङ्कं श्लोकयुग्मं शुभावहम् ।**
**कुर्यादाद्यन्तयोस्तस्य शिखाबन्धं समाधिना ॥**
**सुभङ्गिः शोभना सा स्यात् रत्नमाला नवाधिका ।**
**मालायां नवरत्नादौ रचितायामिति क्रमात् ॥**

**भवन्त्येकादशा श्लोकाः पण्डितप्रमुदाकराः ॥ इति ॥ १५६ ॥**

समस्त अभीष्ट प्रदान करने वाली जगत् की आदि कारणभूता मातङ्गी देवता से अपनी अभीष्ट वाक्सिद्धि प्राप्त करनी हो तो उन्हें नव रत्नों की माला अथवा नव पद्यात्मक प्रबन्ध रूप रत्नमाला द्वारा भूषित करे ॥ १५६ ॥

रत्नमालामातङ्गीस्तुतिः

**आराध्य मातश्चरणाम्बुजं ते**
**ब्रह्मादयो विश्रुतकीर्त्तिमापुः ।**
**अन्ये परं वाग्विभवं मुनीन्द्राः**
**परां श्रियं भक्तिभरेण चान्ये ॥ १५७ ॥**
**नमामि देवीं नवचन्द्रमौले-**
**र्मातङ्गिनीं चन्द्रकलावतंसाम् ।**
**आम्नायवाग्भिः प्रतिपादितार्थं**
**प्रबोधयन्तीं शुकमादरेण ॥ १५८ ॥**
**विनम्रदेवासुरमौलिरत्नै-**
**र्नीराजितं ते चरणारविन्दम् ।**
**भजन्ति ये देवि महीपतीनां**
**व्रजन्ति ते सम्पदमादरेण ॥ १५९ ॥**

**नवचन्द्रमौलेर्देवीं पट्टराज्ञीमिति सम्बन्धः ॥ १५७-१५९ ॥**

**रत्नमाला मातङ्गी-स्तुति**—हे मात: ! आपके चरण कमलों की उपासना कर ब्रह्मादि देवताओं ने विपुल यश अर्जित किया है । अन्य मुनीन्द्रों ने आपके चरण कमल की उपासना से वाणी का महान् ऐश्वर्य प्राप्त किया है एवं अन्यों ने आपकी पूर्ण भक्ति के प्रभाव से अनन्त श्री को प्राप्त किया है ॥ १५७ ॥

चन्द्रकला का शिरोभूषण धारण करने वाली सदाशिव की पट्टरानी श्री मातङ्गी को मैं नमस्कार करता हूँ । जो वेद के वाक्यों से प्रतिपादित अर्थों का आदरपूर्वक अपने शुक को सिखा रही हैं ॥ १५८ ॥

हे मात: ! आपके चरणारविन्द की आरती, चरण पर प्रणत देवता वृन्दों के मुकुट में जटित रत्नों के द्वारा हो रही है । इसी प्रकार जो पुरुष आपके चरण कमलों की सेवा करता है वह आदर पूर्वक राजाओं की जैसी संपत्ति प्राप्त करता है ॥ १५९ ॥

**मातङ्गलीलागमने भवत्याः**
**शिञ्जानमञ्जीरमिषाद्भजन्ते ।**
**मातस्त्वदीयं चरणारविन्द-**
**मकृत्रिमाणां वचसां निगुम्फाः ॥ १६० ॥**

**अकृत्रिमाणां वचसां विगुम्फा वेदाः ॥ १६० ॥**

हे मात: ! जब आप हाथी के समान मस्ती से भरी लीला पूर्वक गमन करती हैं, उस समय शब्दायमान मञ्जीर के शब्दों के बहाने मानो अकृत्रिम शब्दों के समूह वाले वेद उन चरणों को स्तुति कर रहे हैं ॥ १६० ॥

**पदात्पदं शिञ्जितनुपुराभ्यां**
**कृतार्थयन्ती पदवीं पदाभ्याम् ।**
**आस्फालयन्ती कलवल्लकीं तां**
**मातङ्गिनीं मद्धृदयं धिनोतु ॥ १६१ ॥**
**नीलांशुकाबद्ध नितम्बबिम्बां**
**तालीदलेनाऽर्पितकर्णभूषाम् ।**
**माध्वीमदाघूर्णितनेत्रपद्मां**
**घनस्तनीं शम्भुवधूं नमामि ॥ १६२ ॥**

**पदात्पदं पदेपदे इत्यर्थः ।**

**कृतार्थयन्ती स्वगमनेनेति शेषः । धिनोतु प्रीणयतु ॥ १६१-१६२ ॥**

हे मात: ! जब आप शब्दायमान नूपुर युक्त अपने पैरों से चलती हैं, तो

उस समय आपके प्रत्येक पद से पृथ्वी कृतार्थ होती जाती है । ऐसी मातंगिनी सर्वदा मनोहर वीणा बजाते हुये मेरे हृदय को प्रसन्न करती रहें ॥ १६१ ॥

जिनके नितम्ब प्रदेश में नीले रंग की साड़ी शोभा दे रही है और कान ताड़पत्र के आभूषण से भूषित हैं और नेत्र माध्वी मद से घूरते हुये लाल कमल जैसे रक्त वर्ण के हैं । ऐसी घनस्तन वाली शम्भु पत्नी को मैं नमस्कार करता हूँ ॥ १६२ ॥

**तडिल्लताकान्तमनर्घ्यभूषं**
**चिरेण लक्ष्यं नवरोमराज्या ।**
**स्मरामि भक्त्या जगतामधीशे**
**बलित्रयाङ्कं तव मध्यविम्बम् ॥ १६३ ॥**

**कदाचिल्लक्ष्यं कदाचिदलक्ष्यमिति तडिल्लताकान्तम् । अनर्घ्यभूषं (अलब्ध-भूषं) निश्चित्य वपुषोऽकरणात् खञ्चेत् शरीरस्थितिः कथमित्याह चिरेणानुमेयं न प्रत्यक्षदृश्यमिति भावः ॥ १६३ ॥**

अनर्घ्य काञ्ची रूप भूषण से भूषित, अतएव बिजली की लता के समान चमकता हुआ कभी दिखाई पड़ने वाला कभी नहीं दिखाई पड़ने वाला ऐसा त्रिवलीयुक्त आपका कटिप्रदेश जो शिव के अर्धभाग में स्थित है नव रोमराजी के द्वारा देर से पहचाना जाता है । ऐसी आपकी शोभा का मैं भक्तिपूर्वक स्मरण करता रहूँ ॥ १६३ ॥

**नीलोत्पलानां श्रियमाहरन्तीं**
**कान्त्या कटाक्षैः कमलाकराणाम् ।**
**कदम्बमालाञ्चितकेशपाशां**
**मातङ्गकन्यां हृदि भावयामः ॥ १६४ ॥**

**कान्त्या देहकान्त्या नीलोत्पलानां श्रियमाहरन्तीं कटाक्षैः कमलाकराणां श्रियमाहरन्तीमिति सम्बन्धः । मातङ्गकन्यामिति । मातङ्गपुत्रीरूपामित्यर्थः ॥ १६४ ॥**

हे मातः ! आप अपने शरीर की कान्ति से नील कमल की शोभा को एवं कटाक्षों के चितवन से कमल समूहों की शोभा को जीत लेती हैं—ऐसी कदम्ब माला (भ्रमर समूह) से भूषित केश वाली मतङ्गकन्या का मैं अपने हृदय में ध्यान करता हूँ ॥ १६४ ॥

**ध्यायेयमारक्तकपोलकान्तं**
**विम्बाधरन्यस्तललामरम्यम् ।**
**आलोलनीलालकमायताक्षं**
**मन्दस्मितं ते वदनं महेशि ॥ १६५ ॥**

स्तुत्याऽनया शङ्करधर्मपत्नीं
मातङ्गिनीं वागधिदेवतां ताम् ।
स्तुवन्ति ये भक्तियुता मनुष्याः
परां श्रियं नित्यमुपाश्रयन्ति ॥ १६६ ॥

॥ इति श्रीलक्ष्मणदेशिकेन्द्रविरचिते शारदातिलके
द्वादशः पटलः समाप्तः ॥ १२ ॥



विम्बाधर एव न्यस्तं ललामं भूषाविशेषः तेन रम्यम् ॥ १६५-१६६ ॥

॥ इति श्रीराघवभट्टविरचित-शारदातिलकटीकायां सत्सम्प्रदायकृतव्याख्यायां
पदार्थादर्शाभिख्यायां द्वादशः पटलः ॥ १२ ॥



हे महेश्वरि ! रक्त कपोलों से अत्यन्त मनोहर विम्ब के समान अधर पर न्यस्त आभूषण से रम्य, नीले नीले और चञ्चल अलकों से युक्त विशाल नेत्रों वाले मन्दस्मित से युक्त आपके मुख का मैं ध्यान करता हूँ ॥ १६५ ॥

जो लोग वाणी की अधिष्ठातृ देवता भगवान् शंकर की धर्म पत्नी भगवती मातंगिनी की भक्ति युक्त हो इस प्रकार से स्तुति करते हैं वे निरन्तर महाश्री को प्राप्त करते हैं ॥ १६६ ॥

॥ इस प्रकार शारदातिलक के बारहवें पटल की डॉ० सुधाकर मालवीय
कृत हिन्दी व्याख्या पूर्ण हुई ॥ १२ ॥



# अथ त्रयोदशः पटलः

### अथ गणपतिप्रकरणम्

**अथ वक्ष्ये गणपतेर्मन्त्रान् सर्वार्थसिद्धिदान् ।**
**यान् लब्ध्वा मानवा नित्यं साधयन्ति मनोरथान्॥ १ ॥**

'मुख्ये पुष्पाञ्जलिं कृत्वा गणेशाभ्यर्चनं भवेत्' इत्युक्तेः शक्तिमन्त्रानुक्त्वा क्रमप्राप्तान् गणपतिमन्त्रान् वक्तुमुपक्रमते अथेति ।

सर्वार्थसिद्धिदानिति विनियोगोक्तिः ॥ १ ॥

अब संपूर्ण सिद्धिप्रदान करने वाले गणपति के मन्त्रों को कहता हूँ । जिसे प्राप्त कर मनुष्य अपना मनोरथ सिद्ध करते हैं ॥ १ ॥

गणपतिबीजम् । ऋष्यादिकथनम्

**पञ्चान्तकं शशिधरं बीजं गणपतेर्विदुः ।**
**गणकः स्यान्मुनिश्छन्दो निवृद्विघ्नोऽस्य देवता॥ २ ॥**

गणपतिबीजमुद्धरति पञ्चान्तकमिति । पञ्चान्तको गकारः शशी बिन्दुस्तद्युतम् तेन गं इति । अथ च शशी विसर्गस्तद्युतः गः इत्यपि भवति । 'सर्गः शक्तिर्निशाकरः' इत्युक्तेः । गोपनायैवमुद्धारः । इदं द्वयं उत्तरगार्ग्योक्तम् । पूजाप्रयोगादिकमुभयोः समानम् । केचन औकारयुतमाहुः । तदुक्तं प्रयोगसारे—

बीजमिन्दुमदौयुक्तं कतृतीयं तथैव च । इति ।

नारायणीये तु— खान्तं सान्तविषं सबिन्दुसकलं बिन्द्वौयुतं केवलम् ।
पञ्चैतानि पृथक् फलं विदधते बीजानि विघ्नेशितुः ॥ इति ॥

आचार्यैस्तु प्रणवादिरुद्धृतः—

चतुरीयो विलोमेन तारादिर्बिन्दुसंयुतः ।
वैघ्नो मन्त्रो हृदन्तोऽर्चाविधौ होमे द्विठान्तकः ॥
गणकः स्यादृषिश्छन्दो निवृद्विघ्नोऽस्य देवता ।
बीजेन दीर्घयुक्तेन दण्डिनाऽङ्गक्रिया मता ॥ इति ॥

गकारो बीजं बिन्दुःशक्तिः । अन्यत्र सर्गः शक्तिः ॥ २ ॥

अब **गणपति के बीजमन्त्र का उद्धार** कहते हैं—पञ्चान्तक (गकार) उस पर शशिधर (अनुस्वार) लगाने पर गणपति का बीज मन्त्र हो जाता है । अथवा

शशि (विसर्ग) लगाने से भी गणपति का बीज होता है । इसलिये गं अथवा ग: दोनों ही गणपति के बीज मन्त्र हैं । इस गणपति बीज के गणक ऋषि हैं, निवृत् छन्द है । इसके देवता विघ्नराज हैं ॥ २ ॥

**षड्दीर्घभाजा बीजेन कुर्यादङ्गक्रियां मनोः ॥ ३ ॥**

षडङ्गमाह षडिति । प्रयोगसारे पञ्चाङ्गमप्युक्तम्—

आदौ गणं जयायोक्त्वा स्वाहा हृदयमुच्यते ।
एकदंष्ट्राय सम्भाष्य हुँफड्विद्याच्छिरस्ततः ।
शिखाप्यचल-शब्दादिकर्णिनत्यन्ततो नमः ॥
कवचं गजवक्त्राय नमो नम इतीरितम् ।
महोदराय चण्डाय हुंफडित्यस्त्रमिष्यते ॥
एतान्यङ्गानि विन्यस्येत्पञ्चोक्तानि मनीषिभिः ।
सप्रांशुना वा बीजेन षडङ्गान्यपि योजयेत् ॥ इति ॥ ३ ॥

छ: दीर्घ युक्त वर्णों से युक्त बीज मन्त्रों से षडङ्गन्यास करना चाहिए। यथा—गां नमः इति हृदये, गीं शिरसे स्वाहा इति शिरसि, गूँ शिखायै वषट् इत्यादि ॥ ३ ॥

गणपतिध्यानम्

**सिन्दूराभां त्रिनेत्रं पृथुतरजठरं हस्तपद्मैर्दधानं
दन्तं पाशाङ्कुशेष्टान्युरुकरविलसद्बीजपूराभिरामम् ।
बालेन्दुद्योतिमौलिं करिपतिवदनं दानपूरार्द्रगण्डं
भोगीन्द्राबद्धभूषं भजत गणपतिं रक्तवस्त्राङ्गरागम् ॥ ४ ॥**

आयुधध्यानं तु ऊर्द्धस्थवामदक्षयोरङ्कुशपाशौ । अधःस्थयोः स्वदन्तवरदे । सर्वोऽपि गणपतिरेकदन्तो ध्येयः । सदन्तो दक्षिणपार्श्वे । द्वितीयस्य ध्यानं यथा—

ध्यायेत् स्वैक्येन देवं वृहदुदरतनुं
तं चतुर्बाहुमेकदन्तं पाशाङ्कुशाढ्यं
गजमुखमरुणं दन्तभक्ष्ये दधानम् ॥ इति ॥

पुष्करं च दक्षहस्तस्थितभक्ष्योपरि । औकारयुक्तबीजे तु ध्यानम्—

रक्ताक्षमालापरशुं च दन्तं भक्ष्यं च दोर्भिः परितो दधानम् ।
हेमाभकान्तिं त्रिदशं गजास्यं लम्बोदरं चैकरदं नमामि ॥ इति ।

अत्रापि पुष्करं पूर्ववज् ज्ञेयम् । इदमेव मायाबीजाद्यं यदा तदा ध्यानम्—

अमृताम्भोधिमध्ये तु वारिजे कुङ्कुमप्रभे ।
ऋतुसंख्यदलोपेते चिन्तयेद्गणनायकम् ॥
पाशाङ्कुशधरं देवं जवाकुसुमसन्निभम् ।
वामपार्श्वगतां देवीमालिङ्गन्तं सुलोचनम् ॥

सुवर्णचषकं शुभ्रं मधुना पूरितं सदा ।
पिबन्तीं वामहस्तेन योगिनीं मदमोहिताम् ॥
रक्तवर्णां महादेवीमालिङ्गन्तीं सुमध्यमाम् ।
बाहुनैकेन विघ्नेशं मत्तं रक्तविलोचनम् ॥
तद्रूपांश्चिन्तयेद्विद्वान् गणान् पूर्वादितः क्रमात् ॥ इति ।

अत्र ध्यानानन्तरमियं गणपतिमुद्रा प्रदर्शनीया—

मुखात्प्रलम्बितं हस्तं कृत्वा संकुचिताङ्गुलिम् ।
मध्या तर्जनिगताग्राङ्गुष्ठं चाधःस्थमध्यमम् ॥
कुर्यान् मुद्रा गणेशस्य प्रोक्तेयं सर्वसिद्धिदा ॥ इति ।

यद्वा—तर्जनीमध्यमासन्धिनिर्गताङ्गुष्ठमुष्टिका ।
अधोमुखी दीर्घरूपा मध्यमा विघ्नमुद्रिका ॥ इति ॥

यद्वा—कुञ्चिताग्रस्य हस्तस्य मूले नासानियोगतः ।
गणेश्वरी भवेन् मुद्रा । इति ।

इयं सर्वगणपतिमन्त्रसाधारणीति ज्ञेयम् ॥ ४ ॥

अब **गणपति का ध्यान** कहते हैं—जिनके शरीर की कान्ति सिन्दूर के समान रक्त वर्ण है, जो तीन नेत्रों से युक्त हैं, जिनका पेट तुन्दिल है, जिन्होंने अपने कर कमलों में दाँत, पाश, अंकुश और वर धारण किया है, शुण्डाग्र में बीजपूर धारण करने से जो अत्यन्त मनोहर प्रतीत हो रहे हैं । मस्तक पर द्वितीया का चन्द्र शोभित है, मुख हाथी के समान है एवं गण्डस्थल मदजल से परिपूर्ण है, जो नागराजों के भूषण से भूषित हैं । ऐसे रक्त वर्ण और रक्त अङ्गराज के लेपन से युक्त गणपति की सेवा करनी चाहिए ॥ ४ ॥

पुरश्चरणादिकथनम्

**वेदलक्षं जपेन्मन्त्रं दशांशं जुहुयात्ततः ।**
**मोदकैः पृथुकैर्लाजैः सक्तुभिश्चेक्षुपर्वभिः ॥ ५ ॥**
**नारिकेलैस्तिलैः शुद्धैः सुपक्वैः कदलीफलैः ।**
**अष्ट द्रव्याणि विघ्नस्य कथितानि मनीषिभिः ॥ ६ ॥**

वेदलक्षं चतुर्लक्षम् । दशांशमिति । तत्र होमोऽष्टभिर्द्रव्यैर्वक्ष्यमाणैः अर्द्धमर्द्धमयुतमेकैकेन द्रव्येण होतव्यम् । केचित्तु अष्टद्रव्यमेलनमाहुः । तन्न । आहुतिप्रमाणसन्देहापातात् । मूले च प्रत्येकं पृथक् क्रियान्वयाच्च । विशिष्टस्य द्रव्यान्तरत्वेनाऽष्टद्रव्यहोमकरणासम्भवाच्च । तदुक्तं भट्टाचार्यैः—

नैव ब्रीहिभिरिष्टं स्याद्यवैर्न च यथाश्रुतैः । मिश्रैरिज्येत चेत् । इति ।

तथा मिश्राणां विध्यदर्शनादिति च । नन्वेवं त्रिमधुरमेलनमपि न कार्यमिति चेत् । मैवम् । 'सर्वं त्रिमधुरोपेतं होमद्रव्यमुदाहृतम्' इति वचनात् तन्मेलनस्य पशुपुरोडाशाद्यवदानानाम् उपस्तारप्रत्युपस्ताराज्यमेलनवत् अविरोधात् । तदुक्तं गणेश्वरविमर्शिन्याम्—

**अष्टद्रव्यैस्त्रिमध्वक्तैर्जहुयाच्च पृथक् पृथक् । इति ।**

**पृथुकैश्चिपिटकैः । शुद्धैरित्यनेनाऽवकरं दूरीकृत्य प्रक्षाल्य शोषितैरित्युक्तम् । एषु मन्त्रेषु गायत्र्या प्रोक्षणादिकं कुर्यात् । गायत्री यथा—**

**एकदंष्ट्राय विद्महे वक्रतुण्डाय धीमहि । तन्नो विघ्नः प्रचोदयात् । इति ॥ ५-६ ॥**

उपर्युक्त बीजमन्त्र का चार लाख जप करना चाहिए, उसका दशांश हवन निम्नलिखित अष्ट द्रव्यों से अलग अलग करना चाहिए । मोदक, चिउड़ा, लावा, सत्तू, ऊख का टुकड़ा, नारिकेल, शुद्ध तिल (जो पछोंर-बीन कर धोया गया हो और सुखाया गया हो) और पका हुआ केले का फल विद्वानों ने ये आठ द्रव्य विघ्नेश्वर के नैवेद्य कहे हैं । इनका पृथक् पृथक् होम करना चाहिए । मिश्रित होने पर द्रव्यों की न्यूनाधिकता संभव है और वे मिश्रित पदार्थ अष्टद्रव्य की गणना में नहीं आते ॥ ५-६ ॥

**तीव्रादिशक्तिभिर्युक्ते पीठे विघ्नेश्वरं यजेत् ।**
**तीव्राख्या ज्वालिनी नन्दा भोगदा कामरूपिणी ॥ ७ ॥**
**उग्रा तेजोवती सत्या नवमी विघ्ननाशिनी ।**
**सर्वादिशक्तिकमलासनाय हृदयावधिः ॥ ८ ॥**

**तीव्रेति । आसां ध्यानं यथा—**

**पाशाङ्कुशाञ्जलिकरा नवकुङ्कुमसन्निभाः ।**
**तीव्राद्याः पूजनीयाः स्युः शक्तयो मणिभूषणाः ॥ इति ॥ ७-८ ॥**

होम के पश्चात् तीव्रादि शक्तियों से युक्त पीठ पर विघ्नेश्वर की पूजा करनी चाहिए । तीव्रा, ज्वालिनी, नन्दा, भोगदा, कामरूपिणी, उग्रा, तेजोवती, सत्या और नवीं विघ्ननाशिनी—ये नव पीठ की शक्तियाँ हैं । इनका पूजन कर पश्चात् 'सर्वादिशक्तिकमलासनाय नमः' इस मन्त्र को पढ़े ॥ ७-८ ॥

**पीठमन्त्रः**

**पीठमन्त्रोऽयमेतेन प्रदद्यादासनं विभोः ।**
**मूलेन मूर्त्तिं सङ्कल्प्या तस्यां विघ्नेश्वरं यजेत् ॥ ९ ॥**
**कर्णिकायां चतुर्दिक्षु प्रथमं पूजयेदिमान् ।**
**गणाधिपं गणेशानं तृतीयं गणनायकम् ॥ १० ॥**
**गणक्रीडं पीतगौररक्तनीलरुचः क्रमात् ।**
**सर्वान्नागेन्द्रभूषाद्यान् भक्ष्यलक्षितपुष्करान् ॥ ११ ॥**

**विभोरिति । पीठमन्त्रादौ स्वबीजाद्यत्वमुक्तम् । प्रथमं पूजयेदिति । अत्र प्रथममित्यङ्गावृत्यपेक्षया प्राथम्यं यतश्चतुर्थपटले अङ्गादिलोकपालान्तं पूजयेदिति सामान्यत उक्तम् । तदपवादायाऽत्र प्रथममित्युक्तिः—यद्व्याख्यानावसरे अत एव मयोक्तं ग्रन्थकृता इदं वचनं सम्भवाभिप्रायेणोक्तमिति ॥ ९-११ ॥**

मूल मन्त्र पढ़कर गणपति को आसन प्रदान करे तथा मूर्त्ति की कल्पना कर उसी में विघ्नेश्वर का आवाहन कर पूजन करे । सर्वप्रथम कर्णिका के चारों दिशाओं में गणाधिप, गणेशान, गणनायक और गजक्रीड़ा का पूजन करे । इनके शरीर की कान्ति क्रमशः पीत, गौर, रक्त तथा नीले वर्ण की है । सभी सर्पराज के भूषणों से भूषित दिव्य शरीर वाले हैं और अपने शुण्डाग्रभाग को भक्ष्य की ओर ले जाते हुये लक्षित हो रहे हैं ॥ १०-११ ॥

**यथापूर्वं ततोऽभ्यर्च्य केसरेष्वङ्गदेवताः ।**
**पत्रमध्येषु विधिवद्वक्रतुण्डादिकान् यजेत् ॥**
**वक्रतुण्डमेकदंष्ट्रं महोदरगजाननौ ॥ १२ ॥**
**लम्बोदराख्यं विकटं विघ्नराजमनन्तरम् ।**
**धूम्रवर्णं दलाग्रेषु ब्राह्म्याद्याः पूजयेत्ततः ।**
**लोकपालांस्तदस्त्राणि देवमित्थं समर्चयेत् ॥ १३ ॥**
**सिद्धमन्त्रः प्रकुर्वीत प्रयोगान् कल्पचोदितान् ।**
**तर्पयेत्सलिलैः शुद्धैर्दिनशो गणनायकम् ॥ १४ ॥**

**यथापूर्वं चतुर्थपटलोक्तरीत्या । विधिवदिति गणपतिबीजादि । इत्थं समर्चयेदिति । मन्त्रत्रयस्य पूजा समानैव । तदुक्तमीशानशिवेन—**

**पञ्चान्तकं बिन्दुयुतं सनादं बीजं गणेशस्य वदन्त्यथान्ये ।**
**ऊकारबिन्द्वन्तमुदीरयन्ति तुल्यस्तयोः स्याद्विधिरेष उक्तः ॥ इति ।**

**मायाबीजादौ तु षड्दले आमोदादीन् पूजयेदिति विशेषः । तर्पणप्रयोगाश्च सर्वमन्त्राणां साधारणा एव । तर्पणे तु सर्वेषामयं विशेषः ।**

**क्रोडन् हेममयोदयाद्रिशिखरे स्थित्वाऽवतीर्णः क्षुधा**
**सोपानेषु समेत्य रुक्मकलितेष्वब्जादि भक्ष्यं बहु ।**
**भुक्त्वा प्रीतमना यथा पुरमसौ सम्पूजितो विघ्नराट्**
**कुर्यादित्युषसि स्मृतः स सकलान् कामांस्तथा तर्पितः ॥ इति ॥ १२-१४॥**

इनका पूर्वोक्त क्रम से (द्र. ४. ८७-११०) अर्चन कर केशरों में अङ्गदेवता का पूजन करे । पत्र के मध्य में विधिवत् वक्रतुण्डादि की पूजा करे ॥ १२ ॥

वक्रतुण्ड, एकदंष्ट्र, महोदर, गजानन, लम्बोदर, विकट, विघ्नराज और धूम्रवर्ण—ये वक्रतुण्डादि हैं । इनकी पूजा कर दल के अग्रभाग में ब्राह्मी आदि देवियों की पूजा करे । (द्र. ६. १७-१८) ॥ १३ ॥

इसके बाद लोकपालों की तदनन्तर उनके अस्त्रों की पूजा करे, इस प्रकार गणेश की पूजा करने से साधक गणपति मन्त्र को सिद्ध करे, फिर गणपति कल्प में कहे गये प्रयोगों का अनुष्ठान करे । प्रतिदिन शुद्ध जल से गणपति का तर्पण करता रहे ॥ १४ ॥

चतुश्चत्वारिंशदाद्यं चतुःशतमतन्द्रितः ।
प्राप्नुयान् मण्डलादर्वागभीष्टमधिकं नरः ॥ १५ ॥

तर्पयेदिति । गं गणेशं तर्पयामीति प्रयोगः । क्रमाच्चतुःशतमिति । प्रतितिथि द्रव्यचतुष्टयेन तावान् होमः ॥ १५-१६ ॥

प्रतिदिन गणेश के निमित्त 'गं गणेशं तर्पयामि' इस मन्त्र से चार सौ चौवालीस तर्पण करता रहे और द्रव्य चतुष्टय से पृथक् पृथक् प्रतिदिन उतनी ही संख्या में होम भी करे । इस प्रकार करते रहने से ४९ दिन के भीतर ही साधक अपना अधिक से अधिक अभीष्ट प्राप्त कर लेता है ॥ १५ ॥

नारिकेलैः कृतो होमश्चतुर्थ्यां श्रीप्रदो भवेत् ।
शुक्लपक्षप्रतिपदमारभ्य दिनशः सुधीः ॥ १६ ॥
चतुर्थ्यन्तं नारिकेलसक्तुलाजतिलैः क्रमात् ।
चतुःशतं प्रजुहुयाद्वश्याः स्युः सर्वजन्तवः ॥ १७ ॥

वश्या इति । तत्र विशेषः प्रयोगसारनारायणीययोः ।

साध्यं पाशाङ्कुशाभ्यामिह विधिवदुपानीय तस्योपरिस्थो
वश्याकाङ्क्षी जपेत्तं सपदि विधिरयं हन्ति रुष्टस्य रोषम् ॥ इति ॥ १७ ॥

चतुर्थी के दिन नारिकेल का होम श्री प्रदान करता है । शुक्लपक्ष की प्रतिपदा से लेकर प्रतिदिन चतुर्थी पर्यन्त नारिकेल, सत्तू, लावा और तिल इनमें एक एक दिन के क्रम से एक एक द्रव्य का ४०० संख्या में किया गया होम सभी जन्तुओं को वश में करने वाला होता है ॥ १६-१७ ॥

सतिलैस्तण्डुलैर्होमो लक्ष्मीवश्यप्रदो भवेत् ।
लाजैस्त्रिमधुरोपेतैर्होमः कन्यां प्रयच्छति ॥ १८ ॥

सतिलैरिति । अत्रापि शुक्लप्रतिपदमारभ्य चतुर्थ्यन्तं चतुःशतहोमः । लाजैरिति । अत्रापि शुक्लप्रतिपदमारभ्य चतुर्थ्यन्तं चतुःशतहोमः । तमेव प्रतिपदमारभ्य सप्तमीपर्यन्तमिति विशेषः । तदुक्तम्—

मधुरत्रयसिक्ताभिर्लाजाभिः सप्तवासरम् । इति ॥ १८ ॥

शुद्ध तिल से युक्त तण्डुल का होम लक्ष्मी को वश में करने वाला होता है । त्रिमधुर (दूध, घी एवं मधु) से मिश्रित लावा का होम उत्तम कन्या प्रदान करता है ॥ १८ ॥

अनेन विधिना कन्या वरमाप्नोति वाञ्छितम् ।
आज्याक्तहविषा होमः साधयेदीप्सितं नृणाम् ॥ १९ ॥

अनेन विधिनेति । एतादृशेषु स्त्रीणामप्यधिकार इति सूचितम् ॥ १९ ॥

यदि कन्या त्रिमधुर मिश्रित लावा का होम गणपति मन्त्र से करे तो मनोभिलषित उत्तम पति प्राप्त करती है, घी में संमिश्रित हविष्य पदार्थ के होम से मनुष्य का अभीष्ट सिद्ध होता है ॥ १९ ॥

**दध्ना विलोलितैर्लोणैर्होमो निशि चतुर्दिनम् ।**
**संवादं कुरुते तद्वद्वश्यं वितनुते सदा ॥ २० ॥**

**चतुर्दिनमिति । प्रतिपदमारभ्य चतुर्थीपर्यन्तम् । संवादः संवननम् ॥ २० ॥**

यदि प्रतिपदा से लेकर चतुर्थी पर्यन्त मात्र चार दिन पर्यन्त रात्रि में लवण मिश्रित दधि का होम करे तो साधक जिसे वश में करना चाहता है वह वश में हो जाता है ॥ २० ॥

**श्वेतार्कभवमूलेन रक्तचन्दनदारुणा ।**
**इभभग्नेन निम्बेन दन्तिदन्तेन वा कृतम् ॥ २१ ॥**
**विघ्नेश्वरं समभ्यर्च्च शीतांशुग्रहणे जपेत् ।**
**स्पृष्ट्वा मन्त्री निराहारस्तं शिखायां समुद्वहन् ॥ २२ ॥**
**युद्धेषु व्यवहारादौ विजयश्रियमाप्नुयात् ।**

**जपेदिति । ग्रहणादिमोक्षान्तम् ॥ २१-२३ ॥**

सफेद मन्दार का मूल अथवा रक्त चन्दन की लकड़ी अथवा हाथी के द्वारा उखाड़े गये निम्ब की समिधा से अथवा हाथी के दाँत से चबाने से शेष समिधा को चन्द्रग्रहण काल में उसका स्पर्श कर गणेश की अर्चना कर उक्त मन्त्र का जप करे । पुनः उसे शिखा में बाँध लेवे तो युद्ध में या मुकदमे में साधक अवश्य ही विजय प्राप्त करता है ॥ २१-२३ ॥

**मन्त्रेणाऽनेन संजप्ता रोचना मदसंयुता ॥ २३ ॥**
**तिलकक्रियया सर्वान् वशं नयति मानवान् ।**

**मदो गजमदः ॥ २३-२४ ॥**

हाथी के मद जल से संस्पृष्ट गोरोचन को हाथ में ले कर इस मन्त्र का जप करे । तदनन्तर उससे तिलक करे तो सभी मनुष्यों को वश में कर लेता है ।

**अनुलोमविलोमस्थबीजे नाम समालिखेत् ॥ २४ ॥**
**नवनीते समभ्यर्च्य स्पृष्ट्वा प्राणमनुं जपेत् ।**
**अष्टोत्तरशतं भूयो मूलमन्त्रं प्रजप्य तत् ॥ २५ ॥**
**भक्षयेन्मौनमास्थाय यामिन्यां सप्तवासरम् ।**
**स वश्यो जायते शीघ्रं साधकस्य न संशयः॥ २६ ॥**

अनुलोमेति । बीजयोर्मध्ये साध्यसाधककर्मनामानि नवनीते लिखेत् । अनुलोमविलोमेत्यनेन बीजयोः पुटितत्त्वमात्रमुक्तम् । नवनीत इति नूतने । बीजवेष्टितमित्यपि ज्ञेयम् । तदुक्तमाचार्यैः—

नवनीते नवे लिख्यादनुलोमविलोमकम् ।
उदरस्थितसाध्याख्यं तद्बीजं तत्प्रवेष्टितम् । इति ॥

नवनीत इत्युपलक्षणमपूपादेरपि । 'कार्योऽयं विधिरपूपे च' इति नारायणीये उक्तेः । समभ्यर्च्येति । साध्यगणेशम् । भूयोऽनन्तरम् अष्टोत्तरशतमिति मूलमन्त्रं प्रजप्येत्यत्राऽन्वेति । तन्नवनीतं भक्षयेदिति सम्बन्धः । सप्तवासरमिति । प्रतिपदादि सप्तमीपर्यन्तमित्यर्थः । तन्त्रान्तरोक्तं यन्त्रत्रयमुच्यते ।

अष्टारं पद्ममालिख्य कर्णिकोपरि तस्य च ।
गौरीं बिन्दुसमायुक्तां नाम्ना सार्द्धं समालिखेत् ॥
प्रागादिदलमूलेषु मूर्त्तिबीजान्यथालिखेत् ।
कोणपत्रेषु चाग्नीशनिर्ऋत्यनिलसौम्यतः ॥
क्रमादङ्गाद्यवर्णांश्च ततः पत्राग्रकेषु च ।
मातृशक्त्यादिवर्णांश्च ततः पद्मस्य बाह्यतः ॥
स्वदिक्षु लोकपालानामाद्यर्णानि समालिखेत् ।
बहिः षोडशपत्राढ्यं तत्पत्रेषु स्वरान् लिखेत् ॥
शिष्टं मातृकयाऽऽवेष्ट्या पाशेनैवाऽङ्कुशेन च ।
तस्मिन्नावाह्य देवेशं विघ्नं यन्त्रे समर्चयेत् ॥
क्षौमादिसूत्रे सम्बद्ध्य गले यो मूर्ध्नि धारयेत् ।
तस्य हस्तगता लक्ष्मीर्वाणी जिह्वागता सदा ॥
मेधा मनोगता कीर्त्तिर्वर्द्धमाना सदा दिशि । इति ।

पद्ममित्यष्टदलम् । अष्टारमिति तदुपरि । कर्णिकोपरि कर्णिकामध्ये । गौरी गकारः । मूर्त्तिबीजानीति । क्षिप्रप्रसादनोक्ताष्टमूर्त्त्याद्यक्षराणि । अङ्गेति पञ्चाङ्गपक्षे पञ्चमं सौम्ये । मातर एव शक्तयस्तन्नामाद्यर्णान् । स्वदिक्ष्विति स्वस्वदिक्ष्वष्टारे । शिष्टं मातृकया ककारादिकया । तथा—

षट्कोणं प्रविलिख्य तस्य जठरे बिन्द्वाढ्यपञ्चान्तकं
नाम्ना भूर्जतरुत्वचि प्रविलिखेद्गोरोचनादूर्वया ।
एकारान्वितकालवर्णमथ युक् दन्तेन गान्तं ततः
शक्रार्णं शिरसा वहन्नपि विधिवद्दीर्घश्च पश्चाद्रसः ॥
माया वायुसखस्य मन्त्रवरमालिख्याऽथ कोणेषु तद्-
बाह्ये पाशमथाङ्कुशं प्रविलिखेद्भूमण्डलं बाह्यतः ।
यन्त्रं गन्धमनोहरैश्च कुसुमैरभ्यर्च्य विघ्नेश्वरं
यो धत्ते शिरसि क्षणेन विपुलां लक्ष्मीं लभेन् मानवः ॥ इति ।

मेघोल्काय स्वाहेति मन्त्रः । तथा—

बीजेन रंदहनयुग्मगबीजवीतं
कोणे गमालिख कलावसुकेसरेऽब्जे ।

**गायत्रिवर्णदलकेऽप्यथ कादिवीतं**
**भूबीजयुक्क्षितिगृहेऽखिलदं हि यन्त्रम् ॥**

**इति ॥ २४-२६ ॥**

नवनीत में गणेश के बीजाक्षरों के बीच साध्यनाम कर्म तथा साधक का नाम लिख कर, उसे स्पर्श करते हुये 'प्राणाय स्वाहा' इस प्राणमन्त्र का १०८ बार जप करे, फिर उतना ही गणेश के मूल मन्त्र का जप करे, यह क्रिया रात्रि में प्रतिपदा से सप्तमी पर्यन्त मौन हो संपादन करे और प्रतिदिन उस नवनीत को खाता रहे, तो सात दिन के भीतर वह साध्य को अपने वश में कर लेता है, इसमें संशय नहीं ॥ २४-२६ ॥

**महागणपतिमन्त्रः**

**श्रीशक्तिस्मरभूविघ्नबीजानि प्रथमं वदेत्।**
**ङेऽन्तं गणपतिं पश्चाद्वरान्ते वरदं पठेत् ॥ २७ ॥**
**उक्त्वा सर्वजनमेतं वशमानय ठद्वयम्।**
**अष्टाविंशत्यक्षरोऽयं ताराद्यो मनुरीरितः ॥ २८ ॥**

**ऋष्यादिकथनम्**

**गणकः स्यादृषिश्छन्दो गायत्री निवृदन्विता ।**
**महागणपतिः प्रोक्तो देवता देववन्दिता ॥ २९ ॥**

**महागणपतिमन्त्रमुद्धरति श्रीति । भूबीजमग्रे वक्ष्यमाणम् । वरदमिति शब्द-कर्मणि द्वितीया मन्त्रे तु सम्बुद्धिः । सर्वजनमिति मन्त्रेऽपि द्वितीयान्तम् । अत्र केचन यकारं कीलकं मन्यमाना गणपतिपदं संबुद्ध्यन्तमाहुः । अन्ये श्रीमहागणपतिपदं संबुद्ध्यन्तं वशंपदद्वित्वमप्याहुः । इदं ग्रन्थकारस्यापि सम्मतमेव । यतो द्वात्रिंशद्भेद-गुणितेत्यत्र गणेशितुर्महामन्त्रमित्युक्तत्वात् । अन्ये विघ्नं चतुर्थ्या युतमित्याचार्यपद्ये विघ्नशब्दो महागणपतिपदोपलक्षक इत्याहुः । एवमिहापि गणपतिशब्दः । यथागुरू-पदेशं च निर्णयः । पद्मपादाचार्यैश्च । 'दीक्षितो मन्त्रीत्यनेन चतुर्थीं परित्यज्य संबुद्धि-स्वीकारः' इत्युक्तम् । मन्त्रदेव प्रकाशिकाकारादिभिरपि संबुद्ध्यन्तस्यैवोद्धृतत्त्वात् । गं बीजं स्वाहा शक्तिः । तदुक्तम् । षष्ठं बीजं द्विठः (बीजान्तजौ) शक्तिरिति ॥२७-२९॥**

अब **महागणपति मन्त्र का उद्धार** कहते हैं—श्री (श्रीँ), शक्ति (ह्रीँ), स्मर (क्लीँ), भू (ग्लौँ द्र. १३. ६२), विघ्नबीज (गँ), इतने बीजाक्षरों के बाद चतुर्थ्यन्त गणपति शब्द, पुनः 'वरवरद' शब्द, तदनन्तर 'सर्वजनमेतं वशमानय स्वाहा' इस प्रकार २८ अट्ठाइस अक्षरात्मक मन्त्र को आदि में प्रणव से युक्त करे तो यह महागणपति के मन्त्र का उद्धार हो जाता है ।

इसका स्वरूप इस प्रकार है—'ॐ श्रीँ ह्रीँ क्लीँ ग्लौं गं गणपतये वर वरद सर्वजनमेतं वशमानय स्वाहा' (२८) ॥ २७-२८ ॥

इस मन्त्र के गणक ऋषि हैं, निवृत् युक्त गायत्री छन्द है और देवगणों से वन्दित महागणपति इसके देवता है ॥ २९ ॥

षडङ्गन्यासः

**षड्बीजस्थस्वबीजेन दीर्घभाजा प्रकल्पयेत् ।**
**षडङ्गानि मनोरस्य यथाविधि विधानवित् ॥ ३० ॥**

**षडङ्गमाह षड्बीजस्थेति । यथाविधीति । तत्तज्जातियुतानि शैवषडङ्गमुद्राभिरिति च । विधानविदित्यनेनायं प्रयोगः सूचितः । ॐ गां हृत् श्रीं गीं शिरः ह्रीँ गूं शिखा क्लीं गैं वर्म ग्लौं गौं नेत्रं गं गः अस्त्रम् । एष पक्षः साम्प्रदायिकः । केचित्तु प्रणवादिबीजपञ्चकमुच्चार्य गामित्यादिप्रयोगेण षडङ्गक्लृप्तिं वदन्ति । अपरे षड्बीजानां प्राक् गामादीन्याहुः ॥ ३० ॥**

विधानवेत्ता, दीर्घयुक्त षड्बीजों के प्रत्येक बीजमन्त्र द्वारा षडङ्गन्यास करे । यथा—ॐ गां हृदये नमः इति हृदि, श्रीँ गीं शिरसे स्वाहा इति शिरसि, ह्रीँ गूं शिखायै वषट् इति शिखायाम्, क्लीँ गैं कवचाय हुँ इति बाह्वोः, ग्लौं गौं नेत्रद्वयाभ्यां वौषट्, गं गः इत्यस्त्राय फट् ॥ ३० ॥

गणपतिध्यानम्

**नवरत्नमयं द्वीपं स्मरेदिक्षुरसाम्बुधौ ।**
**तद्वीचिधौतपर्यन्तं मन्दमारुतसेवितम् ॥ ३१ ॥**
**मन्दारपारिजातादि कल्पवृक्षलताकुलम् ।**
**तद्भूतरत्नच्छायाभिररुणीकृतभूतलम् ॥ ३२ ॥**
**उद्यद्दिनकरेन्दुभ्यामुद्भासितदिगन्तरम् ।**
**तस्य मध्ये पारिजातं नवरत्नमयं स्मरेत् ।**
**ऋतुभिः सेवितं षड्भिरनिशं प्रीतिवर्द्धनैः ॥ ३३ ॥**

**नवरत्नमयं द्वीपमित्यादेरयमर्थः । पृथिव्यनन्तरमिक्षुसमुद्रं नवरत्नमयं द्वीपं नवरत्नमयं पारिजातमिति न्यसेत् । शेषं समानम् । नवरत्नमयमिति । नवरत्नमय द्वीपादुत्पत्तेः पारिजातस्यापि नवरत्नमयत्वम् । अन्ये तु माणिक्यमूलं वैदूर्याङ्कुरं इन्द्रनीलशाखं प्रवालपल्लवं मरकतच्छदं गोमेदशृङ्गं मौक्तिककोरकं वज्रपुष्पं पद्मरागफलमित्याहुः । गणेश्वरविमर्शिन्यामपि—**

**मणिवज्रप्रवालाख्यफलप्रसवपल्लवैः । इत्यादि ॥ ३१-३३ ॥**

इसके अनन्तर इक्षुरस के समुद्र के लहरों से जिसका किंनारा निरन्तर धोया जा रहा है और जहाँ मन्द मन्द वायु चल रही है, ऐसे इक्षुरस के समुद्र के मध्य में नवरत्नमय द्वीप का स्मरण करना चाहिए ॥ ३१ ॥

मन्दार पारिजात, आदि एवं कल्पवृक्ष से व्याप्त एवं नव रत्न के समान उनकी छाया से जहां की भूमि अरुणवर्ण की हो गई है ॥ ३२ ॥

उस द्वीप के मध्य में उदीयमान सूर्य एवं चन्द्रमा की कान्ति के समान प्रकाश से दिग्-दिगन्त को भासित करने वाले नवरत्नमय एक पारिजात वृक्ष का स्मरण करना चाहिए जो हर्षित करने वाले छओं ऋतुओं से निरन्तर सेवित रहता है ॥ ३३ ॥

**तस्याऽधस्तान्महापीठे रचिते मातृकाम्बुजे ।**
**षट्कोणान्तस्त्रिकोणस्थं महागणपतिं स्मरेत् ॥ ३४ ॥**

**पीठे रचित इति व्यधिकरणे सप्तम्यौ । षट्कोणान्तः त्रिकोणस्थमिति । अत्राधोमुखं त्रिकोणं ग्राह्यम् । इदं च मातृकापद्मकर्णिकायामिति ज्ञेयम् ॥ ३४ ॥**

उस पारिजात के नीचे मातृकारूपी कमलों से बनाये गये महापीठ पर षट्कोण के मध्य में त्रिकोण स्थित महागणपति का इस प्रकार स्मरण करना चाहिए ॥ ३४ ॥

**हस्तीन्द्राननमिन्दुचूडमरुणच्छायं त्रिनेत्रं रसा-**
**दाश्लिष्टं प्रियया सपद्मकरया स्वाङ्कस्थया सन्ततम्।**
**बीजापूरगदाधनुस्त्रिशिखयुक् चक्राब्जपाशोत्पल-**
**व्रीह्यग्रस्वविषाणरत्नकलशान् हस्तैर्वहन्तं भजे ॥ ३५॥**
**गण्डपालीगलद्दानपूरलालसमानसान् ।**
**द्विरेफान् कर्णतालाभ्यां वारयन्तं मुहुर्मुहुः॥ ३६ ॥**
**कराग्रधृतमाणिक्यकुम्भवक्त्रविनिःसृतैः ।**
**रत्नवर्षैः प्रीणयन्तं साधकान् मदविह्वलम्॥ ३७ ॥**

पुरश्चरणादिकथनम्

**माणिक्यमुकुटोपेतं रत्नाभरणभूषितम् ।**
**ध्यायन्मन्त्रं जपेन्मन्त्री चतुर्लक्षं समाहितः॥ ३८ ॥**
**चतुःसहस्रसंयुक्तं चत्वारिंशत्सहस्रकम् ।**
**दशांशं जुहुयाद् द्रव्यैरष्टाभिर्मोदकादिभिः॥ ३९ ॥**

**हस्तीति । हस्तीन्द्रो गजश्रेष्ठः । सपद्मकरया वामहस्ते पद्मं दक्षेणालिङ्गनम् । धनुरिक्षुधनुः । त्रिशिखं त्रिशूलम् । वामाधस्ताद्दक्षिणाधः पर्यन्तमायुधध्यानम् । कनककलशस्तु शुण्डाग्रे । तदुक्तम्—**

**वामोर्ध्वादिक्रमेण ।**
**चक्रप्रासरसालकार्मुकगदासद्बीजपूरद्विज-**
**ब्रीह्यग्रोत्पलपाशपङ्कजकरं शुण्डाग्रजाग्रद्घटम् ॥ इति ॥**

**महागणपतिस्तवेऽपि वामदक्षयोरूर्ध्वादिक्रमेण ।**

चक्राब्जशूलपाशानिक्षूत्पललगुडकलशमञ्जरिका:
दाडिमरदमणिकुम्भानाबिभ्रतमाश्रये महागणपम् ॥ इति ।

द्राविडास्त्वन्यथा व्याचक्षते । अधोवामदक्षयोराद्ये । तदूर्द्धयोरपरे । तदूर्द्धयोर्मध्ये । तदूर्द्धयोरुपान्त्ये । तदूर्द्धयोरन्त्ये इति । उक्तं च गणेश्वरविमर्शिन्याम्—

दक्षाध:करमारभ्य वामाध: स्थकरान्तिकम् ।
गदाशूलाब्जकह्लारविषाणं दक्षिणै: करै: ॥
शाल्यग्रपाशचक्रेक्षुचापसद्बीजपूरकम् ।
वामैर्दधानं मञ्जीरविलसच्चरणाम्बुजम् ॥
लीलया रत्नकलशं पुष्कराग्रे निधाय च । इति ।

अन्ये तु प्रथमध्यान एव बीजपूरव्यत्ययमिच्छन्ति । अन्ये तु तद्रदयोरेव व्यत्यस्तत्त्वमिच्छन्ति । तेन वामदक्षयो रदबीजपूरौ प्रतिभात: । मन्त्रीति । दशांशं पुष्टिमन्त्रजप उक्त: । स गुरुमुखादवगन्तव्य: ॥ ३५-३९ ॥

**गणपति का ध्यान**—जिनका मुख श्रेष्ठ, सुलक्षण गज के मुख जैसा माङ्गलिक एवं मनोहर है, जिनके भाल प्रदेश में चन्द्रमा शोभित हो रहा है, जिनकी कान्ति अरुणवर्ण की हैं, जिनके तीन नेत्र हैं, जो अपने अंक में दाहिने हाथ में कमल धारण की हुई पुष्टि नामक प्रिया से बायें हाथ द्वारा सतत् आलिङ्गित हैं, जो अपने हाथों में विजौरा, गदा, बाणयुक्त धनुष, चक्र, कमल, पाश, उत्पल, व्रीहि का अग्रभाग और शुण्ड के अग्रभाग में रत्न का कलश धारण किये हुये हैं ऐसे गणपति का ध्यान करना चाहिए ॥ ३५ ॥

गण्डस्थल से चूते हुये मदजल पर आकृष्ट होने वाले भौंरों को अपने कर्णताल से बारम्बार हटा रहे हैं ऐसे गणेश का ध्यान करता हूँ ॥ ३६ ॥

जो अपने हाथों में धारण किये गये माणिक्यमय कुम्भ के मुख से निकले हुये रत्नों की वर्षा से अपने भक्तों को प्रसन्न कर रहे हैं और स्वयं मद से विह्वल हो रहे हैं ॥ ३७ ॥

**पुरश्चरण**—जो शिर पर माणिक्य जटित मुकुट एवं अन्य अङ्गों में धारण किये गये रत्नाभरण से भूषित हैं । इस प्रकार के गणपति का ध्यान करते हुये मन्त्रज्ञ उपर्युक्त चार लाख गणपति मन्त्र का जप करे और चौवालीस सहस्र मन्त्रों द्वारा मोदकादि अष्टद्रव्यों से (द्र. १३. ५,६) होम करे ॥ ३८-३९ ॥

**तर्पयेद्दिनशो नित्यं प्रागुक्तेनैव वर्त्मना ।**
**प्रागुक्ते पूजयेत्पीठे विधिना गणनायकम् ॥ ४० ॥**

प्रक्प्रोक्तेनेति । चतु:शतं चतुश्चत्वारिंशद्वारमित्यर्थ: । प्रागुक्ते पीठे इति । पूर्वमन्त्रोक्ता: पीठशक्तय: पीठमन्त्राश्चात्रापि ज्ञेया इत्यर्थ: । गणनायकं पूजयेदिति त्रिकोण इति शेष: । विधिनेति वक्ष्यमाणेन । यन्त्रं तु ध्यानावसर एवोक्तम् । सावरणमिति शेष: ॥ ४० ॥

साधक प्रतिदिन पूर्वोक्त कही गई विधि से (द्र. १३. १४-१५) महागणपति का तर्पण भी करता रहे । तदनन्तर पूर्वोक्त पीठ पर विधिपूर्वक गणपति की पूजा करनी चाहिए ॥ ४० ॥

पञ्चमिथुनपूजा

त्रिकोणबाह्ये पूर्वादि चतुर्दिक्षु समर्चयेत् ।
अग्रस्थबिल्ववृक्षाधः श्रियं श्रीपतिमर्चयेत् ॥ ४१ ॥
पद्मयुग्मधरा पद्मा शङ्खचक्रधरो हरिः ।
दक्षिणे वटवृक्षाधो गौरीं गौरीपतिं यजेत् ॥ ४२ ॥
पाशाङ्कुशधरा गौरी टङ्कशूलधरो हरः ।
पश्चिमे पिप्पलस्याऽधो रतिं रतिपतिं यजेत् ॥ ४३ ॥
रतिरुत्पलहस्ताढ्या कोदण्डास्त्रधरः स्मरः ।
सौम्ये प्रियङ्गुवृक्षाधो महीं पोत्रिणमर्चयेत् ॥ ४४ ॥
शुकव्रीह्यग्रहस्ता भूर्गदाचक्रधरः पतिः ।
देवाग्रे पूजयेल्लक्ष्मीसहितं गोपनायकम् ॥ ४५ ॥
षट्सु कोणेषु सम्पूज्या आमोदाद्याः प्रियान्विताः ।
आमोदं सिद्धिसहितमग्रकोणे समर्चयेत् ॥ ४६ ॥
समृद्ध्या युतमभ्यर्चेत् प्रमोदं वह्निकोणतः ।
सुमुखं कान्तिसंयुक्तमीशकोणे समर्चयेत् ॥ ४७ ॥
दुर्मुखं मदनावत्या यजेद्वरुणकोणके ।
विघ्नं मदद्रवायुक्तं कोणे नैशाचरे यजेत् ॥ ४८ ॥
वायव्ये विघ्नहर्त्तारं द्राविण्या सहितं यजेत् ।
पाशाङ्कुशाभयाभीष्टधारिणोऽरुणविग्रहाः ॥ ४९ ॥
गण्डभित्तिगलद्दानपूरधौतमुखाम्बुजाः ।
विघ्नास्तत्प्रमदाः सर्वा मदाघूर्णितलोचनाः ॥ ५० ॥
एकहस्तधृताम्भोजा इतरालिङ्गितप्रियाः ।
षट्कोणपार्श्वयोः पूज्यौ शङ्खपद्मनिधी क्रमात् ॥ ५१ ॥
निजप्रियाभ्यां सहितौ पूर्वोदीरितलक्षणौ ।
केसरेष्वङ्गपूजा स्याद् ब्राह्म्याद्याः पत्रमध्यगाः ॥ ५२ ॥
बहिर्लोकेश्वराः पूज्या वज्रादीनि ततः परम् ।
इत्थं जपादिभिः सिद्धः प्रयोगान् स्वमनीषितान् ॥ ५३ ॥
साधयेदष्टभिर्द्रव्यैरन्यैर्वा कल्पचोदितैः ।

पञ्चमिथुनपूजामाह त्रिकोणेति । टङ्कः परशुः । उत्पलयुक्तौ हस्तौ ताभ्यामाढ्या। अस्त्रं बाणः पोत्रिणं वराहम् । वह्निकोणतः इति । पुरःकल्पितपूर्वदिगपेक्षया यो वह्निकोणस्तत्रेत्यर्थः । एवमीशकोण इत्यत्रापि । एवं पश्चिमनैर्ऋतवायुकोणेष्वपि ज्ञेयम् । तदुक्तमाचार्यैः—

अग्रास्त्रावामोदः प्रमोदसुमुखौ च तमभितोऽस्त्रियुगे ।
पृष्ठे च दुर्मखाख्यस्त्वमुमभितो विघ्नविघ्नकर्त्तारौ ॥ इति ।

विघ्ना इति पूर्वेण सम्बध्यते । पूर्वोदीरितेत्यष्टमपटले । एतदन्तद्वितीयावृत्तिः ॥४१-५४।

इसके बाद त्रिकोण के बाहर पूर्वादि चारों दिशाओं में आगे कहे गये देवियों सहित देवताओं की इस प्रकार पूजा करे त्रिकोण के बाहर अग्रभाग में स्थित बिल्ववृक्ष के नीचे श्री सहित श्रीपति की पूजा करे ॥ ४१ ॥

लक्ष्मी अपने दोनों हाथों में दो कमल और विष्णु अपने हाथों में शङ्ख, चक्र धारण किये हुये हैं । त्रिकोण के बाहर दक्षिणभाग में स्थित विल्व वृक्ष के नीचे गौरी एवं गौरीपति की पूजा करे ॥ ४२ ॥

गौरी के हाथों में पाश और अंकुश हैं तथा शिव के हाथों में फरसा एवं त्रिशूल हैं । पश्चिम में पिप्पल वृक्ष के नीचे रति एवं रतिपति की पूजा करे ॥४३॥

रति के दोनों हाथों में उत्पल हैं एवं काम के हाथों में धनुष एवं बाण हैं । इसके बाद उत्तर दिशा में प्रियङ्गु वृक्ष के नीचे पृथ्वी सहित वाराह की अर्चना करनी चाहिए ॥ ४४ ॥

पृथ्वी के हाथ में तीक्ष्णाग्र भाग युक्त ब्रीहि है और वाराह के हाथ में गदा तथा चक्र है । इसके बाद गणपति के आगे लक्ष्मी सहित श्री कृष्ण की पूजा करनी चाहिए ॥ ४५ ॥

षट्कोण में प्रियाओं से युक्त आमोदादि विनायकों की इस प्रकार पूजा करे । आगे के कोण में सिद्धि सहित **आमोद** की पूजा करे ॥ ४६ ॥

तदनन्तर आग्नेयकोण में समृद्धि सहित **प्रमोद** की पूजा करे । ईशान कोण में कान्ति के सहित **सुमुख** की पूजा करे ॥ ४७ ॥

इसी प्रकार वरुणकोण में मदनावती सहित **दुर्मुख** की और नैर्ऋत्य कोण में मदद्रवायुक्त **विघ्न** की पूजा करे ॥ ४८ ॥

वायव्य कोण में द्राविणी सहित **विघ्नेश्वर** की पूजा करे । इन सभी देवी और देवताओं ने अपने हाथों में पाश, अंकुश, अभय तथा वर मुद्रा धारण किया है । सभी के शरीर की कान्ति अरुण वर्ण की है ॥ ४९ ॥

सभी के मुख, कमल गण्डस्थल से गिरते हुये मदजलों से धौत हैं । आमोद से लेकर विघ्न पर्यन्त सभी विनायक एवं उनकी स्त्रियाँ मद से मत्त होकर अपने नेत्रों द्वारा घूर रही हैं ॥ ५० ॥

वे एक हाथ में तो कमल धारण की हैं तथा दूसरे हाथ से अपने अपने प्रियतमों का आलिङ्गन कर रही हैं । षट्कोण के दोनों पार्श्वभाग में क्रमशः शङ्ख निधि एवं पद्मनिधि का प्रिया से युक्त पूर्व में कहे गये लक्षणों के अनुसार (द्र. ८. १४-१५) पूजन करना चाहिए । केशरों में अङ्गपूजा तथा पत्रों के मध्य में ब्राह्मी आदि की पूजा करनी चाहिए (द्र. ६. १७-१८) ॥ ५१-५२ ॥

बाहर लोकेश्वरों का उसके बाद उनके वज्रादि आयुधों का पूजन करे । इस प्रकार की विधि से जब मन्त्र सिद्ध हो जाय तब स्वाभिलषित सिद्धि के लिये इस मन्त्र का अनुष्ठान करना चाहिए ॥ ५३ ॥

अष्टद्रव्यों के होम से अथवा गणपति कल्प में कहे गये अन्य द्रव्यों से स्वाभीष्ट लाभ करना चाहिए ॥ ५४ ॥

**पद्महोमेन भूपालांस्तत्पत्नीरुत्पलैः शुभैः ॥ ५४ ॥**
**मन्त्रिणः कुमुदैः फुल्लैर्विप्रान् पिप्पलसम्भवैः ।**
**समिद्वरैर्नरपतीनुदुम्बरसमुद्भवैः ॥ ५५ ॥**
**प्लक्षैर्वैश्यान् वटोद्भूतैः शूद्रान्मन्त्री वशं नयेत् ।**
**मधुना स्वर्णलाभः स्याद् गोदुग्धेन लभेत गाः ॥ ५६ ॥**
**आज्यहोमेन महतीं श्रियमाप्नोति मानवः ।**
**दध्ना सर्वसंमृद्धिः स्यादन्नैरन्नपतिर्भवेत् ॥ ५७ ॥**

**पद्महोमेन भूपालानित्यादेर्मन्त्री वशं नयेदित्यादिना सम्बन्धः । मन्त्रीत्यनेन सर्वपदस्थाने साध्यनामेत्युक्तम् । समिद्वरैरिति । अग्रेऽपि त्रिषु सम्बध्यते ॥ ५४-५७ ॥**

पद्म के होम से राजाओं को तथा उत्पल (नीले कमल) के होम से राजपत्नी को वश में करना चाहिए । फूले हुये कुमुद पुष्प के होम से राजमंत्रियों को, पिप्पल की उत्तम समिधाओं के होम से ब्राह्मणों को, उदुम्बर समिधाओं के होम से क्षत्रियों को, पाकर की समिधा के होम से वैश्यों को और वट वृक्ष की जटा के होम से मन्त्रज्ञ शूद्रों को वश में कर लेता है । मधु के होम से सुवर्ण की प्राप्ति तथा गाय के दूध के होम से गायों का लाभ होता है ॥ ५४-५६ ॥

मनुष्य घृत के होम से बहुत बड़ी श्री, दधि होम से सब प्रकार की सम्मृद्धि तथा अन्न के होम से अन्नपति होता है ॥ ५७ ॥

**वृष्टिकामः प्रजुहुयाद् वेतसानां समिद्वरैः ।**
**कुसुम्भकुसुमैर्हुत्वा वासांसि लभतेऽचिरात् ॥ ५८ ॥**

**वृष्टीति । अत्र स्वबीजानन्तरममृतबीजं ज्ञेयम् ॥ ५८ ॥**

वर्षा होने के लिये साधक को वेंत की समिधा द्वारा होम करना चाहिए । कुसुम्भ के पुष्पों के द्वारा होम करने से शीघ्र ही नाना प्रकार के वस्त्रों की प्राप्ति होती है ॥ ५८ ॥

चतुरावृत्तितर्पणम्

**प्रत्येकमादौ मूलेन चतुर्वारं प्रतर्पयेत् ।**
**श्रीशक्तिरतिभूलक्ष्मीः स्वबीजाद्याः प्रियान्विताः ॥ ५९ ॥**

चतुरावृत्तितर्पणप्रकारमाह प्रत्येकमिति त्रिभिः । आदौ मूलेन चतुर्वारं प्रतर्पयेत् । प्रत्येकमित्यस्यायमर्थः । या या देवता तर्पणोया तत्र तत्रादौ मूलेन चतुर्वारं चतुर्वारं तर्पणं कर्त्तव्यम् । स्वबीजाद्या इति । स्वस्वबीजाद्याः प्रियान्विताः प्रत्येकं तर्पयेदिति सम्बन्धः ॥ ५९ ॥

जिस देवता का तर्पण करना हो, उस उस देवता के तर्पण के पहले मूल मन्त्र से चार चार बार तर्पण करे । इसके बाद श्री, शक्ति, रति भू, लक्ष्मी इन पाँचों की उनके पतियों के साथ, उनके बीज मन्त्रों से समस्त तथा व्यस्त क्रम से चार चार बार तर्पण करे ।

• यथा—मूलमन्त्र 'महागणपति तर्पयामि' से चार बार महागणपति का तर्पण कर पश्चात् 'श्रीँ श्रीँ श्रीँ पतितर्पयामि' इस समस्त क्रम से चार बार पुनः श्रीँ श्रीपतिसहितां श्रियं तर्पयामि इस व्यस्त क्रम से भी चार बार तर्पण करे ॥ ५९ ॥

**आमोदादीन् स्वबीजाद्यान् शक्तियुक्तांश्च तर्पयेत् ।**
**चतुश्चतुः पृथक्मन्त्री शङ्खपद्मनिधी तथा ॥ ६० ॥**
**नामादिबीजसहितौ तर्पयेत् स्वप्रियान्वितौ ।**
**तर्पणेनाऽमुना स्वीयमिष्टमाप्नोति मण्डलात् ॥ ६१ ॥**

स्वबीजाद्यानिति गणपतिबीजाद्यान् । यथा चतुर्वारं स्वप्रियान्विताविति वसुधारावसुमतीसहितौ । तद्यथा । मूलमन्त्रेण महागणपतिं तर्पयामीति चतुर्वारं सन्तर्प्य श्रीं श्रीश्रीपती तर्पयामीति चतुर्वारं सन्तर्पयेत् । अत्र लक्ष्मीशब्देन पञ्चमक्रममिथुनं संगृहीतम् पूजाक्रमविवक्षया । तदुक्तमाचार्यैः स्तवे—

पञ्चकारणभेदेन यस्मान् मिथुनपञ्चकम् ।
करोति पञ्च कृत्यानि तदाद्यं मिथुनं भजेत् ॥ इति ।

अन्यत्रापि— प्रथमं पूजयेद्देवं ततो मिथुनपञ्चकम् ॥ इति ।

अन्यत्रापि न्यासावसारे—

शिरोवक्त्रहृदम्भोजगुह्यपत्स्वपि पञ्चकम् ।
मिथुनानां न्यसेत् स्वीयैर्बीजैः स्वैर्नामभिः पृथक् ॥ इति ॥

एवं त्रयोदश देवतानां तर्पणानि भवन्ति । त्रयोदशवारं मूलतर्पणानि । सर्वान्ते मूलेन चतुर्वारं तर्पणम् । एवमष्टोत्तरशतं तर्पणानि भवन्ति । अयं कनिष्ठः प्रकारः । पद्मपादाचार्यैः कनिष्ठप्रकारे चतुर्विंशत्यधिकैकशततर्पणान्युक्तानि । तद्यथा । मूलं ४ महागणपं ४ मूलं ४ पुष्टिं ४ पञ्चमिथुनानि ४० आमोदादि ६४ मूलं ४ एवमिति । मध्यमप्रकारस्तु प्रियान्विता इति व्यस्ततर्पणेन । तत्र व्यस्तत्वं मूले प्रियान्विताः

शक्तियुक्तानित्युक्तेर्लभ्यते । तद्यथा । मूलं चतुर्वारं सन्तर्प्य श्रीं श्रीपतिसहितां श्रियं तर्पयामीति चतुर्वारं पुनः श्रीं श्रीसहितं श्रीपतिं तर्पयमीति चतुर्वारं तर्पयेत् । एवं षड्विंशतिदेवतातर्पणानि षड्विंशतिवारं मूलतर्पणानि च अन्ते मूलेन चतुर्वारं तर्पणं सर्वादौ च मूलेन स्वतन्त्रतया चतुर्वारं तर्पणम् । एवं षोडशोत्तरा द्विशती तर्पणानां भवति । उत्तमप्रकारस्तु प्रत्येकमादौ वक्ष्यमाणतर्पणानामिति शेषः । चतुर्वारं तर्पयेदादावन्ते चेत्यर्थः । मूलेन प्रत्यर्णमित्यर्थः । मूलमन्त्रस्याक्षराणि प्रत्येकं तर्पयेत् । तद्यथा । आदौ मूलम् ४ प्रथमाक्षरम् ४ पुनर्मूलम् ४ एवमष्टाविंशति वर्णतर्पणानि अष्टाविंशतिवारं मूलतर्पणानि च अन्ते चतुर्वारं मूलेन । एवं द्विशती अष्टाविंशत्यधिका तर्पणानाम् । ततो मध्यमप्रकारवदेव द्विशती षोडशोत्तरा । एवं चतुश्चत्वारिंशदधिकं चतुःशतं तर्पणानि भवन्ति । तदुक्तं गणेश्वरविमर्शिन्याम्—

सर्वाभीष्टप्रदं वक्ष्ये चतुरावृत्तितर्पणम् ॥
एकान्ते विजने रम्ये सर्वोपद्रववर्जिते ॥
कृतस्नानादिको मन्त्री पूर्ववन्न्याससंयुतः ।
तडागमध्ये सञ्चिन्त्य पुष्पितं नलिनीवनम् ॥
तस्य मध्ये महापद्मं तरुणादित्यसन्निभम् ।
समुन्नतं सुगन्धाढ्यं रमणीयं मनोहरम् ॥
सद्योविकसितं ध्यायेन्मन्त्री पूर्वोक्तमन्त्रवित् ।
शुद्धरजतसोपानपङ्क्त्याभरविमण्डलात् ॥
विनिर्गत्याऽवरुह्याऽथ कर्णिकामध्यसंस्थितम् ।
इति ध्यात्वा सावरणं महागणपतिं सुधीः ॥
प्रवरैर्गन्धकुसुमैः समभ्यर्च्याऽथ पूर्ववत् ।
निधाय पुष्करमुखं साधकेन्द्रस्य मूर्द्धनि ॥
वर्षन्तं रत्नधाराभिर्ध्यात्वा देवस्य मूर्द्धनि ।
चन्द्रचन्दनकाश्मीरकस्तूरीलोलितैर्जलैः ॥
प्रथमं मूलमन्त्रेण चतुर्वारं प्रतर्प्य च ।
मिथुनानि च षड्विघ्नान् शङ्खपद्मनिधी अपि ॥
स्वस्वबीजादिकैर्मन्त्री स्वाहान्तैश्च चतुश्चतुः ।
मूलमन्त्रं चतुर्वारपूर्वकं तर्पयेत् पृथक् ॥
सम्भूयाऽष्टोत्तरशतं कनिष्ठः स्यादयं क्रमः ।
अथवा मूलमन्त्राद्यैर्व्यस्तैरेतैश्च पूर्ववत् ॥
मन्त्रैर्वा तर्पयेद्विद्वानर्चनोक्तप्रकारतः ।
मध्यक्रमोऽयं सम्भूय द्विशतं षोडशोत्तरम् ॥
अथवा मूलमन्त्रेण चतुर्वारं प्रतर्प्य च ।
पूर्वमन्त्राक्षरैर्मन्त्रैः स्वाहान्तैश्च चतुश्चतुः ॥
मूलमन्त्रं चतुर्वारपूर्वकं सम्प्रतर्प्य च ।
मिथुनादींस्ततः पश्चात् पूर्ववत्सम्प्रतर्पयेत् ॥
भवेत् सम्भूय स चतुश्चत्वारिंशच्चतुःशतम् ।
एवं ज्येष्ठक्रमः प्रोक्तो बुधैरागमपारगैः ॥
एवं सन्तोष्य तत्पश्चात् पूर्ववत् सोपचारकैः ।

सर्वाभीष्टं च सम्प्रार्थ्य प्रणम्योद्वासयेत् सुधीः ॥
य एवं तर्पयेन्नित्यं मण्डलात् सकलं लभेत् ।
अनावृष्ट्यां भये घोरे राजचौराद्युपद्रवे ॥
महाज्वरे विवादे च महादारिद्र्यसङ्कटे ।
विवाहादिषु कार्येषु सर्वेषु च विशेषतः ॥
एवं वै तर्पणं कुर्यान् मानवेन्द्रः प्रसन्नधीः ।
महागणेश्वरः प्रीतो महासम्पत्करो भवेत् ॥ इति ॥

अन्ये तु लक्ष्मीशब्देन शक्तिमत्प्राधान्यमिति वदन्ति । मन्त्रोद्देशक्रमो विवक्षितः । तन्मते प्रथमं विंशतिवारं ततोऽष्टाविंशतिमन्त्राक्षरैः तावत्कृत्वो मूलेन एतदन्तं चतुर्वारं मूलेन ततश्चतुर्विंशतिदेवतातर्पणानि । तावत्कृत्वो मूलतर्पणानि तदन्ते मूलेन चतुर्वारम् । एवं चतुःशतचतुश्चत्वारिंशत्तर्पणानि भवन्ति । तदुक्तं रहस्यपटले मूलनारायणीये—

विंशत्संख्यं तर्पयित्वा तु पूर्वं मान्त्रैर्वर्णैर्वेदवारं द्विठान्तैः ।
मध्ये मध्ये तर्पयेद्विघ्नराजं लक्ष्म्यादीनां तर्पणं चैवमेव ॥ इति ॥

अन्यत्रापि—प्रथमं विंशतिवारं मिथुनानां विघ्नषट्शक्तीनाम् ।
प्रत्येकं निधिशक्त्योश्चतुरावृत्या च मूलेन ॥
मूलात्मकवर्णानामेवं सन्तर्पिते च निशितधिया ।
स चतुश्चत्वारिंशचतुःशतं संख्यया भवेदेवम् ॥ इति ॥

ये तु महागणपतिशब्दं सम्बुद्ध्यन्तमाहुः त एकोनत्रिंशदक्षरतर्पणं तावत्कृत्वो मूलेन षडविंशतिमिथुनतर्पणं तावत्कृत्वो मूलान्ते मूलेन चतुर्वारमिति संख्यापूर्त्तिमाहुः । ये तु गणपतिपदं सम्बुध्यन्तमाहुः ते मूलं ४ महागणपतिं ४ मूलं ४ पुष्टिं ४ ततोऽक्षरतर्पणं तावन्मूलेन पूर्ववन्मिथुनादितर्पणम् अन्ते मूलेनेति संख्यापूर्त्तिमाहुः । त्रिंशदक्षरे तु अक्षरमूलतर्पणानि अन्ते ४ मूले ४ मूलेनेति २४४ ततो मिथुनाष्टकेनाऽन्ते मूलेनेति ६८ तत आमोदादीनामन्ते मूलेनेति १३२ । एवं संख्यापूर्त्तिर्ज्ञेया । ये तु श्रीमहागणपतिशब्दं सम्बुध्यन्तं वशंशब्दस्य च द्वित्वमाहुः ते द्वात्रिंशदक्षरं तर्पणं तावत्कृत्वो मूलेन बीजपूराद्येकादशभिः ८८ मिथुनचतुष्टयषड्विघ्ननिधिद्वयेन कनिष्ठोक्तप्रकारेण तावत्कृत्वो मूलेनाऽन्ते च चतुर्वारं मूलेनेत्याहुः । बीजापूरादिमन्त्रास्तु—

बीजापूरं गदा चेक्षुकार्मुकं च त्रिशूलयुक् ।
चक्राब्जपाशोत्पलानि कलमाग्रं विषाणयुक् ॥
ङेन्ताश्च रत्नकलशो हृदन्ताः प्रणवादिकाः ।
गंबीजाद्यादिकाः पञ्च श्रीबीजाद्यादिकाः पुनः ॥
षड्बीजाद्योऽन्तिमश्चैते वक्ष्यमाणपदादिकाः ।
यथाक्रमं महाविघ्नायुधानां मनवः स्मृताः ॥

बीजपूरादयः पञ्च विलोमेन गंबीजाद्यानि गं ग्लौं क्लीं ह्रीँ श्रींबीजानि आदौ येषां तथा । पुनः रत्यादयः पञ्चक्रमेण श्रीबीजाद्याः श्रीमित्यादि पञ्चबीजादिकाः । अन्तिमो रत्नकलशः प्रणवादिषड्बीजाद्य इत्यर्थः ।

मन्त्रकला शक्तिसप्राणत्रिगुणः कालचक्रलयक्षयौ च ।
व्याप्तिरक्तिभूस्वरूपं विद्यात्रैलोक्यमात्मने युक्तम् ॥ इति ॥

**पद्मपादाचार्यास्त्वन्यथा चतुरावृत्तितर्पणमाहुः । तद्यथा । दशधा भिन्नेन मूलमन्त्रेण बीजपूराद्येकादशभिर्महागणपतिक्षिप्रप्रसादनतदुक्तविघ्नाद्यष्टनामयुतेन गणपतय इत्यस्मात् पूर्वं मूलमन्त्रेण चतुर्विंशतिदेवताश्च एवं पञ्चपञ्चाशद्देवतातर्पणानि तावन्ति मूलेन अन्ते चतुर्वारं मूलेनेति चतुःशतं चतुश्चत्वारिंशत् ।**

**प्रयोगसारे तु—अष्टाविंशतिरक्षराणि दशभिर्युक्तं चतुर्भिः पदैः ।**
**पश्चात् पञ्चरमादिकांश्च गणपान् षट् द्वौ निधी तर्पयेत् ॥**
**प्रत्येकं मनुनाऽमुना च चतुरावृत्त्या विभोर्मस्तके**
**ध्यात्वा रत्नमयं महागणपतिं भक्तप्रसन्नं सुधीः ॥ इति ॥ ६०-६१ ॥**

इसके बाद आमोदादि की भी उनके शक्तियों के साथ उनके नाम के आदि अक्षर के बीज से युक्त कर चार चार बार पृथक् पृथक् तर्पण करे।

यथा—'सिं सिद्धिसहितमामोदं तर्पयामि' इस क्रम से चार बार, पुनः 'सिं आमोद सहितां सिद्धिं तर्पयामि' इस व्यस्त क्रम से भी चार बार प्रत्येक आमोदादि देवताओं का तर्पण करे ।

इस प्रकार के १३. १५ में कहे गये ४४४ तर्पण से साधक शीघ्र ही ४९ दिन के भीतर अपना अभीष्ट प्राप्त कर लेता है ॥ ६०-६१ ॥

**विमर्श**—संक्षेप में ४४४ तर्पण का प्रकार इस प्रकार उद्धृत किया जाता है—सर्वप्रथम मूल से चार बार तर्पण कर, १. श्री, २. श्रीपति, ३. गौरी, ४. गौरीपति, ५. रति, ६. रतिपति, ७. मही, ८. वराह, ९. लक्ष्मी, १०. कृष्ण, ११. आमोद, १२. सिद्धि, १३. समृद्धि, १४. प्रमोद, १५. सुमुख, १६. कान्ति, १७. दुर्मुख, १८. मदनावती, १९. विघ्न, २०. मदद्रवा, २१. विघ्नहर्त्ता, २२. द्राविणी, २३. शङ्खनिधि, २४. उनकी प्रियतमा, २५. पद्मनिधि एवं २६. उनकी प्रियतमा—इन २६ देवताओं का चार चार बार तर्पण करने से १०४ बार तर्पण होता है । इसी प्रकार मूल मन्त्र को भी २६ × ४ बार तर्पण करने से १०४ संख्या होती है । प्रथम मूल मन्त्र से चार तथा अन्त में मूल मन्त्र से चार बार तर्पण करने से कुल २१६ तर्पण संख्या हुई । यह मध्य क्रम कहा गया ।

अब २८ अक्षर के मूल मन्त्र को अक्षरों की संख्या के अनुसार तर्पण करने से जो संख्या आवेगी उसका निर्देश करते हैं । प्रथम मूल ४ तदनन्तर प्रथमाक्षर ४, पुनः मूल ४ इस प्रकार मूल मन्त्र के तर्पण की संख्या २८ × ४/११२ । पुनः मूल मन्त्र के से तर्पण की संख्या २८ × ४/११२ अन्त में चार बार और आदि में चार बार इस प्रकार मूल मन्त्र के अक्षरों की संख्या के अनुसार कुल २२८ बार तर्पण सिद्ध होता है । यह उत्तम प्रकार है । अब उपर्युक्त मध्य क्रम के २१६ संख्या को इसमें मिला देने से कुल तर्पण की संख्या ४४४ हुई । इसी का निर्देश १३. ५९-६१ में किया गया है ॥ ६०-६१ ॥

भूबीजम्

स्मृतिस्थं मांसमौबिन्दुयुक्तं भूबीजमीरितम् ॥ ६२ ॥

भूबीजमुद्धरति स्मृतीति । मांसं लकारः स्मृतिस्थं गकारस्थं औ स्वरूपं बिन्दुश्च एतद्युक्तः । तेन ग्लौं इति ॥ ६२ ॥

अब **भूबीज के उद्धार का प्रकार** कहते हैं—मांस (लकार) स्मृतिस्थ (गकार) उस पर बिन्दु सहित औ की मात्रा? यह भूबीज का उद्धार कहा गया । इस प्रकार इसका स्वरूप 'ग्लौं' होगा ॥ ६२ ॥

महागणपतियन्त्रम्

बीजं षट्कोणमध्ये स्फुरदनलपुरे तारगं दिक्षु लक्ष्मीं
मायाकन्दर्पभूमीस्तदनु रसपुटेष्वालिखेद्बीजषट्कम् ।
तत्सन्धिष्वङ्गमन्त्रान् वसुदलकमले मूलमन्त्रस्य वर्णान्
शिष्टान् पत्रेषु विद्वान् विलिखतु गुणशश्चाऽन्त्यमन्त्ये पलाशे ॥६३॥
आवीतं लिपिभिः क्रमोत्क्रमवशात् पाशाङ्कुशाभ्यामपि
क्ष्मागेहद्वितयेन वेष्टितमिदं यन्त्रं गणाधीशितुः ।
लाक्षाकुङ्कुमरोचनामृगमदैर्भूर्जे वरे हेम्नि वा
संलिख्याऽभिवहन् लभेत सकलैः संप्रार्थनीयां श्रियम् ॥ ६४ ॥
उक्तं महागणपतेर्विधानं सुरपूजितम् ।
सर्वसिद्धिकरं पुंसां समस्तपुरुषार्थदम् ॥ ६५ ॥

यन्त्रमाह बीजमिति । वसुदलकमले अष्टदलपद्मे षट्कोणमध्ये स्फुरदनलपुरे लसत्त्रिकोणे तारगं प्रणवस्थं बीजं गणपतिबीजं गमिति लिखेदित्यन्वयः । दिक्षु त्रिकोणाद्बहिः अग्रादीति ज्ञेयम् । रसपुटेषु । षट्सु कोणेषु । बीजषट्कं मन्त्राद्यम् । तस्य अग्रादि षट्कोणस्य सन्धिषु अङ्गमन्त्रान् महागणपतेः षडङ्गमन्त्रान् । पत्रेषु मन्त्रस्य द्वाविंशतिवर्णान् शिष्टान् गुणशस्त्रिशः अन्त्यं वर्णमष्टमे दल एकमेव लिखेत् । ततः क्रमोत्क्रमलिपिभिर्वेष्टयेत् । ततः पाशाङ्कुशाभ्यां वेष्टयेत् । पद्मपादाचार्यैस्तु 'अष्टपदान्यष्टपत्रे विलिख्य तद्बहिर्वृत्तत्रये मातृकापाशाङ्कुशार्णान् विलिख्य तद्बहिर्भूपुरद्वये पाशमायाबीजे लिखेत्' इत्युक्तम् । लाक्षा अलक्तकरसः । कुङ्कुमं काश्मीरजम् । रोचना गोरोचना । मृगमदः कस्तूरी ॥ ६३-६५ ॥

अब **यन्त्र का प्रकार** कहते हैं—अष्टदल कमल के मध्य में षट्कोण फिर उसके मध्य में त्रिकोण निर्माण करे, फिर त्रिकोण में प्रणव युक्त गणपति बीज (गम्) लिखे ॥ ६३ ॥

पुनः त्रिकोण के बाहर दिशाओं में आगे के क्रम से लक्ष्मीं बीज, माया बीज, कन्दर्पबीज और भूमि बीज लिखे । तदनन्तर षट्कोणों में गणपति के आद्य बीज, प्रणव, श्री, शक्ति, स्मर, भू और कामबीज के छः अक्षरों को अलग अलग

लिखे (बीजाक्षरों के लिये देखें १३. २७) पुनः उनकी सन्धियों में महागणपति के षडङ्गमन्त्रों को लिखे । पत्रों पर महागणपति के बीजाक्षरों से शेष बचे हुये २२ अक्षरों के तीन तीन वर्णों को सात पत्रों पर लिखे । शेष एक वर्ण अष्टम पत्र पर लिखे । तदनन्तर उसे क्रमानुसार एवं उत्क्रमानुसार मातृकावर्णों से लिख कर घेर देवे । भूपुर में पाश (आँ) और अंकुश (क्रोँ) लिख कर घेर देवे । इस प्रकार गणपति के यन्त्र का उद्धार कहा गया । यह यन्त्र अलक्तक के रस कुंकुम, गोरोचन और कस्तूरी के द्वारा भूर्जपत्र पर अथवा सुवर्णपत्र पर लिख कर धारण करे तो साधक अपनी समस्त कामनायें प्राप्त कर लेता है ॥ ६४ ॥

यहाँ तक देवताओं के द्वारा प्रशंसित गणपति का विधान कहा गया है, जो पुरुषों को समस्त सिद्धियाँ प्रदान करता है और समस्त पुरुषार्थों को भी प्रदान करता है ॥ ६५ ॥

**विरिगणपतिमन्त्रः**

**माया विरिपदद्वन्द्वां ततो गणपतिं वदेत् ।**
**खड्गीशपावकौ पश्चाद्वरदान्ते वदेत् पुनः ॥ ६६ ॥**
**सर्वलोकं मे पदान्ते वशमानय ठद्वयम् ।**
**षड्विंशत्यक्षरो मन्त्रो भजतां सुरपादपः ॥ ६७ ॥**

**ऋष्यादिकथनम्**

**गणकः स्यादृषिश्छन्दो गायत्रं देवता मनोः ।**

**विरिगणपतिमन्त्रमाह मायेति । खड्गीशो वः पावको रेफः । हल्लेखा बीजं स्वाहा शक्तिः । केचन वरेत्यादिपञ्चाक्षराणि लोकामिति च हित्वा एकोनविंशत्यक्षरमाहुः । अस्य निवृच्छन्दः । अन्यत् पूर्ववत् । केचन लोकपदे जनपदं पठन्ति । अन्ये विरीत्यादौ महागणपतिबीजषट्कं प्रयोजयन्ति ॥ ६६-६८ ॥**

अब **विरिगणपति मन्त्र का उद्धार** कहते हैं—प्रथम माया (ह्रीँ), पुनः दो बार 'विरि विरि' पद, तदनन्तर 'गणपति' पद, इसके बाद खड्गीश (व), पुनः पावक (र), पश्चाद् 'वरद' पद, अन्त में 'सर्वलोकं मे वशमानय स्वाहा'—इस प्रकार यह २६ अक्षरों वाला महामन्त्र अपने सेवकों को कल्पवृक्ष के समान फल प्रदान करता है ।

इसका **स्वरूप**—'ह्रीँ विरि विरि गणपति वर वरद सर्वलोकं मे वशमानय स्वाहा' है । इसके ऋषि गणक हैं तथा गायत्री छन्द है ॥ ६६-६८ ॥

**विरिविघ्नेश्वरः प्रोक्तो भजतां सर्वकामदः ॥ ६८ ॥**
**अन्तःकरणवेदेषु भूतपञ्चविलोचनैः ।**
**एवं विभक्तैर्मन्त्रार्णैर्मायाद्यैरङ्गकल्पना ।**
**महागणपतेः प्रोक्ते स्थाने मन्त्री विचिन्तयेत् ॥ ६९ ॥**

**षडङ्गमाहान्तरिति । अन्तःकरणानि चत्वारि वेदाश्चत्वार इषवः पञ्चभूतानि पञ्चलोचन द्वे । द्वितीयस्य षट्पदैः षडङ्गम् । तृतीयस्य महागणपति मन्त्रवत् ॥ ६८ ॥**

इस मन्त्र के 'विरिविघ्नेश्वर' देवता हैं और यह अपने भजन करने वालों के लिये कल्पवृक्ष है ॥ ६८ ॥

चार अक्षर, फिर चार अक्षर, पुनः पाँच, पाँच, पाँच, तदनन्तर तीन—इस प्रकार से अक्षरों का विभाग कर षडङ्गन्यास करे ॥ ६९ ॥

**विरिगणपतिध्यानम् । पुरश्चरणादिकथनम्**

**सिन्दूराभमिभाननं त्रिनयनं हस्तेषु पाशाङ्कुशौ**
**बिभ्राणां मधुमत्कपालमनिशं सार्द्धेन्दुमौलिं भजे ।**
**पुष्ट्याश्लिष्टतनुं ध्वजाग्रकरया पद्मोल्लसद्धस्तया**
**तद्योन्याहितपाणिमात्तवसुमत्पात्रोल्लसत् पुष्करम्॥ ७० ॥**
**चतुर्लक्षं जपेन्मन्त्रं तद्दशांशं हुतक्रिया ।**
**प्राक्प्रोक्तैरष्टभिर्द्रव्यैस्त्रिमध्वक्तैः समीरिता ॥ ७१ ॥**
**पूर्वोक्ते पूजयेत् पीठे तीव्रादिनवशक्तिके ।**
**मूलेन मूर्त्तिं सङ्कल्प्या तत्रावाह्याऽर्चयेद्विभुम् ॥ ७२ ॥**

**पुष्करं करिहस्ताग्रम् । ध्याने तु दक्षे पाशः वामे अङ्कुशः अधोदक्षे मधुमत्कपालम् अधोवामः प्रियायोन्याहितः । तद्वत् पुष्टिरपि चतुर्भुजा । तत्र दक्ष-वामयोः पद्मे । पद्मोल्लसद्धस्तयेत्यत्र पद्माभ्यां उल्लसन्तौ हस्तौ यस्याः सा तथेति विग्रहः । अधोदक्षिणेन प्रियस्याश्लेषः अधोवामेन तद्ध्वजाग्रस्पृगिति सम्प्रदायविदः । कश्चित्तु पुष्टिं द्विहस्तामेवाह । एकहस्ते पद्मं द्वितीयहस्तो ध्वजाग्रस्पृगिति । तन्मते आश्लेषो नाम निकटत्वं न तु हस्तेनालिङ्गनमिति । द्वितीयमन्त्रेऽपि इदमेव ध्यानम् । तृतीयमन्त्रे तु—**

**बीजापूरगदे शरासनमरिं मालां च दक्षैः करै-**
**र्वामैर्बाणसपाशकोत्पलरदान् रत्नाढ्यकुम्भं दधत् ।**
**सिन्दूरारुणविग्रहस्त्रिनयनो योन्यस्तशुण्डो गणः**
**सल्लिङ्गाहितपाणिमम्बुजकरां पुष्टिं वहन् वोऽवतात् ॥**

**पूजादिकं त्रयाणां समानम् ॥ ७०-७२ ॥**

अब विरिगणपति **ध्यान का प्रकार** कहते हैं—जिनका हाथी के समान मुख है, जो सिन्दूर के समान रक्त वर्ण वाले है, जिनके तीन नेत्र हैं, जो अपने हाथों में क्रमशः पाश, अंकुश और मधुमत्कपाल धारण किये हुये हैं और एक हाथ अपनी प्रियतमा पुष्टि की योनि में डालकर उसमें से निकलते हुये रत्नों को अपने पुष्कर पात्र में धारण कर रहे हैं । एक हाथ से ध्वजाग्र भाग (लिङ्गाग्र) का स्पर्श करती हुई, ऊपर दो हाथों में दो कमल धारण करती हुयी तथा शेष एक हाथ से

प्रियतमा पुष्टि जिनका आलिङ्गन कर रही हैं ऐसे इन्द्रमौलि महागणपति का मैं भजन करता हूँ ॥ ७० ॥

उपर्युक्त मन्त्र का चार लाख जप करे । उसके दशांश से आहुति दे । यह हवन पूर्व में कहे गये त्रिमधुमिश्रित अष्टद्रव्यों से करना चाहिए ॥ ७१ ॥

तदनन्तर तीव्रादि नवशक्तियों से युक्त पीठ पर मूल मन्त्र से मूर्ति की कल्पना कर उसमें गणपति का आवाहन कर पूजन करे ॥ ७२ ॥

**मिथुनावृत्तिराद्या स्यादामोदाद्यैर्दिगम्बरैः ।**
**द्वितीयाऽङ्गैस्तृतीया स्याच्चतुर्थी मातृभिः स्मृता ॥ ७३ ॥**
**पञ्चमी लोकपालैः स्यात् षष्ठी वज्रादिभिः स्मृता ।**
**इति सिद्धमनुर्मन्त्री प्रफुल्लैः सरसीरुहैः ॥ ७४ ॥**
**जुहुयाद्वशगाः सर्वे तण्डुलैस्तिलमिश्रितैः ।**
**हुत्वा श्रियमवाप्नोति मोदकैराज्यलोलितैः ।**
**हुत्वा विजयमाप्नोति पार्थिवो युद्धभूमिषु ॥ ७५ ॥**

**पूर्वोक्त इति महागणपतिपूजायन्त्रे । तीव्रादिनवशक्तिक इत्यनेन पीठमन्त्रस्य मायादित्वमुक्तम् ॥ ७३-७५ ॥**

स्त्री सहित गणपति की प्रथमावरण में, दिगम्बर आमोदादि की द्वितीय अवारण में, अङ्गों की तृतीय आवरण में और मातृकाओं की चतुर्थ आवरण में पूजा करे ॥ ७३ ॥

लोकपालों की पूजा पञ्चम आवरण में और उनके वज्रादि आयुधों की पूजा षष्ठ आवरण में करे । इस प्रकार जब मन्त्र सिद्ध हो जाय तो मन्त्रज्ञ साधक फूले हुये कमलों से दशांश होम करे । ऐसा करने से सभी लोग उसके वश में हो जाते हैं । तिल मिश्रित तण्डुल के होम से श्री की प्राप्ति होती है । घी विमिश्रित मोदक द्वारा होम से राजा युद्धभूमि में विजय प्राप्त करता है ॥ ७५ ॥

**मधुत्रयेण हवनं वशं नयति पार्थिवान् ।**
**भक्ष्यभोज्यादिकं सर्वं हुत्वाऽभीष्टानि साधयेत् ॥ ७६ ॥**

**मधुत्रयेण पयोमधुघृतेन । भक्ष्यभोज्यादिकमिति । भक्ष्यं लड्डुकादि । भोज्यमन्नादि । आदिशब्देन लेह्यचोष्यादिकं गृह्यते । तत्र लेह्यं रसालादि । तल्लक्षणं सूपशास्त्रे—**

**अर्द्धाढकं सुचिरपर्युषितस्य दध्नः खण्डस्य षोडश पलानि शशिप्रभस्य ।**
**सर्पिः पलं मधु पलं मरिचं द्विकर्षं शुण्ठीपलार्द्धमपि चार्द्धपलं चतुर्णाम् ॥**
**शक्लोपले ललनया मृदुपाणिघृष्टा कर्पूरपूरसुरभीकृतभाण्डसंस्था ।**
**एषा वृकोदरकृता सरसा रसाला या स्वादिता भगवता मधुसूदनेन ॥ इति ।**

चतुर्णां त्वगेलापत्रकेसराणाम् अर्द्धपलमिति मिलित्वा । तन्त्रान्तरोक्तमस्य यन्त्रं लिख्यते ।

वक्ष्ये महासिद्धिकरं हि यन्त्रं भूर्जस्य पत्रे पशुरोचनाक्तैः ।
दूर्वाङ्कुरैर्भूगृहयुग्मशक्तौ संलिख्य साध्यं विरिसंपुटं च ॥
कोणेषु मन्त्रं श्रुतिशोऽवशिष्टं तेनापि नाम्नाऽप्यथ वेष्टयित्वा ।
संलिख्य यन्त्रं च गणाधिराजमावाह्य चाभ्यर्च्य च गन्धपुष्पैः ॥
संजप्य तद्धारणतश्च नित्यं वशं प्रयात्यस्य जगत् समस्तम् ॥ इति ।

प्रथममन्त्रे श्रुतिश इति त्रिशः । अन्त्यकोणे द्वयम् । द्वितीयमन्त्रे श्रुतिः कर्णस्तेन द्विश इत्यर्थः । तदुक्तम्—

वकाररेफावपि लोचनाढ्यौ पुनस्तथोद्धृत्य गणात्पतीति ।
सर्वं समुच्चार्य च मे वशः स्यात् मकारमायुक्तमतो नयेति ॥

शब्दाच्छिरः स्यात् । इति । तृतीयमन्त्रे श्रुतिशश्चतुर्द्धा । अत्र मध्यगतशक्तिस्तु मन्त्रबाह्या । अन्त्ये दले एकमक्षरं लिखेत् ॥ ७६ ॥

त्रिमधु का होम राजाओं को वश में करने वाला होता है । भक्ष्य भोज्यादि पदार्थों का हवन होता के समस्त संकल्प को पूरा करता है ॥ ७६ ॥

### शक्तिगणपतिमन्त्रः

**शक्तिरुद्धं निजं बीजं महागणपतिं वदेत् ।**
**ङेऽन्तमग्निवधूः प्रोक्तो मन्त्रोऽयं द्वादशाक्षरः ॥ ७७ ॥**

### ऋष्यादिकथनम्

**गणकः स्यादृषिश्छन्दो गायत्री निवृदादिका ।**
**उदिता देवता तन्त्रे नाम्ना शक्तिगणाधिपः ।**
**व्यस्तैः समस्तैर्मन्त्रस्य पदैरङ्गानि कल्पयेत् ॥ ७८ ॥**

शक्तिगणपतिमन्त्रमाह शक्तीति । निजं बीजं गं । ङेऽन्तमित्यस्य पश्चात्तनेन सम्बन्धः । ह्रीँ गं ह्रीँ महागणपतये स्वाहा । गं बीजं स्वाहा शक्तिः । व्यस्तैरिति । मन्त्रस्य पञ्चभिः पदैः पञ्चाङ्गानि सर्वेण षष्ठम् ॥ ७७-७८ ॥

अब **अन्य महागणपति मन्त्र का उद्धार** कहते हैं—शक्ति (ह्रीँ) संपुटित 'ग' बीज के बाद 'महागणपतये स्वाहा' लिखना चाहिए । यह १२ अक्षरों का गणपति का मन्त्र है । इस प्रकार 'ह्रीँ गं ह्रीँ महागणपतये स्वाहा' इस द्वादश अक्षर वाले मन्त्र का उद्धार कहा गया ॥ ७७ ॥

इस मन्त्र के ऋषि गणक हैं, निवृद युक्त गायत्री छन्द है, उदिता देवता हैं, जिन्हें तन्त्र शास्त्र में शक्तिगणाधिप नाम से कहा जाता है । मन्त्र को १. ह्रीँ, २. गं, ३. ह्रीँ, ४. महागणपतये तथा ५. स्वाहा—इस प्रकार पाँच भागों में विभक्त कर तदनन्तर समस्त मूल मन्त्र से षडङ्गन्यास करे ॥ ७८ ॥

शक्तिगणपतिध्यानम्

मुक्तागौरं मदगजमुखं चन्द्रचूडं त्रिनेत्रं
हस्तैः स्वीयैर्दधतमरविन्दाङ्कुशौ रत्नकुम्भम् ।
अङ्कस्थायाः सरसिजरुचः स्वध्वजालम्बिपाणे-
र्देव्या योनौ विनिहितकरं रत्नमौलिं भजामः ॥ ७९ ॥

पुरश्चरणादिकथनम्

लक्षमेकं जपेन्मन्त्रमपूपैस्तद्दशांशतः ।
जुहुयादर्चिते वह्नौ दिनशो देवमर्चयेत् ॥ ८० ॥
प्राक्प्रोक्ते पूजयेत्पीठे प्रागुक्तेनैव वर्त्मना ।
हुत्वेक्षुखण्डैर्मतिमान् राज्यश्रियमवाप्नुयात् ॥ ८१ ॥
नारिकेलफलैस्तद्वद्रम्भापक्वफलैस्ततः ।
वशयत्यखिलं लोकं पृथुकैः शर्करान्वितैः ॥ ८२ ॥
वशं नयति राजानं सक्तुभिर्ब्राह्मणान् शुभैः ।
घृतहोमेन धनवान् जायते नात्र संशयः ॥ ८३ ॥

**ध्याने तु ऊर्ध्वयोर्दक्षवामयोराद्ये । अधोदक्षे रत्नकुम्भः अधोवामो देवीयोनिस्थः । शुण्डादण्डस्तु रत्नकुम्भोपरीति सम्प्रदायः । सरसिजेन दक्षहस्तस्थितेन रुक्यस्याः सा तथा । तद्वामो ध्वजाग्रस्पृक् । प्रागुक्तेनेत्यव्यवहितेन ॥ ७९-८३ ॥**

अब **शक्ति गणपति के ध्यान का प्रकार** कहते हैं—जो मोती के समान गौरवर्ण वाले हैं, जिनके हस्तिमुख से निरन्तर मद स्रावित हो रहा है, जो चन्द्रचूड एवं त्रिनेत्र हैं, जो अपने हाथों में अरविन्द, अंकुश और रत्नकुम्भ धारण किये हुये हैं, जो अपनी गोद में बैठी हुई, ध्वजाग्र का (लिङ्गाग्र) स्पर्श करती हुई, कमल के समान कान्ति वाली पुष्टि नामक भार्या की योनि में अपना एक हाथ डाले हुये हैं ऐसे रत्नमौलीश्वर महागणपति का हम भजन करते हैं ॥ ७९ ॥

उपर्युक्त द्वादशाक्षर मन्त्र का एक लाख जप कर, तदनन्तर अपूप से जलती हुई अग्नि में दशांश होम करे, प्रतिदिन गणपति का पूजन करे ॥ ८० ॥

ऊपर की कही गई विधि के अनुसार ऊपर कहे गये पीठ पर गणपति का पूजन करे और इक्षु खण्ड से प्रतिदिन होम करे तो उसे राज्य श्री की प्राप्ति होती है । नारिकेल के फलों का अथवा पके हुये कदली फलों का होम सभी को वश में करता है । शर्करायुक्त चिउड़ा द्वारा किया गया होम राजा को वश में करता है। उत्तम शुद्ध सत्तुओं का होम ब्राह्मणों को वश में करता है और घृत का होम धन धान्य से युक्त करता है इसमें संशय नहीं ॥ ८१-८३ ॥

मन्त्रान्तरम्

शक्त्या रुद्धं निजं बीजं वशमानय ठद्वयम् ।
ताराद्यो मनुराख्यातो रुद्रसंख्याक्षरान्वितः ॥ ८४ ॥

मन्त्रान्तरमाह शक्त्येति । रुद्रेत्येकादशः । ॐ ह्रीँ गं ह्रीँ वशमानय स्वाहा । गं बीजं स्वाहा शक्तिः ॥ ८४ ॥

शक्ति संपुटित 'गं' बीज, इसके बाद 'वशमानय स्वाहा' इतना पद एवं आदि में प्रणव जोडने पर एकादशाक्षरात्मक गणपति के मन्त्र का उद्धार होता है। इसका स्वरूप—'ॐ ह्रीँ गं ह्रीँ वशमानय स्वाहा' (११) हुआ ॥ ८४ ॥

ऋष्याद्याः पूर्वमुक्ताः स्युरङ्गं मन्त्रपदैर्भवेत् ।
एकेनादौ त्रिभिर्द्वाभ्यां त्रिभिर्द्वाभ्यामनन्तरम् ।
समस्तेनाऽस्त्रमाख्यातं अङ्गक्लृप्तिरियं मता ॥ ८५ ॥

पूर्वमित्यव्यवहितम् । पदान्येवाहं एकेनेति ॥ ८५ ॥

इस मन्त्र के ऋषि छन्द और देवता पूर्वोक्त हैं । मन्त्र का प्रथम भाग ॐ द्वितीय भाग ह्रीँ गं ह्रीँ, तृतीयभाग 'वशं' चौथा भाग 'आनय' पाचवाँभाग स्वाहा, तदनन्तर समस्त मन्त्र से व्यापक न्यास इस प्रकार षडङ्ग कहा गया है ॥ ८५ ॥

हस्तिमुखगणपतिध्यानम्

हस्तैर्बिभ्रतमिक्षुदण्डवरदौ पाशाङ्कुशौ पुष्कर-
स्पृष्टस्वप्रमदावराङ्गमनयाऽऽश्लिष्टं ध्वजाग्रस्पृशा ।
श्यामांग्या विधृताब्जया त्रिनयनं चन्द्रार्द्धचूडं जवा
रक्तं हस्तिमुखं स्मरामि सततं भोगातिलोलं विभुम् ॥ ८६ ॥
लक्षत्रयं जपेन्मन्त्रमिक्षुखण्डैर्दशांशतः ।
अपूपैराज्ययुक्तैर्वा जुहुयान्मन्त्रसिद्धये ॥ ८७ ॥
स्वगुरुं धनधान्याद्यैः प्रीणयेत् प्रीतमानसः ।
पूजा पूर्ववदादिष्टा ततः काम्यानि साधयेत् ॥ ८८ ॥
हुत्वाऽपूपैस्त्रिमध्वक्तैर्वशयेद् भुवि पार्थिवान् ।
चतुर्थ्यां नारिकेलेन महतीं श्रियमश्नुते ॥ ८९ ॥
लवणैर्मधुसंयुक्तैर्वशयेद्वनिताजनम् ।

ध्याने तु वामाधस्ताद्वामोर्ध्वपर्यन्तम् । देवीध्यानं विरिगणपतिध्यानोक्तं ज्ञेयम् । पूर्ववदिति विरिगणपतिवदित्यर्थः ॥ ८६-९० ॥

जो अपने दो हाथों में इक्षुदण्ड एवं वरमुद्रा धारण किये हुये हैं दो हाथों में पाश एवं अंकुश धारण किये हुये हैं । जो अपने पुष्कर (शुण्डाग्र भाग से) अपनी

स्त्री की योनि पकड़े हुये हैं । एक हाथ में कमल धारण करने वाली अन्य हाथ से ध्वज पकड़े हुये श्यामाङ्गी अपनी प्रियता से जो आश्लिष्ट है ऐसे तीन नेत्र वाले, चन्द्रार्ध को अपने मस्तक पर धारण करने वाले, जवा के समान रक्त वर्ण वाले, गजमुख गणपति का मैं स्मरण करता हूँ जो विभु होकर भी भोग के लिये निरन्तर लालायित रहते हैं ॥ ८६ ॥

महागणपति के उपर्युक्त एकादशाक्षर मन्त्र का तीन लाख जप करे । पुनः मन्त्र सिद्धि के लिये उसका दशांश ऊख के टुकड़ों अथवा आज्य युक्त अपूपों से हवन करे ॥ ८७ ॥

तदनन्तर प्रसन्नतापूर्वक अपने गुरु को धन धान्य से संतुष्ट करे, पूजा का प्रकार तो पहले कह आये हैं उसी प्रकार से पूजा करे, फिर अभिलषित कामनाओं की सिद्धि करे ॥ ८८ ॥

त्रिमधुमिश्रित अपूप के होम से साधक पृथ्वी में राजाओं को वश में कर सकता है । यदि चतुर्थी के दिन नारिकेल से होम करता है तो उसे महती श्री की प्राप्ति होती है । मधुसंयुक्त लवण के होम से स्त्रियों को वश में किया जा सकता है ॥ ८९-९० ॥

क्षिप्रप्रसादविघ्नेश्वरमन्त्रः

**संवर्त्तको नेत्रयुतः पार्श्वो वह्नयासनस्थितः ॥ ९० ॥**
**प्रसादनाय हृन्मन्त्रः स्वबीजाद्यो दशाक्षरः ।**

ऋष्यादिकथनम्

**गणको मुनिरस्य स्याद्विराट् छन्द उदाहृतम् ॥ ९१ ॥**
**क्षिप्रप्रसादनो विघ्नो देवताऽस्य समीरिता ।**
**दीर्घयुक्तेन बीजेन षडङ्गानि प्रकल्पयेत् ॥ ९२ ॥**

**क्षिप्रप्रसादमन्त्रमाह संवर्त्तक इति । संवर्त्तः क्षः नेत्रमिकारः तद्युतः । पार्श्वः पकारो वह्न्यासनो रेफासनः । स्वबीजाद्यो गमिति बीजाद्यः गं क्षिप्रप्रसादनाय नमः । श्रीबीजाद्य इति केचित् । गं बीजं आयेति शक्तिः । दीर्घयुक्तेन बीजेनेति आदि-बीजेन ॥ ९०-९२ ॥**

अब **क्षिप्रप्रसाद मन्त्र** को कहते हैं—संवर्त्तक (क्ष), उसमें नेत्र (इकार) की मात्रा, पार्श्व (पकार), जो रेफ आसन पर स्थित हो, इसके बाद 'प्रसादनाय नमः' यह पद उच्चारण करे, पुनः सभी मन्त्रों के आदि में 'गं' इस बीज मन्त्र का उच्चारण करे ।

इसका **स्वरूप** निम्न प्रकार होगा—'गं क्षिप्रप्रसादनाय स्वाहा' यह दशाक्षर मन्त्र हुआ ॥ ९० ॥

इस मन्त्र के गणक ऋषि हैं, विराट् छन्द है, इसके देवता क्षिप्र प्रसाद वाले महाविघ्नेश्वर हैं । दीर्घयुक्त बीज से इसका षडङ्ग करना चाहिए ।

यथा—गां गं हृदयाय नमः, गीं गं शिरसे स्वाहा इत्यादि ॥ ९१-९२ ॥

गजमुखगणेशध्यानम्

**पाशाङ्कुशौ कल्पलतां विषाणं**
**दधत् स्वशुण्डाहितबीजपूरः ।**
**रक्तस्त्रिनेत्रस्तरुणेन्दुमौलि-**
**र्हारोज्ज्वलो हस्तिमुखोऽवताद्वः ॥ ९३ ॥**

**पाशेति । विषाणं दन्तम् । आयुधध्यानं दक्षाद्यूर्ध्वयोराद्ये तदधस्थयोरन्त्ये वामोर्ध्वादि वामाधस्तनं यावत् । इत्येके ॥ ९३ ॥**

अब **गजमुख गणेश मन्त्र के ध्यान का प्रकार** कहते है—पाश, अंकुश, कल्पलता और स्व विषाण धारण किये हुये शुण्डाग्रभाग में बीजपूर लिये रक्त वर्ण की कान्ति से युक्त शरीर वाले, तीन नेत्रों वाले, मस्तक पर पूर्णचन्द्र से विराजित हार से उज्वल गजमुख भगवान् गणेश आप सभी की रक्षा करें ॥ ९३ ॥

**लक्षं जपेज्जपस्याऽन्ते जुहुयादयुतं तिलैः ।**
**समधुत्रितयैर्द्रव्यैरथवाऽष्टाभिरीरितैः ॥ ९४ ॥**

**समधुत्रितयैः पयोमधुघृतसहितैरिति तिलविशेषणम् ।**

**तदुक्तमाचार्यैः— अथ तिलैरयुतं त्रिमधुरसिक्तैर्जुहुयात् । इति ।**

**मधुरत्रितयैरिति पाठे मधुरस्य त्रितयं येष्विति बहुव्रीहिणा नेयम् ॥ ९४ ॥**

उपर्युक्त मन्त्र का एक लाख जप करे । जप के अन्त में तिलों से दस हजार होम करे अथवा त्रिमधुर युक्त पूर्वोक्त अष्टद्रव्यों से होम करे ॥ ९४ ॥

**एकाक्षरोदिते पीठे वक्ष्यमाणेन वर्त्मना ।**
**पूजयेद्गन्धपुष्पाद्यैर्धूपदीपैर्गजाननम् ॥ ९५ ॥**
**अङ्गानि पूर्वमभ्यर्च्य विघ्नानष्टौ यजेत्ततः ।**
**विघ्नं विनायकं वीरं शूरं वरदसंज्ञकम् ॥ ९६ ॥**
**इभवक्त्रं चैकदन्तं लम्बोदरमनन्तरम् ।**
**पत्राग्रेष्वर्चयेत्पश्चाद् ब्राह्म्याद्यास्तदनन्तरम् ॥ ९७ ॥**
**लोकपालांस्तदस्त्राणि विघ्नपूजा समीरिता ।**
**आज्यान्नैर्जुहुयान्नित्यमन्त्रवान् वत्सराद्भवेत् ॥ ९८ ॥**
**पायसान्नेन महतीं श्रियमाप्नोति मानवः ।**
**आज्यहोमेन वशयेत्प्राणिनः सकलान् सुधीः ॥ ९९ ॥**

तदनन्तर एकाक्षर निर्मित पीठ पर आगे कही जाने वाली विधि के अनुसार गन्ध पुष्पादि एवं धूपदीप से गणपति की पूजा करे ॥ ९५ ॥

सर्वप्रथम अङ्गों की पूजा करे तदनन्तर आठ विघ्नेश्वरों की पूजा करे । वे आठ विघ्नेश्वर इस प्रकार हैं—विघ्न, विनायक, वीर, शूर, वरद, इभवक्त्र, एकदन्त और लम्बोदर । इसके बाद पत्र के अग्रभाग में ब्राह्मी आदिकों की (द्र. ६. १७-१८) पूजा करे । इसके बाद लोकपालों की एवं उनके अस्त्रों की पूजा करे । यहाँ तक विघ्न पूजा का वर्णन किया गया ॥ ९६-९८ ॥

यदि साधक इस मन्त्र से आज्य मिश्रित अन्न द्वारा होम करे तो वह एक वर्ष के भीतर ही अन्नवान् हो जाता है ॥ ९८ ॥

मनुष्य इस मन्त्र से खीर का होम करे तो विपुल लक्ष्मी प्राप्त करता है । बहुत क्या कहना ? बुद्धिमान् पुरुष घी के होम से समस्त प्राणियों को वश में कर लेता है ॥ ९९ ॥

**नारिकेलफलं पक्वं लोष्टचर्मसमन्वितम् ।**
**जुहुयात् प्रत्यहं मन्त्री मण्डलात् सिद्धिमाप्नुयात् ॥ १०० ॥**

**लोष्टशब्देन अन्तर्वर्त्तिनारिकेलोपरिभागः तदुपरिभागः त्वग्लक्षणः चर्मशब्दवाच्यः । अष्टधा नारिकेलमित्यस्यापवादः । विधिनाऽमुनेत्यष्टद्रव्यहोमेन ॥ १०० ॥**

गूदा और त्वक् से संयुक्त पके हुये नारिकेल के फल से यदि प्रतिदिन हवन करे तो वह ४९ दिन के भीतर ही सिद्धि प्राप्त कर लेता है ॥ १०० ॥

**जुहुयादष्टभिर्द्रव्यैर्मधुरत्रयसंयुतैः ।**
**वशयेत्पार्थिवान् सर्वान् तत्पत्नीर्विधिनाऽमुना ॥ १०१ ॥**
**दिनादिषु चतुश्चत्वारिंशद्वारैः शुभोदकैः ।**
**तर्पयेद्विघ्नराजस्य मस्तके श्रीप्रसिद्धये ॥ १०२ ॥**

**शुभोदकैरिति अमृतरूपैर्जलैरित्यर्थः ॥ १०१-१०२ ॥**

इस मन्त्र से त्रिमधुर युक्त अष्टद्रव्यों का हवन करे तो सभी राजाओं को वश में कर लेता है, इसी विधि से होम करने पर उसकी पत्नी को भी वश में किया जा सकता है ॥ १०१ ॥

श्री प्राप्ति के लिये इस मन्त्र के द्वारा प्रातः काल में अमृतजल से ४४ बार गणेश जी के मस्तक पर तर्पण करे ॥ १०२ ॥

**तर्पणे ध्यानविशेषः**

**पाशाङ्कुशौ कल्पलतां स्वदन्तं**
**करैर्वहन्तं कनकाद्रिकान्तम् ।**

सोपानपङ्क्त्या दिननाथविम्बा-
दायान्तमम्भोजगतं विचिन्त्य ॥ १०३ ॥
प्रागुक्तमन्त्रसम्प्रोक्तान् प्रयोगान् मनुनाऽमुना।
तैरस्मिन्नथवा प्रोक्तान् कुर्यान्मन्त्री विधानवित्॥ १०४ ॥

तर्पणे तु ध्यानविशेषमाह पाशेति । सोपानपङ्क्त्या राजतया । दिननाथविम्बात् सूर्यमण्डलात् । आयान्तं जले इति शेषः । अम्भोजगतं जलस्थकल्पिताम्भोजगतं गणपितं साध्यमूर्ध्नि पुष्करं दत्वा स्थितं विचिन्त्य । एवं ध्यानं कृत्वेत्यर्थः । विघ्नराजस्य मस्तके श्रीप्रसिद्धये शुभोदकैस्तर्पयेदिति सम्बन्धः ।

तदुक्तम्— विम्बादम्बुदवत् समेत्य सवितुः सोपानकै राजतैस्-
तोये तोयजविष्टरैर्धृतलतादन्तं सपाशाङ्कुशम् ।
नासां साध्यनृके निधाय सुधया तद्रन्ध्रनिर्यातया
सिञ्चन्तं पुनरन्वहं गणपतिं स्मृत्वाऽमृतैस्तर्पयेत् ॥ इति ॥

अथ यन्त्रद्वयम्—नामषट्कोणके बीजमध्ये लिखेद्वेष्टयित्वाऽमुनाऽथाङ्गमन्त्रैस्ततः ।
अष्टपत्रे स्वरान् केसरे युग्मशः क्ष्यादिवर्णान्विहीनान् लिखाद्यादिकैः ॥
अग्रतो लिख्य गायत्रिवर्णांस्त्रिशो बाह्यतः कादिभिर्वेष्टयित्वा बहिः ।
भूपुरद्वन्द्वके भूमिबीजं लिखेद्यन्त्रमेतन्मतं सिद्धिसंपत्प्रदम् ॥ इति ॥
अथातो महायन्त्रराजं प्रवक्ष्ये पशोः रोचनासिक्तदूर्वाङ्कुरेण ।
लिखेत् पञ्चपत्रे दशारं सरोजं गणेशस्य बीजं तु तारोदरे तु ॥
ततस्तस्य मध्ये तु रक्षेति नाम्ना दशैतेषु मन्त्रांश्च मन्त्रं लिखेच्च ।
ततो बाह्यतः पाशवर्णाङ्कुशार्णौ लिखित्वा बहिः शक्रविम्बद्वयं तत् ।
लिखित्वा तथा तं गणेशानमस्मिन् समभ्यर्च्य गन्धादिभिः पुष्पजातैः ॥
भुजे कण्ठदेशे वहेत् सर्वरक्षा ततो मङ्गलं नाऽन्यदस्तीह किञ्चित् ॥ इति ।

उक्तञ्च— क्षिप्रप्रसादनः पूर्वो महागणपतिः परम् ।
विघ्नो विनायको वीरः शूरो वरद एव च ॥
इभवक्त्रश्चैकदन्तस्तथा हस्तिमुखः स्मृतः ।
ङेऽन्ता नमोऽन्ता मन्त्राः स्युरेतैस्तर्पणहोमतः ॥
साधयेदीप्सितं मन्त्री । इति ।

तत्कल्पान्मन्त्रमिति मूलं युग्मशः पञ्चपत्रे ॥ १०३-१०४ ॥

जो अपने हाथों में पाश, अंकुश, कल्पलता एवं अपना दाँत पकड़े हुये हैं जिनके शरीर की कान्ति सुवर्णमय सुमेरु पर्वत के समान जगमगा रही है, जो सूर्यमण्डल से निकल कर सोपान पंक्तियों से जलस्थ कमलों में आ रहे हैं और साध्य के मस्तक पर अपना शुण्डाग्र भाग स्थापित कर रहे हैं इस प्रकार के गणपति का ध्यान करे ॥ १०३ ॥

पहले के कहे गये समस्त मन्त्रों के प्रयोग इस मन्त्र से भी करे, अथवा विधानवेत्ता साधक इसमें कहे गये प्रयोगों को उन मन्त्रों में भी करे ॥ १०४ ॥

हेरम्बमन्त्रोद्धारः । ऋष्यादिकथनम्

पञ्चान्तको बिन्दुयुतो वामकर्णविभूषितः।
तारादिहृदयान्तोऽयं हेरम्बमनुरीरितः॥ १०५ ॥
चतुर्वर्णात्मको नृणां चतुर्वर्गफलप्रदः।
षड्दीर्घभाजा बीजेन षडङ्गानि समाचरेत् ॥ १०६ ॥

**हेरम्बमनुमाह पञ्चान्तक इति । पञ्चान्तको गः वामकर्ण ऊकारः । ॐ गूं नमः । गणक ऋषिर्गायत्री छन्दः हेरम्बगणपतिर्देवता । गकारो बीजं बिन्दुः शक्तिः । बीजेनेति । एतन्मन्त्रोक्तेन ॥ १०५-१०६ ॥**

अब **हेरम्ब मन्त्र का उद्धार** कहते हैं—पञ्चान्तक (गकार), उसे बिन्दु और वामकर्ण (दीर्घ उकार) से युक्त करे, आदि में तार प्रणव लगावे और अन्त में 'नमः' शब्द का प्रयोग करे । इस प्रकार हेरम्ब मन्त्र का उद्धार कहा गया । इसका स्वरूप 'ॐ गूँ नमः' (४) हुआ ॥ १०५ ॥

यह चार अक्षर का मन्त्र है जो मनुष्यों को अपने प्रत्येक अक्षरों से चार पुरुषार्थ धर्म, अर्थ, काम एवं मोक्ष रूप फल प्रदान करता है ॥ १०६ ॥

हेरम्बध्यानम् । पुरश्चरणादिकथनम्

मुक्ताकाञ्चननीलकुन्दघुसृणच्छायैस्त्रिनेत्रान्वितै-
र्नागास्यैर्हरिवाहनं शशिधरं हेरम्बमर्कप्रभम् ।
दृप्तं दानमभीतिमोदकरदान् टङ्कं शिरोऽक्षात्मिकां
मालां मुद्गरमङ्कुशं त्रिशिखकं दोर्भिर्दधानं भजे॥ १०७ ॥

**मुक्तेति । घुसृणं कुङ्कुमम् । ऊर्ध्वादिमुक्तादिवर्णाः । नागास्यैर्हस्तिमुखैरुपलक्षितम् । हरिः सिंहः । टङ्कं परशुम् । त्रिशिखं त्रिशूलम् । क्वचिदङ्कुशं च त्रिशिखमिति पाठः । तत्र ह्वेत्राष्टासंयुता व्यस्तेत्यनेन चकारस्य लघुता । अतीव्रप्रयत्नोच्चारणेन । तेन न छन्दोभङ्गः । आयुधध्यानं दक्षवामयोरधस्थयोः वराभये तदूर्ध्वोर्ध्वस्थयोरन्यानि एवमन्तम् । क्वचिद् दृप्तमित्यत्र कुम्भमिति पाठः । तदा कुम्भः शुण्डाग्रे । दृप्तमिति पाठे तु मोदकोपरि शुण्डादण्ड इति ज्ञेयम् । केचिन् मुद्गरमित्यत्र पन्नगमिति पठन्ति । तदुक्तम्—**

**वन्दे दोर्भिर्दधानं जपवलयभुजे साङ्कुशे मोदकाभी-**
**टङ्कानुद्यत्कपालं भुजगवररदान् स्वर्णकुम्भाढ्यशुण्डम् ।**
**सिंहस्थं पञ्चवक्त्रं त्रिनयनमरुणं दिव्यवस्त्रोरुभूषं**
**हेरम्बाख्यं महान्तं गणपतिमखिलस्वार्थदं प्रार्थयेऽहम् ॥इति॥१०७॥**

अब हेरम्ब के **ध्यान का प्रकार** कहते हैं—मोती, सोना, नील, कुन्द एवं कुंकुम के समान कान्ति वाले तीन नेत्रों से युक्त अपने हाथी के मुखों से दिखाई पड़ने वाले सिंहवाहन पूर्ण चन्द्रमा को धारण करने वाले सूर्य के समान तेजस्वी

मोदक समूहों पर अपना शुण्डाग्र दण्ड धारण किये हुये हाथों में १. वर, २. अभय, ३. मोदक, ४. दन्त, ५. परशु, ६. शिर (कपाल), ७. अक्षमाला, ८. मुद्गर, ९. अंकुश और १०. त्रिशूल धारण करने वाले गणपति का मैं भजन करता हूँ ॥ १०७ ॥

**लक्षत्रयं जपेन्मन्त्रं दशांशं जुहुयात्तिलैः ।**
**तीव्रादिपूजिते पीठे देवं हेरम्बमर्चयेत् ॥ १०८ ॥**

**तीव्रादिपूजित इत्यनेन पीठमन्त्रस्याऽन्यत्वं सूचयति ॥ १०८ ॥**

साधक उपर्युक्त मन्त्र का तीन लाख जप करे । तिल से उसका दशांश हवन करे । तत्पश्चात् जिसमें तीव्रादि की पूजा हुई है ऐसे पीठ पर भगवान् हेरम्ब का पूजन करे ॥ १०८ ॥

**आसनमन्त्रः**

**प्रणवः कवचद्वन्द्वं महासिंहाय गां ततः ।**
**हेरम्बेति पदं पश्चादासनाय हृदन्वितः ॥ १०९ ॥**

**तमेवाह प्रणव इति । कवचद्वन्द्वं हुं हुं । गामिति स्वरूपम् ॥ १०९ ॥**

प्रणव (ॐकार), कवच द्वन्द्व (हुँ हुँ), तदनन्तर 'महासिंहाय गां हेरम्ब' इतना पद, पश्चात् 'आसनाय नमः' इतना कहे । इस प्रकार 'ॐ हुँ हुँ महासिंहाय गां हेरम्ब आसनाय नमः' यह आसनदान का मन्त्र होगा ॥ १०९ ॥

**अयमासनमन्त्रः स्यात्प्रदद्यादमुनाऽऽसनम् ।**
**तारादिविघ्नबीजेन मूर्त्तिं तस्य प्रकल्पयेत् ।**
**आवाह्य पूजयेत् तस्यामङ्गावरणसंयुतम् ॥ ११० ॥**
**बाह्ये लोकेश्वराः पूज्या वज्रादीनि ततः परम् ।**
**एवमभ्यर्चयेन्नित्यं साधयेत् स्वमनीषितान् ॥ १११ ॥**

**तारादीति । नमो रहितेन मूलमन्त्रेणेत्यर्थः ॥ ११०-१११ ॥**

अतः इसी मन्त्र से हेरम्ब को आसन प्रदान करे । फिर नमो रहित विघ्न बीज (ॐ गूँ) मन्त्र से मूर्त्ति की कल्पना करे । तदनन्तर उसी मूर्त्ति में अङ्गावरण युक्त देवी का आवाहन करे ॥ ११० ॥

आसन से बाहर लोकेश्वरों का, उसके पश्चात् उनके वज्रादि आयुधों का पूजन करे । इस प्रकार साधक नित्य गणपति का पूजन करे तो वह अपनी कामनायें प्राप्त कर सकता है ॥ १११ ॥

**मोदकैर्जुहुयात् षष्ठ्यामष्टम्यां कृशरैस्तथा ।**
**चतुर्दशीदिनेऽपूपैर्जुहुयाद्वाञ्छिताप्तये ॥ ११२ ॥**

**एभिर्द्रव्यैः प्रजुहुयान्मन्त्री पर्वदिनेष्वपि।**
**साधयेत्सकलान् कामान् प्रयत्नेनैव साधकः॥ ११३ ॥**

षष्ठ्यामित्युभयत्र पक्षे । एवमग्रेऽपि । कृशरैर्मिश्रैस्तिलतण्डुलैः । एभिर्मोदककृशरापूपैः । पर्वदिने पूर्णिमामावस्ययोः ॥ ११२-११३ ॥

अपनी कामना पूर्त्ति के लिये षष्ठी को मोदक द्वारा एवं अष्टमी को मिले हुये तिल तण्डुलों से हवन करे और चतुर्द्दशी को अपूप से होम करे ॥ ११२ ॥

मन्त्रज्ञ साधक यदि पर्व दिन (अर्थात् पूर्णिमा, अमावस्या) में भी इन्हीं मन्त्रों से होम करे तो इस प्रकार के प्रयत्न से वह अपने समस्त कामनाओं को पूर्ण कर लेता है ॥ ११३ ॥

धारणमन्त्रम् । मालामन्त्रः

**अम्भोजं प्रथमं लिखेद्वसुदलं मध्ये स्वबीजान्तरे**
**साध्याख्यां बहिरङ्गमन्त्रविलसत्किञ्जल्कसंशोभितम् ।**
**पत्राणामुदरे विभज्य मुनिशो मालामनुं शेषितान्**
**षड्वर्णांश्चरमे दले परिवृतं शक्त्या शकारेण च ॥ ११४ ॥**

धारणयन्त्रमाह अम्भोजमिति । मध्ये अष्टदलकर्णिकायाम् । स्वबीजान्तरे एतन्मन्त्रबीजमध्ये । साध्याख्यां साधककर्मसहितामिति ज्ञेयम् । बहिरिति कर्णिकायाः। अङ्गमन्त्रेति । पूजावदग्रे नेत्रम् । मुनिशः सप्तधा । मालामनुं वक्ष्यमाणम् । चरमे अष्टमे । शक्त्या शकारेण चेत्यावृत्तिद्वयम् ॥ ११४ ॥

अष्टदल का कमल निर्माण कर उसके मध्य में 'गं' इस बीज से संपुटित साध्यनाम एवं उसका कार्य लिखे, पुनः उसके बाहर अङ्ग मन्त्रों को लिखकर केशरों को सुशोभित करे । तदनन्तर अष्टपत्रों पर आगे (१३. ११६-११९) कहे जाने वाले ५५ अक्षरों के माला मन्त्र को सात भागों में विभक्त कर आदि के सात पत्रों पर सात सात अक्षर, किन्तु आठवें पत्र पर शेष ६ अक्षरों को लिखे, उन्हें शक्ति (ह्रीँ) तथा शकार से परिवेष्टित (संपुटित) कर देवे ॥ ११४ ॥

**रोचनामदकाश्मीरैर्भूर्जपत्रे विलिख्य तत् ।**
**वेष्टितं श्वेतसूत्रेण लोहैस्त्रिभिरपि क्रमात् ।**
**धारयेद्बाहुना यन्त्रं सर्वान् कामानवाप्नुयात् ॥ ११५ ॥**

मदो गजमदः । त्रिभिर्लोहैः । षष्ठपटलोक्तैः । क्रमादिति । ताम्ररजतसुवर्णैः ॥ ११५ ॥

यह मन्त्र भोजपत्र पर गोरोचन, गजमद या केशर से लिखे, उसे सफेद सूत्र से परिवेष्टित करे । तदनन्तर त्रिलौह, सुवर्ण, रजत एवं ताम्र के बने हुये यन्त्र में रखकर बाहु में धारण करे तो सभी कामनायें पूर्ण होती हैं ॥ ११५ ॥

शक्त्यङ्कुशं ध्रुवान्ते स्यात् स्वबीजं हृदयं ततः ।
सर्वविघ्नाधिपायाऽन्ते ङेऽन्तं सर्वार्थसिद्धिदम् ॥ ११६ ॥
प्रवदेत् सर्वदुःखप्रशमनायपदं ततः ।
एह्येहि भगवन् सर्वा आपदः स्तम्भयद्वयम् ॥ ११७ ॥
भुवनेशीं स्वबीजं गां नतिः पावकवल्लभा ।
पुनरङ्कुशमायान्तं पञ्चपञ्चाशदक्षरः ॥ ११८ ॥
मालामन्त्रोऽयममुना प्रयोगान् साधयेत् सुधीः ।

मालामन्त्रमाह शक्तीति । स्वबीजं मन्त्रस्थबीजम् । भुवनेशीस्वबीजं भुवनेश्याः स्वस्य च बीजं ह्रीँ गूँ । गामिति स्वरूपम् । पञ्चपञ्चाशदक्षर इत्युक्तेः शमनाय एह्येहीति न सन्धिः । ॐ ह्रीँ क्रों गूं नमः सव्रविघ्नाधिपाय सर्वार्थसिद्धिदाय सव्रदुःखप्रशमनाय एह्येहि भगवन् सर्वा आपदः स्तम्भय सतम्भय ह्रीँ गूं गां नम् स्वाहा क्रों ह्रीँ । अमुना प्रयोगान् साधयेदित्यनेनास्य स्वातन्त्र्येण मन्त्रत्वमप्युक्तम् । तद्विधानं यथा । अस्य अमितं छन्दः हेरम्बगणपतिवत् सर्वं ज्ञेयम् ॥ ११६-११९ ॥

अब **माला मन्त्र का उद्धार** कहते हैं—शक्ति (ह्रीँ), अंकुश (क्रोँ), इसके आदि में ॐ, तदनन्तर स्वबीज (गूँ), पुनः नमः पद पश्चात् 'सर्वविघ्नाधिपाय सर्वार्थसिद्धिदाय सर्वदुःख प्रशमनाय एह्येहि भगवन्' इतना पद, तदनन्तर 'सर्वाः आपदः' यह पद, फिर 'स्तम्भय' पद को दो बार, इसके बाद भुवनेशी (ह्रीँ), फिर स्वबीज 'गूँ' तदनन्तर 'गां नमः स्वाहा', पुनः अंकुश (क्रोँ), पश्चात् माया (ह्रीँ)—इस प्रकार ५५ अक्षरों का यह माला मन्त्र उद्धृत किया गया ।

**विमर्श**—इसका स्वरूप निम्न प्रकार से होगा—'ॐ ह्रीँ क्लीँ गूं नमः सर्वविघ्नाधिपाय सर्वार्थसिद्धिदाय सर्वदुःखप्रशमनाय एह्येहि भगवन् सर्वा आपदः स्तम्भय ह्रीँ गूं गां नमः स्वाहा क्रों ह्रीँ' ॥ ११६-११८ ॥

ऊपर में कहा गया मन्त्र 'माला मन्त्र' है । बुद्धिमान् साधक इस माला मन्त्र से प्रयोग सिद्ध करे ॥ ११९ ॥

सुब्रह्मण्यमन्त्रः

तारं खड्गीश्वरः कूर्मो निःस्वरो णान्त ईरितः ॥ ११९ ॥
भुवे नतिः सप्तवर्णः सुब्रह्मण्यात्मको मनुः ।
वह्निबीजेन षड्दीर्घयुक्तेनाऽङ्गक्रिया मता ॥ १२० ॥

सुब्रह्मण्यमन्त्रमाह तारमिति । खड्गीशो वः कूर्मश्चकारः । निस्वरः स्वरहीनो व्यञ्जनमिति यावत् । णान्तः तः । भुवे स्वरूपम् । अत्र सन्धौ तकारे दकार इति ज्ञेयम्।

तदुक्तं प्रयोगसारे— वचद्भुवे नमो मन्त्रः सुब्रह्मण्याधिदैवतः । इति ।

नारायणीये तु— तारं वचन्नाभिजले शिवयोनियुते नमः । इति ।

**अग्निगायत्र्यौ ऋषिछन्दसी । प्रणवो बीजं वकारः शक्तिः । केचन प्रणवपुटितमाहुः । अन्ये तु मायाद्यमाहुः ।**

**तदुक्तं प्रयोगसारे— प्रशस्तः प्रणवाद्यन्तःशक्तिपूर्वं परे जगुः । इति ।**

**वह्निबीजेनेति रेफेण ॥ ११९-१२० ॥**

अब **सुब्रह्मण्यात्मक मन्त्र** कहते हैं—तार (ॐ), खड्गीश्वर (वकार), कूर्म (चकार), बिना स्वर के (व्यञ्जनमात्र) णान्त (तकार), तदनन्तर 'भुवे नमः' यह पद इस प्रकार सात अक्षरों वाले सुब्रह्मण्यात्मक मन्त्र का उद्धार कहा गया ।

**विमर्श**—इसका स्वरूप 'ॐ वचद् भुवे नमः' हुआ । षड्दीर्घयुक्त वह्नि बीज (रेफ) से अङ्गन्यास करना चाहिए ।

यथा—'रां' हृदयाय नमः, 'रीं' शिरसे स्वाहा, इत्यादि ॥ १२० ॥

सुब्रह्मण्यध्यानम्

**सिन्दूरारुणकान्तिमिन्दुवदनं केयूरहारादिभि-**
**र्दिव्यैराभरणैर्विभूषिततनुं स्वर्गस्य सौख्यप्रदम् ।**
**अम्भोजाभयशक्तिकुक्कुटधरं रक्ताङ्गरागांशुकं**
**सुब्रह्मण्यमुपास्महे प्रणमतां भीतिप्रणाशोद्यतम् ॥ १२१ ॥**

पुरश्चरणादिकथनम्

**लक्षमेकं जपेन्मन्त्रं साज्येन हविषा ततः ।**
**दशांशं जुहुयादन्ते ब्राह्मणानपि भोजयेत् ॥ १२२ ॥**

**ध्यानं तु दक्षाद्यूर्ध्वयोराद्ये तदधस्थयोरन्त्ये । सुब्रह्मण्य इति कार्त्तिकेयनाम । तदुक्तं हयशीर्षपञ्चरात्रे—**

**अभयं वामहस्तेस्यादम्भोजं दक्षिणे करे ।**
**कुक्कुटं वामहस्ते तु शक्तिं दक्षिणतो न्यसेत् ॥**

**चतुर्भुजः समाख्यात एकवक्त्रोऽग्निजस्त्वयम् । इति ॥ १२१-१२२ ॥**

**सुब्रह्मण्य देव का ध्यान**—जिनके शरीर की कान्ति सिन्दूर के समान रक्तवर्ण है, मुख पर चन्द्रमा एवं सर्वाङ्ग केयूरहार आदि दिव्याभरणों से भूषित हैं, जो प्रसन्न होने पर स्वर्ग के सुखों को देने वाले हैं, जिनके हाथों में कमल, अभय, शक्ति तथा कुक्कुट शोभित हो रहा है, जिनका वस्त्र तथा अङ्गराग दोनों ही रक्त हैं, ऐसे भक्तों के भय को विनाश करने में सतत तत्पर सुब्रह्मण्य देव की मैं उपासना करता हूँ ॥ १२१ ॥

इस मन्त्र का एक लाख जप करना चाहिए, फिर आज्य युक्त छवि से दशांश होम कर ब्राह्मणों को भोजन कराना चाहिए ॥ १२२ ॥

**धर्मादिकल्पिते पीठे वह्निमण्डलपश्चिमे ।**
**पूजयेद्विधिना देवमुपचारैर्यथोदितैः ॥ १२३ ॥**

वह्निमण्डलपश्चिम इति । अनेन चतुर्थपटलोक्तवह्निमण्डलान्तमेव पूजा । पीठ-शक्तिपीठपूजा नास्ति । अन्यथा वह्निमण्डलपश्चिम इति न वदेत् । चतुर्थपटल एवोक्तत्वात् ॥ १२३ ॥

तदनन्तर वह्निमण्डल की पूजा के पश्चात् धर्मादि परिकल्पित पीठ पर विधि के अनुसार शास्त्रोक्त उपचारों द्वारा देवाधिदेव गणपति का पूजन करे ॥ १२३ ॥

**केसरेष्वङ्गपूजा स्यात्पत्रमध्यगतानिमान् ।**
**जयन्ताख्यमग्निवेश्यं कृत्तिकापुत्रसंज्ञकम् ॥ १२४ ॥**
**अनन्तरं भूतपतिं सेनान्यं गुहसंज्ञकम् ।**
**हेमशूलं विशालाक्षं शक्तिवज्र(शूल)करान् यजेत् ॥१२५॥**
**दिग्दलाग्रेषु पूर्वादि देवसेनापतिं पुनः ।**
**विद्यां मेधां ततो वज्रं कोणस्थान् शक्तिकुक्कुटौ ॥ १२६॥**
**मयूरं द्वीपमभ्यर्चेद् बाह्ये लोकेश्वरान् पुनः ।**
**अस्त्राणि तेषामन्ते स्युः सुब्रह्मण्यार्चनेरिता ॥ १२७ ॥**
**स्वादुभिर्भक्ष्यभोज्याद्यैः षष्ठ्यां संप्रीणयेद्विभुम् ।**
**पूजयेद्देवताबुद्ध्या कुमारान् ब्रह्मचारिणः ॥ १२८ ॥**
**सन्तानं विजयं वीर्यं रक्षामायुः श्रियं यशः ।**
**प्रदद्यात् साधकस्याशु सुब्रह्मण्यः सुरार्चितः॥ १२९ ॥**

विधिनेत्युक्तं विधिमाह केसरेष्विति ।

तस्य नैवेद्यांशदानं धूर्त्तसेनाय ॥ १२४-१२९ ॥

केशरों में अङ्गपूजा के पश्चात् अष्टपत्रों के मध्य में १. जयन्त, २. अग्निवेश्य, ३. कृत्तिकापुत्र, ४. भूतपति, ५. सेनापति, ६. ग्रह संज्ञक, ७. हेमशूल एवं ८. विशालाक्ष—इन आठों देवों की पूजा करे । जो अपने हाथों में शक्ति एवं वज्रधारण किये हुये हैं ॥ १२४-१२५ ॥

दिशाओं में रहने वाले दलों के पूर्वादि में देवसेनापति, विद्या, मेधा, तदनन्तर वज्र की पूजा करे । कोण में वहाँ रहने वाले शक्ति, कुक्कुट, मयूर एवं द्वीप की अर्चना करे । वाह्य में पुनः लोकपालों की उनके अन्त में लोकपालों के वज्रादि अस्त्रों की पूजा करे । यहाँ तक हमने सुब्रह्मण्य गणपति की पूजा का विधान कहा ॥ १२६-१२७ ॥

षष्ठी तिथि को स्वादिष्ट भक्ष्य भोज्यादि पदार्थों के नैवेद्य द्वारा सुब्रह्मण्य प्रभु को प्रसन्न करे । फिर कुमार (अविवाहित) ब्रह्मचारियों की पूजा उनमें देवता बुद्धि

करते हुये करनी चाहिए । यह सुब्रह्मण्य देव नामक गणपति देवताओं से भी अर्चित हैं । वे अपने सेवकों को सन्तान, विजय, वीर्य, रक्षा, आयु, महाश्री एवं यश प्रदान करते हैं ॥ १२८-१२९ ॥

**जपतर्पणपूजादौ विघ्नेशं सर्वसिद्धिदम् ।**
**प्रीणयेदनया स्तुत्या प्राप्तये सर्वसम्पदाम् ॥ १३० ॥**

**गणेशस्तुतिः**

**ॐङ्कारमाद्यं प्रवदन्ति सन्तो**
**वाचः श्रुतीनामपि यं गृणन्ति ।**
**गजाननं देवगणानताङ्घ्रिं**
**भजेऽहमर्द्धेन्दुकृतावतंसम् ॥ १३१ ॥**

**गणेशस्तुतिमारभते ॐकारमिति । अपिर्भिन्नक्रमः । सन्तः यं श्रुतीनामाद्यं ॐकारं वाचोऽप्याद्यं गृणन्ति । शब्दब्रह्मस्वरूपमिति यावत् ॥ १३०-१३१ ॥**

जप, तर्पण एवं पूजादि कार्यों में सर्वसिद्धि प्रदाता, विघ्नेश्वर को सभी प्रकार की संपत्ति की प्राप्ति के लिये नीचे कही गई (१३. १३१-१५१) स्तुतियों से प्रसन्न करना चाहिए ॥ १३० ॥

अब **गणपति की स्तुति** का आरम्भ करते हैं—सज्जन लोग जिन्हें श्रुतियों का आद्य एवं वाणी का आद्य ॐकार स्वरूप कहते हैं, जिनके पद् पद्मों में देवता लोग प्रणत रहते हैं ऐसे अर्द्धेन्दु के भूषण वाले गजानन देव का मैं भजन करता हूँ ॥ १३१ ॥

**पादारविन्दार्चनतत्पराणां**
**संसारदावानलभङ्गदक्षम् ।**
**निरन्तरं निर्गतदानतोयैस्-**
**तं नौमि विघ्नेश्वरमम्बुदाभम् ॥ १३२ ॥**

**कृताङ्गरागं नवकुङ्कुमेन**
**मत्तालिमालां मदपङ्कलग्नाम् ।**
**निवारयन्तं निजकर्णतालैः**
**को विस्मरेत् पुत्रमनङ्गशत्रोः ॥ १३३ ॥**

**शम्भोर्जटाजूटनिवासिगङ्गा-**
**जलं समादाय कराम्बुजेन ।**
**लीलाभिराराच्छिवमर्चयन्तं**
**गजाननं भक्तियुता भजन्ति ॥ १३४ ॥**

**कराम्बुजेन शुण्डाग्रेण । आरात् समीपे । भक्तियुता भजन्ति इत्यत्र तं शरणं भजामि इत्यपि क्वचित् पाठः ॥ १३२-१३४ ॥**

जो अपने पादारविन्द की सेवा में लगे हुये भक्तजनों के सांसारिक त्रिताप रूप दावानल के विनाश में अत्यन्त दक्ष हैं, ऐसे निरन्तर मदजल की वर्षा करने वाले विघ्नेश्वर रूप जलद को मैं नमस्कार करता हूँ ॥ १३२ ॥

जिन्होंने अपने शरीर में नवकुंकुम से विरचित अङ्गराग का अनुलेपन किया हुआ है तथा जो मदपंक में लगे रहने वाले मत्त भ्रमरों समूहों को अपने कर्ण तालों से दूर भगा रहे हैं ऐसे कामशत्रु सदाशिव के पुत्र को कौन विस्मृत कर सकता है ? ॥ १३३ ॥

सदाशिव के जटाजूट में रहने वाले गङ्गाजल को जो अपने कमल के समान शुण्डाग्र भाग में लेकर पुनः उन्हीं सदाशिव के चरणाम्बुजों में विकीर्ण कर पूजा कर रहे हैं । ऐसे गजानन को भक्ति से युक्त पुण्यशाली लोग भजन करते हैं ॥ १३४ ॥

**कुमारभुक्तौ पुनरात्महेतोः**
**पयोधरौ पर्वतराजपुत्र्याः ।**
**प्रक्षालयन्तं करशीकरेण**
**मौग्ध्येन तं नागमुखं भजामि ॥ १३५ ॥**

**मौग्ध्येनेति । देवीस्तनौ सदानुच्छिष्टाविति भावः ॥ १३५ ॥**

जो पर्वतराजपुत्री भगवती पार्वती के कार्त्तिकेय द्वारा पीये गये स्तनतटों को अपने पीने के लिये शुण्डाग्र से मूर्खतावश प्रक्षालित कर रहे है ऐसे गजानन का मैं भजन करता हूँ । (पार्वती के स्तनतट सर्वदा ही पावन हैं, उन्हें करशीकर द्वारा धोने का प्रयत्न गणेशजी की मूर्खता ही है) ॥ १३५ ॥

**त्वया समुद्धृत्य गजास्य हस्तं**
**ये शीकराः पुष्कररन्ध्रमुक्ताः ।**
**व्योमाङ्गणे ते विचरन्ति ताराः**
**कालात्मना मौक्तिकतुल्यभासः ॥ १३६ ॥**

**भो गजास्य कालात्मना त्वया हस्तमुद्धृत्य ये शीकराः पुष्कररन्ध्रमुक्ताः । पुष्करं करिहस्ताग्र इति नामलिङ्गानुशासने । ते तारा विचरन्तीति गम्योत्प्रेक्षा शीकरा न भवन्ति । तारा इत्युत्प्रेक्षा इत्यर्थः ॥ १३६ ॥**

हे गजानन ! आपने अपने शुण्डाग्र को ऊपर उठा कर अपने पुष्कर के छिद्रों से जो जलकण आकाशमण्डल में उछाल दिये वे अब आकाश मण्डल में काल की महिमा से मोती के समान प्रकाश करते हुये तारों के रूप में विचरण कर रहे हैं ॥ १३६ ॥

क्रीडारते वारिनिधी गजास्ये
वेलामतिक्रामति वारिपूरे ।
कल्पावसानं प्रविचिन्त्य देवाः
कैलासनाथं स्तुतिभिः स्तुवन्ति ॥ १३७ ॥

स्तुवन्तीति अन्यकृतः कल्पावसाने न्यस्य स्तुत्यसङ्गतिरित्यलङ्कारः । वस्तुतस्तु अनन्यनिवारणीयत्वेन तत्स्तुतिः ॥ १३७ ॥

जब गजानन समुद्र में क्रीडा करते हैं, उस समय वह अपने लहरों के द्वारा समस्त तटबन्धों की मर्यादा को नष्ट करने लगता है, देवगण यह देख कल्पान्त में प्रलय होने के भ्रम से भयाक्रान्त हो स्तुतियों के द्वारा कैलासपति सदाशिव की स्तुति करने लगते हैं ॥ १३७ ॥

नागानने नागकृतोत्तरीये
क्रीडारते देवकुमारसङ्घैः ।
त्वयि क्षणं कालगतिं विहाय
तौ प्रापतुः कन्दुकताभनेन्दू ॥ १३८ ॥

नागकृतोत्तरीये सर्पोत्तरीये त्वयि क्रीडारत इति सम्बन्धः । कालगतिं कालपारवश्यं त्यक्त्वा ॥ १३८ ॥

गजचर्म का उत्तरीय धारण कर जब गजानन देवकुमार समूहों के साथ कन्दुक क्रीडा में निरत होते हैं उस समय सूर्य एवं चन्द्रमा दोनों ही कालगति को भूलकर उनके कन्दुकता को प्राप्त हो जाते हैं ॥ १३८ ॥

मदोल्लसत्पञ्चमुखैरजस्र-
मध्यापयन्तं सकलागमार्थान् ।
देवानृषीन् भक्तजनैकमित्रं
हेरम्बमर्कारुणमाश्रयामि ॥ १३९ ॥
पादाम्बुजाभ्यामतिवामनाभ्यां
कृतार्थयन्तं कृपया धरित्रीम् ।
अकारणं कारणमाप्तवाचां
तं नागवक्त्रं न जहाति चेतः ॥ १४० ॥

वामनाभ्यां मुखछन्दाद्यपेक्षया ह्रस्वता । एतेनास्य ह्रस्वावेवाङ्घ्री ध्येयाविति सूचितम् । आप्तवाचां वेदानां कारणं प्रवर्त्तयितारम् ॥ १३९-१४० ॥

मद चूते हुये अपने पाँच मुखों से समस्त देवताओं और ऋषियों को संपूर्ण आगमों का अध्यापन करते हुये भक्त जनों के एकमात्र मित्र, रक्तवर्ण की कान्ति से युक्त हेरम्ब का मैं आश्रय ग्रहण करता हूँ ॥ १३९ ॥

जो गजानन अपने छोटे छोटे पादाम्बुजों से चलते हुये कृपापूर्वक धरित्री को कृतार्थ कर रहे हैं, जिनका कोई कारण नहीं है किन्तु जो समस्त श्रुतियों के एक मात्र कारण हैं ऐसे गजानन को एक क्षण के लिये भी मेरा चित्त नहीं छोड़ना चाहता ॥ १४० ॥

**येनाऽर्पितं सत्यवतीसुताय**
**पुराणमालिख्य विषाणकोट्या।**
**तं चन्द्रमौलेस्तनयं तपोभि-**
**रवाप्यमानन्दघनं भजामि ॥ १४१ ॥**
**पदं स्तुतीनामपदं श्रुतीनां**
**लीलावतारं परमात्ममूर्त्तेः।**
**नागात्मको वा पुरुषात्मको वे-**
**त्यभेद्यमाद्यं भज विघ्नराजम् ॥ १४२ ॥**

**पुराणं भारताख्यम् । पदं स्थानम् । अपदमगोचरम् । क्वचित् स्तुतिश्रुतिपदयोः व्यत्ययः । परमात्ममूर्त्तेरित्यत्र परमष्टेति केचित पठन्ति ॥ १४१-१४२ ॥**

जिन्होंने अपने विषाण के अग्रभाग से महाभारत लिखकर सत्यवती पुत्र श्री व्यास जी को समर्पित किया, उन सदाशिव के पुत्र आनन्दघन स्वरूप गणपति को तपों द्वारा प्राप्त कर मैं उनका भजन करता हूँ ॥ १४१ ॥

जो सर्वथा स्तुतियों के पद होते हुये भी श्रुतियों के द्वारा सर्वथा अगोचर हैं जो परमात्मा सदाशिव के लीलावतार हैं, ऐसे मुख से नागात्मक किन्तु अन्य शरीर से पुरुषात्मक अथवा इन दोनों से सर्वथा अभिन्न आद्य विघ्नराज का भजन करो ॥ १४२ ॥

**पाशाङ्कुशौ भग्नरदं त्वभीष्टं**
**करैर्दधानं कररन्ध्रमुक्तैः।**
**मुक्ताफलाभैः पृथुसीकरौघैः**
**सिञ्चन्तमङ्गं शिवयोर्भजामि ॥ १४३ ॥**

**शिवयोः पित्रोः ॥ १४३ ॥**

जो अपने हाथों में पाश, अंकुश, टूटा हुआ विषाण और वरमुद्रा धारण किये हुये हैं और अपने शुण्ड के छिद्रों से मुक्ताफल के समान मोटे-मोटे जल कणों से साम्ब सदाशिव के अङ्गों को प्रसिञ्चित कर रहे हैं मैं ऐसे गजानन का भजन करता हूँ ॥ १४३ ॥

**अनेकमेकं गजमेकदन्तं**
**चैतन्यरूपं जगदादिबीजम् ।**

**ब्रह्मेति यं ब्रह्मविदो वदन्ति**
**तं शम्भुसूनुं शरणं भजामि॥ १४४ ॥**
**स्वाङ्कस्थिताया निजवल्लभाया**
**मुखाम्बुजालोकनलोलनेत्रम् ।**
**स्मेराननाब्जं मदवैभवेन**
**रुद्धं भजे विश्वविमोहनं तम्॥ १४५ ॥**

**अनेकमिच्छया । एकं तत्त्वतो ॥ १४४-१४५ ॥**

जो तत्त्वतः एक होकर भी स्वेच्छया अनेक रूप हो जाया करते हैं, चैतन्यरूप एवं जगत् के आदि बीजरूप हैं, ब्रह्मवेत्ता जिन्हें ब्रह्मा कहते हैं, मैं उन शम्भु पुत्र गजानन की शरण में जाता हूँ ॥ १४४ ॥

जिनके नेत्र स्वांक स्थित स्वप्रिया के मुख कमल के सौन्दर्यावलोकन के लिये अत्यन्त लालायित एवं चञ्चल हो रहे हैं, मुख कमल का विकास मदातिरेक के कारण पूर्ण रूप से खिल नहीं पाता ऐसे विश्व विमोहन गणपति का मैं भजन करता हूँ ॥ १४५ ॥

**ये पूर्वमाराध्य गजाननं त्वां**
**शास्त्राणि सर्वाणि पठन्ति तेषाम् ।**
**त्वत्तो न चाऽन्यत् प्रतिपाद्यमेतैस्-**
**तदस्ति चेत् सर्वमसत्यकल्पम्॥ १४६ ॥**

**ये पठन्ति तेषां पुरुषाणां त्वत्तोऽन्यत् प्रतिपाद्यं ज्ञेयं नास्ति । चकारात्तेषां शास्त्राणामपि त्वत्तोऽन्यत् प्रतिपाद्यं नास्तीत्यर्थः । यतः सर्वेषु शास्त्रेष्वात्मनः प्रतिपादितत्वात् एतैः शास्त्रैस्त्वदन्यत्प्रतिपाद्यते चेत् तत् सर्वमसत्यकल्पम् । तानि शास्त्राण्येव न भवन्तीत्यर्थः । बौद्धशास्त्रादिवत् ॥ १४६ ॥**

हे गजानन ! जो लोग प्रथम आपकी आराधना कर तदनन्तर सभी शास्त्रों का पठन करते हैं उन लोगों को आपके अतिरिक्त और कुछ भी ज्ञेय नहीं रह जाता, यदि कुछ ज्ञेय है तो वह सब असत्यपूर्ण है ॥ १४६ ॥

**हिरण्यगर्भं जगदीशितारं**
**कविं पुराणं रविमण्डलस्थम् ।**
**गजाननं यं प्रविशन्ति सन्तस्-**
**तत्कालयोगैस्तमहं प्रपद्ये ॥ १४७ ॥**

**तत्कालयोगैरिति हिरण्यगर्भाद्यवतारो गणेश एवैको लीलया भवति । परमात्मरूपत्वादित्यर्थः ॥ १४७ ॥**

जो हिरण्यगर्भ हैं, जगन्नियन्ता हैं, कवि, पुराण एवं रविमण्डल में स्थित हैं,

ऐसे गजानन में कालयोग से सभी सज्जन प्रविष्ट होते हैं । अतः मैं उन्हीं गजानन की शरण में जाता हूँ ॥ १४७ ॥

**वेदान्तगीतं पुरुषं भजेऽह-**
**मात्मानमानन्दघनं हृदिस्थम् ।**
**गजाननं यन्महसा जनानां**
**विघ्नान्धकारो विलयं प्रयाति ॥ १४८ ॥**

**तदेव रूपमाह वेदान्तगीतमिति ॥ १४८ ॥**

वेदान्तों से प्रतिपाद्य उस गजानन स्वरूप परम पुरुष का मैं भजन करता हूँ जो परमात्म स्वरूप हैं आनन्दघन हैं सबके हृदय में साक्षिरूपतया विद्यमान हैं और जिनके तेज से मनुष्यों का समस्त विघ्नान्धकार प्रणष्ट हो जाता है ॥ १४८ ॥

**शम्भोः समालोक्य जटाकलापे**
**शशाङ्कखण्डं निजपुष्करेण ।**
**स्वभग्नदन्तं प्रविचिन्त्य मौग्ध्या-**
**दाकृष्टुकामः श्रियमातनोतु ॥ १४९ ॥**

**मौग्ध्यादिति लीलया । तस्य कदाचिदपि ज्ञानभ्रंशाभावात् ॥ १४९ ॥**

अपने टूटे हुये दाँत पर विचार करते हुये (पुनः उन्हें संस्थापनार्थ) जो लीलापूर्वक अपने शुण्डाग्र द्वारा सदाशिव के जटाकलापस्थित चन्द्रमा को देखकर उसे अपनी ओर खींचने की कामना करते हैं ऐसे गजानन हम सभी को श्री प्रदान करें ॥ १४९ ॥

**विघ्नार्गलानां विनिपातनार्थं**
**यं नारिकेलैः कदलीफलाद्यैः ।**
**प्रतारयन्तो मदवारणास्यं**
**प्रापुर्नरोऽभीष्टमहं भजे तम् ॥ १५० ॥**
**यज्ञैरनेकैर्बहुभिस्तपोभि-**
**राराध्यमाद्यं गजराजवक्त्रम् ।**
**स्तुत्याऽनया ये विधिना स्तुवन्ति**
**ते सर्वलक्ष्मीनिधयो भवन्ति ॥ १५१ ॥**

**॥ इति श्रीलक्ष्मणदेशिकेन्द्रविरचिते शारदातिलके**
**त्रयोदशः पटलः समाप्तः ॥ १३ ॥**

विघ्नेत्यादिना भक्तवात्सल्यमुक्तम् । नर इति बहुवचनम् ॥ १५०-१५१ ॥

**॥ इति श्रीराघवभट्टविरचित-शारदातिलकटीकायां सत्सम्प्रदायकृतव्याख्यायां पदार्थादर्शाभिख्यायां त्रयोदशः पटलः ॥ १३ ॥**



विघ्न रूपी अर्गला को प्रणष्ट करने के लिये मनुष्य जिन गणपति को नारिकेल एवं कदलीफलों से प्रतारित करते हुये प्राप्त करते हैं ऐसे अभीष्टदाता गणपति का मैं भजन करता हूँ ॥ १५० ॥

जो आद्य गजानन अनेक यज्ञों एवं उग्रतपों के द्वारा सबके आराध्य हैं, मैं उनकी शरण में जाता हूँ । जो लोग विधिपूर्वक इस स्तुति से गणपति की स्तुति करते हैं वे लक्ष्मी के निधान हो जाते हैं ॥ १५१ ॥

**॥ इस प्रकार शारदातिलक के तेरहवें पटल की डॉ० सुधाकर मालवीय कृत हिन्दी व्याख्या पूर्ण हुई ॥ १३ ॥**



# अथ चतुर्दशः पटलः

## अथ सौरप्रकरणम्

**अथोच्यते चन्द्रमसो मनुः सर्वसमृद्धिदः।**
**खड्गीशस्थो भृगुर्बिन्दुर्मनुस्वरसमन्वितः॥ १ ॥**

सोमषडक्षरमन्त्रः

**सोमाय हृदयान्तोऽयं मन्त्रः प्रोक्तः षडक्षरः।**

ऋष्यादिकथनम्

**ऋषिरुक्तो भृगुः छन्दः पङ्क्तिः सोमोऽस्य देवता ॥ २ ॥**
**दीर्घभाजा स्वबीजेन मनोरङ्गक्रिया मता ॥ ३ ॥**

अथ क्रमप्राप्तान् सौरमन्त्रान् वक्तुकामस्तस्य तेजस्त्रयात्मकत्वादाद्यन्तयोः सोमाग्न्योर्मन्त्रान् वदन् तन्मन्त्रान् वक्तुमुपक्रमते अथेति। सर्वसमृद्धिद इति विनियोगोक्तिः। मन्त्रमुद्धरति खड्गीशेति। खड्गीशो वः तत्स्थो भृगुः सः मनुस्वरः चतुर्दशस्वर औ बिन्दुश्च तद्युक्तः तेन स्वौं।

प्रयोगसारे तु—सवौबिन्द्वादिसोमाय नमो मन्त्रः प्रकीर्त्तितः। इति।

क्वचिद्बिन्दुमानो स्वर इति पाठः। नारायणीये च आचार्यैश्च स्वौमित्युद्धृतम्। अन्ये तु इदं मृत्युञ्जयबीजम्। एतदाद्यो ग्रन्थकृताऽनुद्धत इति वदन्ति। स्वौं बीजं। आयेति शक्तिः। पद्मपादाचार्यैर्मेति शक्तिरुद्धृता। अन्यत्र तु—

ऋषिरत्रिर्विराट्छन्दो बीजमाद्यमुदाहृतम्। नमः शक्तिः। इति।

प्रणवप्रासादसंपुट इति केचन। श्रीकामैः श्रीपुटः कार्य इत्यपरे। स्वबीजेनेति। मन्त्राद्यबीजेन स्व इति बीजेन वा ॥ १-३ ॥

अब क्रम प्राप्त सौरमन्त्र कहने की इच्छा से ग्रन्थकार सूर्य के तेज त्रयात्मक अर्थात् सोम, सूर्य और अग्न्यात्मक होने से सर्वप्रथम सोम के मन्त्रों को कहने का उपक्रम करते हैं—

अब मैं संपूर्ण समृद्धियों के देने वाले 'चन्द्रमा' के मन्त्र को कहता हूँ। खड्गीश (व) है युक्त जिससे ऐसा भृगु (सकार), उस पर अनुस्वार (औकार) जो बिन्दु युक्त हो इस प्रकार 'स्वौं' यह चन्द्रमा के मन्त्र का प्रथम अक्षर हुआ। इसके

बाद 'सोमाय नमः' यह पद कहे । इस प्रकार 'स्वौं सोमाय नमः' यह षडक्षर चन्द्रमा का मन्त्र हुआ । इस मन्त्र के भृगु ऋषि हैं, पङ्क्ति छन्द है और सोम इसके देवता हैं ॥ १-२ ॥

दीर्घयुक्त स्वबीज लगाकर उसी मन्त्र के द्वारा षडङ्गन्यास करे । यथा—'स्वां हृदयाय नमः', 'स्वीं शिरसे स्वाहा', 'स्वूं शिखायै वौषट्' इत्यादि ॥ ३ ॥

### चन्द्रध्यानम्

**कर्पूरस्फटिकावदातमनिशं पूर्णेन्दुविम्बाननं**
**मुक्तादामविभूषितेन वपुषा निर्मूलयन्तं तमः।**
**हस्ताभ्यां कुमुदं वरं च दधतं नीलालकोद्भासितं**
**स्वस्याऽङ्कस्थमृगाङ्कोदिताश्रयगुणं सोमं सुधाब्धिं भजे ॥ ४ ॥**

**ध्यानमाह कर्पूरेति । दक्षिणवामाभ्यां कुमुदवरे । क्वचिद्धनमिति पाठः । धनं निधिपात्रम् । अङ्कस्थमृगात् उदित उत्पन्नः आश्रयगुणो नीलिमा यत्र । तेनाङ्कोऽपि ध्येय इत्यर्थः ।**

**तदुक्तम्—भवतु भवदभीष्टद्योतिताङ्कः शशाङ्कः । इति । अथवा स्वस्याङ्कस्थ-मृगेणोदित आश्रयगुणः सेवनीयगुणो येन कलङ्कित्वापवादे सत्यप्यत्यागात् । सुधाब्धिं अमृतस्वरूपम् ॥ ४ ॥**

अब **सोम का ध्यान** कहते हैं—जिनके शरीर का वर्ण कपूर एवं स्फटिक के समान स्वच्छ है और मुख पूर्णचन्द्र के विम्ब जैसा मनोहर है जो मोती की माला पहने हुये अपने धवल शरीर से सारे अन्धकार को दूर भगा रहे हैं, अपने दोनों हाथों में कुमुद तथा वर मुद्रा धारण किये हुये हैं, नीले और कुञ्चित केश से जो उद्भासित हो रहे हैं और अपने अंक में मृगरूप कलंक को धारण कर जो अपनी महत्ता के गुण का परिचय दे रहे हैं ऐसे अमृत स्वरूप चन्द्रमा का मैं भजन करता हूँ ॥ ४ ॥

### पुरश्चरणादिकथनम्

**रसलक्षं जपेन्मन्त्रं साधको विजितेन्द्रियः ।**
**षट्सहस्रं प्रजुहुयात्पायसेन ससर्पिषा ॥ ५ ॥**

**रसलक्षं षड्लक्षम् । साधकसत्तम इत्यनेन विद्यामन्त्रस्य दशांशजप उक्तः । प्रयोगेऽपि तज्जपः । तत्र धनलाभे श्रीयोगः कवित्वे वाग्भवयोगः सुखादौ प्रणवयोग इति पद्मपादाचार्याः ॥ ५ ॥**

साधक इस प्रकार चन्द्र मन्त्र का इन्द्रियों को वश में रखते हुये छः लाख जप करे । पश्चात् घृतयुक्त पायस से छः हजार आहुति प्रदान करे ॥ ५ ॥

**सोमान्तं पूजिते पीठे पूजयेद्रोहिणीपतिम् ।**
**अङ्गानि केसरेषु स्युस्तद्देव्यः पत्रमध्यगाः ॥ ६ ॥**

रोहिणी कृत्तिका भूयो रेवती भरणी पुनः ।
रात्रिदार्द्रा ततो ज्योतिः कला हारसमप्रभाः ॥ ७ ॥
सितमाल्याम्बरधरा मुक्ताहारविभूषणाः ।
पयोधरभराक्रान्ता रचिताञ्जलयः शुभाः ॥ ८ ॥
वल्लभासक्तमनसो मदविभ्रममन्थराः ।
समभ्यर्च्याः सरोजाक्ष्यश्चन्द्रबिम्बनिभाननाः ॥ ९ ॥

सोमान्तमिति । चतुर्थपटले तस्मिन् सूर्येन्दुपावकानिति अनेन अग्निमण्डलान्ता पूजोक्ता । अत्र तु सूर्याग्निमण्डले सम्पूज्य अन्ते सोममण्डलं पूजनीयम् । कश्चित् सोमान्तमिति वह्निमण्डले पूजा न कर्त्तव्येत्याह । तन्न । असाम्प्रदायिकत्वात् । मन्त्रदेवप्रकाशिकादिबहुग्रन्थविरोधाच्च । पीठक्लृप्तौ तु सोमान्तमिति । प्रपञ्चसारपद्यव्याख्याने पद्मपादाचार्यैः पीठार्चने सूर्यवह्निमण्डलार्चनं कृत्वा ततः सोममण्डलमभ्यर्च्य तत्र भगवन्तमावाहयेदित्युक्तम् । पूजिते पीठ इति । पीठनवशक्तिपूजापूर्वकं पीठमन्त्रेणेति शेषः । ताश्च पीठमन्त्रा अपि तन्त्रान्तरोक्ता ज्ञेयाः। तद्यथा—

अमृता तारका ज्योत्स्ना विमला व्यापिनी तथा ।
चित्रा च कृत्तिका कान्तिः श्रवणा नव शक्तयः ॥
अमृतान्ते कलात्मने संवित्पीठाय ते नमः । इति ।

पद्मपादाचार्यैरन्याः पीठशक्तय उक्ताः ॥

राका कुमुद्वती नन्दा सुधा सञ्जीवनी क्षमा ।
आप्यायनी चन्द्रिका च ह्लादिनी नव शक्तयः ॥
पूर्वादिक्रमतो मन्त्री नत्यन्ताः पूजयेदिमाः ॥ इति ।

कलेति शक्तिनाम । 'कलामीशदलेषु' इत्युक्तेः । क्वचित्करालीति शक्तिनाम । 'कराली च क्रमादिमाः' इत्युक्तेः । हारसमप्रभाः श्वेता इत्यर्थः ॥ ६-९ ॥

सूर्य और अग्निमण्डल के पूजनोपरान्त अन्त में सोमपीठ पर रोहिणीपति की पूजा करे । केशरों पर अङ्गपूजा करे तथा पत्रों के मध्य में सोम की पत्नियों का पूजन करे ॥ ६ ॥

रोहणी, कृत्तिका रेवती, भरणी, रात्रिदा, आर्द्रा, ज्योति एवं कला—ये चन्द्रमा की शक्तियाँ हैं सभी हार के समान उज्ज्वल वर्ण वाली हैं ॥ ७ ॥

सभी श्वेत वर्ण की माला तथा श्वेत वर्ण का वस्त्र धारण की हुई हैं । सभी मोतियों के हार से युक्त पयोधर के भार से झुकी हैं । और अपने पति को प्रसन्न करने के लिये अञ्जलि बाँधे खड़ी हैं ॥ ८ ॥

सभी का मन अपने पति चन्द्रमा में लगा हुआ है । सभी मद के विभ्रम से अलसाई हुई हैं । चन्द्रबिम्ब के समान मनोहर मुखों वाली कमलनयनी इन सभी शक्तियों की पूजा करनी चाहिए ॥ ९ ॥

आदित्यादिग्रहध्यानम्

आदित्यमङ्गलबुधमन्दवाक्पतिराहवः ।
शुक्रकेतुयुताः पूज्या दलाग्रेषु ग्रहा इमे ॥ १० ॥
स्वस्ववर्णाम्बरोपेताः स्वनामाद्यर्णबीजकाः ।
रक्तारुणश्वेतनीलपीतधूम्रसितासिताः ॥ ११ ॥

आदित्येति । मङ्गलः अङ्गारकः । मन्दः शनैश्चरः । वाक्पतिर्बृहस्पतिः । तत्र चतुर्दिक्षु आदित्यादयः अग्निकोणादिषु भौमादयः पूज्या इति ज्ञेयम् । यदाहुः—

पूर्वदक्षिणपाश्चात्यसौम्यपत्राग्रके क्रमात् ।
रविश्चान्द्रिर्गुरुः शुक्रः सम्पूज्याः साधकैरमी ॥
आग्नेयादिषु कोणेषु भौममन्दाहिकेतवः । इति ।

स्वनाम्नाम् आद्यर्णाः आद्यक्षराणि सबिन्दूनि बीजानि येषां ते । एतेन ग्रहाणां मन्त्राः सूचिताः। ग्रहयज्ञाङ्गत्वेन तत्र सूर्यमन्त्रं वक्ष्यति। अन्येषां सप्तानाम् अं अङ्गारकाय नम इत्यादयो ज्ञेयाः । अत्राग्रे च पूजायामपि अयमेव प्रयोगोऽनुसन्धेयः ॥ १०-११ ॥

इसके बाद दल के अग्रभाग में आदित्य, मङ्गल, बुध, शनि, बृहस्पति राहु, शुक्र तथा केतु इन नवग्रहों की पूजा करनी चाहिए । उनमें आदित्य, बुध, बृहस्पति और शुक्र की चारों दिशाओं में तथा मङ्गलादि की अग्नि कोणादि में पूजा करनी चाहिए ॥ १० ॥

इन ग्रहों का जैसा वर्ण है उसी प्रकार का वस्त्र धारण किये हुये हैं, इनके नाम के आद्यक्षर ही इनके बीज मन्त्र हैं । इनमें आदित्य का वर्ण रक्त, मङ्गल का अरुण, बुध का श्वेत, शनि का नील, बृहस्पति का पीत, राहु का धूम्र, शुक्र का स्वच्छ तथा केतु का वर्ण काला है ॥ ११ ॥

वामोरुन्यस्ततद्धस्ता दक्षिणेन धृताभयाः ।
अम्बुजाढ्यकरो भानुर्दंष्ट्राभीममुखः शनिः ॥ १२ ॥
राहुर्विकृतवक्त्रः स्यात्केतुः स्याद्विहिताञ्जलिः ।
लोकपालास्ततः पूज्या वज्राद्यस्त्रैः सह क्रमात् ॥ १३ ॥

प्रयोगाः

एवं सिद्धमनुर्मन्त्री सम्पदां वसतिर्भवेत् ।
हृत्पुण्डरीकमध्यस्थं तारहारविभूषितम् ॥ १४ ॥
तारापतिं स्मरन्मन्त्री त्रिसहस्रं मनुं जपेत् ।
राज्यैश्वर्यं दरिद्रोऽपि प्राप्नुयाद्वत्सरान्तरे ॥ १५ ॥

वामोर्विति सूर्यकेतू हित्वा अन्येषां ध्यानम् । सूर्यस्तु पद्मकरः केतुस्तु विहिताञ्जलिरित्युक्तेः । तदुक्तं महाकपिलपञ्चरात्रे—

आदित्यो द्विभुजः प्रोक्तो युवा लक्षणलक्षितः ।
हस्तयोः पङ्कजे तस्य कार्ये स्कन्धमिते शुभे ॥

केतोस्तु—खड्गदीपधरं कृष्णमथवा विहिताञ्जलिम् । इति ।

प्रयोगसारेऽपि— पूर्वार्द्धकायः पिङ्गभ्रू रक्तनेत्रः कृताञ्जलिः । इति ।

तार उज्ज्वलो हारो मुक्ताहारः । तारापतिमिति नायिकासहितम् ॥ १२-१५ ॥

इन लोगों ने अपना बायाँ हाथ बायें ऊरू पर तथा दाहिने हाथ से अभयमुद्रा धारण किया है । सूर्य के हाथ में कमल है, किन्तु शनि अपने दाँतों से भयानक मुख वाले हैं ॥ १२ ॥

राहु का मुख टेढ़ा है, केतु हाथ जोड़े हुये हैं । इसके बाद वज्रादि अस्त्रों के सहित लोकपालों की पूजा करनी चाहिए ॥ १३ ॥

**प्रयोग**—यदि मन्त्रज्ञ साधक ऊपर कही गई विधि से सोम मन्त्र को सिद्ध कर ले तो वह संपत्तियों का पात्र बन जाता है । हृत्पुण्डरीक के मध्य में उज्ज्वल मोतियों की माला धारण किये हुये चन्द्रमा का ध्यान करके तीन सहस्र चन्द्र का मन्त्र जपने से दरिद्र भी एक संवत्सर के भीतर ही राज्य का ऐश्वर्य प्राप्त कर लेता है ॥ १४-१५ ॥

**पूर्वोक्तसंख्यं प्रजपेत् शशिनं मूर्ध्नि चिन्तयन्।**
**रोगापमृत्युदुःखानि जित्वा वर्षशतं वसेत् ॥ १६ ॥**
**ब्रह्मचर्यरतः शुद्धश्चतुर्लक्षमिमं जपेत् ।**
**निधानं भूगतं सद्यः प्राप्नुयाद्यत्नवर्जितः ॥ १७ ॥**
**जितेन्द्रियो जपेन्मन्त्रं पौर्णमास्यां विशेषतः ।**
**भवेत्सौभाग्यनिलयः सम्पदामपरो निधिः ॥ १८ ॥**
**घोरान् ज्वरान् शिरोरोगानभिचारनुपद्रवान् ।**
**विषाणामपि सङ्घातं नाशयेन्मनुनाऽमुना ॥ १९ ॥**
**पौर्णमास्यां निराहारो दद्यादर्घं विधूदये ।**
**प्राक्प्रत्यगायतं कुर्याद् भूतले मण्डलत्रयम् ॥ २० ॥**
**निषण्णः पश्चिमे मन्त्री मण्डले विहितासने ।**
**मध्यस्थे स्थापयेत्पश्चात् पूजाद्रव्याण्यशेषतः ॥ २१ ॥**

पूर्वोक्तसंख्यमिति त्रिसहस्रम् । शुद्ध इत्यनेन त्रिषवणस्नायी पयआहारश्चेत्युक्तम् ।

यत्प्रयोगसारे— कृत्वा त्रिषवणं स्नानं क्षीराहारो निरन्तरः ।
जपेच्चत्वारि लक्षाणि विधानं लभते ध्रुवम् ॥ इति ॥

मण्डलत्रयमिति । गोमयादिना ॥ १६-२१ ॥

यदि शिर प्रदेशस्थ सहस्रार चक्र में चन्द्र का ध्यान करते हुये उपर्युक्त मन्त्र का तीन सहस्र प्रतिदिन जप करे तो वह रोग, अपमृत्यु एवं सभी प्रकार के दु:खों को दूर कर सैकड़ों वर्ष पर्यन्त जीता है ॥ १६ ॥

ब्रह्मचर्य व्रत का पालन करते हुये त्रिकाल स्नान एवं दुग्धाहार करते हुये शुद्ध बुद्धि से चार लाख इस चन्द्र मन्त्र का जप करे तो वह बिना प्रयत्न के पृथ्वी में गडे हुये खजाने को सद्यः प्राप्त कर लेता है ॥ १७ ॥

जितेन्द्रिय हो पौर्णमासी के दिन विशेष रूप से इस मन्त्र का जप करे तो वह सौभाग्यशाली तो हो ही जाता है, दूसरा कुबेर भी बन जाता है ॥ १८ ॥

साधक इस मन्त्र के जप के प्रभाव से घोर से घोर ज्वर, शिरोरोग, मारणादि उपद्रव तथा विषों के सङ्घात को शीघ्रनष्ट करने में समर्थ हो जाता है ॥ १९ ॥

पौर्णमासी को निराहार रह कर चन्द्रोदय होने पर अर्घ्यदान करे । इसकी विधि इस प्रकार है—पृथ्वी पर पूर्व से पश्चिम दिशा की ओर तीन मण्डल का निर्माण करे ॥ २० ॥

उसमें मन्त्रवेत्ता पश्चिम मण्डल पर रखे गये आसन पर बैठे तथा मध्य मण्डल में समस्त पूजा द्रव्यों को स्थापित करे ॥ २१ ॥

**अन्यस्मिन्मण्डले सोममर्चयित्वाऽम्बुजान्विते ।**
**राजतं चषकं तत्र स्थापयेत् पुरतः सुधीः ॥ २२ ॥**
**गोदुग्धेन समापूर्य स्पृष्ट्वा तं प्रजपेन्मनुम् ।**
**अष्टोत्तरशतं पश्चाद्विद्यामन्त्रेण देशिकः ॥ २३ ॥**
**दद्यादर्घं शशाङ्काय सर्वकार्यार्थसिद्धये ।**
**अनेन विधिना कुर्यात्प्रतिमासम्मतन्द्रितः ॥ २४ ॥**
**षणमासाभ्यन्तरे सिद्धिं साधकेन्द्रः समश्नुते ।**
**श्रियमप्युर्जितान् पुत्रान् सौभाग्यं पुष्कलं यशः ॥ २५ ॥**
**कन्यामिष्टामवाप्नोति कन्याऽपि वरमाप्नुयात् ।**

अन्यस्मिन् पौरस्त्ये । सोममर्चयित्वेति पीठादिन्यासं विधाय आत्मयागं कृत्वा बहिः पीठे पङ्कजान्विते अर्चयित्वेत्यर्थः । उक्तञ्च—

आसीनः पश्चिमे मध्यसंस्थे द्रव्याणि विन्यसेत् ।
आत्मानं सकलीकृत्याऽभ्यर्च्याचान्तः सुरेश्वरः ॥
पूर्वस्मिन् पङ्कजोपेते मण्डले सोममर्चयेत् ॥ इति ।

सुधीरित्यनेनैतदुक्तं भवति । विलोममन्त्रं जपन् पूरणं कर्पूरादीनां कुमुदादीनां च पुष्पाणां तत्र निक्षेप इति । यदाहुः—

संस्थाप्य राजतं तत्र चषकं परिपूरयेत् ।
विलोमं प्रजपन् मन्त्रं गव्येन पयसा सुधीः ॥

क्षिपेच्च तत्र कर्पूरशीतकाश्मीरकाक्षतान् ।
कुशग्रन्थियवांश्चैव पुष्पाण्येतानि चादरात् ॥
कुमुदेन्दीवरस्वर्णकेतकीनवमल्लिकाः ।
चम्पकानि यथालाभं शतपत्राणि च क्षिपेत् ॥
आवाहयेच्चन्द्रबिम्बान्निजाद्वा हृदयाद्विभुम् ।
एवं समावाह्य गन्धपुष्पाद्यैरर्चयेद्विधुम् ॥ इति ॥

निराहारोऽर्घ्यं दद्यादित्युक्तत्वादर्घ्यदानादनन्तरं रात्रौ भोजनमनिषिद्धम् । कन्या पीत्यनेनैवमादिषु स्त्रियां अप्यधिकार इत्युक्तं भवति ॥ २२-२६ ॥

तीसरे मण्डल पर कमलयुक्त आसन पर बैठे हुये चन्द्र देवता की पूजा कर वहीं उनके आगे रजत निर्मित पान पात्र स्थापित करे ॥ २२ ॥

उस पात्र में गाय का दूध भर देवे । फिर उसका स्पर्श करते हुये १०८ बार उक्त मन्त्र का जप करे तदनन्तर वक्ष्यमाण विद्या मन्त्र से चन्द्रमा को अर्घ्य प्रदान करे ॥ २३ ॥

सभी कार्यों की सिद्धि के लिये चन्द्रमा को अर्घ्य प्रदान करना चाहिए इस प्रकार विधि (द्र. १४. २०-२४) प्रत्येक मास की पूर्णिमा को सावधानी से एकाग्रचित्त हो करना चाहिए ॥ २४ ॥

ऐसा करने से साधकेन्द्र ६ महीने के भीतर ही अपना मनोभिलषित पूरा कर लेता है । बहुत क्या वह उत्कृष्ट लक्ष्मी पुत्र, सौभाग्य पुष्कल यश और मनोनुकूला कन्या प्राप्त करता है । कन्या भी ऐसा करने से अनुकूल वर प्राप्त करती है ॥ २५-२६ ॥

**बहुना किमिहोक्तेन सर्वं दद्यान्निशापतिः ॥ २६ ॥**

विद्यामन्त्रः

**विद्ये विद्यामालिनि स्याच्चन्द्रिण्यन्ते ततो भवेत् ।**
**पुनश्चन्द्रमुखि स्वाहा विद्यामन्त्र उदाहृतः ॥ २७ ॥**

विद्यामन्त्र उदाहृत इत्यनेनैतदुक्तम् । नवाक्षराद्य एष एव कन्याप्रदानसमर्थ इति। नवाक्षराणि तु । रक्षयुग्मं गजौ प्रोक्त्वा कर्णिनि स्यान्नवाक्षरम् । इति ।

नारायणीये नवाक्षरादिविद्यामन्त्रमुद्धृतम् ।

विलोमान्तरितं मन्त्रं पत्रे लिख्य तदासनः ।
जपेद् द्वादशसाहस्रमेतदेकदिनेन यः ॥
ज्येष्ठामाराध्य शुक्रर्क्षे कन्या तस्याशु दीयते । इति ।

अथ तन्त्रान्तरोक्तं यन्त्रमुच्यते—

चन्द्रं चन्द्रकलाभिरन्विते शशाङ्के नामतारोदरे ।
षट्पत्रे परितो विलिख्य च भृगुर्दन्तेन बिन्द्वङ्कितः ॥

सोमायेति पदं नमः पदयुतं चालिख्य तद्वाह्यतः ।
कादिक्षान्तगतं समर्च्य विधिना कट्यां गले मस्तके ॥
जप्तं बद्धमिदं क्षणेन गरलप्रध्वंसि तत्पुष्टिदम् । इति ॥ २६-२७॥

अब इससे अधिक क्या कहा जा सकता है कि चन्द्रमा प्रसन्न होकर अपने भक्त को सब कुछ प्रदान करते हैं । अब १३. २३ में कहे गये विद्या मन्त्र का प्रतिपादन करते हैं—'विद्ये विद्यामालिनि चन्द्रिणि चन्द्रमुखि स्वाहा' यह विद्या का मन्त्र है ॥ २६-२७ ॥

सूर्यमन्त्रः । ऋष्यादिकथनम्

तारो घृणिर्भृगुः पश्चाद्वामकर्णविभूषितः ।
वह्न्यासनो मरुच्छेषः सनेत्रोऽत्रित्यपश्चिमः ॥ २८ ॥
अष्टाक्षरो मनुः प्रोक्तो भानोरभिमतप्रदः ।
देवनागो[1] मुनिः प्रोक्तो गायत्री छन्द ईरितम् ॥ २९ ॥
आदित्यो देवता प्रोक्तो दृष्टादृष्टफलप्रदः ।
सत्याय हृदयं प्रोक्तं ब्रह्मणे द्विठ ईरितः ॥ ३० ॥
विष्णवे स्याच्छिखा वर्म रुद्राय परिकीर्त्तितम् ।
अग्नये नेत्रमाख्यातं शर्वायाऽस्त्रमुदीरितम् ॥ ३१ ॥
तेजोज्वालामणि हुँफट्स्वाहान्ताः पृथगीरिताः ।
अङ्गमन्त्रान् पुनर्न्यस्येत् पञ्चमूर्त्तीर्यथाक्रमम् ॥ ३२ ॥
आदित्यं विन्यसेन्मूर्ध्नि रविं मुखगतं न्यसेत् ।
हृदये भानुनामानं भास्करं गुह्यदेशतः ॥ ३३ ॥
सूर्यं चरणयोर्न्यस्येत् ह्रस्वैः सद्यादिपञ्चभिः ।
प्रधानमूर्त्तिप्रतिमाः सर्वाभरणभूषिताः ॥ ३४ ॥
मूर्द्धास्यकण्ठहृदयं कुक्षिनाभिध्वजाङ्घ्रिषु ।
मन्त्रवर्णान् न्यसेदष्टौ प्रत्येकं प्रणवादिकान् ।
एवं न्यस्तशरीरोऽसौ चिन्तयेत्तेजसां निधिम् ॥ ३५ ॥

सूर्यमन्त्रमाह तार इति । घृणिरिति स्वरूपम् । भृगुः सः वामकर्ण ऊ तेन विभूषितस्तेन सू । मरुद्यकारो वह्नेः रेफस्यासनः तेन र्यः । शेषः अनन्त आ अत्रिर्दः सनेत्र इकारयुक्तस्तेन दि । त्यपश्चिम इति मन्त्रविशेषणं त्य इत्यन्तमक्षरमित्यर्थः । पश्चिम इत्यनेन ओमन्तोऽपि भवतीति सूचितम् । अभिमतप्रद इत्यनेन विनियोगोक्तिः । अयं मन्त्रः साक्षाच्छ्रुतिपठित इति शूद्रादेरत्र नाधिकारः ।

तदुक्तं तैत्तिरीयशाखायां नारायणीयोपनिषदि—घृणिरिति द्वे अक्षरे सूर्य इति

---

१. भागो इति पाठः शाक्तप्रमोदे ।

त्रीणि आदित्य इति । त्रीणि एतद्वै सावित्रस्याष्टाक्षरं पदं श्रियाभिषिक्तं य एवं वेद श्रिया है वाभिषिच्यत इति ।

केचन श्रीमन्तमाहुः । अन्ये श्रीकामहृल्लेखापुटितं मह्यं लक्ष्मीं प्रयच्छेत्यनेन पल्लवितमाहुः । रं बीजं यं शक्तिः । केचन शक्तिबीजाद्यं श्रीमन्तमाहुः । तन्मते प्रणवो बीजं माया शक्तिः । तदुक्तम्—

श्रीबीजान्तः सम्प्रदाये मूलमन्त्रस्तु याजुषः(मानुषः)।
अयं श्रीकामहृल्लेखासंपुटोऽन्ते प्रयच्छ मे ॥
लक्ष्मीमित्थं पल्लवितः शङ्कराचार्यसम्मतः ।
हृल्लेखापूर्वकोऽन्त श्रीर्विश्वरूपमते स्थितः ॥ इति ।

द्विठः स्वाहा । ईरिता उक्ताः । सत्यायेत्यादयोऽङ्गमन्त्राः पृथक् प्रत्येकमेतदन्ता ज्ञेयाः । तत्र प्रयोगः । सत्याय तेजो ज्वालामणि हुँ फट् स्वाहा । हृदयाय नम इत्यादि । अन्ये तु सत्यायेत्यादिचतुर्थी अविवक्षितेत्याहुः । तेन सत्यतेजो ज्वालामणि हुँ फट् स्वाहा हृदयाय नम इत्यादि प्रयोगः । एष एव साम्प्रदायिकः । अपेक्षितार्थद्योतनिकाकारादिभिस्तथा लिखितत्वात् । अत एव प्रपञ्चसारटीकाकारैः ब्रह्मेत्यत्राकारश्रुतिश्चतुर्थीनिवारणायेति व्याख्यातम् । पुनरित्यनेनाऽष्टाङ्गोऽपि सूचितः । सूत्रमन्त्रषडक्षराणि षडङ्गस्थानेषु षडङ्गवद्विन्यस्य उदरपृष्ठयोर्नमोऽन्तयोर्वर्णद्वयं न्यसेदित्यष्टाङ्गम् । सद्यादीति । ओकारादिविपरीतनपुंसकवर्जितपारिभाषिक पञ्चह्रस्वैः सह यथाक्रमं पञ्चमूर्त्तीर्न्यसेदिति सम्बन्धः । ॐ आदित्याय नमः एं रवये नमः उं भानवे नमः इं भास्कराय नमः अं भ सूर्याय नम इति प्रयोगः । यथाक्रमम् इत्यनेन ऊर्ध्वादिमुखेष्वपि न्यसेदित्युक्तम् । प्रत्येकमिति । तेन ॐ ॐ नमो मूर्ध्नीति प्रयोगः । एवं न्यस्तेत्यनेन नवग्रहन्यासोऽपि सूचितः । स उक्तो मया प्राक् ॥ २८-३५ ॥

अब **सूर्य का मन्त्र** कहते हैं—तार (प्रणव), तदनन्तर घृणि पद, इसके बाद भृगु (स), वह वामकर्ण (ऊ), से विभूषित पश्चात् इसके बाद रेफ के आसन से युक्त मसत् (यकार), फिर शेष (आकार) इसके बाद इकार युक्त 'द' पद, तदनन्तर सबसे अन्तिम 'त्य' पद, इस प्रकार आठ अक्षर वाले सूर्य मन्त्र का उद्धार कहा गया । इसका स्वरूप इस प्रकार है—'ॐ घृणि सूर्य आदित्य' यह सूर्य का अष्टाक्षर मन्त्र समस्त अभिलाषाओं को पूर्ण करने वाला है । इस मन्त्र के देवनाग मुनि हैं और गायत्री छन्द है ॥ २८-२९ ॥

समस्त जगत् को दृष्टादृष्ट फल प्रदान करने वाले आदित्य इसके देवता हैं, तदनन्तर इस प्रकार अङ्गन्यास करे । सत्याय हृदि, ब्रह्मणे स्वाहा शिरसे, विष्णवे शिखायाम्, रुद्राय कवचम्, अग्नये नेत्रयो, शर्वाय अस्त्राय फट् । इस प्रकार अङ्गन्यास कर पुनः आगे कहे जाने वाले मन्त्र के आदि में इसे लगा कर इस प्रकार अङ्गन्यास करे ।

'सत्याय तेजोज्वालामणि हुँ फट्' हृदयाय नमः, 'ब्रह्मणे तेजोज्वालामणि हुँ फट् स्वाहा शिरसे', 'विष्णवे तेजोज्वालामणि हुँ फट् स्वाहा' कवचाय हुँ अग्नये,

'तेजो ज्वालामणि हुँ फट् स्वाहा' इति नेत्रयोः, 'शर्वाय तेजोज्वालामणि हुँ फट् स्वाहा' इत्यस्त्राय फट् ।

इस प्रकार इसका अङ्गन्यास कहा गया । तदनन्तर ह्रस्व वर्ण युक्त आदित्यादि पञ्चमूर्त्ति का भी इस प्रकार न्यास करे । ॐ आदित्याय नमः इति मूर्ध्नि, ऐं रवये नमः इति मुखे, उं भानवे नमः इति हृदये, इं भास्कराय नमः इति गुह्ये, ॐ अं सूर्याय नमः इति चरणयोः—ये सभी प्रधानमूर्त्तियाँ सभी आभरणों से भूषित हैं ॥ ३०-३४ ॥

इसके बाद मूर्धा, मुख, कण्ठ, हृदय, कुक्षि, नाभि, लिङ्ग और चरणों में ऊपर कहे गये सूर्य मन्त्र के ८ अक्षरों से (ॐ घृणि सूर्य आदित्य) न्यास करे । इस प्रकार जब साधक अपने शरीर का न्यास कर लेवे तब संपूर्ण तेजों के निधान भगवान् भास्कर का इस प्रकार ध्यान करे ॥ ३५ ॥

भास्करध्यानम्

**रक्ताब्जयुग्माभयदानहस्तं**
**केयूरहाराङ्गदभूषणाढ्यम् ।**
**माणिक्यमौलिं दिननाथमीडे**
**बन्धूककान्तिं विलसत्त्रिनेत्रम् ॥ ३६ ॥**

**दानं वरम् । आयुधध्यानं वामाद्यूर्ध्वयो रक्ताब्जे तदधस्तनयोरन्ये । अत्र ध्यानानन्तरं कमलबिम्बमुद्रे प्रदर्शनीये । कमलाकृतिमुद्रा तु सौरमुद्रेयमीरिता । इत्युक्तेः ।**

**प्रयोगसारेऽपि— दर्शयेदग्रतस्त्वब्जबिम्बमुद्रे यथोदिते । इति ।**

**तत्रालमुद्रालक्षणं यथा—**

**करौ तु सम्मुखौ कृत्वा संहतावुन्नताङ्गुली ।**
**तलान्तमिलिताङ्गुष्ठौ कुर्यादेषाऽब्जमुद्रिका ॥ इति ॥**

**नारायणीये बिम्बमुद्रालक्षणम्—**

**पद्माकारौ करौ कृत्वा अविश्लिष्टे तु मध्यमे ।**
**अङ्गुल्यौ धारयेत्तस्मिन् बिम्बमुद्रेति सोच्यते ॥ इति ।**

**एते सर्वसौरमन्त्रसाधारणे इति ज्ञेयम् ॥ ३६ ॥**

अब **भगवान् भास्कर का ध्यान** कहते हैं—जिन्होंने अपने चार हाथों में दो लाल कमल, अभय और वरमुद्रा धारण किया है, जो केयूर हार आदि भूषणों से विभूषित हैं, जिनके शिरः प्रदेश में माणिक्य जटित मुकुट शोभा दे रहा है, ऐसे बन्धूक पुष्प के समान कान्ति वाले त्रिनेत्र भगवान् सूर्य को मैं प्रसन्न करता हूँ ॥ ३६ ॥

पुरश्चरणादिकथनम्

**वसुलक्षं जपेन्मन्त्रं समिद्भिः क्षीरशाखिनाम् ।**
**तत्सहस्रं प्रजुहुयात् क्षीराक्ताभिर्जितेन्द्रियः ॥ ३७ ॥**

वसुलक्षमष्टलक्षम् । अत्र विशेषः प्रयोगसारे—

रक्ताम्बरधरो रक्तगन्धमाल्यविभूषितः ।
घृतक्षीरसमायुक्तगुडभक्ताशनो निशि ॥
भैक्षाहारोऽथवा वीतसङ्गः सन्तोषवान् सदा ।
मन्त्रमावर्त्तयेन्नित्यमाराधनपरायणः ॥ इति ।

अन्यः पुरश्चरणसामान्यविधिर्वक्ष्यमाण एवानुसन्धेयः । तत्सहस्रमष्टसहस्रम् ॥ ३७ ॥

**पुरश्चरण**—ऊपर कहे गये सूर्य के अष्टाक्षर मन्त्र का ब्रह्मचर्य धारण कर आठ लाख जप करे और क्षीरी वृक्षों की समिधा जो दूध से भिगोई गई हो उससे आठ हजार हवन करे ॥ ३७ ॥

**पीठस्य क्लृप्तेः प्रथमं दिक्षु मध्ये च संयजेत् ।**
**प्रभूतं विमलं सारं समाराध्यमनन्तरम् ॥ ३८ ॥**

पीठस्य क्लृप्तेः प्रथममिति । मण्डुकादिवेदिकान्तं सम्पूज्य धर्मादिः प्राक्परमसुखान्तान् सम्पूज्य पश्चाद्धर्मादिपूजेति केचन । अन्ये तु धर्मादिस्थाने प्रभूतादिकान् सम्पूज्य मध्ये फलकरूपेण परमसुखं पूजयेत् । धर्माधर्मादिपूजा नास्तीत्याहुः । एतदेव साम्प्रदायिकम् । उक्तञ्च नारायणीये—

पीठाङ्घ्रीन् कल्पयेदेतान् हृदा मध्ये विदिक्षु च । इति ।

एतत् सर्वसूर्यमन्त्रसाधारणम् । दिक्ष्विति सामान्यत उक्तेरत्राग्नेयादिकोणा एव गृह्यन्ते । विदिक् मध्येषु संयजेदिति पाठः । यदाहुराचार्याः—

प्रयजेदथ प्रभूतां विमलां साराह्वयां समाराध्याम् ।
परमसुखामग्न्यादिष्वस्त्रिषु मध्ये च पीठक्लृप्तेः प्राक् ॥ इति ॥

प्रयोगसारेऽपि— ईशानान्तं च विदिक्ष्वेतान् प्रपूजयेत् । इति ॥ ३८ ॥

**परमादिसुखं पीठं स्वबिम्बान्तं प्रकल्पयेत् ।**
**दीप्ता सूक्ष्मा जया भद्रा विभूतिर्विमला पुनः ॥ ३९ ॥**
**अमोघा विद्युता सर्वतोमुखी पीठशक्तयः ।**
**दीप्तदीपशिखाकारा बीजान्यासां विदुः क्रमात् ॥ ४० ॥**

स्वबिम्बान्तमिति । सोमग्निमण्डले सम्पूज्य सूर्यमण्डलं पूजनीयमित्यर्थः । दीप्तेत्यासां ध्यानम् । तदुक्तं प्रयोगसारे—

दीप्तदीपशिखाकारा ध्येयाः स्युर्नव शक्तयः । इति ॥ ३९-४० ॥

तदनन्तर धर्मादि से पूजित पीठ पर सर्वप्रथम दिशाओं में एवं मध्य में १. प्रभूत, २. विमल, ३. सार, ४. समाराध्य एवं ५. परमादि सुख की क्रमशः पूजा कर सोम एवं अग्निमण्डल की पूजा कर पश्चात् सूर्यमण्डल की पूजा करे । तदनन्तर दीप्ता, सूक्ष्मा, जया, भद्रा, विभूति, विमला, अमोघा, विद्युता, सर्वतोमुखी पीठरूपा नव शक्तियों की पूजा करे ॥ ३८-४० ॥

अब उन **शक्तियों का ध्यान** कहते हैं—ये दीप्तादि शक्तियाँ दीप्त ज्वाला के आकार की है ।

पीठमन्त्रः

**अक्लीबह्लस्वत्रितयस्वरान् बिन्द्वग्निसंयुतान्।**
**वदेत्पदं चतुर्थ्यन्तं ब्रह्मविष्णुशिवात्मकम् ॥ ४१ ॥**
**सौराय योगपीठाय नमः पदमनन्तरम् ।**
**पीठमन्त्रोऽयमाख्यातो दिनेशस्य जगत्पतेः ॥ ४२ ॥**

**अक्लीबेति । ह्रस्वत्रितयं अइउ । अत्र क्लीबह्रस्वत्रितयपदाभ्यां नञा सह सम्बन्धः । अग्नी रेफः । रां रीं रूं रैं इत्यादि नवबीजानि । अन्ये तु ह्रस्वत्रयम् अइअं इत्याहुः । तदुक्तं महाकपिलपञ्चरात्रे—**

**आद्योपान्त्यं तृतीयं च त्यक्त्वा चैवं नपुंसकम् ।**
**भेदयेन्नवधा यान्तं स्वरैरेभिर्यथाक्रमम् ।**
**बिन्दुयुक्तानि बीजानि शक्तीनामुद्धृतानि वै ॥ इति ।**
**अन्यत्राकारेकारविसर्गान् हित्वा नव बीजानीति ।**

**तदुक्तं प्रयोगसारनारायणीययोः—**

**आद्यमन्त्यं तृतीयं च त्यक्त्वाऽपि च नपुंसकान् । इति ।**

**पीठमन्त्र इति । सर्वसूर्यमन्त्रसाधारण इति ज्ञेयम् ॥ ४१-४२ ॥**

इनका बीज तीन क्लीव तथा हीन ह्रस्व स्वरों को छोड़कर शेष नव स्वरों से युक्त रेफ वर्ण है । इसका स्वरूप इस प्रकार है—'रां रीं रूं रें रैं रों रं रः' । इसके बाद ब्रह्मा-विष्णु-शिवात्मक पद में चतुर्थ्यन्त लगाकर 'सौराय योगपीठाय नमः' लगाकर पीठ मन्त्र की पूजा करे ।

यथा—'रां ब्रह्मा विष्णु शिवात्मकाय सौराय योगपीठाय नमः' । इसी प्रकार 'रीं' के आगे भी उक्त आसन का मन्त्र पढ़े । इस प्रकार जगत्पति भगवान् दिनेश के आसन का मन्त्र कहा गया है ॥ ४१-४२ ॥

मूर्त्तिकल्पनमन्त्रः

**तारादि खं खखोल्काय मनुना मूर्त्तिकल्पना ।**
**साक्षिणं सर्वलोकानां तस्यामावाह्य पूजयेत् ॥ ४३ ॥**

तारादीति । खखोल्कायेति स्वरूपम् । तदुक्तं महाकपिलपञ्चरात्रे—

याष्टमं बिन्दुना युक्तं कद्वितीयं तथैव च ।
तदेव केवलं भूय ओभिन्नं सविलोमकम् ॥
सविलोमाचतुर्थं तु यतृतीयोपरि स्थितम् ।
अक्षरं तद्द्वितीयेन स्वरेणैव प्रभेदितम् ॥
वानुलोमाच्चतुर्थं तु केवलं तदनन्तरम् ।
समासादुद्धृतो वत्स मूर्त्तिमन्त्रः षडक्षरः ॥ इति ।

अयमन्येषामपि सूर्यमन्त्राणां मूर्त्तिमन्त्र इति ज्ञेयम् । तत्राकाशबीजादिरुद्धृत इति विशेषः । अथवात्रैवं व्याख्येयम् । तारश्च आदिशब्देन प्रथमोत्पन्नत्वात् आकाशस्तस्य बिन्दुः सम्प्रदायादिति । अथवा खमिति तन्त्रेण द्वयमुपात्तम् एकेनाकाशबीजमन्येन स्वरूपम् । प्रयोगसारेऽपि—सूर्यकान्ताक्षरे प्रोक्ता बिन्दुभूषितमस्तके । इति ।

नारायणीये च— खकान्ती दण्डिनी चण्डो मज्जा दशनसंयुता ।
मांसं दीर्घा जवद्वायुरन्ते तस्यापि कृद्बिदुः ॥
एतच्च साधयेत्कामानभिषेकजपादिना । इति ।

निर्बीजोऽपि तत्रैवोद्धृतः । अत्र लकारतकारौ वेदिकापीठभेदेनेति उभावपि साम्प्रदायिकौ । निर्बीजो मूर्त्तिकल्पनायां सबीजो जपादाविति ज्ञेयम् । अयं स्वतन्त्रोऽपि मन्त्रः । अस्यर्ष्यादि यथा—

ऋषिः सूक्ष्मक आख्यातो जगती छन्द ईरितम् ।
देवः सूर्यो बीजशक्ती कान्तमज्जास्थहृत्स्मृते ॥
सूक्ष्मरूपायाग्निवधूः स्वाहान्तः सूक्ष्मतेजसे ।
सूक्ष्मकरा (रुपा) याग्निवधूः सूक्ष्मबलाय ठद्वयम् ॥
सूक्ष्मकायाय सहुंफट्जातियुक्ताः समीरिताः ।
पञ्चाङ्गमन्त्रा मन्त्रार्णैः षडङ्गं वा प्रकल्पयेत् ॥
रक्तपद्मद्वयं हस्ते बिभ्राणां वरदाभये ।
बन्धूकाभं त्रिनेत्रं च रविं ध्यायेत् सुभूषितम् ॥
लक्षमेकं जपेन्मन्त्रं क्षीराहारो जितेन्द्रियः ।
जुहुयात्तद्दशांशेन बिल्वाश्वत्थसमिद्वरैः ॥

सूर्यपीठेऽष्टाक्षरवत्पुजा । वक्ष्यमाणार्घ्यदानं च । खेचरीसिद्धिश्च फलं ज्ञेयम् ।

उक्तञ्च नारायणीये—अनेन बहुभिः प्राप्ताः खेचरत्वादिसिद्धयः । इति ।

मूर्त्तिकल्पनेति । मूलमन्त्रमुचार्य पश्चादिममुचार्य मूर्त्तिकल्पनेति पद्मपादाचार्याः ॥ ४३॥

**मूर्तिकल्पनमन्त्रोद्धार**—इसके पश्चात् 'ॐ खं खखोल्काय' इस मन्त्र से मूर्त्ति की कल्पना करे । पुनः उसी मूर्त्ति में सर्वलोकैक साक्षी भगवान् सूर्य का आवाहन कर पूजा करे ॥ ४३ ॥

**अङ्गानि पूजयेदादौ दिक्पत्रेष्वर्कमूर्त्तयः ।**
**आदित्याद्याश्चतस्रोऽर्च्याः शक्तयः कोणपत्रगाः॥ ४४ ॥**

स्वस्वनामादिवर्णाः स्युस्तासां बीजान्यनुक्रमात् ।
उषा प्रज्ञा प्रभा सन्ध्या शक्तयः परिकीर्त्तिताः ॥ ४५ ॥
पत्राग्रसंस्था ब्राह्म्याद्याः पुरतोऽरुणमर्चयेत् ।

अङ्गानि पूजयेदिति कर्णिकायाम् । तदुक्तं नारायणीये—

वह्निरक्षोमारुतेशदिक्षु पूज्या हृदादयः ।
स्वमन्त्रैः कर्णिकान्तस्था दिक्ष्वस्त्रं पुरतश्च दिक् ॥ इति ।

आदावित्यनेन केसरेष्वष्टाङ्गपूजा सूचिता । आदित्याद्या इति न्यासोक्तबीजसहिताः । अत्र केचनादित्यादिमूर्त्तयश्चतस्त्र इति सामानाधिकरण्यं कृत्वा सूर्यं न पूजयन्ति। तदसत् । उद्दिष्टपञ्चकमध्ये एकत्यागे कारणाभावात् । मुख्यतया कर्णिकायां स पूजित इति चेत् । पञ्चसु कः पूजितः को नेति नियामकाभावात् । पूर्वत्र परत्र च यत्र यत्र पञ्चकमुक्तम् तत्र त्यागस्याऽदृष्टचरत्वाच्च । तेन पद्मपादाचार्योक्तरीत्या आदित्यं मध्ये सम्पूज्य रव्यादयो दिक्चतुष्के पूज्याः । चतस्त्र इति शक्तिविशेषणत्वेन योज्यम् । पुरतोऽरुणमर्चयेदित्युक्तेः । कल्पितदिगपेक्षया तदीशदलमपि सम्मुखदलमिति । तेन महालक्ष्मीस्थाने अरुणः पूज्यः । 'मातृभिररुणान्ताभिः' इत्याचार्योक्तेः । पद्मपादाचार्यास्तु मातृः सम्पूज्य पुरतोऽरुणमर्चयेदित्यूचुः । अतएव नारायणीये पूर्वपत्रे अरुणस्तथेत्युक्तम् ॥ ४४-४६ ॥

चन्द्रादीनर्चयेत् पश्चाद् ग्रहानष्टौ ततो बहिः ॥ ४६ ॥
इन्द्रादींश्च तदस्त्राणि यथापूर्वं समर्चयेत् ।
एवं सम्पूज्य विधिवद्भास्करं भक्तवत्सलम् ॥ ४७ ॥

चन्द्रादीनिति स्वबीजाद्यान् । चन्द्रः सोमः । तत्र पूर्वादिषु चन्द्रबुधगुरुशुक्रान् आग्नेयादिषु भौममन्दराहुकेतूनिति ज्ञेयम् । प्रयोगस्तु पूर्वोक्तोऽनुसन्धेयः ।
अतएव नारायणीये—पूर्वादिदिक्षु सम्पूज्याश्चन्द्रज्ञगुरुभार्गवाः ।
आग्नेयादिषु कोणेषु कुजमन्दाहिकेतवः ॥ इति ।

विधिवदित्यनेन सूर्यपरिषद्भ्यो नम इति बहिः पारिषदान् पूजयेदित्युक्तम् । 'ग्रहैः सुरैश्चापि सूर्यपरिषद्भिः' इत्युक्तेः ॥ ४६-४७ ॥

सूर्यार्घ्यदाननियमः

दद्यादर्घ्यं प्रतिदिनं वारे वा तस्य चोदिते ।
प्रभाते मण्डलं कृत्वा पूर्ववत्पीठमर्चयेत् ॥ ४८ ॥

प्रभाते अर्चयेदिति सम्बन्धः । मण्डलमिति वृत्तम् । कृत्वेति रक्तचन्दनेन । तदुक्तं प्रयोगसारे—रक्तचन्दनगन्धेन कृत्वा वृत्तं सुशोभनम् । मण्डलम् । इति ॥ ४८ ॥

सर्वप्रथम कर्णिकाओं में अङ्गपूजा करे । पश्चात् दिशाओं के पत्रों में आदित्यादि सूर्यमूर्त्तियों की (द्र. १४. ३३-३४) पूजा करे । इसके बाद आगे कही जाने वाली सूर्य की चार शक्तियों की इनके नाम के आदि के अक्षरों के

बीज से क्रमशः पूजा करे । उषा, प्रज्ञा, प्रभा और सन्ध्या उन शक्तियों के नाम हैं ॥ ४४-४५ ॥

इसके अनन्तर पत्राग्र भाग में ब्राह्मी आदि शक्तियों की पूजा करे, इसके पश्चात् आगे अरुण की अर्चना करे । इसके बाद उसके बाहर चन्द्रादि आठ ग्रहों की पूजा करे ॥ ४६ ॥

तदनन्तर इन्द्रादि लोकपालों की तथा उनके अस्त्रों की पूर्ववत् पूजा करे । इस प्रकार आवरण सहित भक्तवत्सल भगवान् भास्कर की पूजा कर प्रतिदिन अथवा उनके वार रविवार के दिन उन्हें इस प्रकार अर्घ्य प्रदान करे । प्रातःकाल में गोल मण्डल बनावे और पूर्ववत् पीठ की पूजा करे ॥ ४७-४८ ॥

**पात्रं ताम्रमयं प्रस्थतोयग्राहि मनोहरम् ।**
**निधाय तत्र मनुना पूरयेत्तच्छुभोदकैः ॥ ४९ ॥**

प्रस्थतोयग्राहीति । प्रस्थप्रमाणमुक्तं श्रीधराचार्यैः—

कुडवश्चतुःपलः स्यात्प्रस्थः कुडवैश्चतुर्भिः स्यात् । इति ।

मनुना विलोमपठितेनेति विशेषः । यदाहुः—

प्रजपन्मनुं प्रतिगतक्रमतः परिपूरयेत् सुविमलैः सलिलैः । इति ।

शुभोदकैरिति । आदित्यमण्डलान्निसरदमृतधारारूपत्वेन ध्यातैरित्यर्थः ॥ ४९॥

**कुङ्कुमं रोचनाराजीरक्तचन्दनवैणवान् ।**
**करवीरजवाशालिङ्कुशश्यामाकतण्डुलान् ॥ ५० ॥**

राजी आसुरी । रक्तं रक्तचन्दनम् । चन्दनं श्वेतचन्दनम् । वैणवं वेणुबीजानि । करवीरं रक्तकरवीरपुष्पमिति परमगुरवः । जवा रक्तजवा । कुशं कुशाग्रं तण्डुला अक्षताः ॥ ५० ॥

इसके बाद एक प्रस्थ जल जिसमें आ सके ऐसे मनोहर ताम्रपात्र को अपने आगे रख कर सूर्य का मन्त्र पढ़ते हुये विशुद्ध जल से उसे पूर्ण करे । पुनः उसमें कुंकुम, गोरोचन, राजी (राई), रक्त चन्दन, बाँस का बीज (वंशलोचन ?), करवीर, जवा, शाली कुशा, श्यामलक और अक्षत छोड़ देवे ॥ ४९-५० ॥

**निक्षिपेत्सलिले तस्मिन्नैक्यं सञ्चिन्त्य भानुना ।**
**साङ्गमभ्यर्चयेत्तस्मिन् भास्करं प्रोक्तलक्षणम् ॥ ५१ ॥**

निक्षिपेदिति । यथालाभं क्वचित्तिला अपि । तदुक्तमाचार्यैः—

गोरोचनास्रतिलवैणवराजिरक्त
शीताख्यशालिकरवीरजपाकुशाग्रान् ।
श्यामाकतण्डुलयुतांश्च यथाप्रलाभान्
संयोज्य भक्तिभरतोऽर्घविधिर्विधेयः ॥ इति ।

**ऐक्यं सङ्कल्प्येति स्वात्मन इति शेषः । 'स्वैक्यं सम्भावयन् समाहितधीः इष्ट्वा दिनेशम्' इत्युक्तेः । तस्मिन् पात्रे । साङ्गमिति षडङ्गाष्टाङ्गसहितम् । अष्टाङ्गेनाऽभिसम्पूज्येति प्रयोगसारे उक्तेः । तत्र मन्त्रषडक्षराणि षडङ्गस्थानेषु षडङ्गवद्विन्यस्य उदरपृष्ठयोर्वर्णद्वयं विन्यसेदिति । प्रोक्तलक्षणं पूर्वोक्तध्यानम् ॥ ५१ ॥**

तदनन्तर आत्मा से अभिन्न सूर्य का ध्यान करते हुये उस जल में पूर्वाक्त लक्षण लक्षित षडङ्ग अथवा अष्टाङ्गविधि (द्र. १४. ३१-३५) से सूर्य भगवान् की पूजा करे ।। ५१ ।।

**गन्धपुष्पादिनैवेद्यैर्यथाविधि विधानवित् ।**
**तत् पिधाय जपेन्मन्त्रं सम्यगष्टोत्तरं शतम् ॥ ५२ ॥**
**पुनः सम्पूज्य गन्धाद्यैर्जानुभ्यामवनिं गतः ।**
**आमस्तकं तदुद्धृत्य व्योम्नि सावरणे रवौ ॥ ५३ ॥**
**दृष्टिं निधाय स्वैक्येन मूलमन्त्रं धिया जपन् ।**
**दद्यादर्घ्यं दिनेशाय प्रसन्नेनाऽन्तरात्मना ॥ ५४ ॥**
**कृत्वा पुष्पाञ्जलिं भूयो जपेदष्टोत्तरं शतम् ।**
**यावदर्घ्यामृतं भानुः समादत्ते निजैः करैः ॥ ५५ ॥**
**तेन तृप्तो दिनमणिर्दद्यादस्मै मनोरथान् ।**
**अर्घ्यदानमिदं पुंसामायुरारोग्यवर्द्धनम् ॥ ५६ ॥**
**धनधान्यपशुक्षेत्रपुत्रमित्रकलत्रदम् ।**
**तेजोवीर्यवशःकान्तिविद्याविभवभाग्यदम् ॥ ५७ ॥**

**आदिशब्दात् धूपदीपौ । यथाविधीत्यनेनैतदुक्तं भवति । सावरणमिति । व्योम्नि सूर्यमण्डलेऽपि स्थितमावरणसहितं देवं विलोक्य मनसा सम्पूज्येति च । उक्तञ्च—**

**इष्ट्वा दिनेशमथ पीठगतं तथैव व्योमस्थितं परिवृतावरणं विलोक्य । इति ।**

**विधानवित् तत् पिधायेति सम्बन्धः । विधानविदित्यनेनैतदुक्तं भवति । सोमात्मना भावितामृतवीजयुतेन वामोपष्टब्धेन स्वदक्षिणहस्तेनेति । सम्यगिति प्राणायामत्रयं षडङ्गन्यासं विधायेत्युक्तम् । पुनः सम्पूज्य । जलमिति शेषः । अर्घ्यं दद्यादिति । तत्र प्रकारः । मूलान्ते भगवते रवये अर्घ्यं कल्पयामि नम इत्युच्चार्येति । प्रसन्नेनान्तरात्मनेति भक्त्या दद्यादित्युक्तम् ॥ ५२-५७ ॥**

इस प्रकार गन्ध पुष्पादि नैवेद्यों के द्वारा विधानवेत्ता यथाविधि सूर्य की पूजा संपादित करे । फिर उस पात्र को ढक कर सूर्य मन्त्र का एक सौ आठ बार जप करे ।। ५२ ।।

फिर गन्धादि द्वारा उस पात्र में जल का पूजन कर दोनों घुटनों के बल मस्तक पर्यन्त पृथ्वी पर स्थित हो उस पात्र को ऊपर उठा कर और आकाश में सूर्य को आवरण में कर उनमें अपनी दृष्टि स्थापित करते हुये, सूर्य से अपने को

अभिन्न मानकर मूलमन्त्र पढ़ते हुये भक्तिपूर्वक प्रसन्नचित्त से सूर्य नारायण को अर्घ्य प्रदान करे ॥ ५३-५४ ॥

तदनन्तर हाथ में पुष्पाञ्जलि लेकर पुनः १०८ बार मूल मन्त्र का जप करे, यह जप क्रिया तब तक करे जब तक सूर्य अपनी किरणों से उस अर्घ्यामृत को ग्रहण नहीं कर लेते । तदनन्तर पुष्पाञ्जलि भगवान् सूर्य को समर्पित करे ॥ ५५ ॥

इस प्रकार की अर्घ्यदान क्रिया से प्रसन्न हुये दिनमणि अपने भक्त के सभी मनोरथों को पूर्ण करते हैं । सूर्य के उद्देश्य से किया गया अर्घ्यदान पुरुषों की आयु और आरोग्य की अभिवृद्धि करता है ॥ ५६ ॥

इतना ही नहीं धन, धान्य, पशु, क्षेत्र, पुत्र, मित्र, कलत्र, तेज, वीर्य, यश, कान्ति, विभव, विद्या एवं सौभाग्य प्रदान करता है ॥ ५७ ॥

प्रयोजनतिलकमन्त्रः

**आकाशमग्निदीर्घेन्दु संयुक्तं भुवनेश्वरी ।**
**सर्गान्वितो भृगुर्भानोस्त्र्यक्षरो मनुरीरितः ॥ ५८ ॥**
**आधारादि पदाग्रान्तं कण्ठादाधारकावधि ।**
**मूर्द्धादि कण्ठपर्यन्तं क्रमाद्बीजत्रयं न्यसेत् ॥ ५९ ॥**

प्रयोजनतिलकमन्त्रमाह आकाशेति । आकाशो हः अग्नी रेफः दीर्घ आ इन्दुर्बिन्दुः एतद्युतः तेन ह्रामिति । भुवनेश्वरी ह्रीँ । विसर्गान्वितो विसर्गयुक्तः । भृगुः सः । ह्रां ह्रीँ सः ।

ऋष्यादि यथा— मनोरस्य भवेद् ब्रह्मा मुनिरुक्तोऽथवा भृगुः ।
छन्दोऽपि खलु गायत्री देवता तीक्ष्णदीधितिः ॥ इति ।

आद्यं बीजं द्वितीयं शक्तिः । प्रणवादिरिति केचित् । प्रयोगविशेषे परमात्मादि-रजपादिर्वेति पद्मपादाचार्याः ॥ ५८-५९ ॥

अब **प्रयोजन तिलक नामक मन्त्र का उद्धार** कहते हैं—आकाश (ह), अग्नि (र), दीर्घ (आ) तथा इन्द्र (बिन्दु) इन सबको संयुक्त करे । फिर भुवनेश्वरी बीज, तदनन्तर विसर्गयुक्त भृगु (सकार) लगावे । यह उक्त मन्त्र का उद्धार कहा गया । इसका स्वरूप 'ह्रां ह्रीँ सः' (३) हुआ ॥ ५८ ॥

मूलाधार से पैर पर्यन्त, कण्ठ से आधार पर्यन्त और मूर्धा से कण्ठपर्यन्त क्रमशः इन तीनों बीजों का न्यास करे ॥ ५९ ॥

**षड्दीर्घस्वरयुक्तेन मध्येनाऽङ्गानि कल्पयेत् ॥ ६० ॥**

अङ्गानीति नेत्रान्तानीति ज्ञेयम् । अग्रे वक्ष्यमाणत्वादत्र नोक्तम् ।

तदुक्तं प्रयोगसारे— अङ्गुष्ठादिकनिष्ठान्तमङ्गुलीषु यथाक्रमात् ।
न्यस्त्वा विनेत्रमङ्गानि नेत्रं हस्ततले न्यसेत् ॥ इति ।

नारायणीयेऽपि— न्यस्याङ्गुलीषु पञ्चाङ्गं लोचनं तलयोर्न्यसेत् । इति ।

तथा— न्यस्त्वा नेत्रान्तमङ्गानि तथैवात्मनि संयतः ॥ इति ।

प्रयोगसारे नारायणीये चान्यान्यङ्गान्युक्तानि—

कतृतीयं विलोमेन बीजं हृदयमुच्यते ।
अर्कः शिरश्चतुर्थ्यन्तः कथ्यते भूर्भुवः स्वरों ॥
ज्वालिनीति शिखा गीता हुं वर्म समुदाहृतम् ।
द्वितीयस्वरसंभिन्नं शचतुर्थं सबिन्दुकम् ॥
नेत्रं स्वरान्तमारूढं यान्तमस्त्रमिति क्रमात् । इति

नारायणीये तु—प्रयोजनादितिलकः साक्ष्यङ्गान्तः स्मृतो मनुः । इति ।

न्यासे क्रमसंग्रहे विशेषः— हस्तयोस्तलपृष्ठे च न्यस्य मन्त्राक्षरत्रयम् ।
पदान्तराधिवक्त्रेषु तथा सप्तग्रहानपि ॥
मुखे बाहौ च पदयोरुदरे वक्षसि क्रमात् ।
मूर्द्धादिपञ्चस्थानेषु हल्लेखाद्याश्च विन्यसेत् ॥ इति ।

मूर्त्तिपञ्चकमिति नवग्रहन्यासे इति पद्मपादाचार्याश्च ॥ ६० ॥

पुनः षड्दीर्घ (आ ई ऊ ऐ औ अं) युक्त मध्य बीज (ह्रीँ) से अङ्गन्यास करे। 'आं ह्रीँ हृदयाय नमः इत्यादि ॥ ६० ॥

भानुध्यानम् । पुरश्चरणादिकथनम्

**रक्ताम्बुजासनमशेषगुणैकसिन्धुं**
**भानुं समस्तजगतामधिपं भजामि ।**
**पद्मद्वयाभयवरान् दधतं कराब्जै-**
**र्माणिक्यमौलिमरुणाङ्गरुचिं त्रिनेत्रम् ॥ ६१ ॥**

आयुधध्यानं पूर्ववत् ॥ ६१ ॥

अब **इस मन्त्र का ध्यान** कहते हैं—जो लाल कमल के आसन पर बैठे हुये हैं, समस्त गुणों के समुद्र हैं, सारे जगत् के अधीश्वर हैं, ऐसे सूर्य नारायण का मैं भजन करता हूँ जो अपने चारों हाथों में दो पद्म, अभय एवं वरमुद्रा धारण किये हुये हैं । शिर पर माणिक्य जटित मुकुट धारण किये हुये हैं, जिनके शरीर की कान्ति अरुण वर्ण की है और जो त्रिनेत्र हैं ॥ ६१ ॥

**भानुलक्षं जपेन्मन्त्रमन्नाज्येन दशांशतः ।**
**तिलैर्वा मधुरासिक्तैर्जुहुयाद्विजितेन्द्रियः ॥ ६२ ॥**

भानुलक्षं द्वादशलक्षम् ॥ ६२ ॥

इस त्र्यक्षर मन्त्र का बारह लाख जप करे । और घृत मिश्रित अन्न से उसका दशांश होम करे अथवा त्रिमधुर मिश्रित तिलों से ब्रह्मचर्य व्रत को धारण करते हुये होम करे ॥ ६२ ॥

पूर्वोक्ते पूजयेत्पीठे विधानेनाऽमुना रविम्।
प्रथमावृत्तिरङ्गैः स्यात् परा चन्द्रादिभिर्ग्रहैः॥ ६३ ॥
तृतीया लोकपालैः स्याच्चतुर्थी स्यात्तदायुधैः।
इति सम्पूज्य निर्माल्यं तेजश्चण्डाय दीयताम्॥ ६४ ॥
अर्घ्यं प्रागीरितं दद्याद्भानवे संयतेन्द्रियः।
सोऽपि रत्नं धनं धान्यं पुत्रपौत्रान् पशून् यशः।
वस्त्राणि भूषणादीनि दद्यादस्मै न संशयः॥ ६५ ॥

अङ्गैरितिं तत्राङ्गध्यानं यथा—

भास्वत्सरोजहस्तानि शान्तानि वरदान्यपि।
अङ्गानि दिव्यरूपाणि ध्येयानि वलवन्ति च॥
दंष्ट्राकरालमस्त्रं तु विद्युत्पुञ्जसमप्रभम्। इति।

प्रयोगसारे नारायणीयेऽपि—

रक्ता हृदादयः सौम्या वरदाः पद्मधारिणः।
विद्युत्पुञ्जनिभं त्वस्त्रमुग्रदंष्ट्रम्भयावहम्॥ इति॥

परा चन्द्रादिभिर्ग्रहैरिति। अत्र स्वस्वनामादिवर्णादित्वमनुसन्धेयम्। 'स्वनामाद्यक्षरैर्बिन्दुभूषितैरन्वितं यजेत्' इति प्रयोगसारे उक्तेः। तत्रायं विशेषः। प्रागादिस्थितैः चन्द्रबुधगुरुशुक्रैः आग्नेयादिस्थितैर्भौममन्दराहुकेतुभिः।

तदुक्तमाचार्यैः— प्रागादि दिशासंस्थाः शशिबुधगुरुभार्गवाः क्रमेण स्युः।
आग्नेयादिष्वस्त्रिषु धरणिजमन्दाहिकेतवः पूज्याः॥ इति।

प्रयोगसारेऽपि— सोममैन्द्रे बुधं याम्ये पश्चिमे तु वृहस्पतिम्।
सौम्ये शुक्रं तथाग्नेयामङ्गारकमथाऽऽसुरे॥
शनैश्चरं ततो राहुं वायव्यां केतुमीश्वरे। इति।

तेजश्चण्डोऽर्कगणः। प्रयोगसारे प्रयोगविशेष उक्तः—

स्वजन्मदिननक्षत्रे ग्रहणे वा स्वजन्मभे।
ग्रहाणामपि वैषम्ये भये वा प्रत्युपस्थिते॥
इष्ट्वा दिवाकरं देवं ग्रहैः सार्द्धं यथोदितम्।
मूलेन सवितुर्बीजैरन्येषां च पुरोदितैः॥
प्रत्येकं जुहुयात्तेषां ग्रहाणां तद्दिशि क्रमात्।
एकत्र वाऽथवा वह्निकार्यं कृत्वा विधानतः॥
समित्सर्पिश्चरुघृतैः क्रमादष्टोत्तरं शतम्।
प्रतिव्याहृतिसंयुक्तं प्रत्येकं स्मरणान्वितम्॥
अर्कः पलाशापामार्गाविश्वत्थोदुम्बरौ यथा।
खदिरश्च शमी दूर्वा दर्भाश्च समिधः क्रमात्॥
पूर्णाहुतिं ततो दद्यात्तेषां प्रत्येकमर्णतः।

**कृतेनाऽनेन यज्ञेन ग्रहास्तुष्यन्ति भाविताः ॥**
**सर्वे रोगाः प्रणश्यन्ति संग्रामेषु जयं लभेत् ।**
**अभिचारादयो दोषाः शान्तिं यान्ति न संशयः ॥**

**इति ॥ ६३-६५ ॥**

तदनन्तर पूर्वोक्त पीठ पर इस विधि से रवि की पूजा करे । प्रथमावरण में अङ्गों की पूजा करे, दूसरे आवरण में चन्द्रादि ग्रहों की पूजा करे ॥ ६३ ॥

तृतीय आवरण में लोकपालों की और चतुर्थ आवरण में उनके अस्त्रों की पूजा करे । इस प्रकार आवरण पूजा कर तेजश्चण्ड को निर्माल्य प्रदान करे । पुन: पूर्व में कही गयी सामग्री से युक्त अर्घ्य (द्र. १४. ४९-५०) एकाग्रचित्त हो सूर्य नारायण को प्रदान करे । इस प्रकार का विधान करने वाले साधक को नि:सन्देह भगवान् सूर्य नारायण रत्न, धन, धान्य, पुत्र, पौत्र, पशु, यश, वस्त्र और आभूषण प्रदान करते हैं ॥ ६५ ॥

**मार्त्तण्डभैरवीबीजम्**

**आकाशमग्निपवन सद्यान्तार्घीशबिन्दुमत् ।**
**मार्त्तण्डभैरवं नाम बीजमेतदुदाहृतम् ॥ ६६ ॥**

**बिम्बबीजम्**

**पुटितं विम्बबीजेन सर्वकामफलप्रदम् ।**
**टान्तं दहननेत्रेन्दुसहितं तदुदीरितम् ॥ ६७ ॥**

**मार्त्तण्डभैरवबीजमाह आकाशमिति । आकाशो हः अग्नी रेफः पवनो यः सद्यान्त औ अर्घीश उ बिन्दुः एतद्युक्तः । अत्र स्वरद्वयमपि गुरूपदेशतो यथा सम्प्रदायमुच्चारणीयम् । ब्रह्मा ऋषिर्निवृच्छन्दः । हं बीजं बिन्दुः शक्तिः । विम्बबीजमाह टान्तमिति । टान्तं ठः दहनो रेफः नेत्रमिः इन्दुर्बिन्दुः एतद्युक्तेन ठ्रिमिति । सर्वकामफलप्रदमित्यनेनैतत् संगृहीतम् । यदुक्तं नारायणीये—**

**आरोग्यमायुः श्रीर्विद्या कान्तिः पुष्टिर्धनं यशः ।**
**सौभाग्यं शक्तिरैश्वर्यं रक्षा मेधा वचो द्युतिः ।**
**सिध्यन्त्येवंविधाः कामा मन्त्रस्यास्य प्रभावतः ॥**

**इति ॥ ६६-६७ ॥**

अब **मार्त्तण्ड भैरव बीज** कहते हैं—आकाश (ह), अग्नि (र), पवन (य), सद्यान्त (औं), पुन: अर्घीश उसे बिन्दु से युक्त करे । इस प्रकार 'ह्र्यौउँ' इसका स्वरूप हुआ । इस मन्त्र को मार्त्तण्ड भैरव बीज के नाम से कहा जाता है ॥ ६६॥

विम्ब बीज (द्र. १४.२८) से संपुटित करने पर यह समस्त कामनाओं का फल प्रदान करता है । अब **विम्ब बीज** कहते हैं—टान्त (ठ), दहन (र) उसे नेत्र (इ) और इन्द्र अनुस्वार से युक्त करे । इस प्रकार हमने विम्बबीज का उद्धार कहा इसका स्वरूप 'ठ्रिँ' हुआ ॥ ६७ ॥

पञ्चह्रस्वाद्यबीजेन पञ्चमूर्त्तीः प्रविन्यसेत् ।
मध्यमादिकनिष्ठान्तमङ्गुलीषु क्रमादिमाः ॥ ६८ ॥
सूर्याख्यो भास्करो भानुस्ततो रविदिवाकरौ ।
शिरोवदनहृद्गुह्यपाददेशे तु ताः पुनः ॥ ६९ ॥
दीर्घयुक्तेन बीजेन नेत्रान्ताङ्गानि विन्यसेत् ।
व्यापकं मूलबीजेन कुर्वीत तदनन्तरम् ॥ ७० ॥

पञ्चेति । सद्यान्तपञ्चह्रस्वाद्यमित्यर्थः । 'मूर्त्तीः सद्यावसानिकाः' इति नारायणीय उक्तेः । मध्यमादीति । मध्यमातर्जन्यङ्गुष्ठानामाकनिष्ठास्वित्यर्थः । 'मध्यमादिभुजान्ततः' इति नारायणीय उक्तेः । बीजेनेति मार्त्तण्डभैरवेण । पूर्वत्रापि दीर्घयुक्तेन षड्दीर्घयुक्तेन । नेत्रान्ताङ्गानीति । हृदयशिरःशिखाकवचानि विन्यस्याऽस्त्रमपि विन्यस्य पश्चान्नेत्रं विन्यसनीयमिति सम्प्रदायविदः । केचित्तु नेत्रान्तानीति पञ्चाङ्गान्येव नेत्रान्तानि न्यसनीयानि 'पञ्चाङ्गानि मनोर्यस्य नेत्रं तस्य न विद्यते' इति अस्याऽपवादमाहुः । तदसम्प्रदायिकम्—

अङ्गानि कुर्याद्दीर्घाढ्यरमाबीजेन मन्त्रवित् । इति श्रीपटले ।
मध्येन दीर्घयुक्तेन प्राक्पुटेन प्रकल्पयेत् ।
अङ्गानि जातियुक्तानि क्रमेण मनुवित्तमः ॥ इति भुवनेशीपटले ।

एवमन्यत्रापि यत्र यत्र दीर्घवचनं तत्र तत्र षण्णां दीर्घाणां ग्रहणात् अत्र सङ्कोचे कारणाभावात् नेत्रान्ताङ्गानीति वचनेन सङ्कोच इति चेत् तदपि न । साम्प्रदयिकव्याख्यानुसारेणाऽप्युपपत्तेः किञ्च नेत्रं तस्य विवर्जयेदिति साक्षान्निषिद्धस्य नेत्राङ्गस्य सामान्यभूतेनाऽन्यथाऽप्युपपद्यमानेन नेत्रान्ताङ्गानीति वचनेन बाधोऽपि न कर्त्तुं शक्यते । अन्यच्चाग्रे अङ्गपूजा यथा पूर्वमिति वचनात् दिक्ष्वस्त्रपूजोक्तैव । नेत्रमात्रे विशेष उक्तः । अग्रे पुरुषोत्तममन्त्रेऽपि नेत्रान्ताङ्गान्युक्तानि । तत्र च षडङ्गमन्त्रा नेत्रान्ता एवोद्धृताः ।

षडङ्गमन्त्राः सन्दिष्टा नेत्रान्तास्तन्त्रवेदिभिः ।

इत्यनेन । पूर्वोक्तमन्त्रे लिखितप्रयोगसारवचनाच्च । अस्मिन् मन्त्रे नारायणीये च प्रांशवोऽङ्गानि षडिति तेन साम्प्रदायिकव्याख्यैव गरीयसीत्यलम् । अत्र नेत्राङ्गोत्कर्षे तन्मन्त्रोत्कर्षोऽपि ज्ञेयः । न्यायसिद्धत्वात् ॥ ६८-७० ॥

पञ्चह्रस्वों को मार्तण्ड भैरव बीज में लगाकर पञ्चमूर्त्ती न्यास मध्यमा, तर्जनी, अङ्गुष्ठा, अनामिका तथा कनिष्ठा अङ्गुलियों में क्रमशः करे । 'उँ ठ्रिं सूर्याय इति मध्यमाभ्यां नमः, एँ ठ्रिं भास्कराय तर्जनीभ्यां नमः इत्यादि । सूर्य, भास्कर, भानु, रवि और दिवाकर—ये पञ्चमूर्त्तियाँ हैं । पुनः शिर, वदन, हृदय, गुह्य एवं पाद देश में इसी प्रकार न्यास करे ॥ ६८-६९ ॥

तदनन्तर षड्दीर्घ युक्त मार्त्तण्ड भैरव बीज से हृदय, शिर, शिखा, कवच का न्यास कर तदनन्तर अस्त्र न्यास कर पश्चात् नेत्र का न्यास करे और अन्त में

मूल मन्त्र पढ़ कर व्यापक न्यास करे। इस प्रकार मार्त्तण्ड भैरव में षडङ्गन्यास का उद्धार कहा गया ॥ ७० ॥

मार्तण्डध्यानम्

**हेमाम्भोजप्रवालप्रतिमनिजरुचिं चारुखट्वाङ्गपद्मौ**
**चक्रं शक्तिं सपाशं सृणिमतिरुचिरामक्षमालां कपालम् ।**
**हस्ताम्भोजैर्दधानं त्रिनयनविलसद् वेदवक्त्राभिरामं**
**मार्त्तण्डं वल्लभार्द्धं मणिमयमुकुटं हारदीप्तं भजामः ॥ ७१ ॥**

पुरश्चरणादिकथनम्

**लक्षत्रयं जपेन्मन्त्री बीजं बिम्बपुटीकृतम् ।**
**दशांशं कमलैः फुल्लैर्जुहुयान्मधुरोक्षितैः ॥ ७२ ॥**

ध्यानमाह हेमेति । प्रवालश्च तेन रक्तम् ।

तदुक्तं नारायणीये—सिन्दूरारुणमीशानं वामार्द्धदयितं रविम् । इति ।

सृणिरङ्कुशः । वेदवक्त्रश्चतुर्वक्त्रम् । तदुक्तं नारायणीये—

पाशाङ्कुशधरं देवं साक्षमालं कपालिनम् ।
खट्वाङ्गब्जारिशक्तीश्च दधानं चतुराननम् ॥ इति ॥

दक्षाद्यूर्ध्वयोराद्ये वामान्तमायुधानि ध्येयानि । त्रिनयनेत्यनेन द्वादशनेत्रत्वमुक्तम् । अष्टबाहुं द्विषट्काक्षमिति नारायणीय उक्तेः । वल्लभार्द्धमिति वामे ॥ ७१-७२ ॥

अब **ध्यान** कहते हैं—जिनके शरीर की कान्ति स्वर्णकमल के पत्ते के समान लाल है, जो अपने हाथों में मनोहर खट्वाङ्ग, कमल, चक्र, शक्ति, पाश, अंकुश, अक्षमाला एवं कपाल धारण किये हुये हैं, जिनके चार मुख हैं, प्रत्येक मुखों पर तीन तीन नेत्र विराज रहे हैं, जिनके आधे भाग में उनकी प्रियपत्नी स्थित हैं मणिमय मुकुट धारण किये, उज्ज्वल हार से जाज्ज्वल्यमान ऐसे सूर्य का मैं भजन करता हूँ ॥ ७१ ॥

साधक विम्ब मन्त्र (ॐ घृणि सूर्य आदित्य) से संपुटित इस मार्त्तण्ड भैरव मन्त्र का तीन लाख जप करे। फिर त्रिमधुर मिश्रित कमलों से उसका दशांश होम करे ॥ ७२ ॥

**पीठे दीप्तादिभिर्युक्ते कर्णिकायामुषादिकाः।**
**पूर्वादिदिक्षु सम्पूज्य मूर्त्तिं मूलेन कल्पयेत् ॥ ७३ ॥**
**आवाह्य पूजयेद्देवं वक्ष्यमाणविधानतः।**
**सूर्यादींश्चतुरो दिक्षु विदिक्ष्वन्यं समर्चयेत् ॥ ७४ ॥**
**अङ्गपूजा यथापूर्वं नेत्रमीशानदिग्गतम् ।**
**ग्रहानष्टौ ततो बाह्य लोकपालांस्ततः परम् ॥ ७५ ॥**

अर्घ्यप्रदानं प्रयजेन्मन्त्री मार्त्तण्डभैरवम् ।
इति सिद्धमनुर्मन्त्री साधयेदिष्टमात्मनः॥ ७६ ॥

दीप्तादिभिर्युक्ते पीठे सौर इत्यर्थः । उषादिकाः सम्पूज्येति पीठमन्त्रात् पूर्वगत-कर्णिकायामिति ज्ञेयम् । आसां बीजेऽपि विशेषो नारायणीये उक्तः । यदाहुः—

न्यसेदुषां प्रभां सन्ध्यां प्रज्ञां दिक्ष्वब्जकर्णिके ।
दण्डि दीर्घस्वनामादि वर्णैरावाहयेत्ततः ॥ इति ।

न्यसेदित्यनेन पीठन्यासेऽप्ययं क्रम इत्युक्तम् । पूजयेद्देवमिति । बिम्ब-बीजपुटीकृतेन नमोऽन्तेन बीजेन । 'यजेद्यथोपचारान्ते बिम्बेन हृदयेन च' इत्युक्तेः सूर्यादीनिति आदिपदेन भास्करभानुरवयः संगृहीताः । विदिक्ष्वन्यमिति पञ्चमं दिवा-करम् । यथापूर्वमिति । चतुर्थोक्तरीत्या । नेत्रमिति । तेन ईशानदिशि अङ्गद्वयपूजनम् । ग्रहानिति पूर्वमन्त्रोक्तक्रमेण । ततः परमिति वज्रादिभिः । अर्घ्यप्रदानमिति । पूर्वोक्त-मर्घ्यविधानमत्रापि कुर्यादित्यर्थः ॥ ७३-७६ ॥

तदनन्तर दीप्तादि शक्तियों से युक्त सौर पीठ की कर्णिका में पूर्वादि दिशाओं के क्रम से उषादिकों की पूजाकर मूल मन्त्र से मूर्त्ति की कल्पना करे ॥ ७३ ॥

उस मूर्त्ति में सूर्यदेव का आवाहन कर आगे कही जाने वाली विधि से विम्ब बीज (द्र. १४. २८) से संपुटित नमोन्त मूल मार्त्तण्ड भैरव के मन्त्र से पूजन करे। मूर्त्ति के चारों पूर्वादि दिशाओं में क्रमशः सूर्य भास्कर, भानु और रवि की पूजा करे । तथा विदिका कोणों में पञ्चम दिवाकर की पूजा करे ॥ ७४ ॥

अङ्गपूजा पूर्वोक्त रीति से (४. ३५) आग्नेयकोण से प्रारम्भ करे और ईशान कोण में नेत्र और अस्त्र दोनों की पूजा करे । इसके बाद आठों ग्रहों की उसके बाहर लोकपालों की पूजा करे ॥ ७५ ॥

इसके पश्चात् पूर्वोक्त रीति से अर्घ्य प्रदान की क्रिया कर साधक मार्त्तण्ड भैरव मन्त्र का जप करे। इस प्रकार मन्त्र सिद्ध कर लेने पर मन्त्रज्ञ अपनी अभीष्ट सिद्धि के लिये इस मन्त्र का प्रयोग करे ॥ ७६ ॥

शाल्याज्यतिलबिल्वानां लक्षहोमाद्भवेन्निधिः।
राजवृक्षसमुद्भूतैः पुष्पैर्होमो रमाकरः॥ ७७ ॥
जवाकुसुमहोमेन वशयत्यचिरान्नृपान्।
मातुलिङ्गफलैर्हुत्वा धनमिष्टं लभेत सः॥ ७८ ॥
इमं मन्त्रं जपन्मर्त्यः कीर्त्तिं पुत्रान् बलं द्युतिम्।
वाक्सिद्धिममितां लक्ष्मीं सौभाग्यमपि साधयेत्॥ ७९ ॥

साधयेदिष्टमित्युक्त्वा तदेवाह शालीति । बिल्वेति बिल्वफलानि ।

तदुक्तम्— सर्पिर्व्रीहितिलैर्बैल्वैः फलैर्लक्षं हुनेन्निधिः । इति ।

**लक्षहोमादिति । पञ्चविंशतिसहस्रमित्या प्रत्येकम् । भवेन्निधिरिति । मन्त्रिण इति शेषः । मातुलिङ्गो बीजपूरः । लभेन्निधिमिति वा पाठः ॥ ७७-७९ ॥**

शालि, आज्य, तिल और बिल्व मिश्रित छवि से एक लाख संख्या में होम करने से कोष की प्राप्ति होती है । राजवृक्ष के पुष्पों के द्वारा उतनी ही संख्या में होम करने से साधक लक्ष्मीवान् बन जाता है ॥ ७७ ॥

जवा कुसुम के होम से अविलम्ब राजा वश में किया जा सकता है । मातुलिङ्ग (विजौरा) के फल के होम से इष्ट धन की प्राप्ति होती है ॥ ७८ ॥

इस मार्त्तण्ड भैरव के मन्त्र के जप से मनुष्य, कीर्त्ति पुत्र, बल, तेज वाक्सिद्धि, अनन्त लक्ष्मी एवं सौभाग्य की प्राप्ति कर लेता है ॥ ७९ ॥

**अजपामन्त्रः**

**वियदर्द्धेन्दुसहितं तदादिः सर्गसंयुतः ।**
**अजपाख्यो मनुः प्रोक्तो द्व्यक्षरः सुरपादपः ॥ ८० ॥**

**ऋष्यादिकथनम्**

**ऋषिर्ब्रह्मा स्मृतो देवी गायत्री छन्द ईरितम् ।**
**देवता जगतामादिः संप्रोक्तो गिरिजापतिः ॥ ८१ ॥**

**अजपामन्त्रमाह वियदिति । अग्नीषोमात्मकत्वादस्याऽत्र पटले उक्तिः । तयोराद्यन्तयोरुक्तेः । वियत् हः अर्द्धेन्दुः बिन्दुः तदादिः सः सर्गो विसर्गः । द्व्यक्षरः सुरपादप इत्यनेनैतदुक्तं भवति । जपकाले एवं ध्यायेदिति । तदुच्यते । मन्त्रोच्चारण-काले मन्त्रं सुषुम्णारन्ध्रपूर्णं विश्वरूपं सदानन्दात्मकं सप्तविंशकं ब्रह्म ध्यात्वा तत्प्रभया विद्धसर्वाङ्गमात्मानम् अर्द्धनारीश्वररूपं षड्विंशकमीश्वरं चिन्तयेत् । पिङ्गलारन्ध्रस्थमादिबीजपञ्चविंशकं पुरुषबीजरूपं प्राणात्मना ध्यात्वा द्वितीयबीज-मिडारन्ध्रमध्यस्थचतुर्विंशकप्रकृतिरूपम् अपानात्मना चिन्तयेत् । विश्वरूपान् मन्त्रान् दीपाद्दीपान्तप्रभेव निर्गच्छन्तौ वामदक्षिणभागौ इडापिङ्गले परिपूर्णसुषुम्णायाः स्त्री-पुरुषचिह्नितौ कृतौ ध्यायेत् । हं बीजं सः शक्तिः ॥ ८०-८१ ॥**

अब **अजपा मन्त्र** कहते हैं—वियत् (ह), उस पर अर्द्धेन्दु (अनुस्वार), तदनन्तर तदादि (स), वह विसर्ग से युक्त इस प्रकार अजपा मन्त्र का उद्धार कहा गया । इसका स्वरूप 'हंसः' हुआ । यह दो अक्षर को अजपा मन्त्र साधक के लिये कल्पवृक्ष है ॥ ८० ॥

इस मन्त्र के ऋषि ब्रह्मा हैं, गायत्री नामक देवी छन्द है और जगदादि गिरिजापति इस मन्त्र के देवता कहे गये हैं ॥ ८१ ॥

**हसा षड्दीर्घयुक्तेन कुर्यादङ्गक्रियां मनोः ॥ ८२ ॥**

**हसेति संयुक्तेन । साम्प्रदायिका अन्यथा षडङ्गमाहुः । सूर्यात्मने हृत् । सोमात्मने**

शिरः । निरञ्जनात्मने शिखा । निराभासात्मने कवचम् । अव्यक्तात्मने नेत्रम् । अतनु सूक्ष्मः प्रचोदयात्मने अस्त्रम् । हसा (ह्रा) मित्याद्यैरेभिरिति केचित् ॥ ८२ ॥

षड्दीर्घ युक्त 'हंस' इस मन्त्र से अङ्गन्यास करना चाहिए । यथा—आं हंसः हृदयाय नमः, ईं हंसः शिरसे स्वाहा, ऊं हंसः शिखायै वषट्, ऐं हंस कवचाय हुँ, औं नेत्रद्वयाय वौषट्, अं हंसः अस्त्राय फट् इत्यादि ॥ ८२ ॥

**अजपामन्त्रध्यानम्**

**उद्यद्भानुस्फुरिततडिदाकारमर्द्धाम्बिकेशं**
**पाशाभीती वरदपरशू संदधानं कराग्रैः ।**
**दिव्याकल्पैर्नवमणिमयैः शोभितं विश्वमूलं**
**सौम्याग्नेयं वपुरवतु वश्चन्द्रचूडं त्रिनेत्रम् ॥ ८३ ॥**

**वामोर्ध्वादि दक्षिणोर्ध्वान्तमायुधध्यानम् ॥ ८३ ॥**

अब **अजपा मन्त्र का ध्यान** कहते हैं—आधा अम्बिका तथा आधा सदाशिव के रूप में रहने वाले सोम अग्नि देवताक शरीर वाले सदाशिव हमारी रक्षा करें । जिनके शरीर का आधा भाग उदीयमान सूर्य के समान तथा आधा चमकती हुई बिजली के समान शोभित हो रहा है, जिन्होंने अपने हाथों से पाश, अभय, वर और परशु धारण किया है और जो मणिमय विरचित नवीन आभूषणों से भूषित हैं जो विश्व के एक मात्र मूल हैं, चन्द्रमा को अपने जटाजूट में धारण किये हुये हैं और त्रिनेत्र हैं ॥ ८३ ॥

**पुरश्चरणादिकथनम्**

**भानुलक्षं जपेन्मन्त्रं पायसेन ससर्पिषा ।**
**दशांशं जुहुयात्सम्यक् ततः सिद्धो भवेन्मनुः ॥ ८४ ॥**

**भानुलक्षं द्वादशलक्षम् ॥ ८४ ॥**

बारह लाख उपर्युक्त अजपा मन्त्र का जप करे, तदनन्तर सघृत पायस से दशांश जप करे तब यह मन्त्र सिद्ध होता है ॥ ८४ ॥

**हंसवती ऋक्**

**दीप्तादिपूजिते पीठे प्रागुक्ते प्रयजेद्विभुम् ।**
**मूर्त्तिं मूलेन सङ्कल्प्य यजेदङ्गादिभिः सह ॥ ८५ ॥**
**ऋतं वसुं नरवरौ दिग्दलेषु विदिक्ष्वथ ।**
**अर्चयेदृतजां गोजामब्जाख्यामद्रिजां पुनः ॥ ८६ ॥**
**लोकेश्वरांस्तदस्त्राणि पूजयेत् देवमन्वहम् ।**
**अर्घ्यं च विधिवद्दद्यात् प्राक् प्रोक्तेनैव वर्त्मना ॥ ८७ ॥**

**प्रागुक्ते पीठे मूर्त्तिं मूलेन सङ्कल्पया विभुं अङ्गादिभिः सह प्रयजेदिति अन्वयः । आदिशब्दार्थमाह ऋतमित्यादि । यजेदङ्गैः सह क्रमादित्यपि पाठः । अङ्गैः सह ऋतादीन् दिग्दलेषु अर्चयेदित्यन्वयः ॥ ८५-८७ ॥**

दीप्तादि से युक्त (द्र. १४. ३९-४०) पीठ पर मूल मन्त्र से मूर्त्ति की कल्पना कर अङ्गादि के साथ विभुश्री सूर्यनारायण की पूजा करे ॥ ८५ ॥

तदनन्तर पत्रों पर चारों दिशाओं में ऋतु, वसु, नर और वर की पूजा करे, चारों कोणों पर ऋतजा, गोजा, अजा और अद्रिजा की पूजा करे ॥ ८६ ॥

नित्य लोकपालों की, उनके अस्त्रों की तथा सूर्यदेव की पूजा करे और पूर्वोक्त कही गई विधि के अनुसार (द्र. १४. ४९-५६) प्रतिदिन सूर्य भगवान् को अर्घ्य दान देवे ॥ ८७ ॥

**मन्त्राढ्यमातृकाम्भोजे पूर्णकुम्भं निधाय तम्।**
**पिधाय वामहस्तेन न्यस्तमन्त्रेण संयतः॥ ८८ ॥**

साधनविधिः

**अष्टोत्तरशतं मन्त्रं जपेत्तोयं सुधामयम् ।**
**स्मृत्वा तेनाऽभिषिञ्चेद् यं स भवेद्विगतामयः ॥ ८९ ॥**
**आयुरारोग्यविभवानमितान् लभते नरः।**
**अनेनैव त्रिधानेन विषार्त्तो निर्विषो भवेत्॥ ९० ॥**

**मन्त्रेति अजपाढ्यकर्णिके मातृकोक्तार्चापद्मे । संयत इत्येननैतदुक्तं भवति । वामहस्ततले चन्द्रमण्डलं ध्यात्वा तन्मध्ये मन्त्रं सञ्चिन्त्य तेन हस्तेन तन्मुखं पिधायेति । स्मृत्वेति पूर्वेण सम्बध्यते । यमिति लिङ्गमविवक्षितम् । 'नारी नरो वा विधिनाऽभिषिक्तः' इत्युक्तेः ॥ ८८-९० ॥**

इस मन्त्र के द्वारा मातृका रूप कमल पर कुम्भ स्थापित कर उसे मन्त्र पढ़ते हुये बायें हाथ से ढककर ब्रह्मचर्य व्रत धारण करते हुये यदि एक सौ आठ बार इस अजपा मन्त्र से जल को अभिमन्त्रित कर उस सुधामय जल से सूर्य का स्मरण करते हुये अभिषेक करे तो वह पुरुष सर्वथा निरोग हो जाता है । यदि स्त्री का अभिषेक करे तो वह स्त्री निरोग हो जाती है । इतना ही नहीं वह अभिषिक्त पुरुष अनन्त आयु, आरोग्य और विभव प्राप्त करता है । यदि विषार्त्त को इस विधि से अभिषिक्त करे, तो वह निर्विष हो जाता है ॥ ८८-९० ॥

**इन्दुभ्यां विगलत्सुधापरिवृतं मन्त्रान्त्यबीजं ततः**
**प्रच्योतत्परमामृतार्द्रशशिना संसिक्तमाद्यं स्मरन् ।**
**मन्त्री मन्त्रमिमं जपेद्विषगदोन्मादापमृत्युज्वरान्**
**जित्वा वर्षशतं विशिष्टविभवो जीवेत् सुखं बन्धुभिः॥ ९१ ॥**

इन्दुभ्यामित्यन्त्यबीजगाभ्यां विसर्गावयवबिन्दुभ्याम् । तत इत्यन्त्यबीजात् । तत्र प्रकारः । मनोरमप्रदेशे पद्मासने उपविश्य सुषुम्णाग्रन्थिताधोमुखसहस्रदलपद्म-कर्णिकामध्ये विसर्गं चन्द्रमण्डलद्वयरूपेण ध्यात्वा तस्मात् चन्द्रमण्डलद्वयात् विगलितबहुलसुधाधारया संसिच्यमानमनाहतकमलकर्णिकागतं सकारं सञ्चिन्त्य सुषुम्णारन्ध्रेण सकारनिर्गतसुधारसेनाऽभिषिच्यमानं परिपूर्णसुधामयं मणिपूरस्थं बिन्दुं ध्यात्वा ततः स्रवदमृतधारापरिपूर्णं मूलाधारस्थितं हकारं चिन्तयित्वा ततोऽमृत-रसपरिपूर्णं मन्त्राक्षरामृतसंसिक्तमात्मानं परमानन्दसन्दोहनिमग्नमिव ध्यायेदिति । अस्य जीवमन्त्रस्य तन्त्रान्तरोक्तो विशेष उच्यते—

ईश्वर उवाच— अजपाराधनं देवि कथयामि तवाऽनघे ।
यस्य विज्ञानमात्रेण परंब्रह्माऽधिगच्छति ॥
हंसः पदं परेशानि प्रत्यहं जपते नरः ।
मोहान्धो यो न जानाति मोक्षस्तस्य न विद्यते ॥
श्रीगुरोः कृपया देवि ज्ञायते जप्यते ततः ।
तस्योच्छ्वासैस्तु निश्वासैस्तदा बन्धक्षयो भवेत् ॥
उच्छ्वासे चैव निश्वासे हंस इत्यक्षरद्वयम् ।
तस्मात्प्राणस्तु हंसाख्य आत्माकारेण संस्थितः ॥
नाभेरुच्छ्वासनिश्वासा हृदयाग्रे व्यवस्थिताः ।
षष्टिश्वासैर्भवेत् प्राणः षट् प्राणा घटिका मता ॥
षष्टिर्नाड्या अहोरात्रं जपसंख्याऽजपामनोः ।
एकविंशतिसाहस्रं षट्शताधिकमीश्वरि ॥
प्रत्यहं जपते प्राणः स्पन्दा (सदा) नन्दमयीं पराम् ।
उत्पत्तिर्जप आरम्भो मृतिरस्य निवेदनम् ॥
विना जपेन देवेशि जपो भवति मन्त्रिणः ।
अजपेयं ततः प्रोक्ता भवपाशनिकृन्तनी ॥
एवं जपं महेशानि प्रत्यहं विनिवेदयेत् ।
गणेशब्रह्मविष्णुभ्यो हराय परमेश्वरि ॥
जीवात्मने क्रमेणैव तथा च परमात्मने ।
षट् शतानि सहस्राणि षडेव च तथा पुनः ॥
षट्सहस्राणि च पुनः सहस्रं च सहस्रकम् ।
पुनः सहस्रं गुरवे क्रमेण तु निवेदयेत् ॥
आधारे स्वर्णवर्णाभे वादिसान्तानि संस्मरेत् ।
द्रुतसौवर्णवर्णानि दलानि परमेश्वरि ॥
स्वाधिष्ठाने विद्रुमाभे बादिलान्तानि च स्मरेत् ।
विद्युत्पुञ्जप्रभाभानि सुनीलमणिपूरके ॥
डफान्तानि महानीलप्रभाणि च विचिन्तयेत् ।
पिङ्गवर्णे महावह्नि कर्णिकाभानि चिन्तयेत् ॥
कादिठान्तानि पत्राणि चतुर्थेऽनाहते प्रिये ।
विशुद्धौ धूम्रवर्णे तु रक्तवर्णान् स्वरान् स्मरेत् ॥

आज्ञायां विद्युदाभायां शुभ्रौ हक्षौ विचिन्तयेत् ।
कर्पूरद्युतिसंराजत्सहस्रदलनीरजे ॥
नादात्मकं ब्रह्मरन्ध्रं जानीहि परमेश्वरि ।
एतेषु सप्तचक्रेषु स्थितेभ्यः परमेश्वरि ॥
जपं निवेदयेदेनमहोरात्रभवं प्रिये ।
अजपा नाम गायत्री त्रिषु लोकेषु दुर्लभा ॥
अजपां जपतो नित्यं पुनर्जन्म न विद्यते ।
अजपा नाम गायत्री योगिनां मोक्षदायिनी ॥
अस्याः सङ्कल्पमात्रेण नरः पापैः प्रमुच्यते ।
अनया सदृशी विद्या अनया सदृशो जपः ॥
अनया सदृशं पुण्यं न भूतं न भविष्यति ॥ इति ॥ ९१ ॥

साधक किसी मनोहर स्थान में पद्मासन से बैठकर सुषुम्णा युक्त अधोमुख सहस्र दल वाले पद्म की कर्णिका के मध्य में विसर्ग का दो चन्द्रमण्डल रूप से ध्यान कर उन दोनों चन्द्रमण्डलों से बहते हुये अनेक सुधा धारों से संसिच्यमान अनाहत कमल कर्णिका के मध्य में सकार वर्ण का ध्यान करे। तदनन्तर सुषुम्णा मार्ग से सकार द्वारा निकले हुये सुधारस से संसिच्यमान परिपूर्ण सुधामय मणिपूरस्थ बिन्दु का ध्यान कर उससे चूते हुये अमृत धारा से मूलाधार स्थित हकार का ध्यान करे। पुनः उससे चूते हुये अमृतरस परिपूर्ण मन्त्राक्षर (हंसः) का पुनः उससे झरते हुये अमृतरस से संसिक्त अपनी आत्मा का ध्यान कर परमानन्द संदोह में निमग्न हो इस अजपा मन्त्र का जप करे तो वह साधक विष रोग, उन्माद, अपमृत्यु और ज्वर आदि का उन्मूलन कर अनेक प्रकार के वैभवों से युक्त हो सैकड़ों वर्षों तक जीता है ॥ ९१ ॥

### अग्निमन्त्रोद्धारः

व्याहृतित्रयमग्निः स्याज्जातवेद इहावह ।
सर्वकर्माणि संभाष्य साधयाऽग्निप्रिया ततः ॥ ९२ ॥
ताराद्योऽयं मनुः प्रोक्तः पञ्चविंशतिवर्णवान् ।

### ऋष्यादिकथनम्

ऋषिर्भृगुर्भवेच्छन्दो गायत्रं देवताऽनलः ॥ ९३ ॥
विभक्तैः पञ्चभिः षड्भिश्चतुर्भिः पञ्चभिस्त्रिभिः ।
द्वाभ्यामङ्गक्रिया प्रोक्ता वर्णैर्मूलमनोः क्रमात् ॥ ९४ ॥

अग्निमन्त्रमाह व्याहृतीति । अग्निरिति स्वरूपम् । विसर्गस्य सन्धौ रेफः । अग्निप्रिया स्वाहा । प्रणवशक्तिपुटित इति केचित् । श्रीकामैः श्रीबीजादिर्जप्तव्यः । प्रणवो बीजं स्वाहा शक्तिः । व्याहृतित्रयं ततोऽग्निप्रिया ताराद्योऽयं मनुरित्यनेन सप्ताक्षरः समृद्ध्याग्निमन्त्रोऽपि सूचितः । तदुक्तमाचार्यैः—

वियतो दशमोऽर्घिसर्गयुक्तो भुवसर्गौ भृगुलान्तषोडशाचः ।
हुतभुग्दयिता ध्रुवादिकोऽयं मनुरुक्तः सुसमृद्धिदः कृशानोः ॥ इति ।

अस्य प्रणवो बीजं स्वाहा शक्तिः । एतन्मन्त्रोक्तमेर्वष्यादि । द्विरुक्ताभिर्व्याहृतिभिः षडङ्गम् । ध्यानं तु—

शक्तिस्वस्तिकपाशान् साङ्कुशवरदाभयान् दधत् त्रिमुखः ।
मुकुटादिविविधभूषोऽवताच्चिरं पावकः प्रसन्नो वः ॥

जपेदिमं मनुमृतुलक्षमादराद्दशांशतः प्रतिजुहुयात् पयोऽन्धसा । ससर्पिषा सुसिततरैश्च षाष्टिकैः । इति ।

पूजा तु वक्ष्यमाणक्रमेणैवेति । अग्निरित्यादि स्वाहान्तोऽपि पृथक् मन्त्र इत्यपि सूचितम् । तदुक्तं प्रयोगसारे—

मन्त्रोऽप्यग्निर्जातवेद इहावहसमन्वितः ।
सर्वकर्माण्यतः साधय स्वाहेति क्रमोदितः ॥ इति ।

अपेक्षितार्थद्योतनिकायामप्येतादृश उक्तः । 'द्विवेदवेदेषुवह्निद्विवर्णैरङ्गकल्पना' इति । ऋष्यादि ध्यानपूजादिकं समानमेव ॥ ९२-९४ ॥

अब **अग्नि मन्त्र** कहते हैं—तीन व्याहृतियाँ, तदनन्तर 'अग्निर्जातवेद इहावह', पुनः 'सर्वकर्माणि साधय' इस प्रकार अग्निमन्त्र का उद्धार कहा गया । इसका स्वरूप 'ॐ भूभुर्वः स्वः अग्निर्जातवेद इहा वह सर्वकर्माणि साधय स्वाहा' हुआ । अग्नि का यह मन्त्र २५ अक्षंरों का हैं ॥ ९२-९३ ॥

इसके ऋषि भृगु हैं, गायत्री छन्द है तथा अग्नि इसके देवता हैं । इसे पाँच, छः चार, पाँच, तीन और दो अक्षरों के क्रम में विभक्त कर षडङ्गन्यास करे । यथा—ॐ भूर्भुवः स्वः इति हृदि, अग्निर्जातवेद इति शिरसि इत्यादि ॥ ९३-९४॥

अग्निदेवध्यानम् । पुरश्चरणादिकथनम्

**अंसासक्तसुवर्ण मालयमरुणस्त्रक्चन्दनालङ्कृतं**
**ज्वालापुञ्जजटाकलापविलसन्मौलिं सुशुक्लांशुकम् ।**
**शक्तिस्वस्तिकदर्भमुष्टिकजपस्त्रक् स्रुक्स्रुवाभीवरान्**
**दोर्भिर्विभ्रतमञ्चितत्रिनयनं रक्ताभमग्निं भजे ॥ ९५ ॥**

आयुधध्यानं वामाद्यूर्ध्वयोराद्ये तदधस्थयोरन्ये । एवमान्तम् । ध्यान्मनन्तरं सप्तजिह्वाख्यमुद्रां प्रदर्शयेत् । तल्लक्षणं यथा—

मणिबन्धस्थितौ कृत्वा प्रसृताङ्गुलिकौ करौ ।
कनिष्ठाङ्गुष्ठयुगले मिलित्वाऽन्याः प्रसारयेत् ।
सप्तजिह्वाख्यमुद्रेयं वैश्वानरवशङ्करी ॥ इति ।

इयं सर्वाग्निमन्त्रसाधारणीति ज्ञेयम् ॥ ९५ ॥

अब **अग्नि के ध्यान का स्वरूप** कहते हैं—जिनके गले में मनोहर सुवर्ण की माला है, जो लाल माला और लाल चन्दन से अलंकृत हैं, ज्वालापुञ्ज के समान पीली जटा जिनके शिरोभाग को अलंकृत कर रही है, जो स्वच्छ वस्त्र धारण किये हुये हैं और अपने हाथों में शक्ति, स्वास्तिक, दर्भमुष्टि, जपमाला, स्त्रुक्, स्त्रुवा, अभय और वर धारण किये हुये हैं तथा तीन नेत्रों से सुशोभित हैं ऐसे रक्तवर्ण वाले अग्नि का मैं भजन करता हूँ ॥ ९५ ॥

**गुरोर्लब्धमनुर्मन्त्री चतुर्दश्यामुपोषितः ।**
**जपेद्भानुसहस्त्राणि शुद्धाचारो जितेन्द्रियः ॥ ९६ ॥**

**गुरोर्लब्धमनुर्मन्त्री चतुर्दश्यामुपोषितो जपेदित्यन्वयः । चतुर्दश्यामिति चैत्रकृष्ण-चतुर्दश्याम् ।**

**तदुक्तम्— वत्सरादेश्चतुर्दश्यां दिनादावेव दीक्षितः ।**
**मन्त्रं द्वादशसाहस्त्रं जपेत्सम्यगुपोषितः ॥ इति ॥ ९६ ॥**

साधक को अग्नि के उपर्युक्त मन्त्र का गुरु से प्राप्त कर तदनन्तर चतुर्दशी को उपवास करते हुये, शुद्ध आचरण पूर्वक रहते हुये, जितेन्द्रिय हो, बारह हजार जप करना चाहिए ॥ ९६ ॥

**अमावस्यादिने विप्रान् भाजयेन्मधुरोत्तरैः।**
**भक्ष्यभोज्यैर्यथाशक्ति दद्यात्तेभ्योऽथ दक्षिणाम् ॥ ९७ ॥**
**भुक्त्वा(इष्ट्वा)स्वयं समानीय होमद्रव्याणि शोधयेत् ।**
**अपरं दिनमारभ्य होमं कुर्यादतन्द्रितः ॥ ९८ ॥**

**मधुरोत्तरैः शर्करादि मधुरद्रव्याधिकैः । अपरं दिनमिति शुक्लप्रतिपदम् ।**

**तदुक्तम्—परेऽह्नि प्रतिपद्येतैर्जुहुयादर्चितेऽनले । इति ।**

**नारायणीये च— अग्न्यादिषु दिगन्तेषु तिथिष्वष्टोत्तरं शतम् । इति ॥ ९७-९८ ॥**

तदनन्तर अमावस्या के दिन ब्राह्मणों को मधुर से मधुर भक्ष्य भोजनादि पदार्थों का भोजन करावे और उन्हें अपनी शक्ति के अनुसार दक्षिणा भी देवे । पश्चात् स्वयं भी भोजन करे ॥ ९७ ॥

इसके बाद दूसरे दिन शुक्ल प्रतिपदा को स्वयं होम द्रव्य ले आवे और उसे शुद्ध कर एकाग्रचित्त हो होम करे ॥ ९८ ॥

**क्रमाद्वटसमिद्व्रीहि तिलराजी हविर्घृतैः।**
**प्रत्येकमष्टोत्तरशतं जुहुयाद् दिनशः सुधीः॥ ९९ ॥**

**क्रमात् वटेति षड्द्रव्याणि । नारायणीये तु सप्तद्रव्याण्युक्तानिन्यग्रोधसमिधो व्रीहितिलराजीघृतान्विताः । सपायसघृता नित्यम् । इति ।**

**तथा— तैर्द्रव्यैः सप्तमिः पृथक् । इति ॥ ९९ ॥**

वट की समिधा, व्रीहि, तिल, राई, हविष्य एवं घृत से अलग अलग प्रतिदिन एक सौ आठ बार आहुति प्रदान करे ॥ ९९ ॥

**दशाहमेवं निर्वर्त्य विधानेन विधानवित् ।**
**दत्त्वा पूर्णाहुतिं सम्यगेकादश्यां द्विजोत्तमान् ॥ १०० ॥**
**सम्पूज्य तर्पयेद्वित्तैर्यथाविभवमादरात् ।**
**गुरवे दक्षिणां दद्यादरुणां गां पयस्विनीम् ॥ १०१ ॥**
**वासांसि धनधान्यानि दत्त्वा सम्प्रीणयेत् पुनः।**
**स्वमण्डलान्तं प्रयजेत्पीठं सनवशक्तिकम् ॥ १०२ ॥**
**पीता श्वेताऽरुणा कृष्णा धूम्रा तीव्रा स्फुलिङ्गिनी।**
**रुचिरा ज्वालिनी प्रोक्ता कृशानोर्नव शक्तयः॥ १०३ ॥**

दशाहमिति । एवं विधानेन दशाहं निर्वर्त्य विधानविदेकादश्यां पूर्णाहुतिं हुत्वा द्विजोत्तमान् सम्यक् सम्पूज्येत्यन्वयः । तत्र विधानविदित्यनेन महाव्याहृतिहोमं कृत्वा अङ्गमूर्त्तिलोकपालास्त्राणामेकैकामाहुतिं दत्त्वा पूर्णाहुतिरित्युक्तम् । सम्यक् तर्पयेदित्यनेन अर्घ्यादिभिरुपचारैरित्युक्तम् । स्वमण्डलान्तं वह्निमण्डलान्तम् ॥ १००-१०३ ॥

विधानवेत्ता इस प्रकार दश दिन पर्यन्त निरन्तर होम करे । तदनन्तर पूर्णाहुति देकर एकादशी के दिन ब्राह्मणों का आदर पूर्वक पूजन करे और यथाशक्ति वित्त प्रदान कर उन्हें तृप्त करे पुनः गुरु को लाल गाय जो ब्याई हो दक्षिणा के रूप में देवे ॥ १००-१०१ ॥

इसके अतिरिक्त वस्त्र, धन, धान्य आदि भी देकर उन्हें प्रसन्न करे । इसके बाद नवशक्ति (द्र.१४.१०३) युक्त पीठ पर वह्नि मण्डलान्त पूजन करे ॥१०२॥

१. पीता, २. श्वेता, ३. अरुणा, ४. कृष्णा, ५. धूम्रा, ६. तीव्रा, ७. स्फुलिंगिनी, ८. रुचिरा एवं ९. ज्वालिनी—ये कृशानु (अग्नि) की नव शक्तियाँ कही गई हैं ॥ १०३ ॥

आसनमन्त्रः

**स्वबीजेनासनं दद्यान्मूर्त्तिं मूलेन कल्पयेत् ।**
**तत्र संपूजयेद्वह्निं विधिना प्रोक्तलक्षणम् ॥ १०४ ॥**
**अङ्गपूजां पुरा कृत्वा मूर्त्तीरष्टौ दलेष्विमाः ।**
**जातवेदाः सप्तजिह्वो हव्यवाहनसंज्ञकः ॥ १०५ ॥**
**अश्वोदरजसंज्ञोऽन्यः पुनर्वैश्वानराह्वयः ।**
**कौमारतेजाः स्याद्विश्वमुखो देवमुखः परः ॥ १०६ ॥**
**अर्च्याः स्वस्तिकशक्तिभ्यां विराजितकराम्बुजाः।**
**लोकेशानर्चयेद् बाह्ये वज्राद्यायुधसंयुतान् ॥ १०७ ॥**

**स्वबीजेनेति रमित्यनेन । रं वह्नियोगपीठाय नमः इति आसनमन्त्रः । विधिनेति षोडशोपचारैः । प्रोक्तलक्षणमुक्तध्यानम् । मूर्त्तीनां कथनमन्यमूर्त्तिनिवृत्त्यर्थम् । प्रयोग-सार नारायणीययोरन्या मूर्त्तय उक्ताः—**

**अग्निर्वैश्वानरः पश्चात् परः प्रोक्तो हुताशनः ।**
**हुतवर्त्मा जातवेदास्ततश्चापि हुतावहः ।**
**भूयो देवमुखः सप्तजिह्वश्चेत्यग्निमूर्त्तयः ॥ इति ।**

**एता व्याहृतित्रयरहिते मन्त्रे ज्ञेयाः ॥ १०४-१०७ ॥**

अग्नि के बीज मन्त्र (रँ वह्नियोगपीठाय नमः) इस मन्त्र से आसन देना चाहिए और मूल मन्त्र (द्र. १४. ९२) से मूर्त्ति की कल्पना कर उसमें उपर्युक्त अग्नि का ध्यान करते हुये षोडशोपचार से अग्नि की पूजा करनी चाहिए । इसके बाद अङ्गपूजा कर आठ पत्रों पर निम्नलिखित अग्नि की आठ मूर्त्तियों का पूजन करना चाहिए । जातवेद, सप्तजिह्व, हव्यवाहन, अश्वोदरज, वैश्वानर, कौमार-तेज, विश्वमुख और देवमुख—ये ८ अग्नि की मूर्त्तियाँ हैं ॥ १०५-१०६ ॥

इन सभी ८ मूर्त्तियों के हाथों में स्वस्तिक तथा शक्ति विराजमान है इसके बाद बाहर वज्रादि शक्तियों से युक्त लोकपालों की पूजा करनी चाहिए ॥ १०७ ॥

**इति संपूजयेन्नित्यं जपेत् साग्रं सहस्रकम् ।**
**जायते वत्सरादर्वाग्धनधान्यसमृद्धिमान् ॥ १०८ ॥**

**जपेत् साग्रं सहस्रकमिति नित्यजपसंख्योक्ता । इयं सर्वत्रापि ज्ञेया ॥ १०८ ॥**

इस प्रकार साधक नित्य अग्निदेव का पूजन कर १००८ बार अग्नि मन्त्र का जप करे । ऐसा करने से साधक वर्ष के पहले ही धन धान्यादि से समृद्ध हो जाता है ॥ १०८ ॥

**साज्यमन्नं प्रजुहुयाद्वत्सराल्लभते श्रियम् ।**
**कुसुमैर्ब्रह्मवृक्षस्य दधिक्षौद्रघृतप्लुतैः ॥ १०९ ॥**
**करवीरप्रसूनैर्वा मण्डलात् स्यात्समृद्धिमान् ।**
**षण्मासं कपिलाज्येन जुहुयाद्वत्सरान्तरे ॥ ११० ॥**
**तस्य सञ्जायते लक्ष्मीः कीर्त्तिस्त्रैलोक्यवन्दिता ।**
**शालिभिर्जुहुयान्नित्यं विधिनाऽष्टोत्तरं शतम् ॥ १११ ॥**
**व्रीहिगोमहिषान्नाद्यैर्भवनं तस्य पूर्यते ।**
**तिलहोमेन महतीं लक्ष्मीमाप्नोति मानवः ॥ ११२ ॥**
**पलाशबिल्वखदिरशमीदुग्धमहीरुहाम् ।**
**विकङ्कतारग्वधयोः समिद्भिः करवीरजैः ॥ ११३ ॥**
**प्रसूनैः कुमुदैः पद्मैः कह्लारैररुणोत्पलैः ।**

जातीप्रसूनैर्दूवाभिर्नित्यमष्टोत्तरं शतम् ॥ ११४ ॥
एकेन जुहुयान्मन्त्री प्रतिपत्स्वथवा सुधीः ।
साधेयदखिलान् कामान् षण्मासान्नाऽत्र संशयः ॥ ११५॥

जुहुयादिति षण्मासम् । विधिनाऽष्टोत्तरं शतमिति । विधिनेति प्रति प्रतिपदं चेत्युक्तम् । नित्यं जुहुयात् प्रति प्रतिपदं चेति विकल्पः । एकेन नित्यमष्टोत्तरं शतमिति दुग्धमहीरुह एकस्य यस्य कस्य चिद्ग्रहणात् । अरुणोत्पलैः रक्तकमलैः रक्तकुवलयैरित्यपि । यत्कोशश्च—'रक्तोत्पलं कोकनदं रक्ताब्जे रक्तसन्ध्यके' इति । अतः सप्तसमिधः सप्तपुष्पाणि एका दूर्वेति पञ्चदश द्रव्याणि । तत्र प्रतिपदादि पर्वपर्यन्तं प्रत्यहमेकैकेनोक्तसंख्यया जुहुयात् । एवं प्रतिपक्षं यावत् षण्मासपूर्त्तिः । अथवा प्रतिपत्स्विति पक्षे एकेन एकैकेन तेन तस्मिन् दिवसे पञ्चदशभिर्द्रव्यैः प्रत्येकमष्टोत्तरशतसंख्यया जुहुयात् ॥ १०९-११५ ॥

प्रतिदिन घी युक्त खीर का होम करे तो वर्ष के भीतर ही साधक अनन्त श्री प्राप्त कर लेता है । दही, घृत एवं मधु से अलग-अलग परिप्लुत पलाश समिधा से नित्य एक सौ आठ बार हवन करे । अथवा दही, घृत एवं मधु से पृथक् पृथक् भिगोये गये करवीर के पुष्पों के द्वारा प्रत्येक से एक सौ आठ बार हवन से साधक सर्व समृद्धिमान् होता है । यदि कपिला घी से प्रतिदिन १०८ संख्या में होम करे तो संवत्सर के भीतर ही उसे लक्ष्मी प्राप्त हो जाती हैं और उसकी कीर्त्ति त्रिलोक में पूज्य होती है । शाली धान्य से विधिवत् एक सौ आठ बार प्रतिदिन होम करे तो धान्य, गौ, महिष एवं अन्नादि से उसका घर पूर्ण हो जाता है । तिल के होम से मनुष्य महती श्री प्राप्त कर लेता है ॥ १०९-११२ ॥

१. पलाश, २. बेल, ३. खैर, ४. शमी एवं ५. दुधारु वृक्षों में कोई एक वृक्ष, ६. विकंकत, ७. आरग्वध की समिधाओं से, ८. करवीर, ९. कुमुद, १०. कमल, ११. कुवल, १२. कह्लार, १३. लाल कमल, १४. जातीपुष्प (मालती) तथा १५. दूर्वा—इन पन्द्रह द्रव्यों से पृथक् पृथक् प्रतिपदादि से पर्व पर्यन्त होम करे । (यहाँ सात प्रकार की समिधा सात प्रकार के पुष्प तथा एक दूर्वा कुल मिलाकर पन्द्रह द्रव्य कहे गये हैं ।) अथवा केवल प्रतिपदा को ही उक्त पन्द्रह द्रव्यों से हवन करे तो साधक छः महीने के भीतर ही अपनी समस्त कामनाओं की पूर्त्ति कर लेता है ॥ ११३-११५ ॥

### तुरगाग्निमन्त्रः

उत्तिष्ठपुरुष ब्रूयाद्धरिपिङ्गल तत्परम् ।
लोहिताक्षपदं देहि मे ददापय ठद्वयम् ॥ ११६ ॥
चतुर्विंशत्यक्षरात्मा समृद्धिमनुरीरितः ।

### ऋष्यादिकथनम्

ऋष्यादयः पुरा प्रोक्ताः षड्भूतकरणैस्त्रिभिः ॥ ११७ ॥

चतुर्भिर्युगलेनाऽर्णैर्मूलमन्त्रसमुद्भवैः ।
विदधीत षडङ्गानि जातियुक्तानि मन्त्रवित् ॥ ११८ ॥

तुरगाग्निमन्त्रमाह उत्तिष्ठति । ठद्वयं स्वाहा । समृद्धिमनुरित्यनेन विनियोगोक्तिः। मन्त्रस्थ हलो बीजानि । स्वराः शक्तयः । प्रणवो बीजं स्वाहा शक्तिरिति पद्मपादाचार्याः । प्रणवाद्य इति केचित् । नृसिंहबीजाद्य इत्यन्ये । लक्ष्मीबीजाद्य इत्यपरे । मृत्युञ्जयाद्य इत्यपि केचित् । प्रयोगे देहि मे एतत्पूर्वं साध्ययोगोऽपि ज्ञेयः । भूतैरिति पञ्चभिः । करणैश्चतुर्भिः । प्रयोगसारनारायणीययोः लोहिताक्षमेपदद्वयातिरिक्तः प्रणवादिर्विंशत्यक्षर एवोद्धृतः । तदुक्तम्—

उत्तिष्ठपुरुषेत्युक्त्वा हरिपिङ्गल देह्यथ ।
ददापयेति तारादिः स्वाहान्तो मन्त्र ईरितः ॥ इति ।
चतुस्त्रीषुद्व्यब्धियुगैर्वर्णैश्चाऽङ्गं पुरोदितम् । इति ॥ ११६-११८॥

अब **तुरगाग्नि मन्त्र** कहते हैं—प्रथम 'उत्तिष्ठ पुरुष', तदनन्तर 'हरिपिङ्गल', तदनन्तर 'लोहिताक्ष' यह पद, तदनन्तर 'देहि में ददापय स्वाहा' इतना उच्चारण करे । इस प्रकार २४ अक्षरों का तुरगाग्नि मन्त्र कहा गया, जो सर्वसमृद्धि को देने वाला है । इसके ऋषि आदि पहले (द्र. १४. ९३) कह आये हैं । इस मन्त्र के छः, पाँच, चार, चार, तीन, चार और दो अक्षरों से हृदय शिर आदि स्थानों में मन्त्रवेत्ता न्यास करे ॥ ११६-११८ ॥

तुरगाग्निध्यानम्

स्वर्णाश्वत्थविनिर्गतं हुतवहं सिन्दूरपुञ्जप्रभं
ज्वालाभिर्निचिताङ्गरोमनिचयं कान्त्या जगन्मोहनम् ।
अश्वाकारमनर्घरत्नविलसद् भूषालसत्कन्धरं
रत्नैरिन्द्रियनिर्गतैर्वसुमतीमाच्छादयन्तं स्मरेत् ॥ ११९ ॥

तुरगाग्निध्यानमाह स्वर्णेति ॥ ११९ ॥

अब **तुरगाग्नि मन्त्र के ध्यान का प्रकार** कहते हैं—सुवर्णमय अश्वत्थ वृक्ष से उत्पन्न, सिन्दूर पुञ्ज के समान रक्तवर्ण की कान्ति वाले, जिन अग्निदेव के रोम रोम अग्निज्वाला से पूर्ण हैं, जिनकी कान्ति समस्त जगत् को मोहित करने वाली है, जिनका आकार अश्व जैसा है, जिनका कन्धा बहुमूल्य देदीप्यमान् रत्नों से निर्मित आभूषणों से शोभित हो रहा है और जो अपने समस्त इन्द्रियों से निकलते हुये रत्नों से पृथ्वी को पूर्ण कर रहे हैं, साधक को ऐसे तुरगाकार अग्निदेव का स्मरण करना चाहिए ॥ ११९ ॥

पुरश्चरणादिकथनम्

लक्षं मनुं जपेदेनं पयोऽन्नेन ससर्पिषा ।
दशांशं जुहुयाद्वह्नौ तुरगाग्निमनुं स्मरन् ॥ १२० ॥

पीठे प्रागीरितेऽभ्यर्च्येत्तदङ्गैर्मूर्त्तिभिः सह ।
आशापालैस्तदीयास्त्रैरर्चयेद्धव्यवाहनम् ॥ १२१ ॥
प्रातः स्नानरतो मन्त्री सहस्रं यो जपेन्मनुम् ।
जित्वा रोगान् सुखं जीवेत् श्रिया वर्षशतं नरः॥ १२२ ॥
हृत्प्रमाणे जले स्थित्वा भानुमालोक्य संयतः ।
चतुःसहस्रं प्रजपेन्नित्यं संवत्सरावधि ॥ १२३ ॥
अपमृत्युभयं रोगकृत्यादारिद्र्यसम्भवान् ।
क्लेशान्निर्जित्य तेजस्वी जीवेद्वर्षशतं सुधीः ॥ १२४ ॥
कृत्तिकायां प्रतिपदि शालिहोमो धनप्रदः ।
दध्ना शमीसमिद्भिर्वा प्रतिपत्सु भवेद्धनम् ॥ १२५ ॥
इष्टावाप्तिर्भवेदाज्यैः पद्मैः ग्राममवाप्नुयात् ।
तै(ति) लैर्ज्योतिष्मतीभूतै रिपुराज्यं जयेन्नृपः ॥ १२६ ॥

लक्षं मनुं जपेदिति । तत्र प्रकारोऽपेक्षितार्थद्योतनिकायाम् । कृत्तिका-विशाखयोर्मध्ये अष्टमी चतुर्दशी वा यदि भवति तदाऽत्र अभिजित्काले पुरश्चरण-मारभ्य शमीरक्तचन्दनकरवीरकाणाम् अन्यतमेनाऽग्निप्रतिमाम् आपाद्य मूलेना-वाहनादि विसर्गान्तं कर्म कुर्वन् त्रिषवणस्नायी त्रिसहस्रं त्रिशतं चतुस्त्रिंशदधिकं नित्यं जप्त्वा घृताभिधारितशमीसमिद्भिः तादृक्पायसेन वा तदर्द्धं जुहुयान् मासं गुरोश्च गामपि दद्यात् सिद्धो भवति । उभयोः संन्ध्ययोर्मध्याह्ने वा करवीरपुष्पै-रर्चयेदिति । प्रागीरित इत्यव्यवहिते । तत्र कल्पतरुस्थाने स्वर्णाश्वत्थः पूजनीयः । ध्याने तथोक्तेः ॥ १२०-१२६ ॥

साधक उपर्युक्त चौबीस अक्षरों वाले मन्त्र का एक लाख जप करे । पश्चात् दूध और घी से मिश्रित खीर से उसका दशांश अग्नि में इस तुरगाग्नि मन्त्र से हवन करे ॥ १२० ॥

पश्चात् पूर्वोक्त पीठ पर अङ्गों, मूर्त्तियों, लोकपालों एवं लोकपाल के अस्त्रों के साथ अग्निदेव का पूजन करे ॥ १२१ ॥

जो साधक निरन्तर स्नान कर उक्त मन्त्र का सहस्र संख्या में जप करता है वह सभी रोगों को जीत कर सुखपूर्वक सौ वर्ष पर्यन्त जीता है ॥ १२२ ॥

हृदय पर्यन्त जल में खड़े होकर एकाग्रचित्त हो सूर्य की ओर देखते हुये नित्य वर्ष पर्यन्त ४ सहस्र जप करे तो पुरुष अपमृत्यु से होने वाला भय, रोग, कृत्या और दारिद्रय से उत्पन्न होने वाले समस्त क्लेशों को जीत कर तेजस्विता पूर्वक सौ वर्ष पर्यन्त जीता है ॥ १२४ ॥

प्रतिपदा को कृत्तिका नक्षत्र में शाली से किया गया होम धन प्रदान करता है अथवा प्रत्येक प्रतिपदा में दही का शमी की समिधा के द्वारा होम करने से धन की प्राप्ति होती है ॥ १२५ ॥

इस मन्त्र द्वारा घी के होम से इष्ट की अवाप्ति, पद्म के होम से ग्राम प्राप्ति और ज्योतिष्मती के तेल के होम करने से राजा अपने शत्रु के राज्य को जीत लेता है ॥ १२६ ॥

**अश्वत्थसमिधो मेषीघृताक्ता जुहुयान्नरः ।**
**कन्यामिष्टामवाप्नोति सापि तं प्राप्नुयात् पतिम् ॥ १२७ ॥**
**शुद्धाज्येन कृतो होमो ज्वरनाशकरः स्मृतः ।**
**सप्ताहं जुहुयान्मन्त्री बन्धूककुसुमैः शुभैः ॥ १२८ ॥**
**साग्रं सहस्रमचिरान्महतीं श्रियमश्नुते ।**
**मासं क्षीरेण गव्येन क्षीराहारो जितेन्द्रियः ॥ १२९ ॥**
**सहस्रं जुहुयान्मन्त्री सम्पदामधिपो भवेत् ।**
**आज्याक्तदूर्वाहोमेन जीवेद्वर्षशतं नरः ॥ १३० ॥**

अश्वत्थ की समिधा को भेंड के घी में डुबोकर होम करने से मनुष्य अनुकूल कन्या (स्त्री) प्राप्त करता है और यदि स्त्री होम करे तो वह भी अभीष्ट वर प्राप्त करती है ॥ १२७ ॥

केवल शुद्ध घी से किया गया होम ज्वरनाशक होता है । यदि मन्त्रज्ञ साधक बन्धूक पुष्पों से सात दिन निरन्तर एक सहस्र होम करे तो वह महती श्री प्राप्त करता है । एक मास पर्यन्त गौ के दूध से सहस्र संख्या में होम करने और नित्य जितेन्द्रिय एवं दुग्धाहार का प्रयोग करने से वह संपत्तिशाली हो जाता है । घी में डुबोई गई दूर्वा के होम से साधक सौ वर्ष पर्यन्त जीवित रहता है ॥१२८-१३०॥

**अष्टोत्तरशतं नित्यं हविषा मृगमुद्रया ।**
**जुह्वतो जायते लक्ष्मीर्धनधान्यसमृद्धिदा ॥ १३१ ॥**
**प्रतिमासं प्रतिपदि जुहुयादयुतं घृतैः ।**
**श्रीर्भवेन्महती तस्य षण्मासादनपायिनी ॥ १३२ ॥**
**अरुणैरुत्पलैः फुल्लैर्मधुरत्रयसंयुतैः ।**
**जुहुयाद्वत्सरार्द्धं यः स भवेदिन्दिरापतिः ॥ १३३ ॥**
**अरुणाज्यैस्त्रिमध्वक्तैर्जहुयादन्वहं सुधीः ।**
**सहस्रं वत्सरार्द्धेन भवेद् भूमिपुरन्दरः ॥ १३४ ॥**

मृगमुद्रयेति । मृगमुद्रालक्षणं तु—

मिलित्वाऽनामिकाङ्गुष्ठमध्यमाग्राणि योजयेत् ।
शिष्टाङ्गुल्युच्छ्रिते कुर्यान्मृगमुद्रेयमीरिता ॥ इति ॥ १३१ ॥

नित्य १०८ संख्या में हवि से मृगमुद्रा (कनिष्ठा तथा तर्जनी को अलग रख

कर अनामिका अङ्गुष्ठ और मध्यमा अङ्गुलियों को मिलाने से बनती है) द्वारा होम करे तो धन धान्य तथा समृद्धि देने वाली लक्ष्मी प्राप्त होती है ॥ १३१ ॥

यदि साधक प्रत्येक महीने के दोनों प्रतिपदा में घृत द्वारा दस हजार आहुति प्रदान करे तो उसे छः महीने के भीतर ही सर्वथा स्थिर महती लक्ष्मी प्राप्त हो जाती है ॥ १३२ ॥

त्रिमधुर (आज्य दूध मधु) से मिश्रित फूले हुये लाख कमलों से होम करे तो छः महीने के भीतर ही साधक लक्ष्मीवान् हो जाता है ॥ १३३ ॥

बुद्धिमान् साधक त्रिमधुर मिश्रित, चरु और आज्य से होम करे तो वह छः महीने के भीतर ही इस पृथ्वी का इन्द्र हो जाता है ॥ १३४ ॥

**वत्सरं जुहवतस्तस्य लक्ष्मीरिन्द्रेण वाञ्छिता ।**
**जुहुयादमृताखण्डैः पयोऽक्तैः सप्तवासरम् ॥ १३५ ॥**
**त्रिसहस्रं प्रतिदिनं मन्त्रविद्विजितेन्द्रियः ।**
**कृत्याद्रोहज्वरोन्मादरोगान् जित्वा निरन्तरम् ॥ १३६ ॥**
**जीवेद्वर्षशतं भूत्वा तेजसा भास्करप्रभः ।**
**करवीरजवाबिल्व पलाशनृपभूरुहाम् ॥ १३७ ॥**
**प्रसूनैः कुमुदैः फुल्लैः कुरण्टैर्जातिसम्भवैः ।**
**पुष्पैर्हुत्वा त्रिमध्वक्तैर्मन्त्री प्रतिपदं प्रति ॥ १३८ ॥**
**प्राप्नुयान्महतीं लक्ष्मीं वत्सराद्वाञ्छिताधिकाम् ।**
**आदाय तण्डुलप्रस्थं निर्मलं साधुशोधितम् ॥ १३९ ॥**
**गोदुग्धेन हविः कृत्वा कवलं तेन कल्पयेत् ।**
**आज्याक्तं तत् समादाय पूजिते हव्यवाहने ॥ १४० ॥**

अमृता गुडूची । नृपभूरुट् राजवृक्षः । हुत्वेति प्रत्येकम् । एकैकशः शतमिति आचार्योक्तेः । गोदुग्धेनेति रक्तवर्णगोदुग्धेन । तदुक्तं प्रयोगसारे—

शालेयैस्तन्दुलैः प्रस्थैः शोणगोक्षीरसाधितम् ।
हविः पिष्टं घृताक्तं तु जुहुयादाज्यमिश्रितम् ॥ इति ॥ १३५-१४० ॥

यदि ऊपर की वस्तुओं से निरन्तर वर्ष पर्यन्त १०८ आहुति दे तो जिस लक्ष्मी की कामना इन्द्र करते हैं वह लक्ष्मी उस साधक को प्राप्त होती है ॥१३५॥

मन्त्रवेत्ता यदि जितेन्द्रिय हो प्रतिदिन तीन सहस्र होम करे तो कृत्या, द्रोह ज्वर, उन्मादादि एवं रोग को जीतकर सौ वर्ष पर्यन्त जीता है और सूर्य के समान तेजस्वी रहता है ॥ १३६-१३७ ॥

करवीर, जवा, विल्व, पलाश, राजवृक्ष वृक्षों के पुष्पों, कुमुद, फूले हुये कुरण्ट और जाती पुष्पों को त्रिमधु से संपृक्त कर प्रत्येक से होम करे

तो वह एक वर्ष के भीतर अपनी मनोवाञ्छा से अधिक महती लक्ष्मी प्राप्त करता है ॥ १३७-१३९ ॥

एक प्रस्थ चावल लेकर उसे अच्छी प्रकार शुद्ध कर ले पश्चात् धो कर गो दूग्ध में पका कर उसकी हवि निर्माण करे फिर घी डालकर उसका ग्रास बनावे तथा उसे लेकर सम्यक् पूजित अग्नि में होम करे ॥ १३६-१४० ॥

**गन्धपुष्पादिभिः सम्यग् जपित्वाऽष्टोत्तरं शतम् ।**
**जुहुयात् प्रतिपद्यग्निं ध्यात्वा तुरगविग्रहम् ॥ १४१ ॥**
**जायते वत्सरादर्वाग्लक्ष्मीस्त्रैलोक्यमोहिनी ।**
**मन्त्रेणाऽनेन सञ्जप्तां वचां खादेद्दिनागमे ।**
**भारती निवसेत्तस्य मुखाम्भोजे विनिश्चला ॥ १४२ ॥**
**अष्टोत्तरशतं जप्तं जलं प्रातः पिबेन्नरः ।**
**जठराग्निर्ज्वलेत्तस्य हविषेव हुताशनः ॥ १४३ ॥**

**सम्यक् जपित्वेति लक्ष्मीबीजाद्यमित्युक्तम् । कवलहोमानन्तरमष्टोत्तरं सहस्त्रं शतं वा घृतेन जुहुयादिति अपेक्षितार्थद्योतनिकाकार आह स्म ॥ १४१-१४३ ॥**

तदनन्तर अग्नि की गन्ध पुष्पादि द्वारा भली प्रकार पूजा कर घोड़े के शरीर वाले अग्नि का ध्यान कर उपर्युक्त मन्त्र का एक सौ बार जप करते हुये प्रत्येक से आहुति प्रदान करे तो उसे संवत्सर के मध्य में त्रैलोक्य मोहिनी लक्ष्मी प्राप्त हो जाती है ॥ १४१-१४२ ॥

प्रातः काल इस मन्त्र से अभिमन्त्रित वचा का भक्षण करे तो उसके मुख कमल में वाणी स्थिर हो कर निवास करती हैं ॥ १४२ ॥

यदि साधक इस मन्त्र से एक सौ आठ बार अभिमन्त्रित जल प्रातः काल में पान करे तो उसकी जाठराग्नि इस प्रकार निरन्तर बढ़ती है जिस प्रकार घी प्रदान करने से अग्नि निरन्तर दीप्त होती है ॥ १४३ ॥

**कृत्वा नवपदात्मानं मण्डलं प्रागुदीरितम् ।**
**कलशान्नव कल्याणान् स्थापयेत् प्रोक्तवर्त्मना ॥ १४४ ॥**
**क्षीरवृक्षत्वगुद्भूतैः क्वाथैस्तान् पूरयेत् क्रमात् ।**
**वस्त्रादिभिरलङ्कृत्य नव रत्नानि निक्षिपेत् ॥ १४५ ॥**
**मध्ये सम्पूजयेदग्निं मूर्त्तीरष्टौ दिशां क्रमात् ।**
**कुम्भेषु गन्धपुष्पाद्यैर्धूपदीपैर्मनोहरैः ॥ १४६ ॥**
**स्पृष्ट्वा जपेत्ततः कुम्भान् मन्त्रमष्टोत्तरं शतम् ।**
**अभिषिञ्चेत्ततः साध्यं विनीतं दत्तदक्षिणम् ॥ १४७ ॥**

ज्वरग्रहमहारोगदारिद्र्यादीन् विजित्य सः ।
जीवेद्वर्षशतं सम्यगभिषिक्तः श्रिया सह ॥ १४८ ॥

॥ इति श्रीलक्ष्मणदेशिकेन्द्रविरचिते शारदातिलके
चतुर्दशः पटलः समाप्तः ॥ १४ ॥



नवपदात्मानं नवनाभम् । प्रागिति तृतीये ।
प्रोक्तवर्त्मना षष्ठपटलोक्तरीत्या ॥ १४४ ॥

॥ इति श्रीराघवभट्टविरचित-शारदातिलकटीकायां सत्सम्प्रदायकृतव्याख्यायां
पदार्थादर्शाभिख्यायां चतुर्दशः पटलः ॥ १४ ॥



प्रथम कही गई विधि के अनुसार नव पद का मण्डल निर्माण करे और उस पर प्रथम कही गई विधि के अनुसार नव कलश स्थापित करे ॥ १४४ ॥

फिर क्षीरवृक्षों के छाल से क्वाथ बनाकर उसे पूर्ण करे । पुनः वस्त्रादि से अलंकृत कर उसमें नव रत्न डाल देवे ॥ १४५ ॥

मध्य के कलश में अग्निदेव का और शेष आठ कलशों में पूर्वादि दिशाओं के क्रम से अग्नि की आठ मूर्त्तियों (द्र. १४. १०५-१०६) की पूजा गन्ध, पुष्प, धूप-दीप आदि उत्तमोत्तम उपचारों से करे ॥ १४६ ॥

पुनः उन कुम्भों का स्पर्श करते हुये एक सौ आठ बार उक्त मन्त्र का जप करे । तदनन्तर दक्षिणा प्रदान करने वाले विनीत साध्य (रोगी आदि) का कलश के जल से अभिषेक करे तो वह साध्य इस प्रकार सम्यक् किये गये अभिषेक से ज्वर, ग्रह, महारोग और दारिद्र्यादि जन्मक्लेशों को जीतकर श्री सम्पन्न हो सैकड़ों वर्षों तक जीता है ॥ १४८ ॥

॥ इस प्रकार शारदातिलक के चौदहवें पटल की डॉ० सुधाकर मालवीय
कृत हिन्दी व्याख्या पूर्ण हुई ॥ १४ ॥



# अथ पञ्चदशः पटलः

## अथ विष्णुप्रकरणम्

**अथ वक्ष्ये महामन्त्रान् विष्णोः सर्वार्थसाधकान् ।**
**यस्य संस्मरणात् सन्तो भवाब्धेः पारमाश्रिताः ॥ १ ॥**

**क्रमप्राप्तान् विष्णुमन्त्रानाह अथेति । सर्वार्थेति सकामं प्रति विनियोगोक्तिः । मुमुक्षुं प्रत्याह यस्येति ॥ १ ॥**

अब मैं विष्णु के सर्वार्थसिद्ध करने वाले महामन्त्रों को कहता हूँ । ये मन्त्र मुमुक्षू जनों के लिये भी हितकारी हैं, क्योंकि इन मन्त्रों के स्मरण मात्र से सज्जन लोग संसार रूपी समुद्र के पार जा चुके हैं ॥ १ ॥

मन्त्रः । ऋष्यादिकथनम्

**तारं नमः पदं पश्चान्नरौ दीर्घसमन्वितौ ।**
**पवनो णाय मन्त्रोऽयं प्रोक्तो वस्वक्षरान्वितः ॥ २ ॥**
**साध्यनारायणः प्रोक्तो मुनिश्छन्द उदाहृतम् ।**
**मन्त्रस्य देवी गायत्री देवता विष्णुरव्ययः ॥ ३ ॥**

**मन्त्रमुद्धरति तारमिति । नरौ नकाररेफौ दीर्घ आ तेन समन्वितौ तेन नारा इति । अत्र नमः शब्दस्य रोरुत्वे गुणे च ओङ्कार इति ज्ञेयम् । पवनो यः । णायेति स्वरूपम् । वस्वक्षरः अष्टाक्षरः । तदुक्तं मन्त्रतन्त्रप्रकाशे—**

**नाभसं पञ्चमे षष्ठे स्थितं वर्णद्वयं क्रमात् ।**
**द्वितीयो मिश्रसंयुक्तस्तृतीयः स्यात्तु पञ्चमः ॥**
**वह्निर्वायुस्ततः प्रोक्तौ सानन्तौ त्रिचतुर्थकौ ।**
**चतुर्थे पञ्चमस्तद्वन्मन्त्रान्ते वायुवर्णकम् ॥ इति ।**

**अत्र नाभसमित्यनुषज्यते । तेन पञ्चमे तवर्गे यन्नाभसं नकाररूपाक्षरं तत् तृतीयं मन्त्रं तृतीयमक्षरमित्यर्थः । अत्र तृतीयमिति प्रणवं विना । सानन्तौ आकारयुक्तौ । त्रिचतुर्थकौ नकाररेफौ । चतुर्थे टवर्गे यत् पञ्चममक्षरं नकारमित्यर्थः । पञ्चमे तवर्गे षष्ठे पवर्गे यन्नाभसमक्षरं नकारमकाररूपं क्रमेणोद्धरणीयम् । तत्र द्वितीयो मकारः मिश्रेण ओकारेण संयुक्तः । प्रणवो बीजं आयेति शक्तिः । तदुक्तं मन्त्रतन्त्रप्रकाशे—**

**ज्वलत्प्रभः श्रुतेरादिर्बिन्दुमान् विष्णुरव्ययः ।**
**बीजमष्टाक्षरस्य स्यात्तेनाऽष्टाक्षरता भवेत् ॥**

अथ पञ्चदशाद्वर्णात् केवलं व्यजनीकृतात् ।
उत्तरो मन्त्रशेषस्तु शक्तिरित्यस्य कथ्यते ॥ इति ।

साध्यनारायणो नामाऽन्तर्यामीति देशिकाः ।

तदुक्तं मन्त्रतन्त्रप्रकाशे—

अन्तर्यामी ऋषिः छन्दो गायत्री । इति ।

प्रत्यर्णमृष्यादि यथा—

गौतमश्च भरद्वाजो विश्वामित्र ऋषिस्तथा ।
जमदग्निर्वशिष्ठश्च कश्यपोऽत्रिश्च कुम्भजः ॥
गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च ।
त्रिष्टुब्जगत्यौ च विराट् वसवोऽष्टौ च देवता ॥ इति ॥ २-३ ॥

प्रथम तार (ॐ), फिर 'नमः' पद पश्चात् दीर्घ नर शब्द (नारा) तदनन्तर पवन (य), पुनः 'णाय' पद । इस प्रकार आठ अक्षरों का यह महामन्त्र है । इस प्रकार इसका स्वरूप 'ॐ नमो नारायणाय' हुआ ॥ २ ॥

इस मन्त्र के साध्य नारायण मुनि ऋषि हैं, गायत्री देवी छन्द है और निर्विकार विष्णु इस महामन्त्र के देवता हैं ॥ ३ ॥

पञ्चाङ्गमन्त्रः

**क्रुद्धोल्काय हृदाख्यातं महोल्काय शिरः स्मृतम् ।**
**वीरोल्काय शिखा प्रोक्ता द्यूल्काय कवचं स्मृतम् ॥ ४ ॥**
**सहस्रोल्कायाऽस्त्रमुक्तमङ्गक्लृप्तिरियं मता ।**

पञ्चाङ्गमन्त्रोद्धारमाह क्रुद्धोल्कायेत्यादि । चतुर्थ्यन्तोद्धारेण सर्वेषां स्वाहान्तता जातिः पूर्वमुक्ता । उक्तं च मन्त्रतन्त्रप्रकाशे—

उल्कैः क्रुद्धमहावीरद्युसहस्रेति पूर्वकैः ।
एषां विभक्तियुक्तानां भवेदन्तेऽग्निवल्लभा ॥ इति ॥

अन्यत्रापि—क्रुद्धोल्कादिपदैर्वह्निजायान्तैर्जातिसंयुतैः । इति ।

अङ्गक्लृप्तिरियं मतेत्यनेन पूर्वं करन्यासः सूचितः । स यथा—

कुर्यात्करयोर्विधिवत् सृष्ट्यादिन्यासमष्टमन्त्रार्णैः ।
दक्षिणतर्जन्याद्या सृष्टिः स्याद्वामतर्जनीं यावत् ॥
तर्जन्युभयाद्येह स्थितिः कनिष्ठाद्वयान्तिका क्रमतः ।
सृष्टेर्विपरीतः स्यात् संहारोऽयं करे प्रोक्तः ॥
अष्टाङ्गं विन्यस्य स्थितिक्रमादङ्गपञ्चकं न्यसेत् ॥ इति ।

तत्र विशेषो नारायणीये—

कनिष्ठादि तदन्तानामङ्गुलीनां त्रिपर्वसु ।
ज्येष्ठाग्रेण क्रमात्तारुरुद्धानष्टाक्षरान् न्यसेत् । इति ॥ ४-५ ॥

अब इस मन्त्र के **पञ्चाङ्ग का उद्धार क्रम** कहते हैं—

क्रुद्धोल्काय हृदि, महोल्काय शिरसि, वीरोल्कायेति शिखायाम्, द्यूल्काय हुँ इति कवचम्, सहस्रोल्काय अस्त्राय फट्—इस प्रकार इससे पञ्चाङ्गन्यास करना चाहिए ॥ ४-५ ॥

अष्टाङ्गमन्त्रः

**भूयो वर्णैर्मनोः षड्भिः षडङ्गानि समाचरेत् ॥ ५ ॥**
**अवशिष्टौ पुनर्वर्णौ विन्यसेत् कुक्षिपृष्ठयोः ।**
**बद्धदिक् चक्रमन्त्रेण मन्त्रवर्णांस्तनौ न्यसेत् ॥ ६ ॥**

पञ्चाङ्गमुक्त्वाऽष्टाङ्गमाह भूय इति । तत्र षडङ्गवदेव षडक्षराणि विन्यस्य णां उदराय नमः यं पृष्ठाय नम इति कुक्षिपृष्ठयोर्न्यसेत् । तदुक्तम्—

अष्टाक्षरेण व्यस्तेन कुर्याच्चाऽष्टाङ्गकं सुधीः ।
सहृच्छिरः शिखावर्मनेत्रास्योदरपृष्ठके ॥ इति ।

ईशानशिवेनाप्युक्तम्—

अस्य स्याद्धृदयं तारः शिरो नार्णः शिखा च मो ।
नावर्णः कवचं श (चा) स्त्रं रावर्णो नयनं परः ॥
उदरं पृष्ठमन्त्यौ च वर्णौ हि नमसा युतौ ॥ इति ।

अन्यत्रापि—हृदयशिरः पूर्वशिखा कवचास्त्राक्ष्युदरपृष्ठसम्भिन्नैः । इति ॥

इदमेव साम्प्रदायिकम् । बद्धदिगिति छोटिकां वादयन् । चक्रमन्त्रेणेति अग्रिमपटले वक्ष्यमाणेन ऐन्द्रीचक्रेण बध्नामि इत्यादिना । चतुर्थपटले सामान्यास्त्रमन्त्रेण दिग्बन्ध उक्तः । अत्र मन्त्रविशेषकथनाय पुनर्वचनम् । मन्त्रवर्णांस्तनौ न्यसेदित्यनेन सृष्टिस्थितिसंहारन्यासः सूचितः । यदाहुः—

मूर्द्धन्यक्ष्णोरास्ये हृदि नाभौ गुह्यजानुपादेषु ।
सृष्टिरियं निर्दिष्टा नाभ्यादि हृदन्तिका स्थितिस्तद्वत् ॥
संहारः पादाद्यो मूर्द्धान्तः कथित एष सृष्ट्यादिः ॥ इति ।

मन्त्रतन्त्रप्रकाशे तु— नाभावारभ्यते यस्तु हृदये च समाप्यते ।
स्थितिन्यासः स विज्ञेयो दृष्टादृष्टफलप्रदः ॥ इति ।

इदमेव साम्प्रदायिकम् । तत्रैव विशेषः—

विन्यसेद्वर्णमेकैकं बिन्द्वन्तं ध्रुववेष्टितम् ।
तत्राङ्गुलीभिर्न्यासः स्याच्छिरस्येकैव मध्यमा ॥
तर्जनीमध्यमाभ्यां तु चक्षुषोर्न्यास इष्यते ।
अङ्गुष्ठानामिकाभ्यां तु मुखे न्यासः प्रकीर्त्तितः ॥
हृदये ज्ञानमुद्रा स्यादङ्गुष्ठश्च कनिष्ठिका ॥
नाभौ प्रकीर्त्तिता गुह्ये अनङ्गुष्ठाः प्रकीर्त्तिताः ।
सर्वा जानौ च पादे च पञ्चापि परिकीर्त्तिताः ॥ इति ॥ ५-६ ॥

अब **पञ्चाङ्गन्यास कहकर षडङ्गन्यास** कहते हैं—

ऊपर कहे गये 'ॐ नमो नारायणाय' इस अष्टाक्षर मन्त्र के छः अक्षरों में एक एक अक्षर से षडङ्गन्यास करे। पुनः शेष बचे हुये दो अक्षरों से कुक्षि तथा पृष्ठ में न्यास करे। पुनः चक्र मन्त्र से (द्र. १६. ७१) छोटिका दे कर दिग्बन्धन करे ॥ ५-६ ॥

विभूतिपञ्जरन्यासः

**आधारे हृदये वक्त्रे दोःपन्मूलेषु नासिके।**
**कण्ठे नाभौ हृदि कूर्चे पार्श्वपृष्ठेषु तत्परम् ॥ ७ ॥**
**मूर्द्धास्यनेत्रश्रवणघ्राणेषु तदनन्तरम्।**
**दोः पादसन्ध्यङ्गुलिषु धातुप्राणेषु हृत्स्थले ॥ ८ ॥**
**मूर्द्धेक्षणास्यहृत्कुक्षिसोरुजङ्घापदद्वये।**
**एकैकशो न्यसेद्वर्णान् गण्डांसोरुपदेषु च ॥ ९ ॥**
**चक्रशङ्खगदाम्भोजं पदेष्ववहितो न्यसेत्।**

एवं पञ्चाङ्गाष्टाङ्गाक्षरन्यासानुक्त्वा दशावृत्तिमयं विभूतिपञ्जरन्यासमाह आधारेति। अत्र प्रत्येकमक्षरं प्रणवपुटितं कृत्वा न्यसेत्। मन्त्रतन्त्रप्रकाशे तथोक्तेः। प्रत्यावृत्तिसंपूर्णेन व्यापकं च। तथाच पद्मपादाचार्याः—'मन्त्री मन्त्रवर्णेति न्यास-मन्त्राणां प्रणवपुटितत्वं प्रतिपर्यायं व्यापकन्यासश्चोक्तः' इति। पूर्वार्द्धेनैकावृत्तिः। तत्र कः समासः। द्वितीयार्द्धेन द्वितीया। तृतीयार्द्धेन तृतीया। चतुर्थार्द्धेन तुर्याद्यष्टमान्तं पञ्च। तत्र दक्षकरसन्धिचतुष्टयाङ्गुष्ठवर्जं चतुरङ्गुलिष्वेका।

अन्ये तु दक्षहस्तसन्धित्रयपञ्चाङ्गुलिष्वित्यूचुः। एवं वामकरे द्वितीया। दक्षपादे तृतीया। वामपादे चतुर्थी। अन्ये तु करद्वयसन्धिष्वेका। पादद्वयसन्धिष्वन्या। अङ्गुष्ठद्वयवर्जकराङ्गुलिषु तृतीया। एवं पादाङ्गुलिषु चतुर्थीत्याहुः। हृदय एव त्वगादिषु पञ्चमी। पञ्चमार्द्धेन नवमी। श्लोकेन दशमी। तत्र गण्डांसोरुचरणेषु चतुरो वर्णान् विन्यस्य चक्रशङ्खगदापद्मप्रस्थानेषु शिष्टांश्चतुरो वर्णान् तदायुधमुद्रासहितान् विन्यसेत् इत्यवहितपदेन सूचितमिति सम्प्रदायविदः। तन्मुद्रालक्षणं तु—

वाममुष्ट्यन्तरेऽङ्गुष्ठे दक्षिणे सरलाङ्गुलीः।
वामाङ्गुष्ठः स्पृशेदग्रे योजितः सरलोदरः॥
अन्योन्याभिमुखौ हस्तौ कृत्वा तु ग्रथिताङ्गुलीः।
अङ्गुल्यौ मध्यमे भूयः संलग्ने सुप्रसारिते॥
गदामुद्रेयमाख्याता भुक्तिमुक्तिकरी तथा। इति॥

चक्रपद्ममुद्रालक्षणे प्रागुक्ते ॥ ७-१० ॥

फिर अष्टाक्षर मन्त्र के वर्णों से शरीर के आधार, हृदय, मुख, हाथ और पैर के मूलभाग, नासिका, कण्ठ, नाभि, हृदय, कुच, पार्श्व तथा पृष्ठ में न्यास करे। तदनन्तर शिर, मुख नेत्र, श्रवण और घ्राण में। इसके बाद हाथ और पैर

की सन्धियों में अङ्गुलियों में सप्त धातुओं में, पञ्चप्राणों में, शिर, नेत्र, मुख, हृदय, कुक्षि, ऊरु, दोनों जङ्घा तथा दोनों पदों में दोनों गण्डस्थल, दोनों कन्धा दोनों ऊरु तथा पदों में मन्त्र के एक एक अक्षर से न्यास करे तथा शेष चार अक्षरों से सावधानी पूर्वक एकाग्रचित्त से चक्र, शङ्ख, गदा और पद्म स्थानों में न्यास करे ॥ ७-१० ॥

**द्वादशाष्टाक्षरमन्त्रयोरैक्यम्, मूर्त्तिपञ्जरन्यासः**

**अष्टार्णोऽष्टप्रकृत्यात्मा ज्ञेयोऽसौ चतुरात्मनाम् ॥ १० ॥**
**संयोगात् सूरिभिः प्रोक्तो विशिष्टो द्वादशाक्षरः ।**

**मूर्त्तिपञ्जरं वक्तुं तदुपोद्घातत्वेन द्वादशाष्टाक्षरयोरैक्यमाह अष्टेति । अष्ट प्रकृतयः प्रथमपटलोक्ताः । अष्टप्रकृतय इत्यनेनाऽष्टतत्त्वन्यासः सूचितः । स द्विविधः संहारसृष्टिरूपः । तत्र संहारे मन्त्रः अनुलोमः । सृष्टौ मन्त्र प्रतिलोमः । तत्त्वानि पृथिव्यप्तेजोवाय्वाकाशाहङ्कारमहत्प्रकृतिरूपाणि । स्थानानि तु पादलिङ्ग हृदयमुख-मूर्द्धहृदयहृदयानि सप्त । सर्वतनौ चैकम् । सृष्टौ तत्त्वानुलोम्यञ्च विज्ञेयम् । तत्र प्रयोगः । ॐ नमः पराय पृथिव्यात्मने नमः पादयोः, नं नमः पराय जलात्मने नमः लिङ्ग इत्यादि संहारे । ततः सृष्टौ प्रयोगः । यं नमः पराय प्रकृत्यात्मने नमः सर्वशरीरे । णां नमः पराय महदात्मने नमो हृदीत्यादि । तदुक्तम्—**

**क्षितिसलिलानलपवनव्योमाहङ्कृतिमहत्प्रकृत्याख्यैः ।**
**व्युत्क्रमगदितैरेतैः क्रमगतमन्त्रार्णसंयुतैर्मन्त्री ॥**
**चरणान्धुहृदयवक्त्रकहृदयव्यापकेषु विन्यसेत् ।**
**संहारोऽयं गदितो विपरीता सृष्टिरस्य निर्दिष्टा ॥ इति ॥**

**चतुरात्मनां तुर्योक्तानाम् । अनेन बिन्दुनादशक्तिशान्तरूपाणाम् आत्मादि-चतुष्टयानां शरीरे व्यापकत्वेन न्यासः सूचितः ।**

**प्रयोगश्च—ॐ बिन्दुरूपात्मने नमः, ॐ नादरूपान्तरात्मने नमः, ॐ शक्ति-रूपपरमात्मने नमः, ॐ शान्तिरूपज्ञानात्मने नम इति ॥ १०-११ ॥**

इसके बाद पृथ्वी, जल, तेज, वायु, आकाश, अहङ्कार, महतत्त्व और प्रकृति—इन आठ से क्रमशः पाद, लिङ्ग, हृदय, मुख, मूर्धा, हृदय, अन्तःकरण तथा सर्वशरीर इन आठों स्थानों में सृष्टि और संहार न्यास करे ॥ १०-११ ॥

**विमर्श**—यहाँ यह ध्यान देने की बात है कि सृष्टि में मन्त्र विलोम होता है, संहार में अनुलोम रहता है, सृष्टि में तत्त्व अनुलोम और संहार में तत्त्व प्रतिलोम रहते हैं । यथा—ॐ नमः पराय पृथिव्यात्मने नमः पादयोः, नं नमः पराय जलात्मने नमः लिङ्गे, इत्यादि से यह संहार क्रम में न्यास कहा गया ।

**सृष्टिक्रम में तत्त्व न्यास का विधान** इस प्रकार होगा—यं नमः पराय प्रकृत्यात्मने नमः सर्वशरीरे, णां नमः पराय महदात्मने नमः हृदि इत्यादि ।

इसके बाद बिन्दु, नाद, शक्ति और शान्त स्वरूप चार आत्मा का न्यास करे। यथा—ॐ बिन्दुरूपात्मने नमः, ॐ नादरूपान्तरात्मने नमः ॐ शक्तिरूपपरमात्मने नमः, ॐ शान्तिरूपज्ञानात्मने नमः ॥ १०-११ ॥

**अतस्तन्मन्त्रवर्णाद्या द्वादशस्वरसंयुताः ॥ ११ ॥**
**द्वादशादित्यसहिता मूर्त्तीर्द्वादश विन्यसेत् ।**
**केशवाद्याः क्रमाद्देहे वक्ष्यमाणविधानतः ॥ १२ ॥**

न्यासस्थानानि

**ललाटे केशवं धात्रा कुक्षौ नारायणं पुनः ।**
**अर्यम्णा हृदि मित्रेण माधवं कण्ठदेशतः ॥ १३ ॥**
**वरुणेन च गोविन्दं पुनर्दक्षिणपार्श्वके ।**
**अंशुना विष्णुमंसस्थं भगेन मधुसूदनम् ॥ १४ ॥**
**गले विवस्वता युक्तं त्रिविक्रममनन्तरम् ।**
**वामपार्श्वस्थमिन्द्रेण वामनाख्यमथांसके ॥ १५ ॥**
**पुष्णा श्रीधरनामानं गले पर्जन्यसंयुतम् ।**
**हृषीकेशाह्वयं पृष्ठे पद्मनाभं ततः परम् ॥ १६ ॥**
**त्वष्ट्रा दामोदरं पश्चाद्विष्णुना ककुदि न्यसेत् ।**
**द्वादशार्णं महामन्त्रं ततो मूर्ध्नि प्रविन्यसेत् ॥ १७ ॥**

न्यासमेवाह अत इति । तन्मन्त्रवर्णाद्याः द्वादशाक्षरमन्त्रवर्णाद्याः । द्वादशस्वराः नपुंसकचतुष्टयव्यतिरिक्ताः तैः संयुताः । द्वादशादित्यसहिताः केशवाद्या द्वादश मूर्त्तीः देहे वक्ष्यमाणविधानतः क्रमात् विन्यसेदिति सम्बन्धः । तत्र प्रयोगः—ॐ अं केशवधातृभ्यां नमः ललाट इत्यादि । केचन धातृसहिताय केशवाय नमः इति । अन्ये तु केशवाय धात्रे नमः इत्याहुः । कुक्षाविति नैकट्यान्नाभिभागो लक्ष्यते । अर्यम्णेति । पश्चात्तनेन सम्बध्यते । कण्ठदेशत इत्यस्याऽग्रिमेण सम्बन्धः । अंशुना विष्णुमिति पश्चात्तनेन सम्बध्यते ।

अंसस्थमिति दक्षिणांसस्थम् । गले ग्रीवादक्षिणभागे । दक्षिणपार्श्वत इत्यतो दक्षिणपदानुवृत्तेरुभयत्र । अथांसक इत्यस्याग्रिमेण सम्बन्धः । तत्रांसके वामांसके । गले ग्रीवावामभागे । वामपार्श्वस्थमित्यतो वामपदानुवृत्तेरुभयत्र । तदुक्तं दक्षिणपार्श्वांसतद्गले तथा वामत्रय इति । अन्यत्रोभयत्र गलस्थाने कर्णमाहुः । हृषीकेशाह्वयमिति पूर्वेण सम्बध्यते । त्वष्ट्रेत्यस्यापि पूर्वेणाऽन्वयः । ककुदीति पृष्ठगतग्रीवाभागे। तदुक्तं स्वायम्भुवे नारसिंहे—

केशवं विन्यसेत्ताक्ष्र्यमूर्द्धदेशेऽथ विष्णुना ।
नाभौ नारायणं देवं विष्णुं तेन समन्वितम् ॥
माधवं हृदि विन्यस्येत् मन्मथेन च संयुतम् ।
मन्मथान्तेन संयुक्तं गले गोविन्दसंज्ञकम् ॥

विष्णुं भूतस्वरेणाऽथ दक्षपार्श्वे विनायकम् ।
तदंशे मातृबीजेन सूदनं मधुपूर्वकम् ॥
बिन्दुना शिवयुक्तेन दक्षकर्णे त्रिविक्रमम् ।
वामनं श्रीधरं चैव हृषीकेशमतः परम् ॥
वामे चैकारमोकारमौकारं बिन्दुना सह ।
बिन्दुना पद्मनाभं च पृष्ठदेशे तदङ्गयुक् ॥
अन्त्यं ककुदि दामेन द्वादशाङ्गमिति स्मृतम् ।
द्वादशेमानि बीजानि नादबिन्दुयुतानि च ॥
आदित्या द्वादशे प्रोक्ता द्वादशाक्षरसंयुताः । इति ।

अन्यत्रापि— केशवादि युगषट्कमूर्त्तिभिर्धातृपूर्वमिहिरान्नमोऽन्तगान् ।
द्वादशाक्षरभवाक्षरैः स्वरैः क्लीबवर्णरहितैः पृथग् न्यसेत् ॥ इति।

केशवादि मूर्त्तीनां मन्त्रोद्देशाच्च क्लीबरहितत्वं गम्यते । महामन्त्रमष्टाक्षरम् । तदुक्तं मन्त्रतन्त्रप्रकाशे—

अष्टाक्षरेण सहितं विन्यसेद् द्वादशाक्षरम् ॥ इति ।

'मन्त्रविन्मूर्ध्नीत्यष्टाक्षरेण सार्द्धमित्यर्थः' इति पद्मपादाचार्याः ॥ ११-१७ ॥

अब **द्वादशाक्षर मन्त्र का उद्धार** कहते हैं—अष्ट प्रकृत्यात्मक अष्टाक्षर मन्त्र तथा आत्मा, अन्तरात्मा, परमात्मा एवं ज्ञानात्मा के आं अं पं ह्रीँ इन चार बीजों को मिला देने पर एक विशिष्ट द्वादशाक्षर मन्त्र हो जाता है । इस द्वादशाक्षर मन्त्र के (नपुंसक वर्णों को ऋ ॠ ऌ ॡ) छोड़ कर शेष बारह स्वर आदि में लगाकर द्वादश आदित्य के द्वादश नाम के साथ केशवादि द्वादश मूर्त्तियों से वक्ष्यमाण ललाटादि न्यास करे ॥ ११-१२ ॥

यथा—ॐ अं केशवधातृभ्यां नमः ललाटे, ॐ आं नारायणार्यमभ्यां नमः कुक्षौ, ॐ इं माधवमित्राभ्यां नमः हृदि, ॐ ईं गोविन्दवरुणाभ्यां नमः कण्ठदेशे, ॐ उं विष्ण्वंशुभ्यां नमः दक्षिणपार्श्वे, ॐ ऊँ मधुसूदनभगाभ्यां नमः दक्षिणांसके, ॐ एं त्रिविक्रमविवस्वद्भ्यां नमः ऐं वामनइन्द्राभ्यां नमः वामपार्श्वे, ओं श्रीधर-पुष्णाभ्यां नमः वामांसके, ॐ औं हृषीकेशपर्जन्यभ्यां नमः वामगले, ॐ अं पद्मनाभत्वष्ट्रभ्यां नमः पृष्ठे, ॐ अः दामोदरविष्णुभ्यां नमः ककुदि—इस प्रकार न्यास करे । इसके बाद द्वादशवर्णात्मक महामन्त्र (ॐ नमो नारायणाय आं अं पं ह्रीँ) से शिर पर न्यास करे ॥ १३-१७ ॥

**किरीटमन्त्रः**

**पुनः किरीटमन्त्रेण व्यापकं विन्यसेत्ततः ।**
**ब्रूयात्किरीटकेयूरहारं मकरकुण्डलम् ॥ १८ ॥**
**शङ्खचक्रगदाम्भोजहस्तं पीताम्बरं धरम् ।**
**श्रीवत्साङ्कितवक्षोऽन्ते स्थलशब्दमुदीरयेत् ॥ १९ ॥**

श्रीभूमिसहितस्वात्मज्योतिर्द्वयमुदाहृतम् ।
पश्चाद्दीप्तिकरायेति सहस्रादित्यतेजसे ॥ २० ॥
नमोऽन्तः प्रणवाद्योऽयं किरीटमनुरीरितः ।
एवं न्यासं तनौ कृत्वा ध्यायेन्नारायणं परम्॥ २१ ॥

किरीटमन्त्रमुद्धरति ब्रूयादिति । हारमित्यादौ शब्दकर्मणि द्वितीया । मन्त्रे तु सम्बुध्यन्तानि सर्वाणि । कुण्डलमिति कुण्डलालङ्कृतेति मन्त्रभागः । तथापि पद्मपादाचार्याः—'मन्त्रविन् मकरान्ते कुण्डलमिति मकरकुण्डलालङ्कृत इति पदाध्याहारः सूचितः' इति । मन्त्रतन्त्रप्रकाशेऽपि—

तारः किरीटकेयूरहारान्ते मकरं पदम् ।
कुण्डलालङ्कृतेत्यन्ते चक्रशङ्खगदापद्मम् ॥ इति ॥

श्रीभूमिसहितस्वात्मज्योतिर्द्वयमिति स्वरूपम् । न तु ज्योतिः पदस्य द्विरुक्तिः । तथा चाचार्याः—श्रीभूमिसहितस्वात्मज्योतिर्द्वयपदं वदेत् । इति ॥ १८-२१ ॥

पुनः किरीट मन्त्र से व्यापक न्यास करे ।

अब **किरीट मन्त्र का प्रतिपादन** करते हैं—'किरीट केयूरहार', इसके बाद 'मकरकुण्डल', फिर 'शङ्ख चक्र गदाम्भोजहस्त', इसके बाद 'पीताम्बर धर', तत्पश्चात् 'श्रीवत्सांकित वक्षःस्थल', इसके बाद 'श्रीभूमि सहित स्वात्म ज्योतिः' यह दोनों पद, पश्चात् 'दीप्तिकराय', पुनः 'सहस्रादित्यतेजसे', फिर अन्त में नमः तथा मन्त्र के आदि में 'ॐ' लगावे । इस प्रकार हमने किरीट मन्त्र का उद्धार कहा । इस प्रकार किरीट मन्त्र से सर्वाङ्गन्यास कर नारायण का इस प्रकार ध्यान करे ॥ १८-२१ ॥

### विष्णुध्यानम्

उद्यत्कोटिदिवाकराभमनिशं शङ्खं गदां पङ्कजं
चक्रं बिभ्रतमिन्दिरावसुमतीसंशोभिपार्श्वद्वयम् ।
कोटीराङ्गदहारकुण्डलधरं पीताम्बरं कौस्तुभो-
द्दीप्तं विश्वधरं स्ववक्षसि लसच्छ्रीवत्सचिन्हं भजे ॥२२॥

आयुधध्यानं तु दक्षाधोवामोर्ध्वदक्षोर्ध्ववामाधःक्रमेण ।

तदुक्तं हयशीर्ष पञ्चरात्रे— पङ्कजं दक्षिणे यस्य पाञ्चजन्यं तथोपरि ।
वामाधस्तु गदा यस्य चक्रं चोर्ध्वे व्यवस्थितम् ॥
आदिमूर्त्तेस्तु भेदोऽयं केशवेन प्रकीर्त्यते ।

इति केशवलक्षणमुक्त्वा— अधरोत्तरभावेन कृतमेतत्तु यत्र वै ।
नारायणाख्या विज्ञेया स्थापिता भुक्तिमुक्तिदा ॥ इति ।

मन्त्रतन्त्रप्रकाशेऽपि—सव्यान्यपाणौ प्रथमे तु पद्मं विभ्राणमब्जं तदनन्तरे च ।
आद्ये गदा वामकरेऽथ चक्रं विराजयन्तं भुवनानि भासा ॥ इति।

ध्यानविशेषाश्च तत्रैव—

वामे विचिन्त्या कमलायताक्षी हेमाभवर्णा कमला च देवी ।
विभूतिकामेन सुरत्नहारा प्रेम्णा सृजन्ती नयने हरौ या ॥
तदा देवं सुवर्णाभं चिन्तयेद्रत्नभूषितम् ।
क्षेत्रधान्यसुवर्णानां प्राप्तये धरणीं स्मरेत् ॥
देवीं दूर्वादलश्यामां दधानां शालिमञ्जरीम् ।
चिन्तयेद् भारतीं देवीं वीणापुस्तकधारिणीम् ॥
दक्षिणे देवदेवस्य पूर्णचन्द्रनिभाननाम् ।
क्षीराब्धिफेनपुञ्जाभे वसानां श्वेतवाससी ॥
भारत्या सहितं विष्णुं ध्यायेदेवं परात्परम् ।
वेदवेदार्थसंवेदी जायते सर्ववित्तमः ॥ इति ।

नारायणीये तु— प्रणवद्वयमध्यस्थो नमोऽन्तश्च सबीजकः ।
निर्बीजो मोक्षकृन् मन्त्रो यथोक्तप्रणवादिकः ॥ इति ।

अत्र ध्यानानन्तरं श्रीवत्सकौस्तुभवनमालायुधमुद्राः प्रदर्शयेत् ।

तल्लक्षणानि तु— अन्योन्यपृष्ठकरयोर्मध्यमानामिकाङ्गुली ।
अङ्गुष्ठेन तु बध्नीयात्कनिष्ठामूलसंश्रिते ॥
तर्जन्यौ कारयेदेषा मुद्रा श्रीवत्ससंज्ञिका ।
अनामापृष्ठसंलग्ना दक्षिणस्य कनिष्ठिका ॥
कनिष्ठिकान्या बध्नीयादनामादक्षतर्जनीम् ।
गृहीत्वा दक्षिणाङ्गुष्ठमध्यमानामिकात्रयम् ॥
उच्छ्रयित्वा तत्र वामे तर्जनीमध्यमे न्यसेत् ।
दक्षिणे मणिबन्धे च वामाङ्गुष्ठं तु योजयेत् ॥
मुद्रेयं कौस्तुभस्योक्ता दर्शनीया प्रयत्नतः ।
स्पृशेत्कण्ठादि पादान्तं तर्जन्याङ्गुष्ठनिष्ठया ।
करद्वयेन मालावन् मुद्रेयं वनमालिका ॥ इति ।

आयुधमुद्रालक्षणं तत्र तत्र पूर्वमेवोक्तम् ॥ २२ ॥

जो निरन्तर उदीयमान करोड़ों दिवाकर की कान्ति के समान प्रकाशमान हैं, शङ्ख, गदा, कमल और चक्र हाथों में धारण किये हैं, जिनके दोनों पार्श्व भाग (बायें) महालक्ष्मी और (दायें) भूमि देवी से शोभित हैं, जो मुकुट, अङ्गद, हार एवं कुण्डल धारण किये हुये हैं तथा जिनके कटितट पीताम्बर से एवं वक्षःस्थल कौस्तुभमणि से उद्भासित हो रहे हैं इस प्रकार वक्षःस्थल पर श्रीवत्स का चिन्ह धारण करने वाले विश्वाधार विष्णु का मैं भजन करता हूँ ॥ २२ ॥

### पुरश्चरणादिकथनम्

विकारलक्षं प्रजपेन्मनुमेनं समाहितः ।
तद्दशांशं सरसिजैर्जुहुयान्मधुराप्लुतैः ॥ २३ ॥

पीठे सम्पूजयेद्देवं विमलादिसमन्विते ।
विमलोत्कर्षिणी ज्ञाना क्रिया योगा ततः परम् ॥ २४ ॥
प्रह्वी सत्या तथेशानाऽनुग्राहा नवमी तथा ।

विकारलक्षं षोडशलक्षम् ॥ २३-२५ ॥

इस (अष्टाक्षर मन्त्र का एकाग्रचित्त हो १६ लाख जप करे । पुनः त्रिमधुर (घी, दूध, मधु) से परिप्लुत कमलों द्वारा उसका दशांश होम करे ॥ २३ ॥

पुनः विमला आदि से संयुक्त पीठ पर देवाधिदेव महाविष्णु का पूजन करे । विमला, उत्कर्षिणी, ज्ञाना क्रिया योगा प्रह्वी, सत्या ईशाना और नवीं अनुग्राहा— ये पीठ की नव शक्तियाँ हैं ॥ २४-२५ ॥

नमो भगवते ब्रूयाद्विष्णवे च पदं वदेत् ॥ २५ ॥
सर्वभूतात्मने वासुदेवायेति वदेत्ततः ।
सर्वात्मसंयोगपदाद्योगपद्मपदं पुनः ॥ २६ ॥
पीठात्मने हृदन्तोऽयं मन्त्रस्तारादिरीरितः ।
दत्त्वाऽनेनासनं मन्त्री मूर्त्तिं मूलेन कल्पयेत् ॥ २७ ॥

दत्वाऽनेनासनं मन्त्रीत्यनेनैतदुक्तम् । आत्मपूजायामासनं दत्त्वा आसनादि गन्धान्तं कृत्वा किरीटमन्त्रेण पुष्पाञ्जलिपञ्चकं दद्यादिति । तदुक्तमाचार्यैः—

विधिवत्किरीटमन्त्रेण कुर्यात् पुष्पाञ्जलिमपि । इति ॥ २५-२७ ॥

इसके बाद 'नमो भगवते विष्णवे सर्वभूतात्मने वासुदेवाय सर्वात्मसंयोगयोग-पद्मपीठात्मने नमः' के आदि में प्रणव लगाकर भगवान् को पीठ पर आसन समर्पित करे । पुनः मूल मन्त्र से मूर्त्ति की कल्पना करे ॥ २५-२७ ॥

आवाह्य पूजयेद्देवं सुगन्धिकुसुमादिभिः ।
अङ्गान्यभ्यर्च्य मन्त्रार्णान् केसरेषु समर्चयेत् ॥ २८ ॥

आदिशब्देन धूपदीपनैवेद्यानि । अङ्गानीति कर्णिकान्तश्चतुर्थपटलोक्तप्रकारेणाऽङ्गानि सम्पूज्याऽग्रादिकेसरेषु क्रमादष्टाङ्गभूतान् मन्त्रार्णानर्चयेत् । ॐ नमः नं नम इत्यादि प्रयोगः । 'बीजैः पूजा स्याद्विभक्त्या वियुक्तैः' इत्युक्तेः । अत्राङ्गपूजावत् पूजा न कार्या । 'अष्टाङ्गकं सुधीरिति न्यास एवाऽष्टाङ्गविनियोगः न तु पूजायामिति विशेषज्ञ इत्यर्थः' इति पद्मपादाचार्यैरुक्तत्वात् । अत एवात्र मन्त्राणानित्युक्तं नाष्टाङ्गमिति । मन्त्रार्णध्यानमुक्तं महाकपिलपञ्चरात्रे—

ॐकारं तु सदा ध्येयं ज्योतिर्मालासमाकुलम् ।
नकारं मेघवर्णाभं मोकारं चिन्तयेत्ततः ॥
भिन्नाञ्जनसमाकारं तृतीयं बीजमुत्तमम् ।
नाकारं श्यामवर्णाभं सौम्यरूपं सुशोभनम् ॥
राकारं जलवर्णाभं सम्यक् सन्दीप्ततेजसम् ।

धूम्रवर्णं सदा ध्येयं यकारं परमुत्तमम् ॥
अनौपम्यगुणाकारं णाकारं च विचिन्तयेत् ।
यकारं तु ततो ध्येयं पद्मरागसमप्रभम् ॥ इति ॥ २८ ॥

उस मूर्त्ति में भगवान् का आवाहन कर सुगन्धित कुसुमादिकों से पूजा करे । (पश्चात् किरीट मन्त्र से पुष्पाञ्जलि समर्पित करे ।) इसके बाद अङ्गों की पूजा कर केशर के अग्रभाग में मन्त्राक्षरों का अर्चन करे ॥ २८ ॥

दलेषु वासुदेवाद्या मूर्त्तीः शक्तिसमन्विताः ।
वासुदेवं सङ्कर्षणं प्रद्युम्नमनिरुद्धकम् ॥ २९ ॥
हिमपीत तमालेन्द्रनीलाभाः पीतवाससः ।
शङ्खं चक्रगदाम्भोजधरा एते चतुर्भुजाः ॥ ३० ॥
शान्तिं श्रियं सरस्वत्या रतिं कोणदलेषु ताः ।
श्वेतकाञ्चनगोदुग्धदूर्वावर्णाः सुभूषिताः ॥ ३१ ॥

दलेष्विति दलमध्येषु इदं सामान्यवचनम् । अग्रे कोणदलेषु ता इत्युक्तेः मूर्त्तीनामग्न्यादिचतुर्दिग्दलमध्ये पूजेति ज्ञेयम् । आसां ध्यानं मूलमन्त्रदेवतावत् ज्ञेयम् । एवमग्रिममन्त्रेऽपि । कोणदलेष्विति । आग्नेयादि कोणदलमध्ये । 'तथा वह्न्यादयः कोणा विदिक् वाचकयोगतः' इत्युक्तेः ॥ २९-३१ ॥

साधक अष्टदल के चारों दिशाओं के पत्रों में शक्ति युक्त वासुदेवादि मूर्त्तियों की अर्चना करे । १. वासुदेव, २. संकर्षण, ३. प्रद्युम्न एवं ४. अनिरुद्ध—ये ४ वासुदेव की मूर्त्तियाँ हैं ॥ २९ ॥

इनका वर्ण क्रमशः हिम, पीत, तमाल और इन्द्रनील के सदृश है । सभी पीताम्बर धारण किये हैं । सभी अपने चारों हाथों में शङ्ख, चक्र गदा और कमल धारण किये हुये हैं, इस प्रकार सभी चतुर्भुज हैं ॥ ३० ॥

पुनः कोण के चारों दलों में शान्ति, श्री, सरस्वती और रति की पूजा करे । इन सभी के शरीर का वर्ण क्रमशः श्वेत, काञ्चन, गो दुग्ध और दूर्वा के सदृश हैं । सभी उत्तम भूषणों से भूषित हैं ॥ ३१ ॥

हेतीनर्चेद्दलाग्रेषु शङ्खं चक्रं गदाम्बुजे ।
कौस्तुभं मुसलं खड्गं वनमालां यथाक्रमम् ॥ ३२ ॥
रक्ताच्छपीतकनकश्यामकृष्णासिपाण्डुरान् ।
बहिरग्रे समभ्यर्चेत् गरुडं कुङ्कुमप्रभम् ॥ ३३ ॥
मुक्तामाणिक्यसङ्काशौ दक्षिणोत्तरतो निधी ।
ध्वजं वरुणदिग्भागे श्यामलं पूजयेत्ततः ॥ ३४ ॥
अरुणं विघ्नमाग्नेये श्याममार्यं निशाचरे ।
श्यामां दुर्गां वायुकोणे सेनान्यं पीतमीश्वरे ॥ ३५ ॥

इन्द्रादीन् पूजयेत्पश्चाद् वज्राद्यायुधसंयुतान् ।
इति संपूजयेद् विष्णुं प्रोक्तैरावरणैः सह ।
धर्मार्थकामान् लब्ध्वाऽन्ते विष्णोः सायुज्यमाप्नुयात् ॥ ३६ ॥

हेतीनिति वक्ष्यमाणान्यायुधानि । हेतिशब्दः पुंलिगोऽप्यस्ति । यथाक्रममित्युत्तरत्र सम्बध्यते । बहिरिति । अष्टदलाद्बहिः चतुरस्रान्त इत्यर्थः । निधी शङ्खपद्मौ वरुणदिग्भागे । देवतापृष्ठदेशे ।

नारायणीये तु— आद्यावृत्तेर्बहिस्तार्क्ष्यं देवस्य पुरतोऽर्चयेत् । इति ।

धर्मार्थकामेति । अर्थे श्रीबीजादित्वं ज्ञेयम् । तदुक्तं मन्त्रतन्त्रप्रकाशे—

श्रीबीजेन युतं मन्त्रं तत्कामस्तन्मना जपेत् । इति ।

कामनायामपि विशेषः—

नारसिंहमिवात्मानं देवं ध्यात्वाऽतिभैरवम् ।
मन्त्रेण स्पर्शयेच्छस्त्रं नाऽविजित्य निवर्त्तते ॥
नारसिंहेन बीजेन मन्त्रं योज्य तदा जपेत् ।
शतमष्टोत्तरं जप्त्वा वामहस्ताभिमन्त्रिताः ॥
पुनः पुनरपः सिञ्चेत् सर्पदष्टोऽपि जीवति ।
गारुडेन तदा युक्तं पञ्चार्णेन तदा जपेत् ॥
निर्विषीकरणे ध्यायेद्विष्णुं गरुडवाहनम् ।
अशोकफलके यक्षीमालिख्याऽशोकसंहतौ ॥
अशोकपुष्पैराराध्य भगवन्तं तदग्रतः ।
जुहुयात्तानि पुष्पाणि त्रिसन्ध्यं सप्तरात्रकम् ॥
प्रत्यक्षा जायते यक्षी वरमिष्टं प्रयच्छति ।
गाणपत्यसमायुक्तं जपेल्लक्षं पयोव्रतः ॥
महागणपतिं देवं प्रत्यक्षमिह पश्यति ।
भारतीबीजसंयुक्तं षाण्मासिकजपाच्च ताम् ॥ इति ॥

तथा— यो जपेत्प्रणवं पूर्वं मन्त्रे त्रैवर्णिकः पुमान् ।
योषितश्च तथा शूद्रा जपेयुः प्रणवं विना ॥
आदावष्टाक्षरस्य स्यात्प्रणवः सार्वकामिकः ।
आदावन्ते यदा ह्येष ज्ञानवृद्धिस्तदा भवेत् ॥
आदितः सहितां कुर्यादन्ततस्तु न संहिताम् ॥ इति ।

कल्पोक्तं यन्त्रमुच्यते—अष्टपत्रं च षट्कोणं रविसंख्यदलाम्बुजम् ।
दन्तपत्रं च तद्बाह्ये वृत्तं भूमिपुरं शुभम् ॥
ससाध्यं कर्णिकायां तु लिखेदाद्यस्वरं सुधीः ।
अष्टपत्रेषु मूलार्णान् पत्राग्रे श्रीकरं लिखेत् ॥
षट्कोणे चक्रमन्त्रार्णान् सूयरि द्वादशार्णकम् ।
दन्तपत्रे मन्त्रराजं वृत्ते नृहरिबीजकम् ॥

षण्मन्त्रै रविसंयुक्तं साक्षाद्विष्णोश्च मन्दिरम् ।
आवाह्य मन्त्रैराराध्य सूत्रैर्बद्धा दृढं वहन् ॥
सर्वदा तस्य वर्द्धन्ते धनारोग्यार्थसम्पदः ।
सायुज्यं सार्ष्टि सालोक्यं सारूप्यं वाथ वाञ्छितम् ॥

इति ॥ ३२-३६ ॥

इसके बाद पत्र के अग्रभाग में वक्ष्यमाण आयुधों की यथा शङ्ख, चक्र, गदा, कमल, कौस्तुभ, मुसल, खड्ग तथा वनमाला की क्रम से अर्चा करे ॥ ३२॥

इन सभी शस्त्रों का वर्ण क्रमशः रक्त, स्वच्छ पीत, कनक, श्याम, कृष्ण, असि और पाण्डुर है । इसके बाद बाहर आगे भाग में कुंकुम के आकार वाले गरुड़ की पूजा करे ॥ ३३ ॥

पुनः अष्टदल के दक्षिण और उत्तर मुक्ता और माणिक्य के आकार वाले शङ्खनिधि तथा पद्मनिधि की पूजा करे । पश्चिम दिशा में (देवता के पृष्ठ भाग में ) श्यामवर्ण के ध्वज की पूजा करे । आग्नेय कोण में अरुण वर्ण के विघ्न की, नैर्ऋत्य में श्याम वर्ण के आर्य की, वायव्य कोण में काली वर्ण वाली दुर्गा की और ईशान कोण में पीत वर्ण वाले कार्तिकेय की पूजा करे ॥ ३४-३५ ॥

इसके बाद वज्रादि आयुधों के सहित इन्द्रादि दिक्पालों की पूजा करे । इस प्रकार कहे गये आवरणों के साथ विष्णु का पूजन करे । ऐसा करने से साधक को धर्म, अर्थ और काम की प्राप्ति तो होती ही है अन्त में उसे मोक्ष भी प्राप्त होता है ॥ ३६ ॥

### द्वादशाक्षरवासुदेवमन्त्रः

**प्रणवो हृद्भगवते वासुदेवाय कीर्त्तितः।**
**प्रधानो वैष्णवे तन्त्रे मन्त्रोऽयं द्वादशाक्षरः ॥ ३७ ॥**

### ऋष्यादिकथनम्

**ऋषिः प्रजापतिश्छन्दो गायत्री परिकीर्त्तितम् ।**
**देवताऽस्य मनोः प्रोक्ता वासुदेवो मनीषिभिः ॥ ३८ ॥**
**तारेण हृदयं प्रोक्तं नमसा शिर ईरितम् ।**
**चतुर्वर्णैः शिखा प्रोक्ता पञ्चार्णैः कवचं मतम् ।**
**समस्तेन भवेदस्त्रमङ्गकल्पनमीरितम् ॥ ३९ ॥**

द्वादशाक्षरवासुदेवमन्त्रमाह प्रणव इति । हृन्नमः । अत्रापि भगवते परतः पूर्ववत् सन्धिः । तदुक्तं मन्त्रतन्त्रप्रकाशे—

अन्त्यौ यौ पञ्चमे षष्ठे वक्तव्यौ क्रमतस्तु तौ ।
द्वितीयो मिश्रसंयुक्तस्तस्माद्भगवते पदम् ॥
सानन्तं वारुणं बीजं जीवः स्याच्छिवसंयुतः ।

पञ्चमस्थो भगी रामो वा यान्ते द्वादशार्णकः ॥
स्त्रीशूद्रयोर्वितारोऽयं सतारोऽयं द्विजन्मनाम् ॥ इति ।

अन्त्यौ पञ्चमे वर्गे अन्त्यो नः । षष्ठे वर्गे अन्तो मः । स मिश्रसंयुक्तः ओयुक्तः । वारुणं बीजं वः । सानन्तं आयुतं तेन वा । जीवः सः शिवः उ तेन युतः । पञ्चमवर्गस्तस्य रामस्तृतीयो दः स भगी एकारयुतः । स्पष्टमन्यत् ।

ॐ बीजं नमः शक्तिः । तदुक्तं बीजं तारः शक्तिर्नम इति । अङ्गक्लृप्तिरुदीरितेत्यनेन द्वादशाङ्गमपि कर्त्तव्यमित्युक्तम् । तद्यथा—ॐ हृदयाय नम इत्यादि । पञ्चाङ्गन्यासस्थानेषु पञ्चाङ्गवदेव विन्यस्य नेत्रयोर्नेत्राभ्यां वौषडिति विन्यस्य ते जठराय नम इत्यादि षट्सु स्थानेषु न्यसेत् । तदुक्तम्—

हृदादि नेत्रजठरपृष्ठबाहूरुजानुषु ।
सपादेषु मनोरर्णैर्नमोन्तैर्द्वादशाङ्गकम् ॥ इति ॥

पद्मपादाचार्यास्तु पुरुषसत्याच्युतवासुदेव संकर्षणप्रद्युम्नानिरुद्धनारायणब्रह्मविष्णुनरसिंहवाराहमूर्त्तीनां द्वादशाङ्गे योगमाहुः । अन्यत्रापि—

आदौ पुरुषः सत्याच्युतौ पुनर्वासुदेवपूर्वाः स्युः ।
नारायणयुग्ब्रह्मा विष्णुनृसिंहौ तथा वराहश्च ॥ इति ॥३७-३९ ॥

अब **द्वादशाक्षरात्मक विष्णु मन्त्र का उद्धार** कहते हैं—प्रथम प्रणव (ॐ), इसके बाद हृद् (नमः), पश्चात् 'भगवते वासुदेवाय' इस प्रकार 'ॐ नमो भगवते वासुदेवाय'—यह बारह अक्षर का मन्त्र उद्धृत किया गया जो वैष्णव तन्त्रों में प्रधानरूपेण कहा गया है ॥ ३७ ॥

इस मन्त्र के प्रजापति ऋषि हैं, गायत्री छन्द है तथा विद्वानों ने इस मन्त्र के देवता वासुदेव को कहा है ॥ ३८ ॥

ॐकार से हृदय का, नमः से शिर का, 'भगवते' इस चार अक्षर से शिखा का, 'वासुदेवाय' इस पाँच अक्षर के मन्त्र से कवच का तथा ॐ नमो भगवते वासुदेवाय इस समस्त से अस्त्र का न्यास करना चाहिए । इस प्रकार इस मन्त्र का षडङ्गन्यास कहा गया ॥ ३९ ॥

**मूर्ध्नि भाले दृशोरास्ये गले दोर्हृदयाम्बुजे ।**
**कुक्षौ नाभौ ध्वजे जानुद्वये पादद्वये न्यसेत् ॥ ४० ॥**

मूर्ध्नीति । मूर्ध्नि न्यसेन्मन्त्रवर्णानिति शेषः । अयं सृष्टिन्यासः । अत्र स्थितिसंहारावपि ज्ञेयौ । यदाहुः—

हृदादिकान्तावधीमं स्थितिन्यासं प्रचक्षते ।
पादादारभ्य शीर्षान्तं न्यासं संहारमूचिरे ॥
संहृतेर्दोषसंहारः सृष्टेश्च सुतपुष्टयः ।
स्थितेस्तु शान्तिविन्यासस्तस्मात् कार्यस्त्रिधा च सः ॥ इति ।

अन्यत्र व्यवस्थाऽप्युक्ता । यदाहुः—

स्थितिन्यासो गृहस्थानामुद्दिष्टः सर्वसिद्धिदः ।
प्रथमाश्रमिणां न्यास उत्पत्तिः समुदाहृतः ॥
यतीनां च वनस्थानां संहारः समुदाहृतः ।
विरक्तस्य गृहस्थस्य संहारोऽपि विधीयते ॥
सपत्नीकवनस्थानां स्थितिन्यासो विधीयते ।
विद्यार्थिनामथैतेषां सृष्ट्यन्तोऽपि विशिष्यते ॥ इति ।

अत्र सामान्यतो न्यसेदित्युक्तत्वादेषु द्वादशतत्त्वान्यपि न्यसेत् ।

तद्यथा— ॐ नमः पराय जीवात्मने नमः मूर्ध्नीत्यादि ।

तत्त्वानि तु— जीवप्राणधियश्चित्तं हृत्पद्मं सूर्यमण्डलम् ।
चन्द्रमण्डलमग्नेश्च मण्डलं स्वकलान्वितम् ॥
वासुदेवादयश्चेति तत्त्वानि द्वादशाऽवदन् ॥ इति ॥ ४० ॥

इसके बाद मन्त्र के द्वादश वर्णों का क्रमशः शिर, मस्तक, दोनों नेत्र, मुख, गला, दोनों हाथ, हृदय, कुक्षि, नाभि, लिङ्ग, जानुद्वय तथा पादद्वय—इन बारहों स्थानों में न्यास करे ॥ ४० ॥

विष्णुध्यानम्

**विष्णुं शारदचन्द्रकोटिसदृशं शङ्खं रथाङ्गं गदा-**
**मम्भोजं दधतं सिताब्जनिलयं कान्त्या जगन्मोहनम् ।**
**आबद्धाङ्गदहारकुण्डलमहामौलिं स्फुरत्कङ्कणं**
**श्रीवत्साङ्कमुदारकौस्तुभधरं वन्दे मुनीन्द्रैः स्तुतम् ॥ ४१ ॥**

आयुधध्यानं तूर्ध्वादिदक्षयोश्चक्रपद्मे । एवं वामयोर्गदाशङ्खौ ।

तदुक्तं हयशीर्षपञ्चरात्रे—वासुदेवं तु कुर्वीत चतुर्बाहुं सुरेश्वरम् ।
दक्षिणोपरि चक्रं तु पद्मञ्चाऽधः प्रकल्पयेत् ॥
वामोपरि गदा कार्या शङ्खञ्चाऽधः सुशोभनम् । इति ।

अत्र ध्यानानन्तरं श्रीवत्सकौस्तुभवनमालाञ्जलिमुद्राः प्रदर्शयेत् । 'अञ्जल्याऽञ्जलिमुद्रा स्याद्वासुदेवाभिधा च सा' इत्युक्तेः । एता अग्रिममन्त्रेऽपि दर्शनीयाः ॥ ४१॥

अब **इस मन्त्र के ध्यान का प्रकार** कहते हैं—करोड़ों शरत्कालीन चन्द्रमा के समान जिनकी शरीर कान्ति है । जो हाथों में शङ्ख, चक्र, गदा और कमल धारण किये हुये हैं और श्वेत कमलासन पर विराजमान हैं, जिनकी कान्ति से सारा जगत् मोहित हो रहा है । उनके अङ्गों में केयूर, (गले में) हार, कानों में कुण्डल एवं (ललाट पर) विशाल मुकुट की शोभा निराली है तथा जिनके हाथो में कंकण जगमगा रहा हैं । जो श्रीवत्स नामक चिन्ह तथा मनोहर कौस्तुभ धारण किये हुये हैं ऐसे मुनीन्द्रों से संस्तुत विष्णु भगवान् की मैं वन्दना करता हूँ ॥४१॥

पुरश्चरणादिकथनम्

वर्णलक्षं जपेन्मन्त्रं दीक्षितो विजितेन्द्रियः।
तत्सहस्रं प्रजुहुयात्तिलैराज्यपरिप्लुतैः॥ ४२ ॥
पीठे प्रागीरिते मूर्त्तिं मूलमन्त्रेण कल्पयेत्।
पूजयेद्विधिनाऽनेन वासुदेवं विधानवित्॥ ४३ ॥

**वर्णलक्षं द्वादशलक्षम्। दीक्षितो वैष्णवमार्गेणेत्यर्थः। सा च दीक्षा वैष्णवतन्त्रान्नारदपञ्चरात्रादितो ज्ञेया। तत्सहस्रं द्वादशसहस्रम्। विधानविदित्यनेनोपचारोक्तागमश्लोकानामत्राऽवश्यकत्वं सूचितम्॥ ४२-४३ ॥**

साधक दीक्षा लेकर इन्द्रियों को अपने वश में रखकर एकाग्रचित्त हो इस द्वादशाक्षर मन्त्र का बारह लाख जप करे और घी मिश्रित तिलों द्वारा उतने ही सहस्रों से होम करे॥ ४२ ॥

इसके बाद पूर्वोक्त कहे गये पीठ पर मूलमन्त्र से मूर्त्ति की कल्पना करे और विधानवेत्ता साधक इस विधान से भगवान् वासुदेव की पूजा करे॥ ४३ ॥

प्रथमावृतिरङ्गैः स्यात् वासुदेवादिभिः परा।
शान्त्यादिशक्तिसहितैः परा द्वादशमूर्त्तिभिः॥ ४४ ॥
चतुर्थी सुरनाथाद्यैर्वज्राद्यैः पञ्चमी मता।
एवं सम्पूजितो विष्णुः प्रदद्यादिष्टमात्मनः॥ ४५ ॥
पायसेन घृताक्तेन मन्त्रवर्णसहस्रकम्।
जुहुयान्मनसः शुद्ध्यै समिद्भिः क्षीरभूरुहाम्।
तत्संख्यया पयोऽक्ताभिः सर्वपापविमुक्तये॥ ४६ ॥

**द्वादशमूर्त्तिभिरिति केशवाद्यैः। एषां ध्यानं मूलदेवतावत्॥ ४४-४६ ॥**

प्रथमावृत्ति में अङ्गों की पूजा करे। इसके बाद साधक वासुदेवादि की द्वितीय आवृत्ति में, शान्त्यादि के साथ द्वादश मूर्त्तियों की तृतीयावरण में, इन्द्रादि लोकपालों की चतुर्थ आवृत्ति में और वज्रादि आयुधों की पञ्चम आवृत्ति में पूजा करे। इस प्रकार पूजित होने पर विष्णु साधक के सम्पूर्ण मनोरथों की सिद्धि करते हैं॥ ४४-४५ ॥

मन की शुद्धि के लिये इस मन्त्र में जितने अक्षर हैं उतने सहस्र (=बारह सहस्र) घृत विमिश्रित खीर का होम करे और अपने संपूर्ण पापों को दूर करने के लिये दूध से परिषिञ्चित क्षीरीवृक्षों से उतनी ही संख्या में होम करे॥ ४६ ॥

लक्ष्मीवासुदेवमन्त्रः

हल्लेखाबीजयुगलं रमाबीजयुगं पुनः।
लक्ष्म्यान्ते वासुदेवाय हृदन्तः प्रणवादिकः॥ ४७ ॥

षडङ्गन्यासः

चतुर्दशाक्षरो मन्त्रः प्रोक्तोऽयं सुरपादपः।
हृदयं शक्तिबीजाभ्यां रमाभ्यां शिर ईरितम् ॥ ४८ ॥
लक्ष्म्यै प्रोक्ता शिखा वर्म वासुदेवाय कीर्त्तितम्।
नमसाऽस्त्रं समुद्दिष्टं सर्वं तारादि कल्पयेत् ॥ ४९ ॥

**लक्ष्मीवासुदेवमन्त्रमाह हृल्लेखेति। हृल्लेखा भुवनेशीबीजम्। यथा हृल्लेखाशब्देन भुवनेशी उच्यते तथा प्रागेव दर्शितम्। रमा श्रीबीजम्। लक्ष्म्यन्ते लक्ष्मीपदान्ते इत्यर्थः। हृदन्तो नमोऽन्तः। ॐ ह्रीँ ह्रीँ श्रीँ श्रीँ लक्ष्मीवासुदेवाय नमः। प्रणवो बीजं माया शक्तिः ॥ ४७-४९ ॥**

अब **लक्ष्मीवासुदेव मन्त्र का उद्धार** कहते हैं—

हृल्लेखा के दो बीजाक्षर (ह्रीँ ह्रीँ), तदनन्तर दो रमाबीज (श्रीँ श्रीँ), पुनः 'लक्ष्मी वासुदेवाय' तदनन्तर हृत् (नमः) लगावे और आदि में प्रणव से युक्त करे। इस प्रकार 'ॐ ह्रीँ ह्रीँ श्रीँ श्रीँ लक्ष्मीवासुदेवाय नमः' यह इस मन्त्र का स्वरूप हुआ ॥ ४७ ॥

चौदह अक्षर का यह मन्त्र भक्तों के लिये कल्पवृक्ष के समान है। शक्ति के दो बीजों (ह्रीँ ह्रीँ) से हृदय, रमा के दो बीजों (श्रीँ श्रीँ) से शिर, 'लक्ष्म्यै' से शिखा, 'वासुदेवाय' से कवच और 'नमः' से अस्त्र—इस प्रकार षडङ्गन्यास करे। और प्रणव युक्त समस्त मन्त्र से सर्वाङ्ग में न्यास करे ॥ ४८-४९ ॥

लक्ष्मीवासुदेवध्यानम्। पुरश्चरणादिकथनम्

विद्युच्चन्द्रनिभं वपुः कमलजावैकुण्ठयोरेकतां
प्राप्तं स्नेहवशेन रत्नविलसद्भूषाभरालङ्कृतम्।
विद्या पङ्कजदर्पणं मणिमयं कुम्भं सरोजं गदा
शङ्खं चक्रममूनि बिभ्रदमितां दिश्याच्छ्रियं वः सदा ॥ ५० ॥

**विद्युदिति। एकतामिति देहार्धविभागेन। विद्यादीनि प्रथमानिर्दिष्टानि। पश्चादमूनि बिभ्रदित्यन्वयः। वामेष्वाद्यचतुष्टयमूर्ध्वादि दक्षेष्वन्त्यचतुष्टयमित्यायुधध्यानम् ॥ ५० ॥**

अब **लक्ष्मीवासुदेव मन्त्र का ध्यान** कहते हैं—परस्पर स्नेहवश एक में मिले हुये आधा महालक्ष्मी और आधा भगवान् वासुदेव का शरीर रत्न जटित आभूषणों से भूषित होने के कारण बिजली तथा चन्द्रमा जैसी छटा धारण करता है। इसी प्रकार आधे लक्ष्मीमय शरीर के हाथों में विद्या, पंकज, दर्पण और मणिमय कुम्भ है तो आधे विष्णुमय शरीर के हाथों में कमल, गदा, शङ्ख और चक्र हैं। इस प्रकार परस्पर एक में मिले हुये अर्धाङ्ग लक्ष्मी वासुदेव आप लोगों को निरन्तर श्री प्रदान करें ॥ ५० ॥

वर्णलक्षं जपेदेनं तत्सहस्त्रं सरोरुहैः।
होमं कुर्याद्विकसितैर्मधुरत्रयसंयुतैः।
पूजा स्याद्वैष्णवे पीठे द्वादशाक्षरवर्त्मना ॥ ५१ ॥
पायसेन कृतो होमो लक्ष्मीवश्यप्रदायकः।
मधुरात्तैस्तिलैर्हुत्वा सर्वकार्याणि साधयेत् ॥ ५२ ॥

वर्णलक्षं चतुर्दशलक्षम् । तत्सहस्त्रं चतुर्दशसहस्त्रम् । विकसितैरिति । पूजायां कुड्मलानामपि ग्रहणादत्र विकसितैरिति विशेषोक्तिः । स्वयं विकसितस्य तु निषिद्धत्वादेव निवृत्तिः ॥ ५१-५२ ॥

इस मन्त्र का चौदह लाख जप करे और मधुरत्रय से संयुक्त फूले हुये कमलों से १४ चौदह हजार होम करे । और द्वादशाक्षर में कही गई विधि के अनुसार वैष्णव पीठ पर लक्ष्मी वासुदेव की पूजा करे ॥ ५१ ॥

तदनन्तर पायस का होम करे तो लक्ष्मी वश में हो जाती हैं । त्रिमधुर मिश्रित तिल के होम से सभी कार्यों की सिद्धि होती है ॥ ५२ ॥

दधिवामनमन्त्रः । ऋष्यादिकथनम्

तारो हृद्विष्णवे पश्चात् ङेऽन्तः सुरपतिर्भवेत् ।
महाबलाय ठद्वन्द्वं मनुरष्टादशाक्षरः ॥ ५३ ॥
ऋषिरिन्दुर्विराट् छन्दो देवता दधिवामनः।
हृदेकेन शिरो द्वाभ्यां शिखा त्रिभिरुदीरिता ॥ ५४ ॥
कवचं पञ्चभिः प्रोक्तं नेत्रं तावद्भिरक्षरैः।
द्वाभ्यामस्त्रमिति प्रोक्तः प्रकारोऽङ्गस्य सूरिभिः ॥ ५५ ॥

दधिवामनमन्त्रमाह तार इति । हृत् नमःपदम् । अत्रापि पूर्ववद्विसर्गेण सह सन्धिर्ज्ञेयः । ङेऽन्तः सुरपतिः सुरपतये । ठद्वन्द्वं स्वाहा । प्रणव श्रीबीजसम्पुटः इति केचित् । प्रणवो बीजं स्वाहा शक्तिः तावद्भिरिति पञ्चभिः । प्रकारोऽङ्गस्य सूरिभिरित्यनेन साम्प्रदायिकाः अन्यथा षडङ्गमाहुरिति सूचितम् । तद्यथा—प्रणवादिपञ्चभिः पदैः पञ्चाङ्गानि कृत्वा सर्वेण षष्ठमिति ॥ ५३-५५ ॥

अब **दधिवामन मन्त्र** कहते हैं—तार (ॐ), पुनः हृत् (नमः), इसके पश्चात् 'विष्णवे सुरपतये महाबलाय स्वाहा' यह पद लिखे । यह अष्टादश अक्षरों का दधिवामन मन्त्र है ॥ ५३ ॥

इस मन्त्र के ऋषि इन्द्र हैं, विराट् छन्द है तथा दधिवामन देवता हैं । इस मन्त्र का षडङ्गन्यास इस प्रकार है—एक (प्रणव) से हृदय, दो (नमः) से शिर, तीन (विष्णवे) से शिखा, पाँच (सुरपतये) से कवच और उतने ही (महाबलाय) से नेत्र तथा शेष दो (स्वाहा) अक्षर से अस्त्रन्यास करे—ऐसा विद्वानों का कहना है ॥ ५६-५५ ॥

मूर्ध्नि भाले दृशोर्युग्मे कर्णनासौष्ठतालुषु ।
कण्ठे बाहुद्वये पृष्ठे हृदयोदरनाभिषु ॥ ५६ ॥
गुह्योरुजानुयुग्मेषु जङ्घयोः पादयोर्न्यसेत् ।
अष्टादश मनोर्वर्णान् पश्चाद्देवं विचिन्तयेत् ॥ ५७ ॥

मूर्ध्नीत्यादिषु सर्वत्र एकैकवर्णन्यासः । कर्णयुग्मौष्ठतालुष्वित्यपपाठः । कर्णनासौष्ठतालुष्विति पाठः । पश्चादिति पृष्ठे । मन्त्रतन्त्रप्रकाशे तु—

मूर्ध्नि दृक्श्रवणद्वन्द्वे नासायां मुखमध्यतः ।
कण्ठहृद्बाहुयुग्मे च नाभौ पृष्ठे च गुह्यके ॥

जान्वोश्च पादयोरर्णान् । इति स्थानान्युक्तानि ।

पश्चादित्यनेन पदन्यासोऽपि सूचितः ।

यदाहुः—भ्रूमध्यगलहृन्नाभिलिङ्गाधारेषु विन्यसेत् । इति ॥ ५६-५७ ॥

इस अष्टादशाक्षर मन्त्र के प्रत्येक वर्ण को शिर, मस्तक, दोनों नेत्र, दोनों कान, दोनों नासिका, ओष्ठ, तालु, कण्ठ, बाहुद्वय, पृष्ठ, हृदय, उदर, नाभि, गुह्य, दोनों ऊरु, दोनों जानु, दोनों जङ्घा तथा दोनों पैर में—इस प्रकार अठारह स्थानों में न्यास करे । इसके बाद दधिवामन का इस प्रकार ध्यान करे ॥५६-५७॥

दधिवामन् ध्यानम् । पुरश्चरणादिकथनम्

मुक्तागौरं नवमणिलसद्भूषणं चन्द्रसंस्थं
भृङ्गाकारैरलकनिकरैः शोभि वक्त्रारविन्दम् ।
हस्ताब्जाभ्यां कनककलशं शुद्धतोयाभिपूर्णं
दध्यन्नाढ्यं कनकचषकं धारयन्तं भजामः ॥ ५८ ॥

ध्यानमाह मुक्तेति ॥ ५८ ॥

**दधिवामन का ध्यान**—जिनके शरीर का वर्ण मोती के समान गौर है, जो नवीन मणियों के आभूषणों से शोभायमान एवं चन्द्रासन पर विराजमान हैं, जिनका मुखारविन्द भृङ्ग के समान काले काले बालों के समूह से सुशोभित है, जिन्होंने अपने एक हाथ में शुद्ध जल से परिपूर्ण कनक कलश तथा दूसरे हाथ से दधि से परिपूर्ण सुवर्ण निर्मित पान पात्र धारण किया है ऐसे दधिवामन का हम भजन करते हैं ॥ ५८ ॥

गुणलक्षं जपेन्मन्त्रं तद्दशांशं घृतप्लुतैः ।
पायसान्नैः प्रजुहुयाद्दध्यन्नैर्वा यथाविधि ॥ ५९ ॥
चन्द्रान्तं कल्पिते पीठे प्रागुक्ते तं समर्चयेत् ।
मूर्त्तिं मूलेन सङ्कल्प्या वक्ष्यमाणविधानतः ॥ ६० ॥

षडङ्गानि समभ्यर्च्य केसरेषु यथा पुरा ।
अभ्यर्च्य वासुदेवादीन् ध्वजादीनर्चयेत्ततः ॥ ६१ ॥
केशवाद्या दलाग्रेषु सुरेन्द्रादीननन्तरम् ।
वज्रादीनि गजानष्टौ सप्तावरणमीरितम् ।
विधानमेतद्देवस्य कीर्त्तितं सुरपूजितम् ॥ ६२ ॥

गुणलक्षं त्रिलक्षम् । यथाविधीत्यग्रे सम्बध्यते । चन्द्रान्तमिति । रविवह्निमण्डले सम्पूज्य अन्ते चन्द्रमण्डलं पूजयेदित्यर्थः । अत्र चन्द्रमण्डलान्ता पूजा । तस्य तदासनत्वात् । तदुक्तं मन्त्रतन्त्रप्रकाशे—

धर्मज्ञानमये पीठे पूजयेचन्द्रमण्डलम् । इति । चन्द्रमण्डलमन्त्रोऽप्युद्धृतः ।

विष्णवे सह सोमाय त्रैलोक्याप्यायनाय च ।
स्वाहान्तस्तारहृत्पूर्वो मन्त्रेणैवाऽर्चयेच्च तत् ॥ इति ॥

एतद्यथाविधिपदेन सूचितम् । प्रागुक्ते नारायणाष्टाक्षरोक्ते पीठे वक्ष्यमाण-विधानतः तं समर्चयेदिति सम्बन्धः । यथा पुरेति चतुर्थोक्तरीत्या । वासुदेवादीन् सशक्तिकान् पूर्ववत् । ध्वजादीनित्यष्टौ प्रसिद्धदिक्क्रमेण । तदुक्तम्—

ध्वजश्च वैनतेयश्च शङ्खपद्मौ दिशो गताः ।
विघ्नार्यकौ तथा दुर्गा विष्वक्सेनौ विदिग्गताः ॥ इति ।

तत्र ग्रन्थकृता नारायणाष्टाक्षरे अग्रदक्षिणोत्तरपश्चिमादिपूजाकथनार्थम् एते एव वैनतेयाद्या उपदिष्टाः । केशवाद्या द्वादश दलाग्रेषु अष्टदलाद्बहिरित्यर्थः । गजानित्यष्ट- मोक्तान् स्वस्वदिक्षु ॥ ५९-६२ ॥

इस मन्त्र का तीन लाख जप करे और घृत मिश्रत पायस से अथवा दही भात से उसका दशांश विधिपूर्वक होम करे ॥ ५९ ॥

पुनः सूर्य अग्नि की पूजा कर चन्द्रमण्डल की पूजा करे, पश्चात् उसी पूर्वोक्त पीठ पर वामन की इस प्रकार पूजा करे । मूल अष्टादशाक्षर मन्त्र से मूर्त्ति की कल्पना करे । फिर आगे कही जाने वाली विधि से पूजा करे ॥ ६० ॥

केशरों में पूर्वोक्त भाँति से षडङ्ग की पूजा करे । तदनन्तर शक्ति सहित वासुदेवादिकों की तथा फिर ध्वजादिकों की पूजा करे ॥ ६१ ॥

पुनः अष्टदल से बाहर द्वादश दलों पर सशक्तिक केशवादिकों की, तदनन्तर इन्द्रादिकों की, पुनः वज्रादि आयुधों की, तदनन्तर अष्टगजों की—इस प्रकार सप्तावरण की पूजा करे । हमने यह वामन देव के पूजन का विधान कहा, जो विधान देवगणों द्वारा पूजित है ॥ ६२ ॥

पायसाज्येन जुहुयात्सहस्रं श्रियमाप्नुयात् ।
धान्यहोमेन धान्याप्तिः शतपुष्पीसमुद्भवैः ॥ ६३ ॥

बीजैः सहस्रसंख्यातो होमो भयविनाशनः।
दध्योदनेन शुद्धेन हुत्वा मुच्येत दुर्गतेः॥ ६४ ॥
स्मृत्वा त्रैविक्रमं रूपं जपेन्मन्त्रमनन्यधीः।
मुक्तो बन्धाद्भवेत्सद्यो नात्र कार्या विचारणा॥ ६५ ॥
पट्टे संपाद्य देवेशं भित्तौ वा पूजयेत् सुधीः।
सुगन्धिकुसुमैर्नित्यं महतीं श्रियमाप्नुयात् ॥ ६६ ॥

शतपुष्पी कान्यकुब्जभाषायां सौंफ इति प्रसिद्धा। दुर्गतेः दारिद्र्यात् ॥ ६३-६६ ॥

पुनः पायस और आज्य का होम सहस्र संख्या में करे तो श्री की प्राप्ति होती है। धान्य के होम से धान्य की संप्राप्ति तथा शतपुष्पी (सौंफ) के बीजों से सहस्र संख्या में किया गया होम भय का विनाश करता है। शुद्ध दध्योदन का होम दुर्गति जन्य क्लेशों को दूर करता है अथवा दरिद्रता को दूर करता है ॥ ६३-६४ ॥

यदि त्रिविक्रम वामन का स्मरण करते हुये एकाग्रचित्त से इस मन्त्र का जप करे तो तत्क्षण बन्धन से छुटकारा प्राप्त हो जाता है, इसमें विचार की आवश्यकता नहीं ॥ ६५ ॥

वस्त्र खण्ड अथवा दीवार में वामन देव की प्रतिमा बना कर सुगन्धित पुष्पों द्वारा नित्य पूजा करे तो महती श्री की प्राप्ति होती है ॥ ६६ ॥

दधिवामनयन्त्रम्

ससाध्यतारोज्ज्वलकर्णिकाब्ज-
मष्टाक्षरैरुज्ज्वलकेशराढ्यम् ।
मन्त्राक्षरद्वन्द्वयुताष्टपत्रं
शिष्टार्णयुग्मोल्लसितान्त्यपत्रम् ॥ ६७ ॥
द्वादशाक्षरसंवीतं तद्बहिर्मातृकाक्षरैः।
विदध्याद्वैष्णवं यन्त्रं सर्वसम्पत्प्रदायकम् ॥ ६८ ॥

यन्त्रमाह ससाध्येति। कर्णिकायां साध्यसाधककर्मसहितं प्रणवं लिखेत्। अष्टाक्षरैरिति नारायणाष्टाक्षरैः। शिष्टार्णेत्यनेनाऽन्त्यपत्रे वर्णचतुष्टयं लिखेदित्युक्तम्। तद्बहिर्मातृकाक्षरैर्वेष्टितं विदध्यादिति सम्बन्धः।

अस्य तन्त्रान्तरोक्तं विधानमभिधीयते—

अस्य तैलो मुनिश्छन्दो जगत्यन्नप्रदो हरिः।
देवता प्रणवाद्यैश्च पदैः सर्वेण चाऽङ्गकम् ॥
कर्पूरधवलं देवं निविष्टं सरसीरुहे।
सुप्रसन्नं सुनेत्रं च चारुस्मितमनोहरम् ॥
दण्डं चाऽमृतकुण्डं च शरच्चन्द्रसमप्रभम्।

दधिभक्तं सोपदंशं वसुपात्रं च बिभ्रतम् ॥
चिन्तयेज्जगदीशानं जगदार्त्तिहरं हरिम् ।
दीक्षां प्राप्य शुचिर्भूत्वा जपेद् द्वादशलक्षकम् ॥
तदन्ते जुहुयाद्विद्वान् पायसेन दशांशकम् ।
पूजा तु वैष्णवे पीठे कर्त्तव्या साधकोत्तमैः ॥
लिखेत्पद्मं सप्तदशदलं प्रणवमालिखेत् ।
कर्णिकायां ससाध्यं तं स्वरैरावेष्टयेत् क्रमात् ॥
चतुस्त्रिंशत्केसरेषु कादिक्षान्तान् लवर्जितान् ।
दलेषु मन्त्रवर्णाश्च ताराभ्यां वेष्टयेद्बहिः ॥
श्री(स्व)बीजाभ्यां तद्बहिश्च यन्त्रं सर्वफलप्रदम् ।
अस्मिन् यन्त्रे समावाह्य देवमङ्गानि पूर्ववत् ॥
इष्ट्वा शक्तीश्च पत्रेषु लोकेशास्त्राणि पूजयेत् ।
पूषा सुमनसा प्रीतिर्ज्योतिः सौम्या मरीचिका ॥
अंशुमालिन्यङ्गिरा च शशिनी चन्द्रिका तथा ।
अमोघा करुणा चैव छाया सम्पूर्णमण्डला ॥
पुष्टिस्तथाऽमृता सिद्धिः शक्तयः समुदीरिताः । इति ।

अथ ब्रह्मयामलोक्तं यन्त्रमुच्यते—

वृत्ताकारमथो कृत्वा चन्द्रमण्डलमध्यतः ।
सम्यक् च विलिखेत्तारं साध्यनामसमन्वितम् ॥
वारुणार्णान् लिखित्वा च साग्निमायासबिन्दुकम् ।
दलैश्च सप्तदशभिः कृत्वा पद्मं सकर्णिकम् ॥
नादिव्योमान्तमन्त्रं वै पद्मस्यैव दलेषु च ।
कृत्वा यन्त्रं महाभाग समालभ्य जपेन्मनुम् ॥
महारक्षा समाख्याता धारणाच्च श्रियावहम् ॥ इति ।

नारदकल्पोक्तं यन्त्रान्तरम्—

दलैः षोडशभिर्युक्तं सतारं कर्णिकोज्ज्वलम् ।
कलारूढदलं बाह्ये पद्ममष्टदलं लिखेत् ॥
तेष्वष्टाक्षरमालिख्य तदग्रे वृत्तमालिखेत् ।
अष्टादशदलं बाह्ये तेष्वप्यष्टादशाक्षरम् ॥
आलिख्यान्ते च भूगेहमष्टशूलसमन्वितम् ।
कोणेष्वक्षरमालिख्य वह्न्यादिषु यथाक्रमम् ॥
शूलाक्षिरोगगुल्मादिगर्भस्फोटादिकानपि ।
विषादिकान्नरः सम्यक् मन्त्री यन्त्रेण नाशयेद् ॥ इति ॥

अक्षरं ठकारम् । तन्त्रान्तरोक्तमेतदुपासककर्त्तव्यमुच्यते—

नाऽश्नीयात्तण्डुलीशाकं तथा चौदुम्बरं फलम् ॥
श्राद्धनां नवकं चैव भक्षयेन्न कदाचन ।
पद्मपत्रे न भुञ्जीत तथा चार्कदलेष्वपि ॥

तुषकार्पासबीजानि न स्पृशेच्च कदाचन ।
वल्मीकं गोमयं विप्रच्छायामपि न लङ्घयेत् ॥
देवाग्निगुरुपूजां च कुर्याद्भक्तिसमन्वितः । इति ॥ ६७-६८ ॥

अब **वैष्णव मन्त्र का विधान** कहते हैं—कर्णिका में साध्य साधक और कर्म सहित प्रणव लिखे । केशरों पर नारायण के अष्टाक्षर मन्त्रों को लिखे । पुनः अष्टपत्रों में सात पत्रों पर दधिवामन के अष्टादशाक्षर मन्त्र के दो दो अक्षरों को इस प्रकार १४ अक्षर लिखे । शेष चार अक्षर आठवें पत्र पर लिखे । उसके बाद उसे द्वादशाक्षर से घेर देवे । पुनः उसके चारों ओर ५१ अक्षर के मातृकावर्णों को लिखकर घेर देवे । इस प्रकार बनाया गया वैष्णव मन्त्र समस्त संपत्तियों को देने वाला होता है ॥ ६७-६८ ॥

**हयग्रीवमन्त्रः । ऋष्यादिकथनम्**

**उद्गिरत्पदमाभाष्य प्रणवोद्गीथशब्दतः ।**
**सर्ववागीश्वरेत्यन्ते प्रवदेदीश्वरेत्यथ ॥ ६९ ॥**
**सर्ववेदमयाचिन्त्यपदान्ते सर्वमुच्चरेत् ।**
**बोधयद्वितयान्तोऽयं मन्त्रस्तारादिरीरितः ॥ ७० ॥**
**ऋषिर्ब्रह्माऽस्य सन्दिष्टश्छन्दोऽनुष्टुबुदाहृतम् ।**
**देवता स्याद्धयग्रीवो वागैश्वर्यप्रदो विभुः ।**
**तारेण पादैर्मन्त्रस्य पञ्चाऽङ्गानि प्रकल्पयेत् ॥ ७१ ॥**

**हयग्रीवमन्त्रमाह उद्गिरदिति । प्रणवोद्गीथेति स्वरूपम् । सर्वमुच्चरेदिति मन्त्रेऽपि द्वितीयान्तमेव । श्लोकरूपो महामन्त्रः । श्लोकादौ तारः । मन्त्रस्थहलो बीजानि स्वराः शक्तयः । वागैश्वर्यप्रद इति विनियोगोक्तिः ॥ ६९-७१ ॥**

अब **हयग्रीव मन्त्र का उद्धार** कहते हैं—'उद्गिरत्' पद के पश्चात् 'प्रणवोद्गीथ' शब्द, तदनन्तर 'सर्ववागीश्वरेश्वर' पद, पुनः 'सर्ववेदमयाचिन्त्य' पद, पुनः सर्व पद, तदनन्तर दो बोधय शब्द का उच्चारण करे । इस मन्त्र में भी सर्वशब्द का द्वितीयान्त उच्चारण करने से श्लोक रूप में हयग्रीव मन्त्र का उद्धार हो जाता है । इसके आदि में प्रणव का उच्चारण करना चाहिए ।

**विमर्श**—इसका स्वरूप इस प्रकार होगा—

'ॐ उद्गिरत्प्रणवोद्गीथ सर्ववागीश्वरेश्वर ।
सर्ववेदमयाचिन्त्य सर्वं बोधय बोधय ॥'

इस मन्त्र के हयग्रीव देवता हैं जो समस्त वाणी के ऐश्वर्य को प्रदान करते हैं, प्रथम तार से हृदय, इसके बाद प्रथम पाद के आठ अक्षर से शिर, द्वितीय पाद से शिखा, तृतीय पाद से कवच और चतुर्थ पाद से अस्त्र इस प्रकार पञ्चाङ्गन्यास करे ॥ ६९-७१ ॥

ध्यानम् । पुरश्चरणादिकथनम्

शरच्छशाङ्कप्रभमश्ववक्त्रं
मुक्तामयैराभरणैरुपेतम् ।
रथाङ्गं शङ्खाङ्कितबाहुयुग्मं
जानुद्वयन्यस्तकरं भजामः ॥ ७२ ॥

ध्यानमाह शरदिति । अत्र ध्यानानन्तरमियं मुद्रा दर्शनीया—

वामहस्ततले दक्षा अङ्गुलीस्तास्त्वधोमुखीः ।
संरोप्य मध्यमां तासामुन्नम्याऽधो विकुञ्चयेत् ॥
हयग्रीवप्रिया मुद्रा तन्मूर्त्तेरनुकारिणी ॥ इति ॥ ७२ ॥

अब **हयग्रीव का ध्यान** कहते हैं—जिन हयग्रीव का मुख शरत्कालीन चन्द्रमा के समान उज्ज्वल है जो मोतियों के आभरणों से शोभित हैं, जिनके दो बाहुओं में चक्र तथा शङ्ख शोभित हैं और शेष दो बाहु अपने दोनों जानुओं पर रखे हुये हैं—ऐसे हयग्रीवावतार विष्णु का हम भजन करते हैं ॥ ७२ ॥

वर्णलक्षं जपेन्मन्त्रं कुन्दपुष्पैर्मधुप्लुतैः ।
दशांशं वैष्णवे वह्नौ जुहुयान्मन्त्रसिद्धये ॥ ७३ ॥

हयग्रीवबीजम्

अष्टाक्षरोदिते पीठे हयग्रीवं प्रपूजयेत् ।
बीजेन मूर्त्तिं सङ्कल्प्या बीजमुद्ध्रियते यथा ॥ ७४ ॥

वर्णलक्षं द्वात्रिंशल्लक्षं वैष्णवे वह्नाविति । तत्र वैष्णवपीठमभ्यर्च्येत्यर्थः ॥ ७३-७४ ॥

उपर्युक्त ३२ अक्षर वाले हयग्रीव मन्त्र का ३२ लाख जप करे और त्रिमधु से मिश्रित कुन्द के पुष्प द्वारा वैष्णव अग्नि (=पीठ) में मन्त्र सिद्धि के लिये होम करना चाहिए ॥ ७३ ॥

तदनन्तर साधक पूर्वोक्त अष्टाक्षर युक्त पीठ पर हयग्रीव की पूजा करे। हयग्रीव के बीज मन्त्र से मूर्त्ति की कल्पना करे । हयग्रीव बीज मन्त्र का उद्धार इस प्रकार है ॥ ७४ ॥

वियद्भृगुस्थमर्घीशबिन्दुमद्बीजमीरितम् ।
केसरेषु चतुर्वेदांश्चतुर्दिक्षु समर्चयेत् ॥ ७५ ॥

हयग्रीवबीजमुद्धरति वियदिति । वियत् हः । भृगुस्थं सकारस्थम् । अर्घीशः ऊकारः बिन्दुश्च तद्वत् । कल्पान्तरे चतुर्दशस्वरयुक्तमुदाहृतम् । तदुक्तं शाङ्करकल्पे—

शून्यं शून्यसमायुक्तं जीवस्योपरि संस्थितम् ।
अनुग्रहयुतं कृत्वा वागीशं सर्वकामदम् ॥ इति ॥

केचिद्रुद्रेण भूषितं कृत्वेति पठन्ति । एतद्बीजाद्यो ङेऽन्त हयग्रीवशब्द-नत्यन्तोऽष्टाक्षरो मन्त्रः । हं बीजम् । सौ शक्तिः । देवीगायत्री छन्दः । अन्यद्वक्ष्य-माणैकाक्षरविधानवत् सर्वं ज्ञेयम् । एतावपि स्वतन्त्रौ मन्त्रौ । विद्याकामेन वाक्पुटौ जप्यौ बालातार्तीयसंपुटौ वा वश्यकामेन कामराजसंपुटौ वा । हं बीजं सं शक्तिः । तदृष्यादिकं यथा—

ब्रह्मत्रिष्टुप्हयग्रीवा ऋष्याद्याः परिकीर्त्तिताः ।
षड्दीर्घयुक्तमूलेन षडङ्गविधिरीरितः ॥

धवलनलिननिष्ठं क्षीरगौरं कराग्रै-
र्जपवलयसरोजे पुस्तकाभीष्टदाने ।
दधतममलवस्त्राकल्पजालाभिरामं
तुरगवदनविष्णुं नौमि देवारिजिष्णुम् ॥

वेदलक्षं जापित्वाऽन्ते तद्दशांशं हुनेद्घृतैः ।
पुरोक्ते प्रयजेत् पीठे गायत्र्यावाह्य पूजयेत् ॥
ङेऽन्तं वागीश्वरपदं विद्महे पदमुच्चरेत् ।
हयग्रीवं चे ङेऽन्तं स्याद्धीमहीति ततो वदेत् ॥
तन्नोहंसःपदान्ते च प्रवदेच्च प्रचोदयात् ।
प्रथमावृतिरङ्गैः स्यात् द्वितीया चाष्टभिर्हयैः ॥
प्रज्ञाहयस्तथा मेधाहयः स्मृतिहयस्तथा ।
विद्याहयः श्रीहयश्च वागीशीहय एव च ॥
विद्याविलाससुहयो हयान्तो नादमर्दनः ।
मेधादिभिस्तृतीया स्यात्ताश्च मेधा सरस्वती ॥
प्रज्ञा तृतीया विजया पञ्चमी चाऽपराजिता ।
तुष्टिः पुष्टिः सप्तमी स्याच्छ्रद्धा चैवाऽष्टमी मता ॥
कल्पान्तरे तु लक्ष्म्याद्यास्ताश्च लक्ष्मीः सरस्वती ।
रतिप्रीती कीर्त्तिकान्ती तुष्टिः पुष्टिस्तथाऽष्टमी ॥
चतुर्थी कुमुदाद्यैस्ते कुमुदः कुमुदाक्षकः ।
पुण्डरीकः सर्वनेत्रो वामनः शङ्कुकर्णकः ॥
सुमुखः सुप्रतिष्ठः स्याल्लोकपालैस्तु पञ्चमी ।
तदायुधैश्च षष्ठी स्यादेवं पूजा समीरिता ॥ इति ॥
बीजं रेफसमायुक्तं हुङ्कारद्वयमध्यगम् ।
यस्य नाम्ना जपेन्मन्त्रं मारयेत्तं न संशयः ॥
हुङ्कारद्वयमध्यस्थं बीजराजं सुरेश्वरि ।
विद्वेषयेज्जगत् सर्वं मासं जप्त्वा न संशयः ॥
लिखेद्रोचनया भूर्जे मन्त्रं बाहौ विधारयेत् ।
महारक्षा भवेदेषा सर्वदोषविनाशिनी ॥ इति ॥

शाङ्करकल्पोक्तं यन्त्रमुच्यते—

प्रणवद्वयसंयुक्तमकारद्वयमध्यगम् ।

वादिनाम लिखेद्बीजे भूर्जपत्रे हरिद्रया ॥
पत्राष्टके हयग्रीवाष्टाक्षरं स्वरकेसरे ।
कादि क्षान्तवृतं बाह्ये तद्बहिर्भूपुरं लिखेत् ॥
वाक्स्तम्भनमिदं प्रोक्तं शरावद्वयसंपुटे ।
वेष्टितं पीतसूत्रेण मूकत्वं कुरुतेऽचिरात् ॥ इति ॥ ७५ ॥

वियद् (हकार) जो भृगु (सकार) से युक्त हो तथा जिस पर अर्घीश उकार और बिन्दु लगा हो, इस प्रकार हयग्रीव के बीज मन्त्र का उद्धार कहा गया। इसका स्वरूप 'ह्सूं' हुआ । साधक को केशरों के चारों दिशाओं में चारों वेद की अर्चना करनी चाहिए ॥ ७५ ॥

**विदिक्ष्वङ्गस्मृतिन्यायसर्वशास्त्राणि पूजयेत् ।**
**अर्चयेत् पत्रमध्येषु विधानेनाऽङ्गदेवताः ॥ ७६ ॥**
**बाह्ये लोकेश्वरांस्तेषां वज्राद्यस्त्राणि संयजेत् ।**
**एवं यो भजते देवं साक्षाद्वागीश्वरो भवेत् ॥ ७७ ॥**
**बैल्वैः फलैः कृतो होमः श्रीकरः परिगीयते ।**
**कुन्दपुष्पाणि जुहुयादिच्छन् वाक्श्रियमव्ययम् ॥ ७८ ॥**

विदिक्ष्विति । शिक्षाकल्पव्याकरणनिरुक्तज्योतिषछन्दोरूपेभ्यः षडङ्गेभ्यो नमः स्मृतिभ्यो नमः न्यायशास्त्रेभ्यो नमः सर्वशास्त्रेभ्यो नमः इत्यादि प्रयोगः । विधानेनेति चतुर्थोक्ताग्नेयादिस्थानेषु पत्रमध्येष्विति चतुर्थोक्तकेसराङ्ग पूजापवादः ॥ ७६-७८ ॥

केशरों के चारों कोणों में वेदाङ्ग, स्मृति, न्याय एवं सर्व शास्त्रों की पूजा करे । पत्र के मध्य में विधानपूर्वक अङ्गदेवता का पूजन करे ॥ ७६ ॥

पत्र के बाहर लोकेश्वरों की एवं उनके अस्त्रों की पूजा करे । इस प्रकार जो भगवान् हयग्रीव की पूजा करता है वह साक्षात् वागीश्वर हो जाता है ॥ ७७ ॥

हयग्रीव के मन्त्र द्वारा बेल के फलों का होम श्री प्रदान करता है । अनन्त और शाश्वत वाणी का ऐश्वर्य प्राप्त करने के लिये कुन्द पुष्पों से होम करना चाहिए ॥ ७८ ॥

**मनुनाऽनेन सञ्जप्तं घृतं ब्राह्मीरसैः सृतम् ।**
**कवितामावहेत्पुंसामनर्गलविजृम्भणाम् ॥ ७९ ॥**
**वचामनेन सञ्जप्तां भक्षयेत् प्रातरन्वहम् ।**
**सर्ववेदागमादीनां व्याख्याता जायतेऽचिरात् ।**
**मनोरस्य समो नास्ति ज्ञानैश्वर्यप्रदोऽपरः ॥ ८० ॥**

मनुनेति । 'अकल्कोऽपि भवेत् स्नेहो यः साध्यः केवले द्रवे' इत्युक्तत्वात् । घृताच्चतुर्गुणे ब्राह्मीरसे घृतं पचेत् । घृतावशेषमुत्तार्याऽनेन संजप्तं पिबेत् ॥७९-८०॥

घृत से चौगुने ब्राह्मी रस में घी को पकावे । जब मात्र घृत शेष रह जावे तब इस मन्त्र से जप कर उस बासी घृत को नित्य प्रातःकाल पीता रहे । ऐसा करने से साधक अजस्र प्रवाहित होने वाली सालङ्कार कविता प्राप्त करता है ।

वह साधक शीघ्र ही समस्त वेद और आगमों का व्याख्याता हो जाता है । ज्ञान के ऐश्वर्य को प्रदान करने के लिये इस मन्त्र के समान और कोई दूसरा मन्त्र नहीं है ॥ ७९-८० ॥

रामसन्त्रः

**अनन्तोऽग्न्यासनः सेन्दुर्बीजं रामाय हृन्मनुः ।**
**षडक्षरोऽयमादिष्टो भजतां कामदो मणिः ॥ ८१ ॥**

ऋष्यादिकथनम्

**ब्रह्मा प्रोक्तो मुनिश्छन्दो गायत्रं देवता मनोः ।**
**देशिकेन्द्रैः समाख्यातो रामो राक्षसमर्दनः ॥ ८२ ॥**
**दीर्घभाजा स्वबीजेन कुर्यादङ्गानि षट् क्रमात् ।**
**ब्रह्मरन्ध्रे भ्रुवोर्मध्ये हृन्नाभ्यन्धुषु पादयोः ।**
**षडक्षराणि विन्यस्येन्मन्त्रस्य मनुवित्तमः ॥ ८३ ॥**

राममन्त्रमाह अनन्त इति । अनन्त आकारः अग्न्यासनो रेफासनः सेन्दुः सबिन्दुः । बीजमित्यनेनैकाक्षरोऽप्ययं मन्त्र इति सूचितम् । तदुक्तम्—

वह्निस्थं शयनं विष्णोरर्धचन्द्रविभूषितम् ।
एकाक्षरो मनुः प्रोक्तो मन्त्रराजः सुरद्रुमः ॥ इति ।

अस्यर्ष्यादिकं सर्वं वक्ष्यमाणमेव । एतदर्थ उक्तः स्कन्दयामले निर्वाणखण्डे—

रेफोऽग्निरहमेवोक्तो विष्णुः सोमो म उच्यते ।
मध्यगस्त्वावयोर्ब्रह्मा रविराकार उच्यते ॥
ज्योतींषि कवलीकृत्य त्रीण्याकाशो विभुः स्वयम् ।
नादोऽभिधत्ते सन्मात्रं त्वमेव परमेश्वरम् ॥ इति ।

रामाय हृदित्यनेनाऽयं पञ्चाक्षरोऽपि मन्त्र इत्युक्तम् । यदाहुः—

सप्रतिष्ठौ रमौ वायुर्हृत् पञ्चार्णो मनुः स्मृतः ।
विश्वामित्रो मुनिः प्रोक्तः पङ्क्तिश्छन्दोऽस्य देवता ॥
रामभद्रो बीजशक्ती प्रथमार्णनती क्रमात् ।
भ्रूमध्ये हृदि नाभ्यन्धुपादयोर्विन्यसेन् मनुम् ॥
षडङ्गं पूर्ववद्यद्वा पञ्चार्णैर्मनुनाऽस्त्रकम् ।
मध्ये वनं कल्पतरोर्मूले पुष्पलताकुलम् ॥
लक्ष्मणेन प्रगुणितमक्ष्णः कोणेन सायकम् ।
अवेक्ष्यमाणं जानक्या धृतव्यजनयेश्वरम् ॥

जटाभारलसच्छीर्षं श्यामं मुनिगणावृतम् ।
लक्ष्मणेन धृतच्छत्रमथवा पुष्पकोपरि ॥
दशास्यमथनं प्राग्वत् ससुग्रीवविभीषणम् ।
विजयार्थी विशेषेण वर्णलक्षं जपेन्मनुम् ॥ इति ।

मनुरिति । एवं मिलित्वा मन्त्रः षडक्षर इत्यर्थः । कामदो मणिश्चिन्तामणिरित्यनेनास्य विनियोगं वदता स्वबीजं विनापि बहुप्रकारं षड्वर्णत्वं बहुप्रकारं च सप्तवर्णत्वं सूचितम् । तदुक्तं स्कन्दयामले निर्वाणखण्डे—

विश्वरूपस्य ते नाम विश्वे शब्दादि वाचकाः ।
तथापि मूलमन्त्रस्ते विश्वेषां बीजमक्षयम् ॥
मुक्तये प्रणवाद्योऽयं रमादिरपि भुक्तये ।
वाग्भवादिस्तु वाक्सिद्ध्यै मायादिरखिलेष्टदः ॥
अखिलोऽयं महाशक्तिर्मन्त्रचिन्तामणिर्विभो । इति ।

अन्यत्र— स्वकामशक्तिवाग्लक्ष्मी ताराद्यः पञ्चवर्णः ।
षडक्षरः षड्विधः स्याच्चतुर्वर्गफलप्रदः ॥
पञ्चाशन्मातृकामन्त्रवर्णप्रत्येकपूर्वकः ।
लक्ष्मीवाग्मन्मथादिश्च तारादिः स्यादनेकधा ॥
श्रीमायामन्मथैकैक बीजाद्यन्तगतो मनुः ।
चतुर्वर्णः स एव स्यात् षड्वर्णो वाञ्छितप्रदः ॥
स्वाहान्तो हुंफडन्तो वा नत्यन्तो वा भवेदयम् ।
ब्रह्मा समोहनः शक्तिर्दक्षिणामूर्त्तिरिव च ॥
अगस्त्यः श्रीशिवः प्रोक्ता मुनयोऽत्र क्रमादिमे ।
छन्दो गायत्रसंज्ञं च श्रीरामश्चैव देवता ॥
अथवा कामबीजादेर्विश्वामित्रो मुनिर्मनोः ।
छन्दो देव्यादि गायत्री रामभद्रोऽस्य देवता ॥

बीजशक्ती यथापूर्वम् । इति । राक्षसमर्दनः इति विशेषणं विधेयम् । रां बीजं नमः शक्तिः । तदुक्तं शौनककल्पे—

जानीयात्प्रथमं वर्णं बीजं शक्तिं नतिं तथा । इति ।

केचन आयेति शक्तिमाहुः । दीर्घभाजा षड्दीर्घभाजा । स्वबीजेन मन्त्राद्यबीजेन। क्रमादित्यनेन षड्वर्णैर्वा षडङ्गमित्युक्तम् । यदाहुः—

बीजैः षड्दीर्घयुक्तैर्वा मन्त्रार्णैर्वा षडङ्गकम् । इति ।

अन्धु गुह्यम् । मनुवित्तम इत्यनेनैतदुक्तं भवति । पञ्चाक्षरे पादन्यासः । सप्ताक्षरे ब्रह्मरन्ध्रभ्रूमध्यकण्ठहृन्नाभिगुह्यपादेषु न्यासः । द्व्यक्षरे ब्रह्मरन्ध्रहृदोः । त्र्यक्षरे गुह्यान्तयोः । चतुरक्षरे गुह्यपादान्तयोरिति ॥ ८१-८३ ॥

अब **राममन्त्र का उद्धार** कहते हैं—बिन्दु और आकारयुक्त रेफ इस प्रकार 'राँ', इस बीजाक्षर से युक्त 'रामाय' पद, तदनन्तर हृत् (नमः) पद—इस प्रकार

'राँ रामाय नमः' यह छः अक्षरों का राम मन्त्र बनता है । जो भजन करने वाले को चिन्तामणि के समान फल प्रदान करता है ॥ ८१ ॥

इसके ऋषि ब्रह्मदेव हैं, गायत्री छन्द है और आचार्यों ने इस मन्त्र के देवता राक्षस मर्दन राम को कहा है ॥ ८२ ॥

दीर्घ (आ, ई, ऊ, ऐ, औ, अः) वर्णों से युक्त बीजमन्त्र से ब्रह्मरन्ध्र, भ्रूमध्य, कण्ठ, हृत्, नाभि, गुह्य एवं दोनों पैरों में षडङ्गन्यास करे । यथा—आं राँ इति हृदि, ईं राँ इति शिरसि इत्यादि ॥ ८३ ॥

**विमर्श**—मनुवित्तमः का अर्थ है पाँच अक्षस से पादन्यास, सात अक्षर से ब्रह्मरन्ध्र आदि में, दो अक्षर से ब्रह्मरन्ध्र और हृदय में, तीन अक्षरों में गुह्यान्त में, चार अक्षरा से गुह्य औरर पादान्त में न्सास करना चाहिए ।

ध्यानम्

**कालाम्भोधरकान्तिकान्तमनिशं वीरासनाध्यासितं**
**मुद्रां ज्ञानमयीं दधानमपरं हस्ताम्बुजं जानुनि ।**
**सीतां पार्श्वगतां सरोरुहकरां विद्युन्निभां राघवं**
**पश्यन्तीं मुकुटाङ्गदादिविविधाकल्पोज्ज्वलाङ्गं भजे ॥ ८४ ॥**

**ध्यानमाह कालेति । वीरासनमन्त्ये वक्ष्यति । ज्ञानमुद्रालक्षणं प्राक् । अपरं वामम् । राघवं पश्यन्तीं पार्श्वगतां सीताञ्च भजे इति सम्बन्धः । अस्मिन् पाठे वक्ष्यमाणसीतामन्त्रस्यापि ध्यानमुक्तं भवति । क्वचित्पश्यन्तमिति पाठः । तदा सीतां पश्यन्तं राघवं भजे इति सम्बन्धः । उक्तञ्च—**

**वामाङ्कारूढसीतामुखकमलमिलल्लोचनं नीरदाभम् । इति । आकल्पो भूषा । अत्र ध्यानानन्तरं नारायणाष्टाक्षरोक्तां गरुडमुद्रां च दर्शयेत् ॥ ८४ ॥**

अब **इस मन्त्र का ध्यान** कहते हैं—काले काले बादलों की कान्ति के समान मनोहर जिनका अङ्ग हैं, जो निरन्तर वीरासन से बैठे हुये है, एक हाथ से ज्ञानमुद्रा तथा दूसरा हस्त कमल जो अपने जानु मण्डल पर रखे हुये हैं । वाम पार्श्व में विद्यमान विद्युच्छटा युक्त श्री सीता हाथों में कमल लिये जिन राघव की ओर निरन्तर निहार रही हैं ऐसे मुकुट अङ्गदादि विविध आभूषणों से भूषित, जाज्वल्यमान शरीर वाले राघव का मैं भजन करता हूँ ॥ ८४ ॥

पुरश्चरणादिकथनम्

**वर्णलक्षं जपेन्मन्त्रं दशांशं कमलैः शुभैः ।**
**जुहुयादर्चिते वह्नौ ब्राह्मणान् भोजयेत्ततः ॥ ८५ ॥**

**वर्णलक्षं षट्लक्षम् । अर्चिते वह्नाविति रामपीठं वह्नावावाह्येत्यर्थः ॥ ८५ ॥**

इस मन्त्र का छः लाख जप करे । उसका दशांश, पूजित अग्नि में श्रेष्ठ कमलों से हवन करे । तदनन्तर ब्राह्मण भोजन करावे ॥ ८५ ॥

पूजयेद्वैष्णवे पीठे मूर्त्तिं मूलेन कल्पयेत्।
श्रीं सीतायै द्विठान्तेन सीतां पार्श्वगतां यजेत् ॥ ८६ ॥

श्रीं सीतायै स्वाहा इति । अयं स्वतन्त्रोऽपि मन्त्रः ।

तदुक्तम्—सीतामन्त्रोऽपि कथितः स्वतन्त्रोऽङ्गपरोऽपि च । इति ।

स्कन्दयामले निर्वाणखण्डेऽपि—

ब्रह्मा गृणाति त्वच्छक्तिं देवीं वाचं त्वदाप्तये ।
विष्णुर्ध्यायति त्वामेव सुषुम्णां पारमेश्वरीम् ॥
सीतामुपास्ते व्योमान्तरीश्वरो बिन्दुरूपिणीम् ।
सदाशिवो नादमयीं खातीतामुन्मनीं शिवः ॥ इति ।

अस्यर्ष्यादिकमगस्तिसंहितोक्तं यथा—

जनकोऽस्य ऋषिश्छन्दो गायत्रं देवता मनोः ।
सीता भगवती प्रोक्ता श्रीबीजं शक्तिरन्तजौ ॥
दीर्घस्वरयुजाद्येन षडङ्गानि प्रकल्पयेत् ।
पूजयेद्वैष्णवे पीठे ध्यायेद्राघवसंयुताम् ॥
सुवर्णाभाम्बुजकरां रामालोकनतत्पराम् ।
वर्णलक्षं जपेन्मन्त्रमिष्टार्थान् साधयेत्ततः ॥ इति ॥ ८६ ॥

वैष्णव पीठ पर मूल मन्त्र से मूर्त्ति की कल्पना कर रामभद्र का पूजन करे । तदनन्तर साधक 'श्री सीतायै स्वाहा' इस मूल मन्त्र से पार्श्वस्थित, श्री सीता की पूजा करे ॥ ८६ ॥

अग्रे पार्श्वद्वये शार्ङ्गं शरानङ्गानि तद्बहिः।
हनूमन्तं ससुग्रीवं भरतं सविभीषणम् ॥ ८७ ॥
लक्ष्मणाङ्गदशत्रुघ्नान् जाम्बुवन्तं दलेष्विमान् ।
वाचयन्तं हनूमन्तमग्रतो धृतपुस्तकम् ॥ ८८ ॥
यजेद्भरतशत्रुघ्नौ पार्श्वयोर्धृतचामरौ ।
धृतातपत्रं हस्ताभ्यां लक्ष्मणं पश्चिमे यजेत् ॥ ८९ ॥
सृष्टिं जयन्तं विजयं सुराष्ट्रं राष्ट्रवर्द्धनम् ।
अकोपं धर्मपालाख्यं सुमन्त्रं च दलाग्रतः ॥ ९० ॥
सर्वाभरणसम्पन्नान् लोकेशानर्चयेत्ततः।
तदस्त्राणि ततो बाह्ये वज्रादीनि प्रपूजयेत् ॥ ९१ ॥
एवं पूजादिभिः सिद्धे मनौ कर्म्माणि साधयेत् ।
जातीप्रसूनैर्जुहुयाच्चन्दनाम्भःसमुक्षितैः ॥ ९२ ॥
राजवश्याय कमलैर्धनधान्यादिसम्पदे ।
नीलोत्पलानां होमेन वशयेदखिलं जगत् ॥ ९३ ॥

बिल्वप्रसूनैर्जुहुयादिन्दिरावाप्तये नरः ।
दूर्वाहोमेन दीर्घायुर्भवेन्मन्त्री निरामयः॥ १४ ॥
रक्तोत्पलहुतान्मन्त्री धनमाप्नोति वाञ्छितम् ।
मेधाकामेन होतव्यं पलाशकुसुमैर्नवैः ॥ १५ ॥
तज्जप्तमम्भः प्रपिबेत्कविर्भवति वत्सरात् ।
तन्मन्त्रितान्नं भुञ्जीत महदारोग्यमाप्नुयात्॥ १६ ॥

अग्रे पार्श्वद्वय इति व्यधिकरणे सप्तम्यौ । तेनाग्रे पुरतः पार्श्वद्वये वामदक्षिण-पार्श्वयोः शार्ङ्गं शरानिति सम्बन्धः । अनेनैतावत्पर्यन्तं मुख्यपूजेत्युक्तम् । उक्तञ्च—

वामपार्श्वे त्रिकोणस्य शार्ङ्गं दक्षिणके शरान् ।
शं शार्ङ्गाय नमोऽस्त्वेवं शं शरेभ्यो नमोऽस्त्विति ॥
पूजानुज्ञां ततो लब्ध्वा रश्मीनङ्गान्यथो यजेत् । इति ।

पूजायन्त्रं तु तन्त्रान्तरोक्तं यथा—

भूगृहाष्टकपत्रान्तः षट्कोणमतिसुन्दरम् ॥ इति ।

अत्रैव वक्ष्यमाणं धारणयन्त्रं वा । तदुक्तमगस्तिसंहितायाम्—

षट्कोणादि धरण्यन्तं पूर्ववद्विलिखेदथ ।
तस्य मध्ये लिखेत्तारं षट्सु कोणेष्वपि क्रमात् ॥
मूलमन्त्राक्षराण्येव सन्धिष्वङ्गं च मान्मथम् ।
मायां गण्डेषु किञ्जल्के स्वराणां लेखनं मतम् ॥
पत्रेषु पूर्ववन् मालामन्त्रो लेख्यः क्रमेण हि ।
दशाक्षरेण संवेष्ट्य काद्यानि व्यञ्जनानि च ॥
दिग्विदिक्षु लिखेद्बीजे नरसिंहवराहयोः ।
एतद्यन्त्रान्तरं चात्र साङ्गावरणमर्चयेत् ॥
सौवर्णे राजते भूर्जे लिखित्वाऽर्चनमारभेत् । इति ।

अङ्गानि तद्बहिरिति आग्नेयादि षट्सु कोणेषु ॥

तदुक्तम्— इष्ट्वाङ्गदेवताः षट्कोणेष्वग्निकोणादि । इति ।

अन्यत्रापि— षट्कोणे प्रथमावृत्तिः स्यादङ्गैरग्नितः क्रमात् । इति ।

पश्चिमे देवपृष्ठभागे । अत्र हनूमन्तमित्यादि प्रथममुद्दिश्य पश्चाद्वाचयन्त-मित्यादिना यत्प्राधान्येन चतुर्णां सध्यानं पूजनमाह । तेनैषां चतुर्णां मन्त्रा अपि प्रधानभूता इत्यपि सूचितम् । यदगस्तिसंहितायाम्—

आञ्जनेयमनुं वक्ष्ये भुक्तिमुक्त्येकसाधनम् ।
प्रकाशितं शङ्करेण लोकानां हितकाम्यया ॥
भूतप्रेतपिशाचादिडाकिनीब्रह्मराक्षसाः ।
दृष्ट्वाऽथ प्रपलायन्ते मन्त्रानुष्ठानतत्परम् ॥
प्रधानश्चाऽङ्गभूतोऽयं मन्त्रराजो ह्यनुत्तमः ।

पूर्वं नमः पदञ्चोक्त्वा ततो भगवते पदम् ॥
आञ्जनेयपदं ङेऽन्तं महाबलपदं तथा ।
वह्निजायान्त एव स्यान् मन्त्रो हनूमतः परः ॥
सर्वसिद्धिकरः प्रोक्तो मन्त्रश्चाऽष्टादशाक्षरः ।
ऋषिरीश्वर एव स्यादनुष्टुप् छन्द उच्यते ॥
हनूमान् देवता प्रोक्तो हं बीजं शक्तिरन्तजौ ।
हनुमत्प्रीणनं चैव फलमाद्यमुदाहृतम् ॥
नमो भगवते चाञ्जनेयायाऽङ्गुष्ठयोर्न्यसेत् ।
रुद्रमूर्त्तय इत्येवं तर्जनीभ्यामनन्तरम् ॥
वायुसुतायाऽपि तथा मध्यमाभ्यामपि स्फुटम् ।
अग्निगर्भाय च तथाऽनामिकाभ्यां प्रविन्यसेत् ॥
रामदूताय च पुनः कनिष्ठाभ्यां विचक्षणः ।
ब्रह्मास्त्रवारणार्थाय चाऽस्त्रमन्त्रः समीरितः ॥
एवं षडङ्गं च मुने कृत्वा ध्यायेदनन्यधीः ।
स्फटिकाभं स्वर्णकान्तिं द्विभुजं च कृताञ्जलिम् ॥
कुण्डलद्वयसंशोभिमुखाम्भोजं मुहुर्मुहुः ।
अयुतं तु पुरश्चर्या रामस्याग्रे शिवस्य वा ॥
पूजां तु वैष्णवे पीठे शैवे वा विदधीत वै ।
आवृतिभिर्विना नित्यं नक्ताशी विजितेन्द्रियः ॥ इति ।
रेफपूर्वं समुद्धृत्य बिन्दुलक्ष्मणसंयुतम् ।
ङेऽन्तोऽयं लक्ष्मणमनुर्नमसा च समन्वितः ॥
अगस्त्य ऋषिरस्याऽथ गायत्रं छन्द उच्यते ।
लक्ष्मणो देवता प्रोक्तो लं बीजं शक्तिरस्य हि ॥
नमस्तु विनियोगो हि पुरुषार्थचतुष्टये ।
दीर्घभाजा स्वबीजेन षडङ्गानि प्रकल्पयेत् ॥
द्विभुजं स्वर्णरुचिरं तनुं पद्मनिभेक्षणम् ।
धनुर्बाणकरं रामसेवासंसक्तमानसम् ॥
पूजापि वैष्णवे पीठे साङ्गावरणवर्जिते ।
सप्तलक्षं पुरश्चर्या ततः सिद्धस्तु साधयेत् ॥
भरतस्यैवमेव स्याच्छत्रुघ्नस्याऽप्ययं विधिः ।
अङ्गत्वेनोदिता ह्येते प्राधान्येनापि सम्मताः ॥
आदौ वाऽप्यन्ततो वापि पूजायां राघवस्य तु ।
एतेषामपि कर्त्तव्या पूजा भुक्तिफलेप्सुभिः ॥
प्राधान्येन पृथक्त्वेन अङ्गत्वे रामपीठके ।
लक्ष्मणस्तु सदा पूज्यः प्राधान्येनैव नित्यशः ॥
यथा रामस्य पूजा स्यात्तथा तस्यापि नित्यशः ॥
साफल्यं रामपूजाया यदीच्छेन्नियतव्रतः ॥
तेन यत्नेन कर्त्तव्या लक्ष्मणस्यापि विस्तरात् ।
श्रीराममन्त्रभेदास्तु बहवः सन्ति वै मुने ॥

तत्साधकैः सदा कार्या सौमित्रेरपि नित्यशः ।
अष्टोत्तरसहस्त्रं वा शतं वा सुसमाहितः ॥
लक्ष्मणस्य मनुर्जप्यो मुमुक्षुभिरतन्द्रितम् ।
अजप्त्वा लक्ष्मणमनुं राममन्त्रं जपन्ति ये ॥
तज्जप्तस्य फलं नैव प्रयान्ति कुशला अपि ।
अरिमित्रविधिः कोऽपि नैव कार्यो भवेदिह ॥
यो जपेल्लक्ष्मणमनुं नित्यमेकान्तमास्थितः ।
मुच्यते सर्वपापेभ्यः स कामानश्नुतेऽखिलान् ॥
प्रयोगायैव मन्त्रोऽयमुपदिष्टो हि शार्ङ्गिणा ।
सन्ध्याञ्चोपास्य विधिवन् मूलमन्त्रेण मन्त्रवित् ॥
त्रिकालं नियतो भूत्वा कृतनित्यविधिः स्वयम् ।
दीक्षायुतो यथान्यायं गुर्वनुज्ञापुरःसरम् ॥
मुच्यते सर्वपापेभ्यो याति विष्णोः परं पदम् ।
ऐहिकाननपेक्ष्यैवं निष्कामो योऽर्चयेद्विभुम् ॥
दीक्षां प्राप्य विधानेन गुरोर्विगतकल्मषात् ।
आचारादिरताद्दान्ताद् गृहस्थाद्विजितेन्द्रियात् ॥
तदनुज्ञानुसारेण पुरश्चर्या यथाविधि ।
स सर्वान् पुण्यपापौघान् दग्ध्वा निर्मलमानसः ॥
पुनरावृत्तिरहितं शाश्वतं पदमाप्नुयात् ।
सकामो वाञ्छितान् लब्ध्वा भुक्त्वा भोगान् यथेप्सितान् ॥
जातिस्मरश्चिरं भूत्वा याति विष्णोः परं पदम् ।
यथा श्रीराममन्त्राणां प्रयोक्तुः पापसम्भवः ॥
तथा नो लक्ष्मणमनोः किन्तु याति परां गतिम् ।
केचिन् मुक्त्यर्थमेव स्युः केचिदैहिकसाधनाः ॥
भुक्तिमुक्तिप्रदश्चाऽयमेको विज्ञायते परम् ॥ इति ॥ ८७-९६ ॥

आगे दोनों पार्श्व में (बायें एवं दाहिने) शार्ङ्ग धनुष तथा बाण की पूजा करे, उसके बाहर सुग्रीव सहित हनूमान् और विभीषण सहित श्री भरत की पूजा करे ॥ ८७ ॥

लक्ष्मण, अङ्गद, शत्रुघ्न एवं जाम्बवान् की चार दलों पर पूजा करे । आगे पुस्तक लेकर उसे बाचते हुये (उपदेश) करते हुये हनुमान् की पूजा करे ॥ ८८ ॥

दोनों पार्श्व में चामर धारण किये हुये भरत एवं शत्रुघ्न की पूजा करे और पश्चिम में दोनों हाथों से छत्र लगाये हुये श्री लक्ष्मण की पूजा करे ॥ ८९ ॥

इसके बाद पत्र के अग्रभाग में १. सृष्टि, २. जयन्त, ३. विजय, ४. सुराष्ट्र, ५. राष्ट्रवर्धन, ६. अकोप, ७. धर्मपाल तथा ८. सुमन्त—इन अष्ट प्रधान मन्त्रियों की पूजा करे ॥ ९० ॥

इसके बाद सर्वाभरण भूषित इन्द्रादि लोकपालों की पूजा करे । उसके बाहर उनके वज्रादि आयुधों की पूजा करे ॥ ९१ ॥

इस प्रकार की पूजा से जब मन्त्र सिद्ध हो जाय तब सभी अभीष्ट कर्मों के लिये इसका प्रयोग करना चाहिए । राजा को वश में करने के लिये चन्दन के जल से प्रसिञ्चित जाती पुष्प से होम करे । धन धान्यादि संपत्ति की प्राप्ति के लिये कमलों से पूजा करे । नीलोत्पल के होम से साधक समस्त विश्व को वश में कर लेता है ॥ ९२-९३ ॥

लक्ष्मी प्राप्ति के लिये साधक विल्व के फूलों से हवन करे । दूर्वा के होम से दीर्घायुष्य तथा नीरोगता प्राप्त होती है ॥ ९४ ॥

रक्त कमल के होम से मन्त्रज्ञ मनमाना धन प्राप्त करता है । बुद्धिमान् बनने के लिये नवीन खिले हुये पलाश पुष्पों का होम करना चाहिए ॥ ९५ ॥

इस मन्त्र से अभिमन्त्रित जल पीने से एक वर्ष के भीतर साधक कवि हो जाता है और इस मन्त्र से अभिमन्त्रित अन्न का भोजन करने से महान् आरोग्य का लाभ होता है ॥ ९६ ॥

**धारणयन्त्रम्**

**तारं मध्ये विलिखतु मनुं षट्सु कोणेषु सन्धि-**
**ष्वङ्गं मायां स्मरमपि लिखेत्कोणगण्डेषु पश्चात् ।**
**किञ्जल्केषु स्वरगणमथो पत्रमध्येषु माला-**
**मन्त्रोत्थार्णान् गुहमुखमितानष्टमे पञ्च वर्णान् ॥ ९७ ॥**
**दशाक्षरेण संवेष्ट्य कादिवर्णैश्च भूपुरे ।**
**दिग्विदिक्षु लिखेद्बीजे नरसिंहवराहयोः ॥ ९८ ॥**

**धारणयन्त्रमाह तारमिति । मध्ये कर्णिकायां साध्यसाधककर्मसहितं प्रणवं लिखेत् । मनुं रामषडक्षरम् । सन्धिषु षट्सन्धिषु । अङ्गं षडङ्गमन्त्राः । कोणगण्डेषु कोणकपोलेषु । एकत्र मायाम् अपरत्र कामं लिखेत् । ततोऽष्टदलकेसरस्थाने षोडशस्वरान् लिखेत् । मालामन्त्रो वक्ष्यमाणः सप्तचत्वारिंशदक्षरः । गुहमुखमितान् षट्परिमितान् । दशाक्षरेण वक्ष्यमाणेन । कादिवर्णैः संवेष्ट्येति सम्बन्धः । भूपुरे दिग्विदिक्षु बीजे लिखेदिति सम्बन्धः । नरसिंहबीजमग्रिमपटले वक्ष्यमाणम् । वराहबीजं वाराहमन्त्रे वक्ष्यमाणम् ॥ ९७-९८ ॥**

अब **धारण के लिये यन्त्र निर्माण का प्रकार** कहते हैं—

षट्कोण यन्त्र निर्माण कर मध्य कर्णिका में साध्य साधक और कर्म सहित प्रणव मन्त्र लिखे । छः कोणों में राम मन्त्र के षडक्षरों को लिखे और सन्धि में षडङ्गमन्त्रों (द्र. १५. ८३) को लिखे । कोण के कपोलों पर एक ओर माया (ह्रीँ) तथा दूसरी ओर काम (क्लीँ) लिखे । पुनः अष्टदल के केशरों पर दो दो के क्रम से षोडश अक्षरों को लिखे । पुनः अष्टपत्र के मध्य में ४७ अक्षरों वाले वक्ष्यमाण माला (१४. ९९-१००) मन्त्रों को इस प्रकार लिखे—सात पत्रों पर

छः छः अक्षर के क्रम से ४२ अक्षर, पुनः शेष पाँच अक्षर अष्टम पत्र पर लिखे। आगे कहे जाने वाले दशाक्षर मन्त्र (द्र. १४. १०१) से उसे संवेष्टित करे। भूपुर में कादि वर्णों को लिखे तथा दिशाओं में एवं कोणों में क्रमशः वक्ष्यमाण नरसिंह तथा वराह बीजों को लिखे। (नरसिंह बीज द्र. १६.३९ क्ष्रौँ) (वाराह बीज द्र. १५.१२८) ॥ ९८ ॥

मालामन्त्रः

**नमो भगवते ब्रूयाच्चतुर्थ्या रघुनन्दनम्।**
**रक्षोघ्नविषदायाऽन्ते मधुरादि समीरयेत् ॥ ९९ ॥**
**प्रसन्नवदनायेति पश्चादमिततेजसे।**
**बालाय पश्चाद्रामाय विष्णवे तदनन्तरम्।**
**प्रणवादि नमोऽन्तोऽयं मालामनुरुदीरितः ॥ १०० ॥**

**मालामन्त्रमाह नम इति। रघुनन्दनाच्चचतुर्थी रघुनन्दनाय। प्रसन्नवदनाय अमिततेजसे इत्यत्र न सन्धिः। सप्तचत्वारिंशदक्षराणि यन्त्रे नियमितत्वात् अयं मालामन्त्रोऽपि स्वतन्त्रः। तदृष्यादिकं यथा—**

मुनिः पितामहश्छन्दः सात्यनुष्टुप च देवता।
राज्याभिषिक्तो रामश्च बीजशक्ती तथा पुरा ॥
तारवाक्कामबीजैश्च सम्पुटं प्रजपेदमुम्।
शिरस्याननवृत्ते च भ्रूमध्येऽक्षिद्वयेऽपि च ॥
श्रोत्रयोर्घ्राणयोश्चैव गण्डयोरोष्ठयोरपि।
दन्तयोरास्यदेशे च दोःपत्सन्ध्यग्रकेषु च ॥
कण्ठे स्तने हृदि द्वन्द्वे पार्श्वयोः पृष्ठदेशतः।
जठरे नाभ्यधिष्ठाने गुह्ये वर्णान् प्रविन्यसेत्।
सप्तर्त्तुसप्तदशषड्रुद्रसंख्यैः षडङ्गकम् ॥

उद्भिन्ननीलशकलामलकान्तिमब्ज-
चापासिवाणकरमम्बुजपत्रनेत्रम्।
पीताम्बरं स्मितसुधामधुरं मुरारिं
सञ्चिन्तयेन् मिथिलराजसुतासहायम् ॥

जपेद्द्वादशलक्षं च ध्यात्वैवं विजितेन्द्रियः।
बैल्वैः फलैः प्रसूनैश्च पत्रैस्त्रिमधुसंयुतैः ॥
मधुरत्रययुक्तेन पयोऽन्नेन सिताम्बुजैः।
होमं दशांशतः कुर्यात्तथा सर्वत्र तर्पणम् ॥
प्राक्प्रोक्ते पूजयेत् पीठे मूर्त्तावावाह्य देवताम्।
प्रथमाङ्गावृतिः प्रोक्ता द्वितीया लक्ष्मणादिभिः ॥
नारदाद्यैस्तृतीया स्याल्लक्ष्म्याद्याभिस्तुरीयका।
चतुर्दिक्स्थैश्च सृष्ट्याद्यैः पञ्चमी लोकनायकैः ॥

षष्ठी वज्रादिभिः प्रोक्ता सप्तमीज्या प्रकीर्त्तिता ।
लक्ष्मणो भरतश्चैव शत्रुघ्नश्च हनूमता ॥
सुग्रीवः पञ्चमः प्रोक्तः षष्ठ उक्तो विभीषणः ।
अङ्गदः सप्तमः प्रोक्तो नीलोऽष्टम उदाहृतः ॥
नारदश्च वसिष्ठश्च वामदेवस्तृतीयकः ।
जाबालो गौतमश्चापि भरद्वाजोऽथ कश्यपः ॥
वाल्मीकिश्चाष्टमः प्रोक्तो लक्ष्मीश्चापि सरस्वती ।
रतिप्रीती कीर्त्तिकान्ती तुष्टिपुष्टी इमाः क्रमात् ॥
सृष्टिर्जयन्तविजयौ सिद्धार्थः कार्यसाधकः ।
अशोकश्चैव पूर्वस्यां श्रीवत्सश्च गदा तथा ॥
पाञ्चजन्यः कौस्तुभाख्यो वनमाला च दक्षिणे ।
उत्तरे चक्रपद्मे च शार्ङ्गबाणाश्च खड्गकाम् ॥
पश्चिमे धर्मगरुडधर्मपालसुमन्त्रकान् ॥ इति ॥ ९९-१०० ॥

अब १४.९७ में कहे गये **माला मन्त्र का उद्धार** कहते हैं—

सर्वप्रथम् 'नमोभगवते', तत्पश्चात् रघुनन्दन शब्द की चतुर्थी (अर्थात् रघुनन्दनाय), तदनन्तर 'रक्षोध्नविषदाय', इसके अन्त में 'मधुर प्रसन्न वदनाय', पश्चात् 'अमिततेजसे', पुनः 'बालाय रामाय विष्णवे' लगावे । इसके अन्त में 'नमः' तथा आदि में प्रणव का प्रयोग करे । इस प्रकार हमने यहाँ माला मन्त्र का उद्धार कहा। यह मन्त्र ४७ अक्षरों का होता है ।

इसका **स्वरूप** इस प्रकार होगा—'ॐ नमो भगवते रघुनन्दनाय रक्षोघ्नविषदाय मधुरप्रसन्नवदनाय अमिततेजसे बालाय रामाय विष्णवे नमः' ('वदनायामित तेजसे' में सन्धि हो जाने से गणना में ४६ होता है) ॥ ९९-१०० ॥

**दशाक्षरमन्त्रः**

**जानकीवल्लभायाऽथ भवेत् पावकवल्लभा ।**
**हुमादिरेषः कथितो राममन्त्रो दशाक्षरः ॥ १०१ ॥**

दशाक्षरोऽपि स्वतन्त्रो मन्त्रः । तदृष्यादिकं यथा—

दशाक्षरोऽयं मन्त्रोऽस्य वसिष्ठः स्यादृषिर्विराट् ।
छन्दस्तु देवता रामः सीतापाणिपरिग्रही ॥
आद्यं बीजं द्विठः शक्तिः कामेनाङ्गानि पूर्ववत् ।
शिरोललाटभ्रूमध्य तालुकण्ठेषु हृद्यपि ॥
नाभ्यन्धुजानुपादेषु दशार्णान् विन्यसेन्मनोः ।
अयोध्यानगरे चित्रसर्वसौवर्णमण्डपे ॥
मन्दारपुष्पैराबद्धविताने तोरणाञ्चिते ।
सिंहासने समारूढं पुष्पकोपरि राघवम् ॥
रक्षोभिर्हरिभिर्मौलैर्दिव्ययानगतैः शुभैः ।

संस्तूयमानं मुनिभिः प्रह्वैश्च परिसेवितम् ॥
सीतालङ्कृतवामाङ्कं लक्ष्मणेनोपसेवितम् ।
श्यामं प्रसन्नवदनं सर्वाभरणभूषितम् ॥
ध्यानान्ते च जपेन्मन्त्रं वर्णलक्षं विचक्षणः ।
दशांशं जुहुयाद्बैल्वैः फलैर्मधुरसंयुतैः ॥ इति ॥

अस्य पूजा षडक्षरवदेव ज्ञेया ॥ १०१ ॥

'हुँ जानकीवल्लभाय स्वाहा' इस प्रकार का यह राम का दश अक्षरों का मन्त्र कहा जाता है ॥ १०१ ॥

जपादिसाधितं यन्त्रं स्वर्णपट्टादिकल्पितम् ।
बाहुना विधृतं दद्याद्विजयश्रीपराक्रमान् ॥ १०२ ॥

जपादीति आदिशब्देन पूजासम्पातौ । स्वर्णपट्टादिकल्पितमित्यादिशब्देन रजत-ताम्रभूर्जपत्राणि । तत्तल्लेख्यविशेषे कालविशेषोऽपि ।

यदगस्तिसंहितायाम्—

यावज्जीवं तु सौवर्णे रौप्ये विंशतिवार्षिकम् ।
भूर्जे द्वादशवर्षाणि तदर्धं ताम्रपत्रके ॥
एवं लेख्यविशेषेण यन्त्रसिद्धिः प्रतिष्ठिता ॥ इति ।

इदं गदितं विधानं राममन्त्रस्य राम इति द्व्यक्षरस्य मन्त्रस्य ज्ञेयमिति शेषः ।

वह्निर्नारायणेनाढ्यो जठरः केवलोऽपि च ।
द्व्यक्षरो मन्त्रराजोऽयं भुक्तिमुक्तिफलप्रदः ॥
एकाक्षरोक्तमृष्यादि स्यादाद्येन षडङ्गकम् ।
तारमायारमानङ्गवाक्स्वबीजैस्तु षड्विधः ॥
द्व्यक्षरो मन्त्रराजः स्यात् सर्वाभीष्टफलप्रदः ।
द्व्यक्षरश्चन्द्रभद्रान्तो द्विविधश्चतुरक्षरः ॥
ऋष्यादि पूर्ववत् ज्ञेयमेतेषां तु विचक्षणैः ॥ इति ॥ १०२ ॥

स्वर्ण, रजत, ताम्र एवं भूर्जपत्र पर यन्त्र लिखना चाहिए । जपादि से उसे सिद्ध करना चाहिए, तदनन्तर बाहु में धारण करना चाहिए । ऐसा करने से यन्त्र विजय श्री तथा पराक्रम प्रदान करता है ॥ १०२ ॥

वराहमन्त्रः

गदितं राममन्त्रस्य विधानं सुरपूजितम् ।
तारं नमो भगवते वराहपदमीरयेत् ॥ १०३ ॥
रूपाय भूर्भुवःस्वः स्यात् पतये तदनन्तरम् ।
भूपतित्त्वं मे पदान्ते देह्यन्ते च ददापय ॥ १०४ ॥
वहिनजायावधिर्मन्त्रः स्यात् त्रयस्त्रिंशदक्षरः ।

ऋष्यादिकथनम्

भार्गवो मुनिराख्यातश्छन्दोऽनुष्टुबुदाहृतम् ॥ १०५ ॥
देवतादिवाराहोऽस्य मन्त्रस्य कथितो बुधैः।
एकदंष्ट्राय हृदयं व्योमोल्काय शिरः स्मृतम् ॥ १०६ ॥
शिखा तेजोऽधिपतये विश्वरूपाय वर्म च।
महादंष्ट्राय शस्त्रं स्यात् पञ्चाङ्गमिति कल्पयेत्॥ १०७ ॥

एवं महाकपिलनारदहयशीर्षपञ्चरात्रस्कन्दयामलवैष्णवतन्त्रप्रोक्तमन्त्र चतुष्टय-मुक्त्वा राममन्त्रयन्त्रे नरसिंहवराहयोरुद्दिष्टत्वात् तत्र नरसिंहे बहुवक्तव्यत्वादादौ वाराहमन्त्रमुद्धरति तारमिति । वह्निजाया स्वाहा । हुं बीजं स्वाहा शक्तिः ।

तत्र मन्त्रार्थेन विनियोगोक्तिः ॥ १०३-१०७ ॥

यहाँ तक हमने 'राम' इस दो अक्षर के मन्त्र का सुरपूजित विधान कहा (जो महाकपिल, नारद, हयशीर्ष पञ्चरात्र, स्कन्दयामल और वैष्णव तन्त्रों में मन्त्र चतुष्टय के रूप में उद्धृत हैं ।) अब राम यन्त्र में उद्दिष्ट (१४. ९८) नरसिंह और वराह बीजों में प्रथम वराह बीज को कहता हूँ । (क्योंकि नरसिंह बीज में बहुत कहना है इसलिये उसे आगे कहेंगे) ॥ १०३ ॥

प्रथम प्रणव उसके बाद 'नमो भगवते वराहरूपाय भूर्भुवः स्वः पतये भूपतित्त्वं मे देहि ददापय स्वाहा' । इस प्रकार ३३ अक्षरों का वराह मन्त्र कहा गया ।

इस मन्त्र के भार्गव ऋषि हैं तथा अनुष्टुप् छन्द है । बुद्धिमानों ने इस मन्त्र के आदिवराह देवता कहा है ।

अब **षडङ्गन्यास** कहते हैं—'एकदंष्ट्राय' से हृदय, 'व्योमोल्काय' से शिर, 'तेजोऽधिपतये' से शिखा, 'विश्वरूपाय' से कवच और महादंष्ट्राय से अस्त्र इस प्रकार पञ्चाङ्गन्यास करना चाहिए ॥ १०५-१०७ ॥

ध्यानम्

आपादं जानुदेशाद्वरकनकनिभं नाभिदेशादधस्तान्
मुक्ताभां कण्ठदेशात्तरुणरविनिभं मस्तकान्नीलभासम् ।
ईडे हस्तैर्दधानं रथचरणदरौ खड्गखेटौ गदाख्यां
शक्तिं दानाभये च क्षितिचरणलसद्दंष्ट्रमाद्यं वराहम् ॥१०८॥

ध्यानमाह आपादमिति । रथचरणं चक्रम् । दरः शङ्खः । गदाख्यां गदाम् । क्षितिः पृथिवी तस्याश्चरणो मूलं तत्र लसन्ती दंष्ट्रा यस्य तम् । दंष्ट्रालग्नभूमिमित्यर्थः । दक्षाद्यूर्ध्वयोराद्ये तदधोधस्थयोरन्योन्य इत्यायुधध्यानम् । अत्र ध्यानानन्तरमिदं मुद्राद्वयं दर्शनीयम् । तल्लक्षणं यथा—

वामहस्तमथोत्तानं कृत्वा देवस्य चोपरि ।
नामयेदिति संप्रोक्ता मुद्रा वाराहसंज्ञिता ॥ इति ॥
दक्षहस्तं चोर्ध्वमुखं वामहस्तमधोमुखम् ।
अङ्गुल्यग्रन्त संयुक्तं मुद्रा वाराहसंज्ञिता ॥ इति ॥ १०८ ॥

अब **इस मन्त्र का ध्यान** कहते हैं—जानु से पाद पर्यन्त जिनके शरीर का वर्ण श्रेष्ठ सुवर्ण जैसा है, नाभि से जानु पर्यन्त मोती के जैसा, कण्ठ से नाभि पर्यन्त मध्याह्न कालीन सूर्य के समान तथा मस्तक से कण्ठदेश पर्यन्त नीले वर्ण का है जो अपने झूठ हाथों में चक्र, शङ्ख, खड्ग, खेटक, गदा, शक्ति, वरदान एवं अभय मुद्रा धारण किये हुये हैं, जिनके दाँत उद्धार की जाती हुई पृथ्वी से संलग्न हैं ऐसे आद्य वराह भगवान् को मैं प्रसन्न करता हूँ ॥ १०८ ॥

पुरश्चरणादिकथनम्

**लक्षमेकं जपेन्मन्त्रं मधुराक्तैः सरोरुहैः ।**
**जुहुयात्तद्दशांशेन पीठे विष्णोः प्रपूजयेत् ॥ १०९ ॥**
**मूर्त्तिं मूलेन सङ्कल्प्या वक्ष्यमाणविधानतः ।**
**पूर्वादिषु चतुर्दिक्षु हृदाद्यङ्गानि पूजयेत् ॥ ११० ॥**
**अस्त्रं कोणेष्वधश्चोर्ध्वं चक्राद्यस्त्राणि तद्बहिः ।**
**चक्रं शङ्खमसिं खेटं गदां शक्तिं वराभये ॥ १११ ॥**
**संपूज्य बाह्ये लोकेशान् बहिरस्त्राणि संयजेत् ।**
**ध्यानाद्देवो धनं दद्याज्जपात् दद्याद्वसुन्धराम् ।**
**प्रयच्छेज्जपपूजाद्यैर्धनधान्यमहीश्रियः ॥ ११२ ॥**

**विष्णोः पीठे वक्ष्यमाणविधानतः पूजयेद्वराहमिति शेषः । पूर्वादीति चतुर्थोक्ताग्नेयादिस्थानापवादः । तद्बहिरिति पत्रमध्येषु ॥ १०९-११२ ॥**

साधक उपर्युक्त वराह मन्त्र का एक लाख जप करे । तदनन्तर त्रिमधुर मिश्रित कमल से दशांश होम करे । फिर विष्णु पीठ पर उन आद्य वराह भगवान् का पूजन करे ॥ १०९ ॥

सर्वप्रथम मूल मन्त्र पढ़कर मूर्त्ति की कल्पना करे, फिर आगे कही जाने वाली विधि से चारों दिशाओं में हृदय, शिर, शिखा और कवच इन अङ्गों की पूजा करे ॥ ११० ॥

साधक इसके बाद अस्त्र की पूजा करे, पुनः चारों कोणों में एवं ऊपर तथा नीचे के पत्रों में चक्र, शङ्ख असि, खेट, गदा, शक्ति, वर और अभय की पूजा कर, उसके बाहर लोकपालों की पूजा करे, पुनः उसके भी बाहर उनके वज्रादि अस्त्रों की पूजा करे ॥ १११-११२ ॥

ये वराह देवता ध्यान करने से धन प्रदान करते हैं । अपने मन्त्र के जप से

पृथ्वी देते हैं और जप पूजा तथा होम करने से धन धान्य पृथ्वी तथा श्री प्रदान करते हैं ॥ ११२ ॥

**रवौ सिंहगतेऽष्टम्यां शुक्लपक्षे सितां शिलाम् ।**
**पञ्चगव्येषु निक्षिप्य स्पृष्ट्वा तमयुतं जपेत् ॥ ११३ ॥**

सिंहेति मेषचापयोरप्युपलक्षणम् । उक्तञ्च नारायणीये—

शुक्लाष्टम्यां रवौ मेषसिंहचापगते खनेत् । इति ।

सितां शिलामिति । फलाधिकाम् । दशपलमितां बिल्वपात्रादिस्थामिति पद्मपादाचार्याः ॥ ११३ ॥

सिंह राशि पर जब सूर्य हों उस समय शुक्ल पक्ष में रविवार के दिन श्वेत शिला को पञ्चगव्य में स्थापित करे । पुनः उसका स्पर्शकर दस हजार वराह मन्त्र का जप करे ॥ ११३ ॥

**उत्तराभिमुखो भूत्वा तां शिलां निखनेद्भुवि ।**
**शत्रुचौरमहाभूतैः कृतां बाधां प्रणाशयेत् ॥ ११४ ॥**

निखनेदिति । भूबीजसहितं वराहमन्त्रं जपन्निति ज्ञेयम् । तदुक्तमाचार्यैः—

उदग्वक्त्रो मन्त्री मनुजपरतः स्थापयतु ताम् । इति ॥ ११४ ॥

पुनः उत्तराभिमुख हो उस शिला को पृथ्वी में भूबीज सहित वराह मन्त्र का जप करते हुये गाड़ देवे । ऐसा करने से शत्रु, चोर तथा महाभूत जन्य सभी बाधायें नष्ट हो जाती हैं ॥ ११४ ॥

**भानूदये भौमवारे साध्यक्षेत्रात्समाहरेत् ।**
**मृत्तिकां सञ्जपन्मन्त्री तां पुनर्विभजेत् त्रिधा ॥ ११५ ॥**
**चूल्ल्यामेकां समारोप्य पाकपात्रे तथापरम् ।**
**गोदुग्धे परमालोड्य शोधितांस्तण्डुलान् क्षिपेत् ॥ ११६ ॥**
**संस्कृतेऽग्नौ पचेत्सम्यक् चरुं मन्त्री जपन्मनुम् ।**
**अवतार्य चरुं पश्चादग्नौ देवं यथाविधि ॥ ११७ ॥**
**धूपदीपादिकैरिष्ट्वा पुनराज्यप्लुतं चरुम् ।**
**जुहुयादेधिते वह्नौ यावदष्टोत्तरं शतम् ॥ ११८ ॥**
**एवं सप्तारवारेषु जुहुयात् क्षेत्रसिद्धये ।**
**प्रातःकाले भृगोर्वारे मृदं साध्यमहीतलात् ॥ ११९ ॥**
**आदाय हविरापाद्य पूर्ववज्जुहुयात् सुधीः ।**
**विरोधो नश्यति क्षेत्रे सह चौराद्युपद्रवैः ॥ १२० ॥**

राजवृक्षसमुत्थाभिः समिद्‌भिर्मनुनाऽमुना ।
त्रिसहस्त्रं प्रजुहुयात्तस्य स्युः सर्वसम्पदः॥ १२१ ॥
शालिभिर्जुहुयान्मन्त्री नित्यमष्टोत्तरं शतम् ।
समृद्धैर्धान्यसङ्घातैः शोभते तस्य मन्दिरम् ॥ १२२ ॥
तावदाज्येन जुहुयात् मण्डलात् स्वर्णमाप्नुयात् ।
लाजैः कन्यामवाप्नोति मध्वक्तैर्निजवाञ्छितम् ॥ १२३ ॥
मधुरत्रयसंयुक्तैर्जुहुयादुत्पलैर्नवैः ।
महतीं श्रियमाप्नोति मण्डलात्पूर्वसंख्यया॥ १२४ ॥

**मन्त्रीत्यनेन भूबीजसाहित्यमुक्तमिति पद्मपादाचार्याः । निखननमभिजित्येव । 'क्षेत्रमध्येऽभिजित्काले' इत्युक्तेः । साध्यक्षेत्राज्जिघृक्षितात् । सञ्जपन्निति सर्वत्र सम्बध्यते । समा (संजपेदित्यत्र संपदेन) भूबीजयोग उक्तः । सम्यक् संस्कृतेऽग्नौ चरुं पचेदिति सम्बन्धः । तत्र सम्यगित्यनेन अष्टादशसंस्कारादि महागणपति मन्त्रहोमान्तमित्युक्तं भवति । मन्त्रीत्यनेन भूबीजयोगः । होमेऽपि तद्बीजयोगो ज्ञेयः । यथा विधीत्यनेनाग्नौ मण्डूकादि पुष्पान्तं समभ्यर्च्येत्युक्तम् । आदिशब्देन नैवेद्यग्रहणम् । पुनरनन्तरम् । आरो भौमः । हविरापाद्येति चरुं कृत्वा । पूर्ववद्धविरापाद्य पूर्ववत् जुहुयादित्यनेन भौमवारप्रयोगोक्तक्रमेणाष्टोत्तरशतमित्युक्तम्। नवैरित्यनेनान्यत्र पर्युषितग्रहणमपि । अत्र तु न तथेत्युक्तम् । पूर्वसंख्यया त्रिसहस्त्रमित्यादि ॥ ११५-१२४ ॥**

मङ्गल के दिन सूर्योदय काल में साधक साध्य के खेत से मिट्टी लेकर वराह मन्त्र का जप करते हुये उस मिट्टी का तीन भाग करे ॥ ११५ ॥

उसका एक भाग चुल्ही में डाल देवे, दूसरा भाग पाक पात्र में डाल देवे पुनः एक भाग गो दुग्ध में चूर्ण कर डाल देवे और उसी में संशोधित चावल डाल कर खीर पकावे ॥ ११६ ॥

मन्त्रज्ञ साधक मन्त्र का जप करते हुये इस प्रकार शुद्ध अग्नि में खीर पकावे । फिर मन्त्र जपते हुये उसको नीचे उतार लेवे । पश्चाद् अग्नि में यथाविधि वराहदेव की धूप दीपादि द्वारा पूजा कर समिद्धतम अग्नि में वराह मन्त्र से एक सौ आठ बार पूजा करे ॥ ११७-११८ ॥

इस प्रकार क्षेत्र प्राप्ति की कामना से सात मङ्गलवार पर्यन्त चरु की आहुति (सुसंस्कृत अष्टादश संस्कार से संस्कृत महागणपति होम पर्यन्त द्र. ५. १२-४०) करे तो उसे तो क्षेत्र की प्राप्ति होती है ॥ ११९ ॥

इस प्रकार भौमवार के दिन का प्रयोग कहा । अब **शुक्रवार का प्रयोग** कहते हैं—शुक्रवार के दिन प्रातःकाल में साध्य के जमीन की मिट्टी ले लेवे और उपर्युक्त विधि से उसका हवि निर्माण कर पूर्ववत् सुसंस्कृत अग्नि में होम करे तो साध्य के साथ विरोध (मुकदमा आदि) नष्ट हो जाता है साथ ही चोर आदि के उपद्रव से भी छुटकारा प्राप्त हो जाता है ॥ ११९-१२० ॥

राजवृक्ष की समिधा से इस मन्त्र द्वारा तीन सहस्त्र संख्या में होम करे तो साधक को सब प्रकार की संपत्ति प्राप्त हो जाती है ॥ १२१ ॥

यदि साधक शालिधान्य से नित्य एक सौ आठ बार होम करे तो उसका घर समृद्ध धान्य समूह से शोभित होने लगता है ॥ १२२ ॥

वराह मन्त्र से निरन्तर घृत की आहुति दे तो ४९ दिन के भीतर सुवर्ण की प्राप्ति हो जाती है । त्रिमधु से संयुक्त लावा के होम से मनोवाञ्छित कन्या प्राप्त होती है ॥ १२३ ॥

त्रिमधुर युक्त ताजे नवीन खिले हुये उत्पल (कमल) के तीन सहस्त्र नित्य होम से ४९ दिन के पहले ही महती श्री की प्राप्ति होती है ॥ १२४ ॥

वराहयन्त्रम्

**मध्ये बीजं सतारं दहनपुरयुगे चक्रवर्णान् षडस्त्रे-**
**ष्वालिख्याऽङ्गानि सन्धिष्वथ करणदलैरम्बुजं केसरेषु।**
**अष्टार्णान् पत्रमध्ये लिखतु वसुमितान् मन्त्रवर्णांश्चतुर्थे**
**शिष्टं पत्रे पुरस्ताद्वसुदलकमले केसरस्थस्वराढ्ये ॥ १२५ ॥**
**मन्त्रार्णान् देवसंख्यान् दलमनु विलिखेदन्त्यमन्येऽथ बाह्ये**
**किञ्जल्कैः कादिवर्णैर्विकसितकमले षोडशारे यथावत् ।**
**मन्त्रार्णान् युग्मशस्तच्चरमदलगतं शिष्टवर्णं लिखित्वा**
**तारक्ष्माकोलबीजैस्तदनु परिवृतं साध्यनामार्णमध्यैः ॥१२६॥**
**दर्भितैः साध्यनामार्णैर्मन्त्रवर्णैर्वृतं बहिः ।**
**भूबिम्बेनाऽस्य कोणेषु भूबीजं साध्यसंयुतम् ।**
**अष्टशूलेषु वाराहं भूबीजसहितं लिखेत् ॥ १२७ ॥**

यन्त्रमाह मध्य इति । दहनपुरयुगे परस्परव्यतिभिन्ने षट्कोणे मध्ये व्यधिकरणे सप्तम्यौ । तत्र सतारं सप्रणवं साध्यसाधकनामकर्मसहितं बीजं वक्ष्यमाणं वाराहं लिखेत् । अत्र तारः चक्रमन्त्रस्थ इति ज्ञेयम् । षडस्त्रेषु षट्कोणेषु । चक्रवर्णान् वक्ष्यमाणप्रणवव्यतिरिक्तचक्रमन्त्रार्णान् । अङ्गानि सन्धिषु चक्रमन्त्रषडङ्गानीति सम्प्रदायविदः । रन्ध्रेष्वङ्गमनूनपीत्यस्य प्रपञ्चसारपद्यस्य व्याख्याने पद्मपादाचार्यैः चक्रमन्त्रषडङ्गानीति व्याख्यातम् । करणदलैश्चतुर्दलैः । अष्टार्णान्नारायणाष्टार्णान् । एकैकस्मिन् केसरे वर्णद्वयक्रमेण मन्त्रवर्णान् वाराहमन्त्रार्णान् । वसुमितानष्टमितान् । चतुर्थपत्रे नव वर्णाः । यथावदिति । अत्र पत्रादीति सर्वत्र सम्बध्यते । तारः प्रणवः । क्ष्मा भूबीजं महागणपतिपटले उद्धृतम् । कोलबीजं वक्ष्यमाणं वाराहबीजम् । एतैः किंविशिष्टैः साध्यनाम्नोऽक्षराणि मध्ये येषां तैर्वेष्टयेत् । एतेन साध्यनामाक्षरपरिपुटितत्वं बीजानामुक्तं भवति । तदुक्तमाचार्यैः—

तारमहीकोलार्णैः प्रवेष्टयेत् साध्यपरिपुटितैः । इति ।

**मन्त्रवर्णैर्दर्भितैः साध्यनामार्णैः वृतमिति सम्बन्धः । दर्भितलक्षणं त्रयोविंशे वक्ष्यति । 'तद्बाह्ये मनुवर्णैर्विदर्भिताभिश्च साध्यपदलिपिभिः' इत्याचार्योक्तेः बहिर्भूबिम्बेन वृतमिति सम्बन्धः । अष्टशूलेष्विति वर्द्धिताष्टरेखाग्रकृतेषु । तत्र मध्यरेखाया दक्षे वाराहं वामे भूबीजं लिखेदिति सम्प्रदायः ॥ १२५-१२७ ॥**

अब **वराह यन्त्र निर्माण का प्रकार** कहते हैं—परस्पर उल्टे बनाये गये दो त्रिभुजों से निर्मित षट्कोण के मध्य में प्रणव के सहित साध्य, साधक के नाम एवं उनके कर्म के साथ वक्ष्यमाण वाराह बीज (द्र. १५. १२८) मन्त्र लिखे । पुनः षट्कोण में सुदर्शन मन्त्र के प्रणव रहित ६ अक्षरों को लिखे (द्र. १६. ६७) । सन्धियों में पञ्चाङ्गों को लिखे (द्र. १५. १०६-१०७) चार पत्र वाले कमल के चार केशरों पर अष्टाक्षर नारायण मन्त्र के दो दो अक्षरों को लिखे । पुनः चार कमल पत्रों पर आठ आठ अक्षर के क्रम से तीन पर वाराहमन्त्र के २४ अक्षरों को, तदनन्तर चौथे पत्र पर शेष नव अक्षरों को लिखे (द्र. १५. १०३-१०५) । इसके बाद आगे वाले अष्टदल कमल के केशरों पर दो दो अक्षर के क्रम से १६ स्वरों को लिखे ॥ १२५ ॥

पुनः अष्टदल के प्रत्येक पत्र पर वराह मन्त्र के ४ चार अक्षरों को ७ पत्रों पर लिखे । केवल आठवें दल पर अन्त्याक्षर के सहित अर्थात् पाँच अक्षर लिखे । इसके बाद बाहर षोडशदल कमल के केशरों पर ककार से लेकर क्षकारान्त वर्णों को लिखे । पुनः १६ पत्रों पर वाराह मन्त्र के दो दो अक्षरों को लिखे । केवल अन्तिम १६वें पत्र पर तीन वर्ण लिखे । तार ॐ, क्ष्मा भूमिबीज (ग्लौं, द्र. १३. ६२) एवं कोलबीज (वक्ष्यमाण वराहबीज) आदि में (हूं, द्र. १५. १२८) एवं साध्यनाम को मध्य में लिखकर पुनः प्रणव, भूबीज एवं कोलबीज से (पुनः ॐ ग्लौं हूँ) संपुटित कर देवे ॥ १२६ ॥

तदनन्तर वाराह मन्त्र के दो दो अक्षरों से दर्भित (द्र. २३. १३८) साध्य के नामाक्षरों से उसे घेर देवे । बाहर भूबिम्ब से आवृत्त कर देवे । कोणों पर साध्य संयुत भूबीज लिखे और बढ़ाई गई आठ त्रिशूल रेखाओं के मध्य रेखा के दाहिनी ओर वाराह बीज तथा बाईं ओर भूबीज लिखे ॥ १२७ ॥

**वराहबीजम्**

**साधींशबिन्दुगगनं बीजं वाराहमीरितम् ।**
**रोचनागुरुकर्पूरलाक्षाकुङ्कुमचन्दनैः ॥ १२८ ॥**
**गोमयाम्भसि सम्पिष्टैर्लिखेद्यन्त्रं शुभे दिने ।**
**लेखन्या हेममया च सर्वकामप्रसिद्धये ॥ १२९ ॥**
**स्वर्णपट्टे लिखेद्यन्त्रं राज्यश्रीसमवाप्तये ।**
**ग्रामसिद्ध्यै च रजते ताम्रपट्टे धनाप्तये ॥ १३० ॥**
**भूर्जपत्रे निजेष्टाप्त्यै क्षौमे भूसिद्धे लिखेत् ।**

जपपूजादिभिः सिद्धं यन्त्रं कुर्यान्निजेप्सितम् ॥ १३१ ॥
ग्रामपत्तनराष्ट्रेषु यन्त्रमेतत् सुसाधितम् ।
निखनेच्छुभवारादौ साङ्गं दिक्षु समर्चयेत् ॥ १३२ ॥
क्षुद्रापमृत्युचौरादि भूतव्यालमहाभयैः ।
न शक्यते परं द्रष्टुं तं देशं देवताबलात् ॥ १३३ ॥

वाराहबीजमुद्धरति सार्घीशेति । गगनं हः अर्घीशः ऊकारः बिन्दुरेतद्युतम् । अयमपि स्वतन्त्रो मन्त्रः । अस्यर्ष्यादिकं यथा ।

हयग्रीव ऋषिः प्रोक्तश्छन्दस्त्रिष्टुप् च देवता ।
वराहो दीर्घयुक्तेन षडङ्गानि च कल्पयेत् ।
ध्यानपूजादिकं सर्वमस्य वाराहमन्त्रवत् ॥ इति ।

कल्पान्तरे तु भूरित्युद्धृतम् । तदुक्तम्—

नाभिर्वामश्रवाः सर्गी तस्य बीजमिहोच्यते । इति ।

जपपूजादिभिरित्यादिशब्देन सम्पातः । तदुक्तम्—

मन्त्रं सञ्जप्तमेतद्घृतकृतसम्पातपातं करोतीति ।

सुसाधितमिति जपपूजासम्पातैः । शुभवारादावित्यादिशब्देन स्थिरराश्यादाविति ज्ञेयम् । साङ्गं दिक्षु समर्चयेत् इत्यस्य अयमभिप्रायः । आत्मानं वाराहरूपं ध्यात्वा तत्र यन्त्रे वाराहमावाह्य सम्पूज्य पूजोक्तक्रमेण हृदयादीनि पूर्वादि चतुर्दिक्षु सम्पूज्य अस्त्रं दिक्षु ऊर्ध्वाधश्च पूजयेदिति । तदुक्तम्—

मन्त्री समास्थाय वराहरूपं साध्यप्रदेशे निखनेच्च यन्त्रम् ।
स्थिराख्यराशावभिवाह्य कोलमङ्गानि दिक्षु क्षिपतां यथावत् ॥ इति ।

परमत्यर्थम् । अस्याऽष्टाक्षरोऽपि मन्त्रः प्रसङ्गेन प्रकाश्यते—

अष्टाक्षरे महामन्त्रे शाखादिः प्रथमाक्षरम् ।
द्वितीयं व्याहृतिस्तस्माद्वाराहाय हृदं ततः ॥ इति ।

अस्य ब्रह्मा ऋषिः जगती छन्दः श्रीवाराहो देवता । भं बीजम् । ॐ शक्तिः । ध्यानम्—

कृष्णाङ्गं त्वतिनीलवक्त्रनलिनं पद्मस्थितं स्वाङ्कग-
क्षौणीशक्तिमुदारबाहुभिरथो शङ्खं गदामम्बुजम् ।
चक्रं बिभ्रतमुग्रकान्तिमनिशं देवं वराहं भजे
भूलक्ष्मीरतिकान्तिभिः परिवृतं चर्मासिसन्दीप्तिभिः ॥ इति ।

शेषं समानम् । अस्य यन्त्रद्वयमुच्यते—

चतुर्दले मध्यबीजे केसरेऽष्टाक्षरं मनुम् ।
दलेष्वग्रसमस्ताश्च समस्ता व्याहृतीर्लिखेत् ॥
केसरेषु स्वरानष्ट पत्रे नारायणं मनुम् ।

दन्तसंख्यदले कादीन् पत्रेष्वानुष्टुभं मनुम् ॥
हक्षेतिनाम्ना परितस्ततः पाशाङ्कुशावृतम् ।
स्मरणाद्धारणात्तस्य सर्वमिष्टफलं लभेत् ॥ इति ।

**तथा—** मध्ये बीजे तथाऽष्टारे तदीयाष्टाक्षरं लिखेत् ।
बहिर्द्व्यष्टारपद्मे तु मन्त्रानुष्टुभमालिखेत् ॥
द्वन्द्वरूपेण तच्चक्रं वाराहमिति विश्रुतम् ।
यद्यत्कामयते मन्त्री सर्वमेतेन साधयेत् ॥ इति ।

**मन्त्रस्तु—** परजात महाराव वराहाङ्गाऽवनेर्धव ।
वर्द्धते योऽन्वहं देवं वन्देऽहं वालिजाधवम् ॥

इति ॥ १२८-१३३ ॥

अब उपर्युक्त यन्त्र में कहे गये **वाराह बीज का उद्धार क्रम** कहते हैं—

गगन (हकार), उसे अर्घीश (दीर्घ उकार) और बिन्दु सं संयुक्त करे, इस प्रकार 'हूँ' यह वाराह बीज का उद्धार कहा गया । उपर्युक्त यन्त्र गोबर के जल में गोरोचन, अगुरु, कपूर, लाक्षा, कुंकुम और चन्दन को पीस कर शुभ दिन, शुभ नक्षत्र और शुभ मुहूर्त्त में स्वर्ण वर्ण की लेखनी से लिखे तो साधक की सभी कामनायें सिद्ध हो जाती हैं ॥ १२८-१२९ ॥

राज्यश्री की संप्राप्ति के लिये साधक स्वर्णपत्र पर इस यन्त्र को लिखे । ग्राम प्राप्ति के लिये रजतपत्र पर और धन प्राप्ति के लिये ताम्र पट्ट पर लिखना चाहिए । इष्ट प्राप्ति के लिये भूर्जपत्र पर, पृथ्वी प्राप्ति के लिये क्षौम वस्त्र पर लिखे । इस प्रकार जप पूजा से सिद्ध किया गया यह यन्त्र मनुष्यों की सारी अभिलाषायें पूर्ण करता है ॥ १३०-१३१ ॥

जप होमादि द्वारा भली प्रकार से सिद्ध किया गया यह यन्त्र जिस किसी ग्राम, नगर अथवा राष्ट्र में किसी अच्छे दिन गाड़ देवे और दिशाओं में अङ्गो के सहित पूजा करे । यहाँ जपहोमादि का तात्पर्य जप पूजा के अनन्तर होम का शेष घृत वाराह यन्त्र पर डालता रहे । शुभ वार का तात्पर्य स्थिर राशि में है । साङ्ग दिशा में पूजन करे—इसका तात्पर्य यन्त्र में वराह का आवाहन करना है, चारों दिशाओं में हृदय, शिर, शिखा और कवच का अस्त्र के ऊपर और नीचे पूजा करे तो वराह देवता के भय से क्षुद्ररोग, अपमृत्यु, चौरादि, भूत, व्याल एवं अन्य प्रकार के महाभय उधर देख भी नहीं सकते ॥ १३२-१३३ ॥

### धरणीमन्त्रः । ऋष्यादिकथनम्

**हृदयं भगवत्यै स्याद्धरण्यै तदनन्तरम् ।**
**धरण्यन्ते धरेद्वन्द्वे द्विठान्तोऽयं ध्रुवादिकः ॥ १३४ ॥**
**एकोनविंशत्यर्णाढ्यं धराहृदयमीरितम् ।**

**वराहोऽस्य मुनिः प्रोक्तश्छन्दो निवृदुदाहृतम् ॥ १३५ ॥**
**देवता सर्वभूतानां प्रकृतिर्वसुधा मता ।**
**हृदयं त्रिभिराख्यातं चतुर्भिः शिर ईरितम् ॥ १३६ ॥**
**त्रिभिः शिखा समुद्दिष्टा कवचं पञ्चभिर्मतम् ।**
**द्वाभ्यां नेत्रं समाख्यातं द्वाभ्यामस्त्रं पुनर्भवेत् ।**
**मन्त्रवर्णैः षडङ्गानि कुर्यादेवं विधानवित् ॥ १३७ ॥**

**वराहमन्त्रप्रसङ्गात् धरणीमन्त्रमाह हृदयमिति । हृदयं नमःपदम् । अत्रापि पूर्ववद्विसर्गेण सह सन्धिर्ज्ञेयः । प्रणवो बीजं स्वाहा शक्तिः । विधानवित् इत्यनेन शाक्तषडङ्गमुद्राभिरित्युक्तम् ॥ १३४-१३७ ॥**

अब **वराह मन्त्र के प्रसङ्ग से धरणी मन्त्र** कहते हैं—

हृदयं (नमः) कह कर 'भगवत्यै धरण्यै' कहे । तदनन्तर 'धरणिधरे', पुनः 'धरे स्वाहा कहे' आदि में प्रणव का उच्चारण करे । इस प्रकार 'ॐ नमो भगवत्यै धरण्यै धरणिधरे धरे स्वाहा' यह उन्नीस अक्षरों का धराहृदय मन्त्र का उद्धार कहा गया ॥ १३४-१३५ ॥

इस मन्त्र के ऋषि वराह हैं, इसका निवृत् छन्द है और समस्त भूतों (प्राणियों) की प्रकृति वसुधा इसकी देवता हैं । तीन अक्षर (ॐ नमः) से हृदय, चार अक्षर (भगवत्यै) से शिर, तीन (धरण्यै) से शिखा और पाँच अक्षर (धरणिधर) से कवच, दो (धरे) से नेत्र तथा दो (स्वाहा) से अस्त्रन्यास करे । विधानवेत्ता साधक इस प्रकार धराहृदय से अङ्गन्यास करे ॥ १३५-१३७ ॥

**ध्यानम् । पुरश्चरणादिकथनम्**

**श्यामां विचित्रांशुकरत्नभूषणां**
**पद्मासनां तुङ्गपयोधरानताम् ।**
**इन्दीवरे द्वे नवशालिमञ्जरीं**
**शुकं दधानां वसुधां भजामहे ॥ १३८ ॥**
**लक्षमेकं जपेन्मन्त्री धराहृदयमादरात् ।**
**ससर्पिषा पायसेन जुहुयात्तद्दशांशतः ॥ १३९ ॥**

**दक्षाद्यूर्ध्वयोराद्ये तदधस्थयोरन्ये इत्यायुधध्यानम् ॥ १३८-१३९ ॥**

अब **धरा मन्त्र का ध्यान** कहते हैं—जिनके शरीर का वर्ण श्याम है, जो विचित्र वस्त्रों एवं आभरणों से विभूषित हैं । पद्मासन से बैठी हुई हैं और उत्तुङ्ग स्तनभार से कुछ झुकी हुई हैं जो अपने दो हाथों में दो इन्दीवर (कमल) एक में नवीन धान्य की मञ्जरी और एक में शुक धारण की हुई हैं—ऐसी पृथ्वी देवी का मैं भजन करता हूँ ॥ १३८ ॥

साधक श्रद्धाभक्तिपूर्वक धराहृदय मन्त्र का एक लाख जप करे और घृत मिश्रित खीर से उसका दशांश होम करे ॥ १३९ ॥

**तां विष्णोः पूजयेत्पीठे वक्ष्यमाणविधानतः ।**
**अङ्गानि पूजयेदादौ भूवह्निजलमारुतान् ॥ १४० ॥**
**दिक्पत्रेषु समभ्यर्च्य कोणपत्रेषु तत्कलाः ।**
**आशापालाः पुनः पूज्या वज्राद्यस्त्रसमन्विताः ॥ १४१ ॥**
**एवं सिद्धमनुर्मन्त्री साधयेत् स्वमनोरथान् ।**
**मधुरत्रयसंयुक्तैर्जुहुयादरुणोत्पलैः ॥ १४२ ॥**
**सहस्त्रं भूसमृद्धिः स्यात्तथा नीलोत्पलैः शुभैः ।**
**प्रियङ्गुपुष्पैर्मध्वक्तैर्धनधान्यमहीश्रियः ॥ १४३ ॥**
**मञ्जरीं शालिसम्भूतां मधुरत्रयलोलिताम् ।**
**जुहुयात्साधिते वह्नौ मण्डलात् स्याद्धरापतिः ॥ १४४ ॥**

**विष्णोरिति । ग्लौं वसुन्धरायोगपीठाय नम इति पीठमन्त्रः । अनेनैव बीजेन मूर्त्तिकल्पनं ज्ञेयम् । दिक्पत्रेषु अग्रपृष्ठदक्षोत्तरेषु । कोणपत्रेषु इत्यत्राऽऽग्नेयादिषु । तत्कलाः इति निवृत्तिप्रतिष्ठाविद्याशान्तयः । स्वमनोरथा नित्यनेन पृथ्वीप्राप्तौ स्वबीजयोगः । धनधान्यलाभे श्रीयोगः । कीर्त्तौ शक्तियोगोऽन्यत्र वराहबीजयोगोऽपि सूचितः ॥ १४०-१४४ ॥**

तदनन्तर 'ग्लौं वसुन्धरा योगपीठाय नमः' से आसन देकर इसी मन्त्र से मूर्त्ति की कल्पना कर मूल मन्त्र (द्र. १५. १३४) से उसमें पृथ्वी का आवाहन कर पूजन करे । तदनन्तर वक्ष्यमाण विधान से इस प्रकार पूजा करे । प्रथम अङ्गों की पूजा करे । फिर आगे, पीछे, दाहिने और बायें के चार पत्रों पर पृथ्वी, जल, अग्नि और वायु की पूजा करे । तथा आग्नेयादि कोणों में निवृत्ति, प्रतिष्ठा, विद्या और शान्ति रूप कलाओं की पूजा करे । पुनः वज्रादि अस्त्रों से युक्त दिक्पालों की पूजा करे ॥ १४०-१४१ ॥

मन्त्रज्ञ इस प्रकार मन्त्र को सिद्ध कर अपना मनोरथ सिद्ध करे और मधुरत्रय से संयुक्त लाल कमलों से होम करे ॥ १४२ ॥

उत्तम प्रकार के कल्याणकारी सहस्र संख्याक नीलोत्पल के होम से पृथ्वी की अभिवृद्धि होती है । त्रिमधुर संपृक्त प्रियङ्गु पुष्पों के होम से धन-धान्य, मही और श्री की प्राप्ति होती है । यहाँ यह ध्यान रखने की बात है कि पृथ्वी प्राप्ति के लिये भूबीज मन्त्र का, धन धान्य प्राप्ति के लिये श्रीयोग, कीर्त्ति के लिये शक्तियोग और अन्य कार्यों के लिये मन्त्र में वराह बीज का उपयोग करे ॥ १४३ ॥

त्रिमधुर मिश्रित शालिधान्य की मञ्जरी से षोडश संस्कार संस्कृत अग्नि में होम करे तो ४९ दिन के भीतर साधक राजा हो जाता है ॥ १४४ ॥

शुक्रवारे दिनमुखे गृहीत्वा साध्यभूमृदम् ।
तामम्भसि विनिक्षिप्य शोधितेऽत्र चरुं पचेत् ॥ १४५ ॥
पयोघृताभ्यां सहितं जुहुयात्तं हुताशने ।
षण्मासं शुक्रवारेषु हुत्वैवं प्राप्नुयान्महीम् ॥ १४६ ॥
धरामेवं भजन्मन्त्री पशुरत्नधनादिभिः ।
धरायाः वल्लभः स स्यान्नात्र कार्या विचारणा ॥ १४७ ॥

**॥ इति श्रीलक्ष्मणदेशिकेन्द्रविरचिते शारदातिलके पञ्चदशः पटलः समाप्तः ॥ १५ ॥**



**शुक्रवार इति । तामम्भसीति तृतीयांशम् । दुग्धे वा । तत्रैकमंशं चुल्ल्यामेकं पात्रे इति ज्ञेयम् ॥ १४५-१४७ ॥**

**॥ इति श्रीराघवभट्टविरचित-शारदातिलकटीकायां सत्सम्प्रदायकृतव्याख्यायां पदार्थादर्शाभिख्यायां पञ्चदशः पटलः ॥ १५ ॥**



शुक्रवार के दिन प्रात:काल साध्य के क्षेत्र की मिट्टी ग्रहण करे उसका एक अंश चुल्ही में, एक अंश पात्र में और एक अंश पानी में डाल कर चरु का निर्माण करे ॥ १४५ ॥

पुन: उसे घृत और दूध से मिश्रित कर सुसंस्कृत अग्नि में ६ महीने पर्यन्त निरन्तर शुक्रवार के दिन होम करे तो साधक पृथ्वी लाभ करता है । इस प्रकार साधक धरामन्त्र की उपासना से पशु रत्न और धनादि के साथ पृथ्वीपति बन जाता है इसमें विचार करने की आवश्यकता नहीं है ॥ १४७ ॥

**॥ इस प्रकार शारदातिलक के पन्द्रहवें पटल की डॉ० सुधाकर मालवीय कृत हिन्दी व्याख्या पूर्ण हुई ॥ १५ ॥**



# अथ षोडशः पटलः

## अथ नृसिंहप्रकरणम्

अथाऽभिधास्ये विधिवन्नारसिंह महामनुम् ।
उग्रं वीरं वदेत्पूर्वं महाविष्णुमनन्तरम् ॥ १ ॥

नृसिंहमन्त्रोद्धारः

ज्वलन्तं पदमाभाष्य सर्वतोमुखमीरयेत् ।
नृसिंहं भीषणं भद्रं मृत्युर्मृत्युं वदेत्ततः ।
नमाम्यहमयं प्रोक्तो मन्त्रराजः सुरद्रुमः ॥ २ ॥

नृसिंहमन्त्रस्य ऋष्यादिकथनम्

ऋषिर्ब्रह्मा समुद्दिष्टश्छन्दोऽनुष्टुबुदाहृतम् ।
देवता नरसिंहोऽस्य सुरासुरनमस्कृतः ॥ ३ ॥

नृसिंहमन्त्रराजमुद्धरति उग्रमिति । मन्त्रे सर्वाणि द्वितीयान्तानि । श्लोकरूपो द्वात्रिंशदक्षरो मन्त्रः । वैदिकत्वादस्य प्रणवादित्वं ज्ञेयम् । तापनीये तथोक्तत्वात् । साम्प्रदायिकास्तु सुरद्रुम इत्यनेन शक्तिबीजपुटितमेनमाहुः । अस्य हं बीजं ईं शक्तिः । तथा च तापनीये—

ॐ देवा ह वै प्रजापतिमब्रुवन् आनुष्टुभस्य मन्त्रराजस्य नारसिंहस्य शक्तिं बीजं नो ब्रूहि भगव इति । स होवाच प्रजापतिः । माया वा एषा नारसिंही सर्वमिदं सृजति सर्वमिदं रक्षति सर्वमिदं संहरति तस्मान् मायामेतां शक्तिं विद्यात् । य एतां मायां शक्तिं वेद स पाप्मानं तरति स मृत्युं जयति सोऽमृतत्वं च गच्छति महतीं श्रियमश्नुते मीमांसन्ति ब्रह्मवादिनः । ह्रस्वा वा दीर्घा वा लुप्ता वेति । यदि ह्रस्वा भवति सर्वं पाप्मानं तरति अमृतत्वं च गच्छति । यदि दीर्घा भवति महतीं श्रियमाप्नोति अमृतत्वं च गच्छति । यदि प्लुता भवति ज्ञानवान् भवति अमृतत्वं च गच्छति ।

सर्वेषां वा एतद्भूतानामाकाशः परायणम् । सर्वाणि ह वा इमानि भूतानि आकाशादेव जायन्ते आकाशादेव जातानि जीवन्ति । आकाशं प्रयन्ति अभिसंविशन्ति। तस्मादाकाशं बीजं विद्यादिति ॥ १-३ ॥

अब इसके अनन्तर **श्री नृसिंह के मन्त्र की उद्धार विधि** कहता हूँ—प्रथम 'उग्रं वीरम्' तदनन्तर 'महाविष्णुम्', फिर 'ज्वलन्त' पद कहकर 'सर्वतोमुखम्',

फिर 'नृसिंहं भीषणं रुद्रं मृत्युर्मृत्युं नमाम्यहं' कहे । यह नृसिंह मन्त्रराज अपने भक्तों के लिये कल्पवृक्ष है । इसका श्लोकबद्ध स्वरूप इस प्रकार है—

'उग्रं वीरं महाविष्णुं ज्वलन्तं सर्वतोमुखम् ।
नृसिंह भीषणं रुद्रं मृत्युर्मृत्युं नमाम्यहम् ॥ १-२ ॥

इस नृसिंह मन्त्रराज के ब्रह्मा ऋषि, अनुष्टुप् छन्द और सुरासुरनमस्कृत नरसिंह देवता कहे गये हैं ॥ ३ ॥

**चतुर्भिर्हृदयं वर्णैः शिरस्तावद्भिरीरितम् ।**
**शिखाऽष्टाभिः समुद्दिष्टा षड्भिः कवचमीरितम् ॥ ४ ॥**
**तावद्भिर्नयनं प्रोक्तमस्त्रं स्यात्करणाक्षरैः ।**
**शिरोललाटनेत्रेषु मुखबाहवङ्घ्रिसन्धिषु ॥ ५ ॥**
**साग्रेषु कुक्षौ हृदये गले पार्श्वद्वये पुनः ।**
**अपराङ्गे ककुदि च न्यसेद्वर्णान् यथाक्रमम् ॥ ६ ॥**

तावद्भिरिति चतुर्भिः । तावद्भिः षड्भिः । करणाक्षरैरिति चतुर्भिः । साम्प्रदायिकास्त्वन्यथा षडङ्गमाहुः । तद्यथा । हामाद्यैश्चतुर्भिः पादैरर्द्धद्वयसहितैरानन्दात्मने प्रियात्मने ज्योतिरात्मने मायात्मने ज्वालात्मने ज्ञानात्मने क्रमादेतदन्तैः षडङ्गानि । तापनीये तु पञ्चाङ्गमेवोक्तम्—

तस्य हि पञ्चाङ्गानि भवन्ति । चत्वारः पादाः चत्वार्यङ्गानि भवन्ति । सप्रणवं सर्वं पञ्चमं भवतीति ।

अक्षरन्यासमाह शिर इति । तत्र प्रणवयोर्मध्ये एकैकमक्षरं सबिन्दुकमुच्चार्य न्यसनीयम् । यत्तापनीये—

ओमित्येतदक्षरमिदं सर्वम् । तस्मात् प्रत्यक्षरमुभयत ओङ्कारो भवति । अक्षराणां न्यासमुपदिशन्ति ब्रह्मवादिनः इति ।

अपराङ्गे पृष्ठे । ककुदि अपरगले । अथ तन्त्रान्तरोक्तो नृसिंहसान्निध्यकारकः सर्वरक्षाकरो दशविधन्यास उच्यते । यदाहुः—

नृसिंहसान्निध्यकरो न्यासो दशविधस्त्विह ।
प्रोच्यते तत्र पूर्वोऽयमङ्गुलीन्यास उच्यते ॥
कराङ्गुष्ठाद्यङ्गुलीषु पृथगाद्यन्तपर्वणोः ।
सर्वाङ्गुलौ न्यसेच्छिष्टं तलयोरक्षरद्वयम् ॥
ब्रह्मरन्ध्रललाटभ्रूमध्यदृक्षु दृशोप्यधः ।
कपोले कर्णमूले च चिबुकोर्ध्वाधरोष्ठके ॥
कण्ठोरोदक्षदोर्वामदोर्हृत्तनुषु नाभिके ।
दक्षान्यदोस्तले कट्यां मेढ्रोर्वोर्जानुजङ्घयोः ॥
गुल्फे पादकराङ्गुल्योः सर्वसन्धिषु रोमसु ।
रक्तास्थिमज्जासु मनोर्वर्णान्न्यस्येद्विचक्षणः ॥

द्व्यर्णान् पदे गुल्फजानुकटिनाभिषु हृत्स्थले ।
बाह्वोः कण्ठे तु चिबुके ओष्ठे गण्डे प्रविन्यसेत् ॥
कर्णयोर्वदने नासापुटे नेत्रे च मूर्धनि ।
पदानि तु मुखे केशे चक्षुः श्रोत्रेषु विन्यसेत् ॥
आस्ये च हृदये नाभौ कटिजानुपदेष्वपि ।
नासादृक्कर्णनाभीहृत्कदोः पत्सु प्रविन्यसेत् ॥
चतुर्वर्णान् मनोः पादान् ककुन्नाभिषु सर्वतः ।
अर्धद्वयं न्यसेन्मूर्ध्नि आहृत्यादात्तदङ्गकम् ॥
उग्राद्युग्रादीनि नव पदानीह नमाम्यहम् ।
इत्यन्तान्यास्यकघ्राणदृक्कर्णेषु च पक्ष्मसु ॥
हृदि नाभौ च कट्यादिपादान्तं नवसु न्यसेत् ।
वीरा(तारा)द्यान्यपि तान्येव यथा पूर्वं प्रविन्यसेत् ॥
नृसिंहाद्यानि तान्येव पूर्ववद्विन्यसेत् सुधीः ॥ इति ॥ ४-६ ॥

चार वर्ण से हृदय और चार से शिर, आठ वर्ण से शिखा, छः वर्ण से कवच और उतने ही वर्ण से नेत्र तथा चार अक्षरों से अस्त्र न्यास करे । इस प्रकार षडङ्गन्यास करे ।

इसके बाद **अक्षर न्यास** कहते हैं—शिर, ललाट, नेत्र, मुख, बाहु, पैर के अग्रभाग की सन्धियाँ, कुक्षि, हृदय, गला, दोनों पार्श्व, पृष्ठभाग और ककुद स्थान में यथाक्रम मन्त्र वर्णों से न्यास करे ॥ ४-६ ॥

ध्यानम्

**माणिक्याद्रिसमप्रभं निजरुचा संत्रस्तरक्षोगणं**
**जानुन्यस्तकराम्बुजं त्रिनयनं रक्तोल्लसद्भूषणम् ।**
**बाहुभ्यां धृतचक्रशङ्खमनिशं दंष्ट्राग्रवक्त्रोल्लस-**
**ज्ज्वालाजिह्वमुदग्रकेशनिचयं वन्दे नृसिंहं विभुम् ॥ ७ ॥**

ध्यानमाह माणिक्येति । अत्र ध्यानानन्तरमेता मुद्राः प्रदर्शयेत् ॥

जानुमध्यगतौ कृत्वा चिबुकोष्ठौ समावुभौ ।
हस्तौ च भूमिसंलग्नौ कम्पमानः पुनः पुनः ॥
मुखं विजृम्भितं कृत्वा लेलिहानां च जिह्विकाम् ।
एषा मुद्रा नारसिंही प्रधानेति प्रकीर्त्तिता ॥
वामस्याङ्गुष्ठतो बद्धा कनिष्ठामङ्गुलीत्रयम् ।
त्रिशूलवत् सम्मुखोर्ध्वं कुर्यान् मुद्रां नृसिंहगाम् ॥
अङ्गुष्ठाभ्यां च करयोस्तथाक्रम्य कनिष्ठिके ।
अधोमुखाभिः श्लिष्टाभिः शेषाभिर्नृहरेर्मता ॥
हस्तावधोमुखौ कृत्वा नाभिदेशे प्रसार्य च ।
तर्जनीभ्यां नयेत् स्कन्धौ प्रोक्षषाऽन्त्राख्यमुद्रिका ॥
हस्तावूर्ध्वमुखौ कृत्वा तले संयोज्य मध्यमे ।

अनामायां तु वामायां दक्षिणां तु विनिक्षिपेत् ॥
तर्जन्यौ पृष्ठतो लग्ने अङ्गुष्ठौ तर्जनीश्रितौ ।
वक्त्रमुद्रा भवेदेषा नृहरेः सन्निधौ मता ॥
वक्त्रमुद्रां तथा कृत्वा तर्जनीभ्यां तु मध्यमे ।
पीडयेद् दंष्ट्रमुद्रैषा सर्वपापप्रणाशिनी ॥ इति ॥

एताः सर्वनृसिंहमन्त्रसाधारण्य इति ज्ञेयम् ॥ ७ ॥

अब **ध्यान का प्रकार** कहते हैं—जिनके शरीर की कान्ति मणियों के पर्वत के तुल्य है, जो अपने तेज से समस्त राक्षस गणों को डरा रहे हैं, जो अपने दोनों बाहुओं में शङ्ख और चक्र धारण किये हुये हैं, जिनके बड़े बड़े दाँतों से युक्त मुखमण्डल में ज्वाला उगलती हुई जीभ लपलपा रही है जिनके समस्त बाल समूह (केश निलय) ऊपर को खड़े हैं ऐसे सर्वव्यापक श्री नृसिंह का मैं भजन करता हूँ ॥ ७ ॥

पुरश्चरणादिकथनम्

**वर्णलक्षं जपेन्मन्त्रं तत्सहस्त्रं घृतप्लुतैः ।**
**पायसान्नैः प्रजुहुयाद्विधिवत् पूजितेऽनले ॥ ८ ॥**
**एवं कृते भवेन्मन्त्री सिद्धमन्त्रः प्रतापवान् ।**
**पूजा प्रागीरिते पीठे मूर्त्तिं मूलेन कल्पयेत् ॥ ९ ॥**
**पूजयेद्विधिवत्तस्यां दैत्यशत्रुमनन्यधीः ।**
**अङ्गान्यादौ समाराध्य दिग्दलेषु यजेत् पुनः ॥ १० ॥**
**पक्षीन्द्रं शङ्करं शेषमब्जयोनिं यथाक्रमम् ।**
**श्रियं ह्रियं धृतिं पुष्टिमग्न्यादिषु यजेत् पुनः ॥ ११ ॥**
**लोकपालाः समभ्यर्च्यास्तदस्त्राणि ततः परम् ।**
**इत्थं जपादिभिः सिद्धे मनौ काम्यानि साधयेत् ॥ १२ ॥**

वर्णलक्षमिति द्वात्रिंशल्लक्षम् । तत्सहस्त्रं द्वात्रिंशत्सहस्त्रम् । विधिवदिति देवतापीठं तत्राभ्यर्च्येत्यर्थः । प्रागीरिते इति नारायणाष्टाक्षरोक्ते । विधिवदिति वक्ष्यमाणविधानेन । किञ्च विधिवदित्यनेन तापनीयोक्तमन्त्रे दशावरणानि पूजयेदित्युक्तम् । समाराध्येति तूपर्योक्तरीत्या ॥ ८-१२ ॥

साधक ऊपर कहे गये श्री नृसिंह मन्त्र का ३२ लाख जप करे और उतने ही हजार घृत मिश्रित होम से सुसंस्कृत (अग्नि संस्कार के लिए द्र. ५. २-७) अग्नि में होम करे ॥ ८ ॥

इतना कर लेने पर साधक सिद्धमन्त्र और तेजस्वी हो जाता है । तदनन्तर नारायणाष्टक में (द्र. १५. २४-२८) कहे गये पीठ पर मूल मन्त्र से मूर्त्ति की कल्पना करे ॥ ९ ॥

पश्चात् उसी मूर्त्ति में एकाग्रचित्त हो श्री नृसिंह की विधिवत् पूजा करे । सर्वप्रथम अङ्गों की पूजा करे, पश्चात् चार दिशाओं चार दलों में गरुड़, शंकर, शेष और ब्रह्मदेव की पूर्वादि दिशा के क्रम से पूजा करे । तदनन्तर आग्नेयादि कोणों में श्रीँ ह्रीँ धृति और पुष्टि की पूजा करे ॥ १०-११ ॥

इसके बाद लोकपालों की, पुनः उसके बाद लोकपालों के वज्रादि अस्त्रों की पूजा करे । इस प्रकार जपादि के द्वारा जब मन्त्र सिद्ध हो जाय तो उससे काम्य कर्म सिद्ध करे ॥ १२ ॥

ध्यानान्तरम्

**उद्यत्कोटिरविप्रभं नरहरिं कोटीरहारोज्ज्वलं**
**दंष्ट्राभीममुखं लसन्नखमुखैर्दीर्घैरनेकैर्भुजैः ।**
**निर्भिन्नासुरनाथमग्निशशभृत्सूर्यात्मनेत्रत्रयं**
**विद्युत्पुञ्जसटाकलापभयदं वह्निं वमन्तं भजे ॥ १३ ॥**

ध्यानमाह उद्यदिति ॥ १३ ॥

अब **श्री नृसिंह का अन्य ध्यान** कहते हैं—करोड़ों उदीयमान सूर्य के समान जिनके शरीर की कान्ति है, जो नर और हरि दोनों शरीर धारण किये हुये हैं । मुकुट हार से उज्ज्वल होते हुये भी कराल दंष्ट्रा के कारण जिनका मुख अत्यन्त भयानक है । जिन्होंने अपने बडे-बड़े अनेक नखों, दाँतों मुखों तथा भुजाओं से हिरण्यकशिपु का वक्षःस्थल विदीर्ण कर दिया है । जिनके अग्नि, सोम एवं सूर्य अपने नेत्र हैं । इस प्रकार विद्युत् समूह के समान अपनी सटासमूहों से भय उत्पन्न करने वाले तथा जिह्वा से आग उगलने वाले श्री नृसिंह का मैं भजन करता हूँ ॥ १३ ॥

**सौम्ये सौम्यं स्मरेत्कार्ये क्रूरे क्रूरमिमं भजेत् ।**
**श्रीपुष्पैर्जुहुयान्मन्त्री बिल्वकाष्ठैधितेऽनले ॥ १४ ॥**

होमभेदेन फलभेदः

**सहस्रं श्रियमाप्नोति पत्रैर्वा बिल्वसम्भवैः ।**
**प्रसूनैर्वा फलैस्तद्वद्दूर्वाहोमादरोगताम् ॥ १५ ॥**
**मन्त्रजप्तां वचां श्वेतां भक्षयेत् प्रातरन्वहम् ।**
**वाक्सिद्धिं लभते मन्त्री वाचस्पतिरिवापरः ॥ १६ ॥**

सौम्य इति । एतदुपासनाविषये । सौम्यं पूर्वोक्तध्यानम् । क्रूरे प्रयोगविषय इत्यर्थः । क्रूरमनन्तरोक्तम् । तदुक्तमाचार्यैः—

प्रतिपत्तिरस्य चोक्ता प्रसन्नता क्रूरता विशेषेण ।
द्विविधा प्रसन्नया स्यात् साधनपूजाऽन्यया प्रयोगविधिः ॥ इति ॥

**श्रीरिति लक्ष्मीलता । तद्वदिति श्रियमाप्नोतीत्यर्थः । अरोगतामित्यत्राप्नोतीत्यनुषज्यते ॥ १४-१६ ॥**

सौम्य कार्य के लिये पूर्वोक्त (१६. ७) सौम्य रूप श्री नृसिंह का ध्यान करना चाहिए तथा क्रूर कार्यों के लिये भयानक रूप वाले श्री नृसिंह का ध्यान करना चाहिए ॥ १४ ॥

**होमभेद से फलभेद**—साधक विल्व की लकड़ी से समिद्धमान अग्नि में श्री (क म ल) के पुष्पों से होम करे अथवा विल्वपत्र के द्वारा अथवा विल्व के फलों से अथवा उसके पुष्पों से इस मन्त्र से सहस्त्र संख्या में होम करे तो श्री की प्राप्ति होती है—दूर्वा के होम से साधक नीरोगता को प्राप्त करता है ॥

यदि साधक प्रतिदिन प्रात:काल में इस मन्त्र से जपी गई वचा खावे तो वह वाक्सिद्धि प्राप्त कर लेता है और दूसरा बृहस्पति हो जाता है ॥ १६ ॥

**सलिले देवमभ्यर्च्च गन्धपुष्पादिभिः शुभैः।**
**दूर्वाभिस्तत्र जुहुयान्नित्यमष्टोत्तरं शतम् ॥ १७ ॥**
**उपसर्गा विनश्यन्ति क्षुद्रभूतज्वरादिभिः ।**

**तत्रेति जले । उपसर्गा उपद्रवाः । तदुक्तमाचार्यैः—**

**दूर्वात्रिकैरष्टसहस्त्रसंख्यैराराध्य मन्त्री जुहुयादथाप्सु ।**
**शान्तिं प्रयान्त्येव तदोपसर्गा आपो हि शान्ता इति च श्रुतिः स्यात् ॥**
**उत्पाते सति महति ह्युपद्रवाणां होमोऽयं भवति स शान्तिदो नराणाम् ।**
**यद्वान्यन्निजमनसेप्सितं च कामं तत्राप्नोत्यखिलनृणां प्रियश्च भूयात् ॥**
**इति ॥ १७-१८ ॥**

यदि सलिल एवं उत्तमोत्तम गन्ध-पुष्पादि के द्वारा भी नृसिंह का अर्चन कर नित्य एक सौ आठ बार होम करे तो उसके क्षुद्र भूत एवं ज्वरादि से होने वाले उपद्रव शान्त हो जाते हैं ॥ १७-१८ ॥

**दुःस्वप्ने निशि सञ्जाते स्नात्वा मन्त्रममुं जपेत् ॥ १८ ॥**
**अनिद्रो मन्त्रवित् पश्चात् सुस्वप्नस्तस्य जायते ।**

**दुःस्वप्नानन्तरं तदैव । जपेदित्यष्टोत्तरशतम् । सुस्वप्न इति । स एव दुःस्वप्न एवं सुस्वप्नफलदो भवति ॥ १८-१९ ॥**

रात्रि में दु:स्वप्न दिखाई पड़ने पर स्नान कर इस मन्त्र का आलस्य रहित हो जप करे तो मन्त्रवेत्ता का दु:स्वप्न सुस्वप्न में परिणत हो जाता है ॥ १८-१९॥

**व्याघ्रचौरमृगादिभ्यो महारण्ये भयाकुले ॥ १९ ॥**
**रक्षेन्मनुरयं जप्तो भयेष्वन्येषु मन्त्रिणम् ।**
**अनेन मन्त्रितं भस्म विषग्रहमहामयान् ॥ २० ॥**

नाशयेदचिरादेव मन्त्रस्याऽस्य प्रभावतः ।
घोरेऽभिचारे सोन्मादे महोत्पाते महाभये ॥ २१ ॥
जपेन्मन्त्रं स्मरेद्देवं दुःखान्मुक्तो भवेन्नरः ।
सिंहरूपं महाभीमं नखदंष्ट्रातिभीषणम् ॥ २२ ॥
स्मृत्वाऽऽत्मानं रिपुं पश्चाद्ध्यायेन्मृगशिशुं पुरा ।
गृहीत्वा गलदेशे तं पुनर्दिक्षु क्षिपेद् द्रुतम् ।
पुत्रमित्रकलत्राद्यैरुच्चाटो जायते रिपोः॥ २३ ॥

मृगाः सिंहाद्याः । विषेत्यनेन सर्पादीनां विषम् । ग्रहा अष्टादश । महामया-नित्यनेन ज्वरादयः संगृहीताः । यदाहुः—

मूषिकलूतावृश्चिकबहुपादाद्युत्थितं विषं शमयेत् ।
अष्टोत्तरशतजापान् मनुरयमभिमन्त्रितं च भस्माद्यम् ॥
सशिरोऽक्षिकर्णहृद्गलकुक्षिरुजाज्वरविसर्पवमिहिक्वाः ।
मन्त्रौषधाभिचारिककृतान् विकारानयं मनुः शमयेत् ॥ इति ॥

रिपुमित्यग्रिमेण सम्बध्यते । तं रिपुं क्षिपेदित्यन्वयः । पुरेति पाठे आत्मानं पुरा स्मृत्वेत्यन्वयः । पुरः इति पाठे आत्मनः अग्रे इत्यर्थः ॥ १९-२३ ॥

घोर से घोर कान्तार जङ्गलों में इस मन्त्र का जप बाघ, चोर और अनेक प्रकार के हिंसक जन्तुओं से तथा अन्य सभी प्रकार के भयों से रक्षा करता है । इस मन्त्र से अभिमन्त्रित भस्म लगाने पर यह विष ग्रह और महाभय से रक्षा करता है ॥ १९-२० ॥

घोर से घोर अभिचार (मारण) में, उन्माद की अवस्था में महान् से महान् दिव्य, अन्तरिक्ष एवं भौम उत्पातों में महान् से महान् भय की स्थिति में इस मन्त्र का जप करे तथा श्री नृसिंह का स्मरण करे तो मनुष्य दुःखों से छुटकारा पा जाता है । साधक अपने में भयानक नख और दाँतों से महाभयानक सिंह की भावना करे और शत्रु में मृगशिशु की भावना करते हुये कल्पना करे कि मैं इस मृगशिशु रूप अपने शत्रु का गला पकड़ कर दिशाओं में फेंक रहा हूँ, तो शत्रु का उसके पुत्र-मित्र कलत्रादि से निश्चित रूप से उच्चाटन हो जाता है ॥ २१-२३ ॥

पूर्वमृत्युपदे साध्यनाम कृत्वा स्वयं हरिः ।
निशितैर्नखदंष्ट्राग्रैः खण्ड्यमानं रिपुं स्मरेत्॥ २४ ॥
नित्यमष्टोत्तरशतं जपेन्मन्त्रमतन्द्रितः ।
जायते मण्डलादर्वाक् शत्रुर्वैवस्वतप्रियः॥ २५ ॥

पूर्वमृत्युपदे इति । मन्त्रे मृत्युमृत्युमिति मृत्युपदद्वयमस्ति । तत्र पूर्वमृत्युपदं त्यक्त्वा तत्स्थाने साध्यनामप्रयोग इत्यर्थः । स्वयं हरिरिति । आत्मानं नृसिंहरूपं ध्यात्वेत्यर्थः ॥ २४-२५ ॥

श्री नृसिंह के मन्त्र में 'मृत्यु मृत्युं' पद में मृत्यु पद दो बार आया है (अमुकस्य मम शत्रोः), अतः प्रथम मृत्यु पद के स्थान में साध्य नाम लगा कर जप करे । पश्चात् उस शत्रु को स्वयम् श्री हरि अपने नुकीले नुकीले नखों एवं दाँतों से विदीर्ण कर रहे हैं ऐसी भावना करे और नित्य प्रति आलस्यादि से रहित हो एक सौ आठ बार इस मन्त्र का जप करे तो शत्रु ४९ दिन के भीतर यमराज का ग्रास हो जाता है ॥ २४-२५ ॥

**यत्नं कुर्वीत विधिवच्छत्रुसेनानिवारणे ।**
**बिभीतकाष्ठैर्ज्वलिते पावके रिपुमर्दनम् ॥ २६ ॥**
**विचिन्त्य देवं नृहरिं सम्पूज्य कुसुमादिभिः ।**
**समूलतूलैर्जुहुयाच्छरैर्दशशतं पृथक् ।**
**रिपुं खादन्निव जपेन्निर्भिन्दन्निव तान् क्षिपेत् ॥ २७ ॥**

**यत्नं कुर्वीतेत्यादि अनर्थः स्यान् महीपतेरित्यन्तमेक एव प्रयोगः । विधिवद्यत्नमेवाह बिभीतेति । रिपुमर्दनमित्यनेन क्रूरध्यानं कर्त्तव्यमिति सूचितम् । पृथगिति प्रत्यहम् । रिपुं खादन्निव जपेदित्यस्यायमर्थः । होमसमये रिपुं खादन्निव नृसिंहोऽहमित्यात्मानं ध्यात्वा जपेत् मन्त्रमुच्चरेत् । ततोऽरीन् भिन्दन्निव नृसिंहोऽहमिति आत्मानं ध्यात्वा तान् शरानग्नौ क्षिपेदिति । तदुक्तम्—**

**खादन्निवोच्चरेन् मनुमरींश्च भिन्दन्निव क्षिपेत् समिधः । इति ॥ २६-२७ ॥**

अब २६ श्लोक से आरम्भ कर ३१ पर्यन्त **शत्रुसेना निवारण के लिये प्रयोग का वर्णन** करते हैं—शत्रु सेना को दूर भगाने के लिये इस प्रकार का प्रयत्न करना चाहिए—बहेड़ा के काठ से जलती हुई अग्नि में शत्रुओं का मर्द्दन करने वाले श्री नृसिंह का ध्यान कर कुसुमादि द्वारा पूजन करे । मूल तथा पुष्प युक्त शरपत (काश) से प्रतिदिन एक हजार होम करे और होम काल में अपने में शत्रु का भक्षण करते हुये श्री नृसिंह की भावना कर अग्नि में क्रोधपूर्वक हविष्य द्रव्य का निक्षेप करे ॥ २६-२७ ॥

**हुत्वा सप्तदिनं मन्त्री सेनामिष्टां महीपतेः ।**
**प्रस्थापयेच्छुभे लग्ने परराज्यजयेच्छया ॥ २८ ॥**

**हुत्वा महीपतेरिष्टां सेनां शुभे लग्ने प्रस्थापयेदिति सम्बन्धः ॥ २८ ॥**

इस प्रकार सात दिन पर्यन्त इस क्रिया का संपादन कर आठवें दिन राजा की सेना को शुभ लग्न में शत्रु की सेना की पराजय के लिये भेजे ॥ २८ ॥

**तस्याः पुरस्तान्नृहरिं निघ्नन्तं रिपुमण्डलम् ।**
**स्मृत्वा प्रयोगं कुर्वीत यावदायाति सा पुनः ॥ २९ ॥**
**विजित्य निखिलाञ्छत्रून् सह वीरश्रिया सुखम् ।**
**आगत्य विजयी राजा ग्रामक्षेत्रधनादिभिः ॥ ३० ॥**

प्रीणयेन्मन्त्रिणं सम्यग्विभवैः प्रीतमानसः ।
मन्त्री यदि न सन्तुष्येदनर्थः स्यान्महीपतेः ॥ ३१ ॥

स्मृत्वा प्रयोगमिति । यावदायाति तावज्जपं पूर्वोक्तध्यानं च कुर्यादित्यर्थः ।

तदुक्तम्—यावज्जितारिरेष्यति नृपतिस्तावज्जपेत् स्मरन् देवम् । इति ॥

तन्त्रान्तरोक्ता ध्यानभेदा लिख्यन्ते—

नरसिंहं महाभीमं कालानलसमप्रभम् ।
अन्त्रमालाधरं रौद्रं कण्ठहारेण शोभितम् ॥
नागयज्ञोपवीतं च पञ्चाननसुशोभितम् ।
चन्द्रमौलिं नीलकण्ठं प्रतिवक्त्रं त्रिनेत्रकम् ॥
भुजैः परिघसङ्काशैर्दशभिश्चोपशोभितम् ।
अक्षसूत्रं गदां पद्मं शङ्खं गोक्षीरसन्निभम् ॥
धनुश्च मुषलं चैव बिभ्राणं चक्रमुत्तमम् ।
खड्गं शूलं च बाणं च नृहरिं रुद्ररूपिणम् ॥
इन्द्रगोपाभनीलाभं चन्द्राभं स्वर्णसन्निभम् ।
पूर्वादि चोत्तरं यावदूर्ध्वास्यं सर्ववर्णकम् ॥
एवमुग्रं हरिं ध्यायेत् सर्वव्याधिविमुक्तये ।
सर्वमृत्युहरं दिव्यं स्मरणात् सर्वसिद्धिदम् ॥
ध्येयो यदा महत्कर्म तदा षोडशहस्तवान् ।
नृसिंहः सर्वलोकेशः सर्वाभरणभूषितः ॥
द्वौ विदारणकर्माढ्यौ द्वौ चान्त्रोद्धरणाञ्चितौ ।
चक्रशङ्खधरौ द्वौ तु द्वौ च बाणधनुर्धरौ ॥
खड्गखेटधरौ द्वौ च द्वौ गदापद्मधारिणौ ।
पाशाङ्कुशधरौ द्वौ तु द्वौ रिपोर्मुकुटार्पितौ ॥
इति षोडशदोर्दण्डमण्डितं नृहरिं विभुम् ।
ध्यायेन्नीरदनीलाभमुग्रकर्मण्यनन्यधीः ॥
ध्येयो महत्तमे कार्ये दशद्वाविंशहस्तवान् ।
नृहरिः सर्वभूताद्यः सर्वसिद्धिकरः प्रभुः ॥
दक्षिणे चक्रपद्मे च परशुं पाशमेव च ।
हलं च मुषलं चैवमभयं चाङ्कुशं तथा ॥
पट्टिशं भिन्दिपालं च खड्गमुद्गरतोमरान् ।
वामभागे करैः शङ्खं खेटं पाशं च शूलकम् ॥
अग्निं च वरदं शक्तिं कुण्डिकां च ततः परम् ।
कार्मुकं तर्जनीमुद्रां गदां डमरुसर्पकौ ॥
द्वाभ्यां कराभ्यां च रिपोर्जानुमस्तकपीडनम् ।
ऊर्ध्वीकृताभ्यां बाहुभ्यामान्त्रमालाधरं हरिम् ॥
अधःस्थिताभ्यां बाहुभ्यां हिरण्यकविदारणम् ।
प्रियङ्करं च भक्तानां दैत्यानां च भयङ्करम् ॥

नृसिंहं संस्मरेदित्थं महामृत्युभयापहम् ।
अथोच्यते ध्यानमन्यन् मुखरोगहरं शुभम् ॥
स्वर्णाद्याभे सुपर्णे स्थितमभिसुमुखं कोटिपूर्णेन्दुवर्ण
विद्युन्मालासटाभिस्त्रिशिखमयदृशं पीतवस्त्रोरुभूषम् ।
हस्तोद्यच्चक्रशङ्खाभयवरमखिलक्ष्वेलरोगादिमृत्युं
स्वैर्ध्वनैर्ध्वंसयन्तं सुरनुतमनिशं संस्मरेच्छ्रीनृसिंहम् ॥ इति ॥ २९-३१ ॥

वह जब तक जीत कर लौट ना आवे तब तक ध्यान करे कि श्री नृसिंह भगवान् इस सेना के आगे आगे शत्रु सेना का वध करते जा रहे हैं । इस प्रकार ध्यान से वह सेना समस्त शत्रु समूहों को वीरतापूर्वक सुख से जीत कर चली आती है । इस प्रकार जीतने वाला राजा विजयी होकर ग्राम, क्षेत्र एवं धनादि द्वारा मन्त्री को प्रसन्न करे और उसे पर्याप्त विभव दे । यदि राजा इस प्रकार अपने मन्त्री को संतुष्ट नहीं करता तो उसका महान् अनर्थ होता है ॥ २९-३१ ॥

नृसिंहयन्त्रम्

**बीजं साध्यसमन्वितं प्रविलिखेन्मध्येऽष्टपत्रेष्वथो**
**मन्त्रार्णान् श्रुतिशो विभज्य विलिखेत् लिप्या बहिर्वेष्टयेत् ।**
**बाह्ये कोणगबीजबद्ध वसुधा गेहद्वयेनावृतं**
**यन्त्रं क्षुद्रविषग्रहामयरिपुप्रध्वंसनं श्रीपदम् ॥ ३२ ॥**

यन्त्रमाह बीजमिति । बीजं वक्ष्यमाणं नारसिंहम् । श्रुतिशश्चत्वारि चत्वारि । लिप्या मातृकया । कोणगं बीजं नृसिंहबीजम् । यन्त्रं एवंभूतम् । बद्धं व्यतिभिन्नं यद्वसुधागेहद्वयं तेन वृतम् ॥ ३२ ॥

अब **श्री नृसिंह का यन्त्र वर्णन** करते हैं—अष्टदल कमल के मध्य में वक्ष्यमाण श्री नृसिंह बीज (द्र. १६. ३९) साध्य के नाम से युक्त कर लिखे । तदनन्तर अष्टदलों पर चार चार अक्षरों के विभाग के क्रम से श्री नृसिंह के ३२ अक्षरों को लिखे । तदनन्तर उसे बाहर मातृकावर्णों से घेर देवे । बाहर के कोणों पर श्री नृसिंह का बीज लिखे । पुनः परस्पर भिन्न दो भूबिम्बों से घेर देवे । इस प्रकार से निर्मित यह यन्त्र क्षुद्र रोग, विष, ग्रहबाधा, महारोग और शत्रुओं का विनाश करता है और लक्ष्मी भी प्रदान करता है ॥ ३२ ॥

रिपुध्वंसनयन्त्रम्

**कृत्वा नवपदात्मानं मण्डलं यन्त्रसंयुतम् ।**
**अस्मिन् संस्थापयेन्मन्त्री कलशान्नव शोभनान् ॥ ३३ ॥**
**कषायतोयसम्पूर्णान् वस्त्ररत्नादिसंयुतान् ।**
**मध्ये सम्पूजयेद्देवं नृसिंहं शान्तविग्रहम् ॥ ३४ ॥**
**तार्क्ष्यादीन् पूजयेन्मन्त्री पूर्वादिषु यथाक्रमम् ।**

इति संसाधितैस्तोयैरभिषिञ्चेत् प्रियं नरम् ॥ ३५ ॥
अभिचारग्रहोन्मादा विनश्यन्त्यरिभिः सह ।
अभिषिक्तस्तदा विप्रान् भोजयेद्देवताधिया ॥ ३६ ॥
यथावत् पूजयेत्पश्चाद्भक्त्या गुरुमवञ्चयन् ।
राजा विजयमाप्नोति युद्धेषु विधिनाऽमुना ॥ ३७ ॥

यन्त्रसंयुतमिति नवनाभमध्यपद्मकर्णिकायाम् । अस्मिन् नवनाभमण्डले । कषायः क्षीरद्रुमत्वचां रस एव तोयम् । वस्त्ररत्नादीत्यादिशब्देन हेम । शान्तविग्रहमिति । माणिक्येति प्रोक्तध्यानम् । तार्क्ष्यादीनिति पूर्वोक्तपक्षीन्द्रादीन् । पूर्वादिषु अग्रादिषु । देवताधिया यथावद् गुरुं पूजयेदिति सम्बन्धः । यथावदित्यनेन पाद्याद्युपचारोक्तिः ॥ ३३-३७ ॥

नवनाभ मण्डल बनाकर नव सुन्दर कलशों को नव यन्त्रों से युक्त कर साधक उसी पर नव कलशों को स्थापित करे । उन्हें कषाय युक्त जल से परिपूर्ण करे तथा वस्त्र और रत्नों से सुशोभित भी करे । मध्य के कलश पर शान्तविग्रह वाले श्री नृसिंह की पूजा करे ॥ ३३-३४ ॥

इसके बाद पूर्वादि दिशाओं में श्री गरुड़ आदि की (द्र. १६. १०-११) पूजा करे । इस प्रकार से पूजित कलशों के जल से अपने स्नेहीजनों का अभिषेक करे तो उसके अभिचार, ग्रहदोष, उन्माद तथा समस्त शत्रु अपने आप नष्ट हो जाते हैं । अभिषिक्त पुरुष ब्राह्मणों में देवता बुद्धि रख कर उन्हें भोजन करावे । इसके बाद कपट रहित होकर गुरु की पूजा करे । यदि राजा इस प्रकार का प्रयोग करे तो वह अपने शत्रु पर विजय प्राप्त करता है ॥ ३५-३७ ॥

**बीजाङ्कं फणपञ्चकं प्रविलिखेच्छेषस्य भोगे पुन-**
**र्द्वात्रिंशत्पदसंयुते परिलिखेन्मन्त्राक्षराणि क्रमात् ।**
**पुच्छे नाम जपादिसाधितमिदं होमेन सम्पातितं**
**भूतापस्मृतिदुःखरोगशमनं यन्त्रं रिपुध्वंसनम् ॥ ३८ ॥**

यन्त्रान्तरमाह बीजाङ्कमिति । पूर्वापरायताः पञ्च रेखाः कुर्यात् । दक्षिणोदग्गता नव रेखाः कुर्यात् । प्राग्रेखाग्रेषु पञ्चसु फणाकारता कार्या । पश्चिमाग्रेषु पञ्चसु पुच्छाकारता कार्या । तत्र प्रतिफणमेकैकं बीजं लिखेत् । जपादीत्यादिशब्देन प्राणप्रतिष्ठापूजे । तन्त्रान्तरस्थं यन्त्रमुच्यते—

षोडशारं महाचक्रं लिखेद् भूर्जे प्रयत्नतः ।
दलेषु मन्त्रवर्णानि युग्मयुग्मक्रमाल्लिखेत् ॥
त्रैलोक्यमोहनं बीजं कर्णिकायां लिखेद्बुधः ।
श्रीबीजेन संवेष्ट्य क्रोंकारेणाऽवरुध्य च ॥
विवादे कलहे न्याये तथा राजकुले जयी ।
मेधाकरी वश्यकरी नरनारीवशङ्करी ॥

शिखायां धारयेद्बाहौ कण्ठे वा कटिसूत्रके ।
सर्वत्र सुभगो लोके सर्वत्राऽप्रतिमो भवेत् ॥
चिन्तामणिर्नाम रक्षा स्वयं सिंहेन निर्मिता ।
पुनरन्यां प्रवक्ष्यामि रक्षां त्रैलोक्यमोहिनीम् ॥
यस्याः सन्धारणादेव भवेयुः सर्वसम्पदः ।
श्वेतभूर्जे लिखेत्पद्मं द्वात्रिंशत्सिंहसंयुतम् ॥
मध्ये सिंहेश्वरं बीजं लिखेत् पूर्ववदेव तु ।
श्रीबीजेन तु संवेष्ट्य वलयत्रयसंयुतम् ॥
पाशाङ्कुशैश्च संवेष्ट्य पूजयेद्यन्त्रमुत्तमम् ।
त्रैलोक्यमोहनं नाम सर्वकामार्थसाधनम् ॥
चक्रराजं महाराजं सर्वचक्रेश्वरेश्वरम् ।
धारणाज्जयमाप्नोति सत्यं सत्यं न संशयः ॥ इति ॥
कृष्णं रुद्रं महाघोरं भीमं भीषणमुज्ज्वलम् ।
करालं विकरालं च दैत्यान्तं मधुसूदनम् ॥
रक्ताक्षं पिङ्गलाक्षं च अञ्जनं दीप्ततेजसम् ।
सुघोणं सुहनुं चैव विश्वाक्षं राक्षसान्तकम् ॥
विशालं धूम्रकेशं च हयग्रीवं घनस्वनम् ।
मेघनादं मेघवर्णं कुम्भकर्णं कृतान्तकम् ॥
तीव्रतेजमग्निवर्णं महोग्रं विश्वभूषणम् ।
विघ्नक्रमं महासेनं सिंहा द्वात्रिंशदीरिताः ॥ इति ॥ ३८ ॥

अब **नृसिंह के अन्य मन्त्र का प्रकार** कहते हैं—पूर्व से पश्चिम की ओर पाँच रेखा खींचे, इसी प्रकार दक्षिण से उत्तर की ओर नव रेखा खींचे । तदनन्तर पूर्व की ओर की पाँच रेखाओं को पाँच फण के रूप में निर्माण कर उन पाँचो पर एक एक क्रम से नृसिंह के बीज मन्त्र लिखे और भोग के समान बीच के ३२



कोष्ठकों में श्री नृसिंह के ३२ मन्त्राक्षरों को लिखे । तत्पश्चात् पुच्छ पर साध्य नाम लिख कर उसी पर जप तथा होम से शेष घृत को गिराये तो यह यन्त्र भूत, अपस्मार (मिर्गी) दु:ख और रोगों का शमन करता है और शत्रु का विनाश भी करता है ॥ ३८ ॥

नृसिंहबीजम्

**क्षकारो वह्निमारूढो मनुस्वरसमन्वितः।**
**बिन्दुनादलसन्मूर्धा बीजं नरहरेर्मतम् ॥ ३९ ॥**

**नृसिंहबीजमुद्धरति क्षकार इति । वह्नी रेफः मनुस्वर औ । अयमपि स्वतन्त्रो मन्त्रः । अस्यर्ष्यादिकं यथा—**

ऋषिरत्रिश्च गायत्री छन्दः श्रीनृहरिः प्रभुः ।
देवता दीर्घयुग्बीजेनैवाऽङ्गं परिकल्पयेत् ॥
ध्यानं पूर्ववदेव स्यादेकलक्षं जपेन् मनुम् ।
तद्दशांशं हुनेत्सम्यक् घृताक्तैः पायसैः शुभैः ॥
अर्चा होमादिकं सर्वमस्य पूर्ववदाचरेत् ।
मन्त्रराजवदेवाऽस्य प्रयोगानपि साधयेत् ॥
हृल्लेखासम्पुटं केचित् सङ्गिरन्ते मनुं त्वमुम् ॥ इति ।

तथा— अष्टारं विलिखेत्पद्मं श्लक्ष्णं (शुक्लं) कर्णिकायां युतम् ॥
मूलमन्त्रं लिखेत्तत्र प्रणवेन समन्वितम् ।
एकाक्षरं नारसिंहं नाभ्यां चैव ससाधकम् ॥
जपेदष्टसहस्रं तु सूत्रेणावेष्ट्य तद्बहिः ।
सुवर्णेन तु संवेष्ट्य रौप्येणावेष्टयेत्ततः ॥
ताम्रेणावेष्टयेत् पश्चाल्लाक्षया च प्रयत्नतः ।
पुनर्मन्त्रेण सम्मन्त्र्य ह्यग्निमुत्तारयेत् प्रिये ॥
कण्ठे भुजे शिखायां वा धारयेद्यन्त्रमुत्तमम् ।
नरनारीनरेन्द्राश्च सर्वे स्युर्वशगा भुवि ॥
दुष्टास्तं नैव बाधन्ते पिशाचोरगराक्षसाः ।
चक्रराजप्रसादेन सर्वत्र जयमाप्नुयात् ॥
द्वादशारं महाचक्रं पूर्ववद्विलिखेत् सुधीः ।
मात्राद्वादशसम्भिन्नं दले तल्लेखयेद्बुधः ॥
मध्ये मन्त्रं शक्तियुक्तं श्रीबीजेन तु वेष्टयेत् ।
कालान्तकं नाम चक्रं सुरासुरवशङ्करम् ॥
चक्रमुल्लेखयेत् भूर्जे सर्वशत्रुनिवारणम् ।
यस्य धारणमात्रेण सर्वत्र विजयी भवेत् ॥
स श्लाघ्योऽथ भवेल्लोके यथा देवो नृकेसरी ॥ इति ॥ ३९ ॥

अब **श्री नृसिंह के बीज मन्त्र का उद्धार** कहते हैं—क्षकार जो रेफ से संयुक्त हो उस पर मनु (औ) की मात्रा लगावे, पुनः सिर पर बिन्दु नाद की मात्रा

लगा कर उसे सुशोभित करे, तो इस प्रकार श्री नृसिंह का बीज मन्त्र सम्पन्न होता है । इसका स्वरूप 'क्ष्रौँ' होगा ॥ ३९ ॥

ज्वालानृसिंहमन्त्रः

बीजं नमो भगवते नरसिंहाय तत्परम् ।
स्याज्ज्वालामालिने पश्चाद्दीप्तदंष्ट्राय तत्परम् ॥ ४० ॥
अग्निनेत्राय सर्वादि रक्षोघ्नाय पदं वदेत् ।
सर्वभूतविनाशान्तं नकारो दीर्घवान् मरुत् ॥ ४१ ॥
सर्वज्वरविनाशान्ते नायार्णौ दहयुग्मकम् ।
पचद्वयं रक्षयुग्मं हुं फट् स्वाहा ध्रुवादिकः ॥ ४२ ॥
सप्तषष्ट्यक्षरैः प्रोक्तो ज्वालामाली महामनुः ।
हृत् त्रयोदशभिः प्रोक्तं शिरो दशभिरीरितम् ॥ ४३ ॥

षडङ्गन्यासः

शिखैकादशभिः प्रोक्ता वर्माऽष्टादशभिर्मतम् ।
वर्णैर्द्वादशभिर्नेत्रमस्त्रं स्यात्करणाक्षरैः ।
एवमङ्गानि विन्यस्य चिन्तयेन्मन्त्रदेवताम् ॥ ४४ ॥

ज्वालानृसिंहमन्त्रमाह बीजमिति । बीजं नारसिंहम् । नकारो दीर्घवान् ना । मरुत् यकारः । ब्रह्मा ऋषिः अति छन्दः ज्वालामाली नृसिंहो देवता । क्ष्रौं बीजं स्वाहा शक्तिः । करणाक्षरैश्चतुरक्षरैः । ननु मन्त्रस्य सप्तषष्ट्यक्षरत्वमुक्तम् । हृत् त्रयोदशभिरित्यादिनाऽङ्गोक्तौ अष्टषष्ट्यक्षराणि लभ्यन्ते इति पूर्वापरविरोध इति चेत् सत्यम् । तत्राङ्गकरणे पदविभेदेनैव अङ्गकरणाद् दंष्ट्राय तत्रैव शिरोऽङ्गस्य समाप्तिः । शिखा तु अग्निनेत्रायेत्याद्येकादशभिः । मन्त्रे तु दंष्ट्रायाऽग्नीति सन्धिरेवेति न दोषः ॥४०-४४॥

अब **ज्वालामाली नृसिंहमन्त्र** कहते हैं—प्रथम नृसिंह बीज, तदनन्तर 'नमो भगवते नरसिंहाय', उसके बाद 'ज्वालामालिने', पश्चात् 'दीप्तदंष्ट्राय अग्निनेत्राय सर्वरक्षोघ्नाय सर्वभूतविनाशनाय सर्वज्वरविनाशनाय', तदनन्तर दो बार दह शब्द (दह दह), पुनः 'पच पच रक्ष रक्ष', तदनन्तर 'हुँ फट् स्वाहा' कहे । साधक इसके आदि में प्रणव लगावे । इस प्रकार यह ६७ अक्षरों का ज्वालामाली नृसिंह महामन्त्र कहा गया है ।

**विमर्श**—इसका स्वरूप इस प्रकार हुआ—'ॐ क्ष्रौँ नमो भगवते नरसिंहाय ज्वालामालिने दीप्तदंष्ट्राय अग्निनेत्राय सर्वरक्षोघ्नाय सर्वभूतविनाशनाय सर्वज्वरविनाशनाय दह दह पच पच रक्ष रक्ष हुँ फट् स्वाहा' ॥ ४०-४३ ॥

तेरह अक्षर से हृदय, दश अक्षर से शिर, एकादश अक्षर से शिखा, अष्टादश से वर्म, बारह अक्षर से नेत्र और शेष चार अक्षरों से अस्त्र न्यास करे । इस प्रकार अङ्गन्यास कर तदनन्तर देवता का ध्यान करे ॥ ४०-४४ ॥

ध्यानम्

उज्ज्वलत्प्रलयानलाभमयुग्मनेत्रमनारतं
भासुरं शिखिनः शिखाभिरुदग्रदंष्ट्रमुखाम्बुजम् ।
रक्षसां भयदं विकीर्णसटाकलापविभीषणं
शङ्खचक्रकृपाणखेटकधारिणं नृहिरं भजे ॥ ४५ ॥

पुरश्चरणादिकथनम्

लक्षमेकं जपेन्मन्त्रं तद्दशांशं समाहितः।
कपिलाज्येन जुहुयात् समिद्धे हव्यवाहने ॥ ४६ ॥
प्रागुक्ते पूजयेत्पीठे देवं संप्रोक्तवर्त्मना ।
कुर्वीत मन्त्रराजोक्तान् प्रयोगान्मनुनाऽमुना ।
विशेषात् क्षुद्रभूतादिनाशनोऽयं मनुः स्मृतः॥ ४७ ॥

रक्षसां भयदमिति विनियोगोक्तिर्ज्ञेया । सटाकलापं स्कन्धकेशरसमूहम् । 'सटा जटाकेसरयोः' इति कोशः । वामाद्यूर्ध्वाद्वामाधस्तनं यावदायुधध्यानम् ॥ ४५-४७ ॥

जो जलती हुई प्रलयकालीन अग्नि के समान भयंकर हैं तथा जिनके अग्नि, सोम एवं सूर्य स्वरूप तीन नेत्र निरन्तर प्रज्वलित हैं । जलती हुई अग्नि ज्वाला के समान लपलपाती जीभ एवं भयंकर दाढ़ों से जिनका मुख कमल समस्त राक्षसों को भय उत्पन्न करने वाला है, जो बिखरे हुये सटा (कन्धे के बाल) समूहों से अत्यन्त भयानक प्रतीत हो रहे हैं ऐसे शङ्ख, चक्र, कृपाण और खेटक धारण करने वाले श्री नृसिंह का मैं भजन करता हूँ ॥ ४५ ॥

इस ज्वाला नृसिंह मन्त्र का समाहित चित्त से एक लाख जप करे । उसका दशांश कपिला गाय के घृत से समिद्धतम अग्नि में होम करे और पूर्वोक्त पीठ पर पूर्वोक्त विधि से श्री नृसिंह का पूजन करे । इस मन्त्र से मन्त्रराज (द्र. १६.२) में कही गई विधि के अनुसार (१६. १०-१५) पूजन करे तो इस मन्त्र का प्रयोग क्षुद्र रोगों एवं भूतादिकों का विनाश करता है ॥ ४६-४७ ॥

लक्ष्मीनृसिंहमन्त्रः

पाशः शक्तिर्नरहरिरङ्कुशो वर्म फट् मनुः।
षडक्षरो नरहरेः कथितः सर्वकामदः ॥ ४८ ॥

ऋष्यादिकथनम्

ऋषिर्ब्रह्मा समुद्दिष्टः पङ्क्तिश्छन्द उदाहृतम्।
देवता नरसिंहोऽस्य षड्बीजैरङ्गकल्पना ॥ ४९ ॥

लक्ष्मीनृसिंहमन्त्रमाह पाश इति । पाश आं । शक्तिर्मायाबीजम् । नरहरि-

नृसिंहबीजम् । अङ्कुशः क्रों । वर्म हुं । फट् स्वरूपम् । क्ष्रौं बीजं माया शक्तिः । सर्वकामद इत्यनेन विनियोग उक्तः ॥ ४८-४९ ॥

अब **लक्ष्मी नृसिंह मन्त्र का उद्धार** कहते हैं—पाश (आँ), शक्ति (ह्रीँ), नृसिंह बीज (क्ष्रौँ), अंकुश (क्रोँ), वर्म (हुँ फट्)—यह छः अक्षरों का नृसिंह मन्त्र हुआ । यह मन्त्र भजने वालों की संपूर्ण कामनायें पूर्ण करता है ॥ ४८ ॥

इस षडक्षर नृसिंह मन्त्र के ब्रह्मा ऋषि हैं, पंक्ति छन्द है तथा नरसिंह देवता हैं । इसके छः बीजों से क्रमशः षडङ्गन्यास करना चाहिए ॥ ४९ ॥

ध्यानम्

**कोपादालोलजिह्वं विवृतनिजमुखं सोमसूर्याग्निनेत्रं**
**पादादानाभि रक्तप्रभमुपरि सितं भिन्नदैत्येन्द्रगात्रम् ।**
**चक्रं शङ्खं सपाशाङ्कुशकुलिशगदादारणान्युद्वहन्तम्**
**भीमं तीक्ष्णोग्रदंष्ट्रं मणिमयविविधाकल्पमीडे नृसिंहम् ॥ ५० ॥**

आयुधध्यानं तु दक्षाद्यूर्ध्वयोराद्ये तदधोऽधस्थयोरन्योन्ये इति । एवं क्रमेण चतुर्थाभ्यां दक्षवामाभ्यां दारणमुद्रा । तल्लक्षणं तु—

मिथः संसृष्टसम्मुख्योऽङ्गुलयो ऋज्वधोऽग्रकाः ।
स्वस्थानसरलाङ्गुष्ठौ मुद्रेयं दारणा मता ॥ इति ।

ईडे स्तुवे । ईड् स्तुताविति धातुः ॥ ५० ॥

अब इस **मन्त्र का ध्यान** कहते हैं—जो क्रोध से बारम्बार अपनी जीभ चाट रहे हैं, जिनका मुख विवृत है, सोम, सूर्य एवं अग्नि जिनके तीन नेत्र हैं, पैर से लेकर नाभि पर्यन्त जो रक्तवर्ण के हैं तथा नाभि से ऊपर जो श्वेतवर्ण के हैं, हिरण्यकशिपु का वक्षःस्थल विदीर्ण करने वाले, हाथों में चक्र, शङ्ख, पाश, अंकुश, कुलिश एवं गदा आदि आयुधों को धारण करने वाले, महाभयानक तीक्ष्ण दाँतों वाले और मणियों से निर्मित विविध आभूषणों वाले श्रीनृसिंह का मैं भजन करता हूँ ॥ ५० ॥

पुरश्चरणादिकथनम्

**ऋतुलक्षं जपेदेनं घृतेन जुहुयात्ततः ।**
**तत्सहस्रं समिद्धेऽग्नौ तोषयेद्द्रविणैर्गुरुम् ॥ ५१ ॥**
**अर्चाप्रागीरिते पीठे मूर्त्तिं मूलेन कल्पयेत् ।**
**अङ्गावृतेर्बहिश्चक्रं शङ्खं पाशाङ्कुशौ पुनः ॥ ५२ ॥**
**वज्रं कौमोदकीं खड्गखेटौ पत्रेषु पूजयेत् ।**
**इन्द्राद्यानेतदस्त्राणि पूजयेद् बाह्यतः सुधीः ॥ ५३ ॥**

ऋतुलक्षं षड्लक्षम् । तत्सहस्रं षट्सहस्रम् ॥ ५१-५३ ॥

इस षडक्षर नृसिंह मन्त्र का छः लाख जप करे और उतने ही सहस्र समिद्ध अग्नि में होम करे, अनन्तर दक्षिणा द्वारा गुरु को संतुष्ट करे ॥ ५१ ॥

पूर्वोक्त कहे गये पीठ पर मूल मन्त्र से मूर्त्ति की कल्पना कर उसमें श्री नृसिंह का आवाहन कर पूजा करे । प्रथम अङ्गावरण की पूजा करे ॥ ५२ ॥

उसके बाद बाहर अष्टपत्रों पर चक्र, शङ्ख, पाश, अंकुश, वज्र, कौमोदकी खड्ग और खेट की पूजा करे । पुनः उसके बाहर इन्द्रादि दिक्पालों की उसके भी बाहर उनके वज्रादि अस्त्रों की पूजा करे ॥ ५३ ॥

**एवं कृत्वा पुरश्चर्यां मन्त्रेणाऽनेन मन्त्रवित् ।**
**प्रयोगान् कल्पनिर्दिष्टान् कुर्यात् स्वस्य परस्य च ॥ ५४ ॥**

**एवं कृत्वा पुरश्चर्यामिति । अत्र सर्वमन्त्राणां साधारणपुरश्चरणविधानमुच्यते । तत्र पुरश्चरणशब्दार्थो वायवीयसंहितायाम्—**

साधनं मूलमन्त्रस्य पुरश्चरणमुच्यते ।
पुरतश्चरणीयत्वाद्विनियोगाख्यकर्मणाम् ॥
पुरतो विनियोगस्य चरणाद्वा तथोदितम् ॥ इति ।

अगस्तिसंहितायामपि—अथ वक्ष्ये विधानानि पौरश्चरणिके विधौ ।
विना न येन सिद्धः स्यान्मन्त्रो वर्षशतैरपि ॥
तत् पुरश्चरणं नाम मन्त्रसिद्ध्यर्थमात्मनः ।
यथोक्तं नियमं कृत्वा स्वकल्पोक्तजपस्य हि ॥
करणं द्विजयागान्तं प्रोक्तं देशिकासत्तमैः ॥ इति ॥

मन्त्रतन्त्रप्रकाशेऽपि—धर्मार्थकाममोक्षेषु शास्त्रमार्गेण योजनम् ।
सिद्धमन्त्रस्य संप्रोक्तो विनियोगो विचक्षणैः ॥
पुरश्चरणपूर्वोऽसौ विनियोगो मनोर्मतः ।
फलाय मन्त्रसेवाय राजसेवा यथा तथा ॥
चरणात्पूर्वमेवाऽसौ पुरश्चरणमुच्यते ॥ इति ॥

तथा— सितैकविधहेमन्तशाल्यन्नं स्वीयसञ्चितम् ॥
अशूद्रावहतं पद्भ्यामनुत्तोल्य च यद्धतम् ।
दधि क्षीरं घृतं गव्यं ऐक्षवं गुडवर्जितम् ॥
तिलाश्चैव सिता मुद्राः कन्दः केमुकवर्जितः ।
नारिकेलफलं चैव कदलं लवली तथा ॥
आम्रमामलकं चैव पनसं च हरीतकी ।
व्रतान्तरे प्रशस्तं च हविष्यं मन्यते बुधः ॥
अवैष्णवमसत्यं च यदशस्तं व्रतान्तरे ।
त्याज्यमेवात्र तत्सर्वं यदीच्छेत् सिद्धिमात्मनः ॥
क्षारं च लवणं मांसं गृञ्जनं कांस्यभोजनम् ।
माषाढकीमसूरांश्च कोद्रवांश्चणकानपि ॥

ताम्बूलं च द्विभुक्तं च दुःसंवासं (भाषं) प्रमत्तताम् ।
श्रुतिस्मृतिविरुद्धं च जपं रात्रौ च वर्जयेत् ॥ इति ॥

तथा— मनः संहरणं शौचं मौनं मन्त्रार्थचिन्तनम् ।
अव्यग्रत्वमनिर्वेदो जपसम्पत्तिहेतवः ॥ इति ॥

तथा— भूशया ब्रह्मचारित्वं मौनं चर्यानसूयिता ।
नित्यं त्रिषवणस्नानं क्षुद्रकर्मविवर्जनम् ॥
नित्यपूजा नित्यदानं देवतास्तुतिकीर्त्तनम् ।
नैमित्तिकार्चनं चैव विश्वासो गुरुदेवयोः ॥
जपनिष्ठा द्वादशैते धर्माः स्युर्मन्त्रसिद्धिदाः । इति ॥

तथा— स्त्रीशूद्रपतितव्रात्यनास्तिकोच्छिष्टभाषणम् ।
असत्यभाषणं जिह्मभाषणं परिवर्जयेत् ॥
सत्यैरपि न भाषेत जपहोमार्चनादिषु ।
असद्भाषणमत्यर्थं वर्जयेदन्यपूजनम् ॥
वाङ्मनः कर्मभिर्नित्यं निस्पृहो पतितादिषु ।
वर्जयेद् गीतवाद्यादिश्रवणं नृत्यदर्शनम् ॥
ताम्बूलं गन्धलेपं च पुष्पधारणमेव च ।
मैथुनं तत्कथालापं तद्गोष्ठीः परिवर्जयेत् ॥
कौटिल्यं क्षौरमभ्यङ्गमनिवेदितभोजनम् ।
असङ्कल्पितकृत्यं च वर्जयेन् मर्दनादिकम् ॥
त्यजेदुष्णोदकस्नानं सुगन्धामलकादिकम् ।
शिरोऽङ्ग पञ्चगव्येन पावयेद्बहिरन्तरम् ॥
स्नायाच्च पञ्चगव्येन केवलामलकेन वा ।
शक्तौ त्रिषवणस्नानमन्यथा सकृदाचरेत् ॥ इति ॥

तथा— अपवित्रकरो नग्नः शिरसि प्रावृतोऽपि वा ।
प्रलपन् वा जपेद्यावत् तावन्निष्फलमुच्यते ॥
सकृदुच्चरिते शब्दे प्रणवं समुदीरयेत् ।
प्रोक्ते पामरशब्देऽपि प्राणायामं सकृच्चरेत् ॥
बहुप्रलापे चावश्यं न्यस्याऽङ्गानि ततो जपेत् ।
क्षुतेऽप्येवं तथाऽस्पृश्यस्थानानां स्पर्शने तथा ॥ इति ।

वायवीयसंहितायामपि—

उष्णीषी कञ्चुकी नग्नो मुक्तकेशोऽङ्गनावृतः ।
अपवित्रकरोऽशुद्धः प्रलपन्न जपेत् क्वचित् ॥
असंवृतौ करौ कृत्वा शिरसा प्रावृतोऽपि वा ।
चिन्ताव्याकुलचित्तो वा क्रुद्धो भ्रान्तः क्षुधान्वितः ॥
अनासनः शयानो वा गच्छन्नुत्थित एव वा ।
रथ्यायामशिवस्थाने न जपेत्तिमिरान्तरे ॥
उपानद्गूढपादो वा यानशय्यागतस्तथा ।

प्रसार्य न जपेत् पादावुत्कटासन एव वा ॥
पतितानामन्त्यजानां दर्शने भाषिते श्रुते ।
क्षुतेऽधोवायुगमने जृम्भणे जपमुत्सृजेत् ॥
प्राप्तावाचम्य चैतेषां प्राणायामं षडङ्गकम् ।
कृत्वा सम्यग् जपेच्छेषं यद्वा सूर्यादिदर्शनम् ॥
मार्जारं कुक्कुटं क्रौञ्चं श्वादं गृध्रं खरं कपिम् ।
दृष्ट्वाऽऽचम्य चरेत्कर्म स्पृष्ट्वा स्नानं विधीयते ॥
एवमादींश्च नियमान् पुरश्चरणकृच्चरेत् ॥ इति ॥
क्रोधं मदं क्षुतं त्रीणि निष्ठीवनविजृम्भणे ।
दर्शनं स्वस्य नीचानां वर्जयेज्जपकर्मणि ॥
आचामेत् सम्भवे त्वेषां स्मरेद्वा मां त्वया सह ।
ज्योतींषि च प्रपश्येद्वा कुर्याद्वा प्राणसंयमम् ॥ इति ॥
एवमुक्तविधानेन विलम्बत्वरितं विना ।
उक्तसंख्याजपं कुर्यात् पुरश्चरणसिद्धये ॥
देवतागुरुमन्त्राणामैक्यं सम्भावयन्धिया ।
जपेदेकमनाः प्रातःकालान् मध्यन्दिनावधि ॥
जपाङ्गानां दशांशेन विधेयः सिद्धिमिच्छता ।
यत्संख्यायां समारब्धं तत्कर्त्तव्यमहर्निशम् ॥
यदि न्यूनाधिकं कुर्याद् व्रतभ्रष्टो भवेन्नरः ।
प्रजपेदुक्तसंख्यायाश्चतुर्गुणजपं कलौ ॥ इति ॥

अन्यत्रापि— कृते जपस्तु कल्पोक्तस्त्रेतायां द्विगुणो जपः ।
द्वापरे त्रिगुणः प्रोक्तश्चतुर्गुणजपः कलौ ॥ इति ॥

मन्त्रतन्त्रप्रकाशे नारायणाष्टाक्षरे—

जपेन्निरन्तरं विद्वानष्टलक्षाण्यतन्द्रितः ।
मन्त्रसिद्धिरियं प्रोक्ता युगे त्वाद्ये मनीषिभिः ॥
द्वितीये द्विगुणा तस्मात्तत्तोये त्रिगुणा तु सा ।
कलौ चतुर्गुणा प्रोक्ता मुनिभिर्नारदादिभिः ॥ इति ॥
संख्यापूर्त्तौ निजैर्द्रव्यैर्जपसंख्यादशांशतः ।
यथोक्तकुण्डे जुहुयाद्यथाविधि समाहितः ॥
अथवा प्रत्यहं जप्त्वा जुहुयात्तद्दशांशतः ।
ततो होमदशांशं तु जले सम्पूज्य देवताम् ॥
तर्पयामीति मन्त्रान्ते प्रोक्त्वाऽद्भिर्मूर्ध्नि तर्पयेत् ।
स्वाभिषेकाघमर्षौ च सूर्यार्घ्यं जलपानकम् ॥
प्रणामं मन्त्रतः कुर्यात् पूर्वपूर्वदशांशतः ।
तदन्ते महतीं पूजां कुर्याद् ब्राह्मणभोजनम् ॥
गुरुं सन्तोषयेदेवं मन्त्राः सिध्यन्ति मन्त्रिणः ।
इत्थं पुरश्चरणतः प्रसन्ना देवता भवेत् ॥
दशाङ्गोपासनं भक्त्या पुरश्चरणमुच्यते ।

जपो होमस्तर्पणं च पूजा ब्राह्मणभोजनम् ॥
पूर्वपूर्वदशांशेन कुर्यात्पञ्चाङ्गसंयुतम् ।
यद्यदङ्गं विहीयेत तत्संख्याद्विगुणो जपः ॥
कर्त्तव्यश्चाऽङ्गसिद्ध्यर्थं तदशक्तेन भक्तितः । इति ॥

मन्त्रतन्त्रप्रकाशेऽपि—असम्भवे तु होमस्य होमात् स्याद् द्विगुणो जपः । इति ॥

अन्यत्रापि— होमकर्मण्यशक्तानां विप्राणां द्विगुणो जपः ।
इतरेषां तु वर्णानां त्रिगुणादिः समीरितः ॥ इति ॥
एकमङ्गं विहीयेत ततो नेष्टमवाप्नुयात् ।
अङ्गहीनं भवेद्यद्यत्तत्रेष्टार्थसाधकम् ॥
सर्वथा भोजयेद्विप्रान् कृतसाङ्गत्वसिद्धये ।
विप्राराधनमात्रेण व्यङ्गं साङ्गं भवेत् सदा ॥
न्यूनातिरिक्तकर्माणि न फलन्ति मनोरथान् ।
तान्येव पूर्णतां यान्ति समस्तानि कृतानि च ॥
अतो यत्नेन विदुषो भोजयेत् सर्वकर्मसु ।
यानि यान्यपि कर्माणि हीयन्ते द्विजभोजनैः ।
निरर्थकानि तानि स्युर्बीजान्यूषरगाणि च ॥ इति ॥

कुलप्रकाशतन्त्रेऽपि—

संसारे दुःखभूयिष्ठे यदीच्छेत् सिद्धिमात्मनः ।
पञ्चाङ्गोपासनेनैव मन्त्रजापी सुखं व्रजेत् ॥
पूजा त्रैकालिकी नित्यं जपस्तर्पणमेव च ।
होमो ब्राह्मणभुक्तिश्च पुरश्चरणमुच्यते ॥
यद्यदङ्गं विहीयेत तत्संख्याद्विगुणं जपम् ।
कुर्वीत त्रिचतुःपञ्चसंख्यया साधकः प्रिये ॥
कुर्वीत साङ्गसिद्ध्यर्थं तदशक्तेन भक्तितः ।
एकमङ्गं विहीयेत मन्त्रान्नेष्टमवाप्नुयात् ॥
अन्नैश्चतुर्विधैर्देवि पदार्थैः षड्रसान्वितैः ।
सुभोजितेषु विप्रेषु सर्वं हि सफलं भवेत् ॥
सम्यक्सिद्धैकमन्त्रस्य पञ्चाङ्गोपासनेन हि ।
सर्वे मन्त्राश्च सिध्यन्ति तत्प्रभावात् कुलेश्वरि ॥ इति ॥

अन्यत्र विशेषः—

अशक्तानां होमे निगमरसनागेन्द्रगुणितो
जपः कार्यश्चेति द्विजनृपविशामाहुरपरे ।
स होमश्चेदेषां सम इह जपो होमरहितो
य उक्तो वर्णानां स खलु विहितस्तच्चलदृशाम् ॥

यं वर्णमाश्रितो यः शूद्रः स च तन्नतभ्रुवां विहितम् ।
विदधीत जपं विधिवच्छ्रद्धावान् भक्तिभारनम्रतनुः ॥ इति ॥

अथवाऽन्यप्रकारेण पुरश्चरणमुच्यते ।
ग्रहणेऽर्कस्य चेन्दोर्वा शुचिः पूर्वमुपोषितः ॥
नद्यां समुद्रगामिन्यां नाभिमात्रेऽम्भसि स्थितः ।
ग्रहणादि तु मोक्षान्तं जपेन्मन्त्रं समाहितः ॥
अनन्तरं तद्दशांशक्रमाद्धोमादिकं चरेत् ।
तदन्ते मन्त्रसिद्ध्यर्थं गुरुं सम्पूज्य तोषयेत् ॥
ततश्च मन्त्रसिद्धिः स्याद् देवता च प्रसीदति ।
अथवा देवतारूपं गुरुं भक्त्या प्रतोषयेत् ॥
पुरश्चरणहीनोऽपि मन्त्रः सिद्धेन्न संशयः ।
एवं साधितमन्त्रस्तु काम्यकर्माण्यथाचरेत् ॥ इति ॥

अन्यत्रापि— उपदेशस्य सामर्थ्याच्छ्रीगुरोश्च प्रसादतः ।
मन्त्रप्रभावाद्भक्त्या च मन्त्रसिद्धिः प्रजायते ॥
सिद्धमन्त्राद् गुरोर्लब्ध्वा मन्त्रसिद्धिं च भावयेत् ।
पूर्वजन्मकृताभ्यासान् मन्त्रः शीघ्रेण सिद्धिदः ॥ इति ॥

अन्यत्र तु— त्रिकालं गन्धपुष्पाद्यैर्याऽर्च्यते देवता निशि ।
पुरश्चरणकृत्येन विनैवाऽसौ प्रसीदति ॥ इति ॥

तथा वैशम्पायनसंहितायाम्—पुरश्चरणसम्पन्नो मन्त्रो हि फलदायकः ।
किं होमैः किं जपैश्चैव किं मन्त्रन्यासविस्तरैः ॥
रहस्यानां च मन्त्राणां यदि न स्यात् पुरस्क्रिया ।
पुरस्क्रिया तु मन्त्राणां प्रधानं बीजमुच्यते ॥
व्याधिग्रस्तो यथा देही सर्वकर्मसु न क्षमः ।
पुरश्चरणहीनोऽयं तथा मन्त्रोऽपि कीर्त्तितः ॥
येषां जपे च होमे च संख्या नोक्ता मनीषिभिः ।
तेषामष्टसहस्राणि संख्योक्ता जपहोमयोः ॥
यस्मिंश्च निगदेनैव मन्त्रे संख्याऽभिधीयते ।
तत्र सर्वत्र मन्त्राणां संख्यावृद्धिर्युगक्रमात् ॥
कल्पोक्ता च कृते संख्या त्रेतायां द्विगुणा भवेत् ।
द्वापरे त्रिगुणा प्रोक्ता कलौ संख्या चतुर्गुणा ॥
अनुक्ते तु हविर्द्रव्ये तिलाज्यं हविरुच्यते ।
शाकं मूलं फलं भैक्ष्यं हविष्यं सक्तवोऽथवा ॥
अथवा क्षीरमात्रं स्यात् पुरश्चर्त्तुश्च वृत्तये ।
न सेवेत स्त्रियं मांसं मधुं वा मन्त्रसाधकः ॥
एतानि सेवमानस्य न सिध्यति पुरस्क्रिया ।
स्त्रियं शूद्रं न भाषेत पुरश्चरणकृन्नरः ॥
जपं च प्रातरारभ्य कुर्यान् मध्यन्दिनावधि ।
असत्यं नाभिभाषेत नेन्द्रियाणि प्रलोभयेत् ॥
नैरन्तर्यविधिः प्रोक्तो न दिनं व्यतिलङ्घयेत् ।
दिवसातिक्रमात् पुंसो मन्त्रसिद्धिर्भवेन् न हि ॥

शक्तिहीनश्च यो मन्त्रो न सिध्यति कदाचन ।
यावत्संख्यं जपेदह्नि पूर्वस्मिंस्तावदेव तु ॥
दिनान्तरेऽपि प्रजपेदन्यथा सिद्धिरोधकृत् ।
शिवस्य सन्निधाने तु सूर्याग्न्योश्च गुरोरपि ॥
दीपस्य ज्वलितस्यापि जपकर्म प्रशस्यते ।
शयनं कुशशय्यायां विन्यसेच्छुचिवस्त्रधृक् ॥
तद्वासः क्षालयेन् नित्यमन्यथा विघ्नभाग्भवेत् ।
स्नानं त्रिषवणं प्रोक्तमशक्त्या द्विः सकृत्तु वा ॥
अस्नातस्य फलं नास्ति न चाऽतर्पयतः पितृन् ।
नाऽप्यतर्पयतो देवान् नाऽसत्यमपि जल्पतः ॥
नैकवासा जपेन् मन्त्रं बहुवस्त्रावृतोऽपि वा ।
विपर्यासं न कुर्याच्च कदाचिदपि मोहतः ॥
उपर्यधो बहिर्वस्त्रे पुरश्चरणकृद्बुधः ।
विनियोगविधाने तु भवेदनियमः क्वचित् ॥
पुरश्चरणकार्येषु वर्जयेत्तं प्रयत्नतः ।
कृत्वा मन्त्रजपं मन्त्री पुरस्काराय संयतः ॥
दशांशं जुहुयादग्नौ यथोक्तविधिना बुधः ।
यद्वा जपचतुर्थांशं स्वाहान्तं मन्त्रमुच्चरन् ॥
ततो होमदशांशं तु स्वाहान्तं तर्पयेज्जलैः ।
तर्पणस्य दशांशेन नमोऽन्तं मन्त्रमुद्धरेत् ॥
अभिषिञ्चेत् स्वमूर्द्धानं जलैः कुम्भाख्यमुद्रया ।
एवंविधविधानेन कृतमन्त्रपुरस्क्रियः ॥
विनियोगसमारभ्यं यथायथमथाचरेत् । इति ।

गोपालमन्त्रे विशेषस्तर्पणे तत्रैवोक्तः—

इह गोपालमन्त्राणां तर्पणं होमसंख्यया ।
समं ज्ञेयं तु सर्वेषामित्यागमविदो विदुः ॥ इति ॥

अन्यत्रापि—तर्पयेत्तावदन्येषां मनूनां हुतसंख्यया । तर्पणं विहितं नित्यम् । इति॥

अथारब्धपुरश्चरणमध्ये सूतकादिकं चेन् निपतति तथापि सङ्कल्पितस्य पुरश्चरणस्य समाप्तिरेव कर्त्तव्या । तथा च विष्णुः—

व्रतयज्ञविवाहेषु श्राद्धे होमेऽर्चने जपे ।
प्रारब्धे सूतकं न स्यादनारब्धे तु सूतकम् ॥ इति ।

सूतकमित्युभयं प्रारम्भश्च तत्रैवोक्तः—

प्रारम्भो वरणं यज्ञे सङ्कल्पो व्रतजापयोः ।
नान्दीमुखं विवाहादौ श्राद्धे पाकपरिक्रिया ॥ इति ॥

मन्त्रतन्त्रप्रकाशे पुरश्चरणे सर्वनियमानुक्त्वा—

शक्तश्चेत्सर्वमेवैतदशक्तः शक्तितो जपेत् ।

न दोषो मानसे जाप्ये सर्वदेशेऽपि सर्वदा ॥
जपनिष्ठो द्विजः श्रेष्ठः सर्वयज्ञफलं लभेत् ।
सर्वेषामेव यज्ञानां जपयज्ञः प्रशस्यते ॥
अहिंसया हि भूतानां जायतेऽसौ महाफलः ।
यज्ञानां जपयज्ञोऽहमित्याह भगवान् हरिः ॥
जपेनैव तु संसिध्येद् ब्राह्मणो नात्र संशयः ।
कुर्यादन्यन्न वा कुर्यान् मैत्रो ब्राह्मण उच्यते ॥
इत्याहुर्मुनयः शान्ता जपसिद्धा अकिञ्चनाः । इति ।

पद्मनाभीयेऽपि— यावन्तः कर्मयज्ञाः स्युः प्रदीप्तानि तपांसि च ।
सर्वे ते जपयज्ञस्य कलां नाऽर्हन्ति षोडशीम् ॥
जपेन देवता नित्यं स्तूयमाना प्रसीदति ।
प्रसन्ना विपुलान् भोगान् दद्यान् मुक्तिं च शाश्वतीम् ॥ इति ॥

भृगुसंहितायामपि— ये पाकयज्ञाश्चत्वारो विधियज्ञसमन्विताः ।
सर्वे ते जपयज्ञस्य कलां नाऽर्हन्ति षोडशीम् ॥इति ॥

नारायणीये तु— जपाशक्तस्य सर्वतः ।
मूलमन्त्राद्दशांशं स्यादङ्गादीनां जपादिकम् ।
जपात् सशक्तिर्मन्त्रः स्यात्कामदा मन्त्रदेवता ॥ इति ॥

जपलक्षणमुक्तं वायवीयसंहितायाम्—

जपः स्यादक्षरावृत्तिः स उच्चोपांशुमानसः ।
य उच्चनीचस्वरितैः शब्दैः स्पष्टपदाक्षरैः ॥
मन्त्रमुच्चारयेद्वाचा जपयज्ञः स वाचिकः ।
शनैरुच्चारयेन् मन्त्रमीषदोष्ठौ प्रचालयेत् ॥
किञ्चिच्छ्रवणयोग्यः स्यादुपांशुः स जपः स्मृतः ।
धिया यदक्षरश्रेणीं वर्णस्वरपदात्मिकाम् ॥
उच्चरेदर्थसंस्मृत्या स उक्तो मानसो जपः ।
उच्चैर्जपो विशिष्टिः स्याद्यज्ञादेर्दशभिर्गुणैः ॥
उपांशुः स्याच्छतगुणः सहस्रो मानसः स्मृतः । इति ।

भृगुसंहितायामपि—

विधियज्ञाज्जपयज्ञो विशिष्टो दशभिर्गणैः ।
उपांशुः स्याच्छतगुणः सहस्रो मानसः स्मृतः ॥ इति ।

अन्यत्र तु— न कम्पयेच्छिरो ग्रीवां जिह्वामोष्ठं न चालयेत् ।
मनसा चिन्तितं बीजं दन्तघातं न कारयेत् ॥ इति ॥

आचार्या अपि— नातिद्रुतं नातिविलम्बितं च । इति ।

मन्त्रतन्त्रप्रकाशे तु विशेषः—

अपि चान्यं प्रवक्ष्यामि मन्त्रसिद्धिकरं परम् ।

मन्त्रसाधकयोरैक्यं दुर्लभं भुवि मानवैः ॥
उक्तं साङ्कर्षणे तन्त्रे शिवेनाऽखिलवेदिना ।
आनन्दाख्ये पञ्चरात्रे शुक्राय कवये पुरा ॥
संस्कृतं पूजितं मन्त्रं दत्त्वा शिष्याय देशिकः ।
कुर्यादथ तयोरैक्यं शास्त्रदृष्टेन वर्त्मना ॥
मन्त्रं विदर्भयित्वा तु नामवर्णैर्यथाक्रमम् ।
आद्यन्ते सकलं नाम ततः प्रणवमालिखेत् ॥
स्वराः पत्रेषु संलेख्या ध्यायेत्तानमृतात्मकान् ।
भूर्जे रोचनगन्धाद्यैः पद्ममध्ये सुशोभने ॥
मृदा पवित्रयाऽऽवेष्ट्य तत् पुनः सिक्थकेन च ।
निक्षिपेन्मधुरे तत् तु मृण्मये लघुभाजने ॥
क्षीरपूर्णे नवे कुम्भे तत् क्षिपेल्लघुभाजनम् ।
धारयेद् देशिकः कुम्भमग्निकुण्डसमीपतः ॥
मन्त्रसाधकयोरैक्यसिद्ध्यर्थं जुहुयात्ततः ।
मूलमन्त्रेण मन्त्रज्ञः सहस्रं शतमेव वा ॥
कुम्भे सम्पातयेच्चैव मधुराणां त्रयं शुभम् ।
निधाय निक्षिपेत् कुम्भं शनैस्तं महदम्भसि ॥
मन्त्रसाधकयोरैक्यं भवेदेव फलप्रदम् ।
एतद्यो न विजानाति नासौ देशिक उच्यते ॥
रहस्यं कथितं चैतन् न वदेद्यस्य कस्य चित् ।
उत्तमाय तु शिष्याय प्रियपुत्राय वा वदेत् ॥ इति ॥ ५४ ॥

मन्त्रवेत्ता साधक इस प्रकार इस मन्त्र से पुरश्चरण सम्पन्न कर षडक्षर कल्प में कहे गये प्रयोगों को अपने लिये अथवा अन्य के लिये प्रयुक्त करे ॥ ५४ ॥

होमफलानि

**रक्तोत्पलैस्त्रिमध्वक्तैः सहस्रं जुहुयान्नवैः ।**
**नित्यं मासाद्भवेदिष्टं वत्सराद्धनधान्यवान् ॥ ५५ ॥**
**रक्तैस्त्रिमधुरोपेतैः पद्मैर्भानुसहस्रकम् ।**
**जुहुयान्महतीं लक्ष्मीमायुर्वश्यमवाप्नुयात् ॥ ५६ ॥**

रक्तोत्पलै रक्तकुवलयैः । नवैरपर्युषितैः । रक्तैः पद्मैः कोकनदैः ॥५५-५६ ॥

यदि साधक त्रिमधुर मिश्रित ताजे नवीन खिले हुये रक्त वर्ण के कमलों से सहस्र संख्या में नित्य होम करे तो एक महीने के भीतर इष्ट प्राप्ति होती है और एक वर्ष के भीतर विपुल धन और धान्य संप्राप्त हो जाता है ॥ ५५ ॥

यदि साधक त्रिमधुर मिश्रित रक्त वर्ण के कमलों से बारह हजार समिद्धतम अग्नि में होम करे तो महती लक्ष्मी, महान् आयु और महान् वशीकरणता प्राप्त हो जाती है ॥ ५६ ॥

लाजांस्त्रिमधुरोपेतान् प्रातःकालेषु जुह्वतः ।
कन्यासिद्धिर्भवेत्पक्षात् कन्यायाः सद्वरो भवेत् ॥ ५७ ॥
दूर्वाः पयोघृताभ्यक्ता दशोत्तरशतं सुधीः ।
अन्वहं जुहुयात्सम्यग्दीर्घमायुरवाप्नुयात् ॥ ५८ ॥
तस्य रोगाः प्रणश्यन्ति कृत्याद्रोहादिभिः सह ।
सपञ्चगव्यं जुहुयादपामार्गस्य मञ्जरीम् ॥ ५९ ॥
नित्यं सहस्रमानेन सप्ताहं विजितेन्द्रियः ।
होमोऽयं सर्वथा भूतकृत्यारोगान् प्रणाशयेत् ॥ ६० ॥
सतिलैराज्यपामार्गहविराज्यैर्यथाक्रमम् ।
द्विसहस्रं प्रजुहुयात् क्षुद्ररोगग्रहान् जयेत् ॥ ६१ ॥
पयोऽक्तैरमृताखण्डैस्त्रिसहस्रं चतुर्दिनम् ।
अनेन विहितो होमो ग्रहज्वरविनाशनः ॥ ६२ ॥
नृसिंहशक्तिबीजे द्वे शूले तारगते लिखेत् ।
तत्र ग्रहार्त्तं संस्थाप्य जपेन्मन्त्रं षडक्षरम् ।
आविश्य सद्यस्तं मुञ्चेद् ग्रहः क्रन्दन् भयाकुलः ॥ ६३ ॥

अमृता गुडूची । तारगते शूले इति प्रणवस्यादौ यच्छूलाकारं तत्र । जपेन्मन्त्रमिति तदुपर्युपवेशितं ग्रहार्त्तं स्पृशन्नित्यर्थः ॥ ५७-६३ ॥

नित्य प्रातःकाल त्रिमधुर मिश्रित लावा का इस मन्त्र से होम करने पर साधक को पक्ष के भीतर उत्तम कन्या प्राप्त हो जाती है, यदि कन्या इस प्रकार प्रयोग करे तो उसे उत्तम वर प्राप्त हो जाता है ॥ ५७ ॥

दूध एवं घृत से अभिषिक्त दूर्वा द्वारा एक सौ दश संख्या में नित्य प्रति होम करे तो दीर्घ आयु की प्राप्ति होती है । कृत्या तथा द्रोहादि के साथ उसके समस्त रोग एवं शोक नष्ट हो जाते हैं ॥ ५८-५९ ॥

पञ्चगव्य मिश्रित अपामार्ग की मञ्जरी से नित्य सहस्र संख्या मात्र सात दिन पर्यन्त होम करे और इन्द्रियों को वश में रख्खे तो इस प्रकार किया गया यह होम भूत, कृत्या तथा रोगादि का विनाश करता है ॥ ५९-६० ॥

तिल विमिश्रित घृत, अपामार्ग और हवि युक्त घृत से क्रमशः एक एक द्वारा दो सहस्र होम करे तो क्षुद्र रोग और ग्रहों पर विजय प्राप्त हो जाती है ॥ ६१ ॥

दूध से अभिषिक्त गुडूची के टुकड़ों से तीन सहस्र प्रतिदिन के क्रम से ४ दिन पर्यन्त होम करे तो यह होम ग्रह और ज्वर को विनष्ट कर देता है ॥ ६२ ॥

प्रणव के शूलाकार भाग में दो नृसिंह का बीज लिखे, तदनन्तर साधक उस पर ग्रह बाधा वाले रोगी को बिठावे और उसका स्पर्श करते हुये इस षडक्षर

मन्त्र का जप करे तो उसमें प्रविष्ट रहने वाला ग्रह भय से चिल्लाकर रोगी को छोड़ देता है ॥ ६३ ॥

### नृसिंहयन्त्रम्

**आलिख्याऽग्निपुरद्वयं तदुदरे शक्तिं ससाध्यां लिखेत्**
**षट्कोणेषु षडक्षराण्यथ मनोः किञ्जल्कसंस्थान् स्वरान् ।**
**पत्रेष्वष्टसु मन्त्रराजविहितान् वर्णान् क्रमाद्वेदशः**
**काद्यर्णैः पुनरावृत्तं क्षितिपुरे कोणेषु चिन्तामणिम् ॥ ६४ ॥**

### यन्त्रधारणफलम्

**नारसिंहमिदं यन्त्रं लिखितं भूर्जपत्रके ।**
**विधृतं शिरसा शीर्षरोगभूतज्वरान् हरेत् ॥ ६५ ॥**
**बहुनाऽत्र किमुक्तेन मन्त्रैरेतैरुदीरितैः ।**
**समो नास्ति मनुः कश्चिच्छापानुग्रहकारकः ॥ ६६ ॥**

**यन्त्रमाह आलिख्येति । अग्निपुरद्वयं परस्परव्यतिभिन्नम् । मनोः षडक्षर नृसिंहमन्त्रस्य । चिन्तामणिं नारसिंहमिति सामानाधिकरण्यम् । तेन नृसिंहस्यैकाक्षरं भूर्जपत्रके लिखितमिदं यन्त्रं हरेदिति सम्बन्धः ।**

**तदुक्तं नृसिंहकल्पे—**

**षट्कोणबीजेन विशिष्टकर्णिकं शक्त्यर्णयुक्मूलचतुष्कलाष्टकम् ।**
**वृतं जनन्या जगतीगृहास्त्रके यन्त्रं सचिन्तामणिकं विचिन्तयेत् ॥**

**आं ह्रीँ क्ष्रौं क्रों च हुं फट् च शक्तिमन्त्रः कलाष्टकम् । अचां युग्मानि चिन्तार्णो नृसिंहैकाक्षरो मनुः ॥ इति ॥ ६४-६६ ॥**

दो परस्पर व्यतिभिन्न षट्कोण का निर्माण करे, उसके मध्य में साध्य युक्त ह्रीँ मन्त्र लिखे तथा षट्कोणों पर षडक्षर मन्त्र लिखे । केशरों पर स्वर के १६ अक्षरों को लिखे और अष्टपत्रों पर मन्त्रराज में कहे गये (द्र. १६. २) चार अक्षरों के क्रम से समस्त अक्षरों को लिखे । पुनः भूपुर में ककारादि क्षान्त वर्णों को लिख कर घेर देवे । कोणों में नृसिंह के चिन्तामणि मन्त्र को (क्ष्रौँ) लिख देवे (चिन्तामणि मन्त्र द्र. १६. ३९) ॥ ६४ ॥

भोजपत्र पर लिखा हुआ यह नृसिंह यन्त्र यदि अपने सिर पर धारण किया जाय तो शिर के समस्त रोगों को किं बहुना भूतों और ज्वरों को भी विनष्ट कर देता है ॥ ६५ ॥

इस विषय में बहुत क्या कहा जाय? जितने भी मन्त्र कहे गये हैं वे सभी इस मन्त्र की समता नहीं कर सकते । क्योंकि इसके समान शाप तथा अनुग्रह करने वाला कोई अन्य मन्त्र नहीं है ॥ ६६ ॥

सुदर्शनमन्त्रः

तारो भृगुर्वियद्भूयस्तदाद्यं वह्निदीर्घयुक् ।
पावकः कवचास्त्रान्तो मनुः सप्ताक्षरः स्मृतः ॥ ६७ ॥

ऋष्यादिकथनम्

अहिर्बुध्न्यो मुनिः प्रोक्तश्छन्दोऽनुष्टुबुदाहृतम् ।
देवता मुनिभिः प्रोक्ता चक्ररूपो हरिः स्वयम् ॥ ६८ ॥

तापनीयोक्तषडङ्गमन्त्राः

आचक्राय हृदाख्यातं विचक्राय शिरः स्मृतम् ।
सुचक्राय शिखा प्रोक्ता धीचक्राय तनुच्छदम् ॥ ६९ ॥
सञ्चक्राय स्मृतं नेत्रं ज्वालाचक्राय तत्परम् ।
षडङ्गमन्त्राः प्रत्येकं द्विठान्ता जातिसंयुताः ॥ ७० ॥

वाराहयन्त्रे सुदर्शनमन्त्रस्योद्दिष्टत्वात्तमाह तार इति । तारः प्रणवः । भृगुः स । वियत् हः । तदाद्यं सः । वह्नी रेफः । दीर्घ आकारः तद्युक् तेन स्रा । पावको रेफः । कवचं च हुँ । अस्त्रं फट् । सं बीजम् । हुँ शक्तिः । तत् परमस्त्रम् । द्विठान्ताः स्वाहान्ताः ॥ ६७-७० ॥

अब वाराह यन्त्र में कहे गये (द्र. १५. १२५) **सुदर्शन मन्त्र का उद्धार** कहते हैं—तार (प्रणव), भृगु (सकार), उसके बाद वियद् (हकार), उसके बाद सकार से मिला हुआ दीर्घरकार (स्रा), पुनः पावक र, तदनन्तर कवच (हुँ फट्)—इस प्रकार सात अक्षर वाले सुदर्शन मन्त्र का उद्धार कहा गया । इसका स्वरूप 'ॐ सहस्रार हुँ फट्' हुआ ॥ ६७ ॥

इस सुदर्शन मन्त्र के अहिर्बुध्न ऋषि हैं तथा अनुष्टुप् छन्द है । महर्षियों के द्वारा इसके देवता चक्ररूपधारी विष्णु कहे गए हैं ॥ ६८ ॥

आचक्राय स्वाहा हृदये, विचक्राय स्वाहा शिरसि, सुचक्राय स्वाहा शिखायाम्, धी चक्राय स्वाहा कवचाय हुँ, सञ्चक्राय स्वाहा नेत्रयोः, ज्वालाचक्राय स्वाहा, अस्त्राय फट्—इस प्रकार षडङ्गन्यास करे । प्रत्येक चक्र के आगे स्वाहा शब्द का प्रयोग करे । जैसा कि ऊपर के न्यास में दिखाया गया है ॥ ६९-७० ॥

दिग्बन्धनम्

ऐन्द्रीचक्रेण बध्नामि नमश्चक्राय ठद्वयम् ।
मन्त्रेणाऽनेन कुर्वीत दिशां प्रागादि बन्धनम् ॥ ७१ ॥

प्रागादिदिशामित्यनेन ऐन्द्रीचक्रेण बध्नामीत्यस्मिन् मन्त्रे ऐन्द्रीपदस्थाने आग्नेयीत्यादीनां पदानामूहः कार्य इत्युक्तं भवति । एवं दशस्वपि दिशासु । तदुक्तम्—

ऐन्द्रीं समारभ्य दिशस्त्वधस्तादन्तं समुक्त्वा क्रमशो दशानाम् ।

**चक्रेण बध्नामि नमस्तथोक्त्वा चक्राय शीर्षं च दिशां प्रबन्धः ॥ इति ॥ ७१ ॥**

इसके बाद नीचे लिखी विधि से दशों दिशाओं का दिग्बन्धन इस प्रकार करे—ऐन्द्रीं चक्रेण बध्नामि नमश्चक्राय स्वाहा, इत्यादि क्रम से चारों दिशाओं चारों कोनों तथा ऊर्ध्व एवं अधः दिग्बन्धन करे ।

**विमर्श**—मात्र ऐन्द्री के स्थान में अन्य दिशाओं का मन्त्र में विनियोग करे । (दिशाओं के नाम, ऐन्द्री, नैऋती, वारुणी, कौवेरी, कोणों के नाम आग्नेय, नैर्ऋत्य, वायव्य और ईशान हैं) ॥ ७१ ॥

**अग्निप्राकारमन्त्रः**

**त्रैलोक्यान्ते रक्षयुगं हुँ फट् स्वाहा ध्रुवादिकः ।**
**अग्निप्राकारमन्त्रोऽयं रक्षार्थं पुनरात्मनः ॥ ७२ ॥**

**त्रैलोक्यान्त इत्यत्र मन्त्रे त्रैलोक्यपदं द्वितीयान्तं ज्ञेयम् । रक्षेति क्रिया श्रवणात् ।**

**तदुक्तम्— त्रैलोक्यं रक्षरक्षेति हुँ फट्स्वाहेति चोदितः ।**
**तारादिकोऽयं मन्त्रः स्यादग्निप्राकारसंज्ञकः ॥ इति ॥ ७२ ॥**

अब **वहिनप्राकार मन्त्र** कहते हैं—आदि में प्रणव लगाकर त्रैलोक्य पद की द्वितीया विभक्ति लगावे, पुनः दो बार रक्ष शब्द का उच्चारण करे, तदनन्तर हुँ फट् स्वाहा पद कहे ।

**विमर्श**—इस प्रकार 'ॐ त्रैलोक्यं रक्ष रक्ष हुँ फट् स्वाहा' यह मन्त्र का स्वरूप हुआ । यह अग्नि प्राकार मन्त्र साधक को अपनी रक्षा के लिये कहा गया है । प्राकारका अर्थ होता है चहारदीवारी ॥ ७२ ॥

**अक्षरन्यासः**

**प्राकारं तेन कुर्वीत मन्त्रेण मनुवित्तमः ।**
**सितरक्ताञ्जनप्रख्यं तारं मूर्धनि विन्यसेत् ॥ ७३ ॥**
**अन्यानग्निनिभान्वर्णान् भ्रुवोर्मध्ये मुखे हृदि ।**
**गुह्यजानुपदद्वन्द्वसन्धिषु क्रमशो न्यसेत् ॥ ७४ ॥**

**कुर्वीतेति । मनसा अग्निप्राकारं चिन्तयन् आत्मनः प्रदक्षिणं परिभ्रमदुदकं क्षिपेदिति परमगुरवः । उक्तञ्च—**

**आत्मनः परितो वह्निप्राकारं त्राणनाय च ।**
**भूतप्रेतपिशाचेभ्यो विधाय तदनन्तरम् ॥**
**अद्भिः पुष्पाक्षतैश्चैव वह्निबीजास्त्रमन्त्रितैः ।**
**प्रक्षिपेत् परितो मन्त्री भयविघ्ननिवृत्तये ॥ इति ।**

**सितेति । अकारोकारमकाराणां क्रमेण ध्यानम् । पदद्वन्द्वसन्धिषु अन्त्यवर्णन्यासः ॥ ७३-७४ ॥**

मन्त्रवेत्ता साधक अपनी रक्षा के लिये अपने चारों ओर जलती हुई अग्नि के प्राकार (घेरे) का ध्यान करते हुये जल से प्रदक्षिण क्रम द्वारा घेरा देवे । तदनन्तर वह श्वेत रक्त तथा काञ्चनवर्ण के ॐकार का ध्यान कर उसी से मूर्धा का न्यास करे ॥ ७३ ॥

पुन: अन्य अग्नि के समान 'त्रैलोक्यं रक्ष' इस मन्त्र के एक एक अक्षर से भ्रूमध्य, मुख, हृदय, गुह्य और जानु में क्रमपूर्वक न्यास करे । तत्पश्चात् शेष 'रक्ष हुँ फट् स्वाहा' के एक एक अक्षरों से दोनों पैर की छः सन्धियों में क्रमशः न्यास करे ॥ ७३-७४ ॥

ध्यानम्

**कल्पान्तार्कप्रकाशं त्रिभुवनमखिलं तेजसा पूरयन्तं**
**रक्ताक्षं पिङ्गकेशं रिपुकुलभयदं भीमदंष्ट्राट्टहासम् ।**
**चक्रं शङ्खं गदाब्जे पृथुतरमुषलं चापपाशाङ्कुशान् स्वैः**
**बिभ्राणां दोर्भिराद्यं मनसि मुररिपुं भावयेच्चक्रसंज्ञम् ॥ ७५ ॥**

**कल्पान्तेति । चापं सशरं ज्ञेयम् । तदुक्तम्—**

**दोर्भिश्चक्रदरौ गदाब्जकुलिशांश्चास्त्रं च पाशङ्कुशौ ॥ इति ।**

**अतएव पूजायां सशरं धनुरिति वक्ष्यति । आयुधध्यानं दक्षाद्यूर्ध्वाभ्यामाद्ये तदधराधराभ्यामन्य इति । अत्र ध्यानानन्तरं चक्रमुद्रां प्रदर्शयेत् ॥ ७५ ॥**

अब **सुदर्शन चक्र का ध्यान** कहते हैं—कल्पान्त सूर्य के समान जिनका प्रकाश है, जो अपने तेज से समस्त त्रिलोकी को पूर्ण कर रहे हैं, जिनके नेत्र रक्त वर्ण के और केश पिङ्गल वर्ण के हैं जिनके भयानक दंष्ट्रा का अट्टाहस समस्त शत्रुओं को भय उत्पन्न करने वाला है, जो अपने हाथों में चक्र, शङ्ख, गदा, कमल, अत्यन्त मोटा मूशल, चाप, पाश और अंकुश धारण किये हुये हैं, जो सबके आदि कारण हैं ऐसे मुर राक्षस के वधकर्त्ता जिनका नाम चक्र है उनका मैं अपने मन में ध्यान करता हूँ ॥ ७५ ॥

ध्यानम्

**अर्कलक्षं जपेन्मन्त्रं जुहुयात्तत्सहस्रकम् ।**
**तिलैः ससर्षपैः पद्मैर्बिल्वैर्दुग्धौदनैः क्रमात् ॥ ७६ ॥**
**विष्णोः सम्पूजयेत्पीठे मूर्त्तिं मूलेन कल्पयेत् ।**
**अङ्गानि पूर्वमभ्यर्च्य चक्राद्यस्त्राणि तद्बहिः ॥ ७७ ॥**
**चक्रं शङ्खं गदां पद्मं मुषलं सशरं धनुः ।**
**पाशाङ्कुशौ दलाग्रेषु लक्ष्म्याद्याः पूजयेत्ततः ॥ ७८ ॥**
**लक्ष्मीं सरस्वतीं पश्चाद्रतिं प्रीतिं ततः परम् ।**

**कीर्त्तिकान्ती तुष्टिपुष्टी सर्वा एताः स्मृता द्विशः ॥ ७९ ॥**
**पीतरक्तसितश्यामा इन्द्राद्यस्त्राणि तद्बहिः।**
**इति सिद्धे मनौ प्रोक्तप्रयोगान् कर्त्तुमर्हति ॥ ८० ॥**

होमफलानि

**आत्मनो वा परार्थं वा दृष्टादृष्टफलप्रदान्।**
**दूर्वाहोमो विधातव्यो दीर्घमायुरभीप्सता ॥ ८१ ॥**

**अर्कलक्षं द्वादशलक्षम् । क्रमात् तत्सहस्त्रं न तु प्रत्येकम् । तिलैरिति प्रत्येकं चतुर्विंशतिशतानि । विष्णोः पीठे नारायणाष्टाक्षरोक्ते । अभ्यर्च्येति केसरेष्विति शेषः । तद्बहिरिति पत्रमध्ये । सशरं धनुरित्येकम् । दलाग्रेष्विति उत्तरेण सम्बध्यते । लक्ष्म्याद्या इत्युत्तरपटलोक्तबीजाद्याः । द्विश इति । आद्ये द्वे पीते । रतिप्रीती रक्ते । उपान्त्ये सिते । अन्त्ये श्यामे । प्रयोगान् कर्त्तुमर्हतीत्यनेनैतदुक्तं भवति । ॐ सुदर्शनाय विद्महे चक्रराजाय धीमहि तन्नश्चक्रः प्रचोदयात् । अस्य प्रयोगेषु मूलमन्त्रदशांशजप इति । केचिन् महाचक्राय धीमहीति पठन्ति । अपेक्षितार्थद्योतनिकायां तु नमश्चक्राय विद्महे सहस्रज्वालाय धीमहि तन्नो निवारितः प्रचोदयादिति गायत्री पठिता । पक्षत्रयमपि साम्प्रदायिकमेव । यथागुरूपदेशं च निर्णयः । दीर्घमायुरिति मृत्युञ्जयादित्वम् ॥ ७६-८१ ॥**

इस मन्त्र का बारह लाख जप करे । तत्पश्चात् घी युक्त तिल, घी मिश्रित कमल, घी मिश्रित विल्व तथा घी मिश्रित दूध और घी मिश्रित ओदन—इनमें प्रत्येक से २४०० की संख्या में होम करे ॥ ७६ ॥

पश्चात् विष्णुपीठ पर मूल मन्त्र से मूर्त्ति की कल्पना करते हुये उसमें चक्र का आवाहन कर पूजन करे । तदनन्तर केशरों में अङ्गों की, फिर उसके बाहर पत्र के मध्य में चक्र, शङ्ख, गदा, पद्म, मूशल, बाणयुक्त धनुष, पाश और अंकुश—इन अस्त्रों की पूजा करे । तदनन्तर पत्र के अग्रभाग में लक्ष्म्यादि की पूजा करे । लक्ष्मी, सरस्वती, रति, प्रीति, कीर्त्ति, कान्ति, तुष्टि एवं पुष्टी लक्ष्म्यादि कही गई हैं—इनमें क्रमशः दो दो के वर्ण पीत, रक्त, सित और श्याम हैं ।

इसके बाद इन्द्रादि दिक्पाल पुनः उसके बाहर उनके वज्रादि आयुधों की पूजा करे । इस प्रकार मन्त्र के सिद्ध कर लेने पर साधक कहे गये प्रयोगों के करने का अधिकारी होता है । वे प्रयोग चाहे दृष्टफल वाले हों अथवा अदृष्टफल वाले हों, चाहे अपने लिये हों या फिर चाहें दूसरों के लिये हों । दीर्घ आयु चाहने वाला इस मन्त्र से दूर्वा का होम करे ॥ ७७-८१ ॥

**श्रीकामो जुहुयात्पद्मैः फुल्लैराज्यपरिप्लुतैः।**
**मेधाकामेन होतव्यं प्रसूनैर्ब्रह्मवृक्षजैः ॥ ८२ ॥**
**दिनत्रयं यो जुहोति गुलिकाः पुरुनिर्मिताः।**
**अष्टोत्तरसहस्त्रेण स जयेन्निखिलापदः ॥ ८३ ॥**

**गव्येनाज्येन गोसिद्ध्यै जुहुयाद्दिवसत्रयम् ।**
**उदुम्बरसमिद्धोमः पुत्रदायी भवेन्नृणाम् ॥ ८४ ॥**
**प्रलयाग्निसमं चक्रं यस्य मूर्धनि चिन्तयेत् ।**
**सप्ताहाज्ज्वरमूर्च्छार्त्तो मण्डलान्मृतिमेति सः ॥ ८५ ॥**

**श्रीकाम इति श्रीबीजादित्वम् । मेधाकामेनेति वाग्भवादित्वं ज्ञेयम् । जुहोतीति । त्रिदिनमिति । चतुर्दिनं वा । 'जुहुयात्रिदिनं गुग्गुलगुलिकासहस्रकं चाष्टकं च मन्त्रितमः त्रिदिनं चतुर्दिनं वा' इत्युक्तेः । पुरुर्गुग्गुलः । निखिलापद इति । नृसिंहबीजादित्वम् । मूर्च्छार्ना भवेदिति शेषः ॥ ८२-८५ ॥**

लक्ष्मी की आकाङ्क्षा करने वाला पुरुष घी से परिप्लुत सद्यः फूले हुये कमलों से होम करे । मेधा चाहने वाले साधक को घी परिप्लुत पलाश पुष्पों से होम करना चाहिए ॥ ८२ ॥

जो गुगुल का छोटा छोटा टुकड़ा कर तीन दिन तक एक सौ आठ बार हवन करता है, वह सारी विपत्तियों से पार हो जाता है ॥ ८३ ॥

गायों की प्राप्ति के लिये गौ के घृत से तीन दिन पर्यन्त एक सौ आठ बार होम करे । इसी प्रकार गूलर की समिधा का होम मनुष्यों को पुत्र देने वाला कहा गया है ॥ ८४ ॥

साधक जिसके सिर पर प्रलयाग्नि के समान घूमते हुये चक्र का ध्यान करे, तो वह एक सप्ताह के भीतर ज्वर से मूर्च्छित हो जाता है तथा ४९ दिन के भीतर मर जाता है ॥ ८५ ॥

**अकारादिस्वरावीतं याहियाहिपदावृतम् ।**
**सकारं चिन्तयेच्छत्रोर्मूर्धन्युच्चाटमावहेत् ॥ ८६ ॥**

**अकारादीति । अकारादीनां वायुबीजयोगो ज्ञेयः । तेन यंयामित्यादि उच्चाटमावहेदिति दशाहत इति ज्ञेयम् ।**

**तदुक्तमाचार्यैः—दशाहतोऽसौ प्रतिबाध्यते रिपुः । इति ॥ ८६ ॥**

अकारादि स्वर से युक्त जो वायु बीज (यं याँ इत्यादि) उससे घिरे हुये जो याहि याहि पद उससे आवृत सकार (=वायसवर्ण) वर्ण का जिसके सिर पर चिन्तन करे तो वह शत्रु दश दिन के भीतर शीघ्र ही उच्चाटन को प्राप्त होता है।

**विमर्श**—यं यां याहि याहि यं यां सः यं यां याहि याहि ॥ ८६ ॥

**अनेन विधिना शत्रुर्मण्डलान्मृत्युभाग्भवेत् ।**
**शरच्चन्द्रनिभं सार्णं सुधाधाराभिवर्षिणम् ॥ ८७ ॥**
**स्मरेन्मूर्धनि यस्याऽसौ स जीवेद्विगतामयः ।**
**आत्मानं चक्रनाभिस्थं ध्यात्वा मन्त्रममुं जपेत् ॥ ८८ ॥**

एकोऽपि रणभूमिस्थो जयेत् प्रत्यर्थिनो बहून्।

अनेन विधिनेत्यनेन प्रयोगान्तरमपि तादृशं सूचितम् । यदाहुराचार्याः—

सान्तं वायसवर्णं शत्रोः शिरसि स्मरेच्च सप्ताहम् ।
उच्चाटयति क्षिप्रं मारयते वा धियोऽस्य नैशित्यात् ॥ इति ॥

शरच्चन्द्रनिभमित्यनेन सितं वं वामित्यादिवीतमिति ज्ञेयम् । सार्णं सकाराक्षरं जपेदिति । सह नमो स्त्रार नारा हुँ फट् पणेति पादत्रयान्तम् ॐ इति चतुः पादान्तगीतामन्त्रादित्वं ज्ञेयम् ॥ ८७-८९ ॥

यदि इसी प्रकार निरन्तर चिन्तन करे तो शत्रु ४९ दिन के भीतर मर जाता है, सुधा धारा की वर्षा करने वाले शरत्कालीन चन्द्रमा के समान वाले सकार वर्ण का जिसके शिर पर चिन्तन करे, तो वह निरोग होकर दीर्घायु प्राप्त करता है । यदि साधक चक्र की नाभि में स्थित हुये अपना ध्यान करे और इस मन्त्र का जप करे तो अकेला भी रणभूमि में रह कर बहुत से शत्रुओं पर विजय प्राप्त कर लेता है ॥ ८७-८९ ॥

अपामार्गस्य समिधो जुहुयादयुतावधि ॥ ८९ ॥
रक्षोभूतपिशाचारिपीडा तस्य न जायते।
निर्गुण्डीसर्जकनकश्वेतकिंशुकसम्भवैः ॥ ९० ॥
समिद्वरैः कृतो होमः क्षुद्ररोगग्रहापहः ।
अपामार्गस्य समिधः सर्पिर्मध्ये श्रृतश्चरुः ॥ ९१ ॥
साज्यमेतानि जुहुयादष्टोत्तरशतं पृथक् ।
साधकाय पुनर्दद्याच्चरुं सम्पातसाधितम् ॥ ९२ ॥
अभिचारकृता द्रोहास्तस्य नश्यन्ति सर्वथा।
अपामार्गस्य समिधः पञ्चगव्यपरिप्लुताः ॥ ९३ ॥
जुहुयादयुतं मन्त्री दिशासु बलिमाहरेत् ।
दध्योदनेन मनुना क्षुद्ररोगादिशान्तये ॥ ९४ ॥

अपामार्गस्येति । फट्स्थाने वषट्कारो ज्ञेयः । सर्जः शालः । कनको धत्तूरः । क्षुद्राः स्तम्भाद्याः षड्रोगाः प्रसिद्धाः । ग्रहाः अष्टादश महाग्रहाः सप्तव्यन्तराः । पृथगिति प्रत्येकम् । चरुं दद्यादिति होमचरुशेषं मन्त्रजप्तञ्च । सम्पातसाधितमिति प्रतिद्रव्यसम्पातसाधितम् ।

हुत्वा संपातितं शेषं तज्जप्तं प्राशयेश्चरोः । इति नारायणीये उक्तेः । सर्वथेत्यनेन तद्भस्मानुलेपः ।

क्षुद्रग्रहामयध्वंसि तद्भूत्या चानुलेपनम् । इति तत्रैवोक्तेः । मनुना वक्ष्यमाण-बलिमन्त्रेण ॥ ८९-९४ ॥

यदि अपामार्ग की समिधा से दश हजार होम करे तो राक्षस, भूत, पिशाच और शत्रु की पीड़ा उस साधक को नहीं होती। निर्गुण्डी, शाल, धत्तूर, श्वेत और पलाश की लकड़ी से इस मन्त्र द्वारा होम करे तो क्षुद्र गठिया आदि रोग एवं ग्रह बाधा दूर हो जाती हैं। अपामार्ग की समिधा, घी के मध्य में पकाई गई खीर उनमें घी मिला कर प्रत्येक से १०८ बार होम करे और हुत शेष घी अन्य पात्रस्थ चरु में डालता जाय। इस प्रकार संपात से सिद्ध चरु जिसको खिला दिया जाय तो उसके ऊपर किया गया अभिचार (मारण) प्रयोग शीघ्रातिशीघ्र नष्ट हो जाता है। पञ्चगव्य से परिप्लुत अपामार्ग की समिधा द्वारा मन्त्रज्ञ दश हजार होम करे तदनन्तर दिशाओं में दही और भात की बलि आगे कहे जाने वाले मन्त्र से (द्र. १६. १०६) देवे तो क्षुद्र रोगादि शान्त हो जाते हैं ॥ ८७-९४ ॥

**क्षीरवृक्षसमित्क्षीरहविराज्यैः पृथक् पृथक् ।**
**चतुःसहस्रं होतव्यं शान्तिः स्यात्सर्वतोमुखी ॥ ९५ ॥**

**क्षीरेति सप्तद्रव्यैः । पृथक् पृथगिति प्रत्येकम् ॥ ९५ ॥**

क्षीरीवृक्ष की समिधा, क्षीर, हवि आज्य से पृथक् पृथक् चार हजार होम करे तो सर्वतोमुखी सभी प्रकार की शान्ति हो जाती है ॥ ९५ ॥

**चक्ररचनाप्रकारः**

**दक्षिणोत्तरगं मन्त्री चक्रयुग्मं समालिखेत् ।**
**वेदादि विलिखेन्मध्ये मन्त्रवर्णान् षडस्त्रिषु ॥ ९६ ॥**
**मध्यं पीतं कोणषट्कं रक्तं श्यामलमन्तरम् ।**
**नेमिं श्वेतां लसद्वह्निशिखाभिरुपशोभिताम् ॥ ९७ ॥**

**दक्षिणोत्तरगमित्यारम्य न संशय इत्यन्तमेकः प्रयोगः । चक्रयुग्ममिति । षडारं परिधिनेमिसहितम् । मन्त्रवर्णानिति सुदर्शनमन्त्रवर्णान् । अन्तरमिति षडारसन्धयः । नेमिमिति चक्रपरिधिरेखाम् । वह्निशिखाभिरिति । अग्निज्वालाकारेव वक्ररेखा कार्या इत्यर्थः । तदुक्तम्—विरचितशिखिरेखाकुलम् । इति ॥ ९६-९७ ॥**

अब १६. ९६ से १६. १०८ पर्यन्त **एक प्रयोग का वर्णन** करते हैं—

मन्त्रज्ञ साधक दक्षिण और उत्तर के क्रम से दो चक्रों का निर्माण करे । मध्य में वेदादि (ॐ) लिखे और ६ कोणों में सुदर्शन चक्र के एक एक मन्त्राक्षर (द्र. १६. ६७) लिखे । मध्य भाग को पीत, ६ कोणों को रक्त इसके अनन्तर श्याम तथा चक्र की नेमि (परिधि की रेखा को) को जलती हुई अग्नि शिखा के समान वक्र बनाकर श्वेत रंग द्वारा शोभित कर देना चाहिए ॥ ९६-९७ ॥



पार्थिवं मण्डलं बाह्ये कुर्यादेवं यथाविधि ।
रक्ततोयेन सम्पूर्णं कुम्भं सौम्ये प्रविन्यसेत् ॥ ९८ ॥
आवाह्य पूजयेत्तस्मिंश्चक्रात्मानं जनार्दनम् ।
दक्षिणे मण्डले कुर्याद्धोमकर्म विधानवित् ॥ ९९ ॥

पार्थिवमिति । कृष्णवर्णं । तदुक्तं नारायणीये—

बहिः कृष्णवर्णरेखा च पार्थिवी । इति ।

कुर्यादेवं यथाविधीत्यनेनैतत् पञ्चम्यादि पूर्णान्ततिथिषु कर्त्तव्यमिति सूचितम् ।

तदुक्तम्—पूर्णासु माङ्गल्य विवाहयात्रासपौष्टिकशान्तिकर्म कार्यम् । इति ।

तथा— हस्तादि पञ्चनक्षत्रे रेवत्याश्विनमुत्तरम् ।
श्रविष्टा रोहिणी पुष्या शान्तिकर्मसु पूजितम् ॥ इति ॥

रक्ततोयेनेति लाक्षादिरसेन रक्ततोयं कृत्वेत्यर्थः । सौम्ये उत्तरदिक्स्थचक्र इत्यर्थः । तस्मिन्निति कुम्भे । दक्षिणे मण्डले दक्षिणदिक्स्थचक्रे । विधान विदित्यनेन सपदां हसन्तिकां संस्थाप्य तत्राग्निं प्रतिष्ठाप्य होमकर्म कुर्यादिति सूचितम् ॥ ९८-९९ ॥

चक्र के बाहरी भाग को काले रंग से रंग देवे । पुनः उत्तर दिशा के चक्र स्थान में लाल जल से परिपूर्ण घट स्थापित कर उस पर चक्रात्मा भगवान् जनार्दन की पूजा करे और दक्षिण चक्र के स्थान पर विधानवित् साधक होम कर्म करे ॥ ९७-९८ ॥

बलिदानविधिः

क्रमात् सर्पिरपामार्गैस्तन्दुलैः सर्षपैस्तिलैः ।
पायसैर्गव्यसर्पिर्भ्यां षड्विंशत्यधिकं शतम् ॥ १०० ॥
जुहुयादेधिते वह्नौ प्रतिद्रव्यं विधानवित् ।
सम्पातयेत् कुम्भतोये पूजिते सौम्यमण्डले ॥ १०१ ॥
प्रस्थार्धं चरुणा पिण्डं कृत्वा तस्मिन्विनिक्षिपेत् ।
बाह्ये बलिप्रदानार्थं तदर्धमवशेषयेत् ॥ १०२ ॥
स्नातं विशुद्धवस्त्राढ्यै साध्यमानीय तं पुनः ।
दक्षिणे स्थापयेन्मन्त्री कुम्भाग्निभ्यामनन्तरम् ॥ १०३ ॥

अपामार्गैरपामार्गसमिद्भिः । उक्तं च नारायणीये 'साज्यापामार्गसमिधौ' इति । गव्यं पञ्चगव्यम् । 'सकलैर्गव्यैः' इत्युक्तेः । प्रतिद्रव्यमित्यष्टोत्तरसहस्रं मिलित्वा भवति। तदुक्तं नारायणीये 'सहस्राष्टकसंख्यया' इति । घृतस्य वारद्वयमुक्तिः क्रमार्था । विधानवित् संपातयेदित्यनेनाष्टद्रव्यहोमेऽपि संपात इति सूचितम् । प्रतिद्रव्यमिति काकाक्षिगोलकन्यायेनोभयत्र सम्बध्यते ।

तदुक्तम्— हुत्वा तद्धुतशिष्टमत्र विधिवत् क्षिप्त्वा प्रतिद्रव्यकम् । इति ।

नारायणीयेपि—हुतशेषं क्षिपेत् कुम्भे प्रतिद्रव्यं विधानवित् । इति ।

विधानविदित्यनेन समिधादि होमे आहुत्यन्ते कलशे हस्तमात्रस्पर्शा एव संपाता इति सूचितम् । पूजिते सौम्यमण्डले इति व्यधिकरणे सप्तम्यौ ।

तस्मिन्निति कुम्भमुखे । विनिक्षिपेदिति वषडन्तमूलान्वितसुदर्शनगायत्र्या सा पूर्वोक्ताऽनुसन्धेया । तदर्धशेषं होमार्थकृतपायसार्धम् । दक्षिण इति चक्रे । तत्रत्यां हसन्तीमन्यत्र संस्थाप्येत्यर्थः । मन्त्रीत्यनेन सह नमो इति स्रार नारा इति हुँ फडिति पादत्रयान्तेन ओमिति चतुर्थपादान्तेन गीतामन्त्रेण विशिष्टं साध्यस्य सकलीकरणं सूचितम् ॥ १००-१०३ ॥

क्रमशः घृत, अपामार्ग, तन्दुल, सर्षप, तिल, पायस एवं गाय के घृत से एक सौ छब्बीस बार प्रत्येक द्रव्य से समिद्धतम अग्नि में होम करे तथा हुतशेष घृत उत्तर दिशा वाले चक्र स्थान में स्थापित कुम्भ जल में छोड़ता जाय । होम के बाद आधा प्रस्थ चरु भी उसी कलश में छोड़ देवे और आधा प्रस्थ चरु बाहर में बलि प्रदान के लिये बचा लेवे । तदनन्तर स्नान कर विशुद्ध वस्त्र पहने हुये, साध्य को चक्र के दक्षिण भाग में लाकर बैठा देवे, इसके अनन्तर कुम्भ के जल से उसे अभिसिञ्चित तथा अग्नी द्वारा आलम्भित करे ॥ १००-१०३ ॥

**नीराज्य तौ नयेद्बाह्ये ग्रामादष्टमराशिके ।**
**स्थापयेत्तौ यथापूर्वं सपरिस्तरणौ क्रमात् ॥ १०४ ॥**

नीराज्येति । नीराजनं गीतामन्त्रेण । एकदैव कुम्भाग्निभ्यां नीराजनं यत् तत् पुरुषान्तरसाहायेनेति ज्ञेयम् । ताविति कुम्भाग्नी अष्टमराशिके स्थापयेदिति । राशिस्थानान्युक्तानि कादिमते—

प्राच्यां मेषवृषौ वह्नौ मिथुनं दक्षिणे तथा ।
कुलीरसिंहमथ तन्नैर्ऋत्यां कन्यका स्थिता ॥
तुलाकीटौ पश्चिमतो धनुर्वायौ तु संस्थितम् ।
नक्रकुम्भावुत्तरतो मीनमैशे तु संस्थितम् ॥ इति ॥

एतद्राशिस्थानं ज्ञात्वा साध्यस्य योऽष्टमराशिस्तत्र स्थापयेदित्यर्थः । यथापूर्वमिति । तद्दक्षिणभागेऽग्निं स्थापयेत् । तदुक्तम्—

अग्न्यादिकमपि सर्वं क्षिपेदथ घटस्य पश्चिमे भागे । इति ॥ १०४ ॥

पश्चात् ग्राम से बाहर ले जाकर जहाँ उस ग्राम की अष्टमराशि का स्थान हो वहीं परिस्तरण देकर गाड़ देवे ॥ १०४ ॥

**विमर्श**—यहाँ राशियों के स्थान का विवरण दिया जा रहा है जिससे ग्राम की अष्टम राशि का निर्देश प्राप्त हो—मेष वृष राशि का पूर्व में, मिथुन का आग्नेय कोण में, कर्क सिंह का दक्षिण में, कन्या का नैर्ऋत्य में, तुलावृश्चिक का पश्चिम में, धनुष का वायु में, मकर कुम्भ का उत्तर में और मीन का स्थान उत्तर में है ॥ १०४ ॥

**हुत्वा वह्नौ यथापूर्वं शिष्टान्नेन बलिं हरेत् ।**
**मनुना वक्ष्यमाणेन दशदिक्षु यथाविधि ॥ १०५ ॥**

यथापूर्वमित्यष्टभिर्द्रव्यैः उक्तप्रमाणेन च । शिष्टान्नेनेति हुतशिष्टान्नेन ।

तदुक्तं नारायणीये—दद्यादनेन मन्त्रेण हुतशेषान्धसा बलिम् । इति ।

आचार्या अपि—हुतशेषान्नेन बलिम् । इति ।

यथाविधीति । लोकपालबलिरपि सूचितः ॥ १०५ ॥

पुनः अग्नि में होम कर शेष बचे हुये खीर की आगे कहे जाने वाले मन्त्र से दशों दिशाओं में यथाविधि बलि देवे ॥ १०५ ॥

बलिमन्त्रः

**सहृद्विष्णुगणेभ्योऽन्ते सर्वशान्तिकरे पुनः ।**
**भ्यो बलिं प्रतिगृह्णन्तु शान्तये हृदयं ततः ॥ १०६ ॥**
**ब्राह्मणान् भोजयेत् सम्यङ्मधुरोत्तरमादरात् ।**
**गुरवे दक्षिणां दद्याद्वस्त्रभूषणसंयुताम् ॥ १०७ ॥**
**हन्यादयं विधिः पुंसां कृत्यारोगग्रहज्वरान् ।**
**रक्षः पिशाचमार्यादिक्लेशान् शीघ्रं न संशयः ॥ १०८ ॥**

बलिमन्त्रमाह सहृदिति । हृन्नमः पदम् । हृदयं नमः पदम् एतदन्तो मन्त्रः । अस्य प्रणवशक्त्यादित्वं ज्ञेयम् ।

मारी कृत्याविशेषः । आदिशब्देनेत्यादिकापदादि ॥ १०६-१०८ ॥

**बलि का मन्त्र** इस प्रकार है—'नमो विष्णुगणेभ्यो सर्वशान्तिकरेभ्यो बलिं प्रतिगृह्णन्तु शान्तये नमः' ।

इसके पश्चात् ब्राह्मणों को आदरपूर्वक भोजन करावे और गुरु को वस्त्र आभूषण से संयुक्त दक्षिणा देवे । इस प्रकार से की गई विधि द्वारा पुरुषों के कृत्या, रोग, ग्रह, ज्वर, राक्षस, पिशाच तथा मारी आदि जन्य क्लेश आदि शीघ्रातिशीघ्र नष्ट होते हैं, इसमें संशय नहीं ॥ १०६-१०८ ॥

**विधाय पञ्जरं मन्त्री फलकैः क्षीरशाखिनाम् ।**
**पञ्चगव्येन संपूर्य तस्मिन् साध्यं निवेशयेत् ॥ १०९ ॥**

जपविधिः

**धौतवस्त्रं विशुद्धाङ्गं स्पृष्ट्वा सम्यग्जपेन्मनुम् ।**
**पूर्वादिदिक्षु संस्थाप्य वह्निं ब्राह्मणसत्तमैः ॥ ११० ॥**
**कारयेत्पूर्वसन्दिष्टैर्द्रव्यैर्होमं विधानवित् ।**
**तोषयेद्दक्षिणाभिस्तान् यजमानः स्वशक्तितः ॥ १११ ॥**

गुरुं च धनधान्याद्यैर्नत्वा सम्प्रीणयेत्तदा ।

जपफलम्

सर्वरोगहरः प्रोक्तः कृत्याद्रोहादिनाशनः ॥ ११२ ॥
अपमृत्युहरः पुंसां विधिरेषः प्रकीर्त्तितः ।

अभिषेकः

पञ्चगव्यैः कषायैर्वा क्षीरभूरुहसम्भवैः ॥ ११३ ॥
पूरितैः कलशैर्जप्तैः कृतसम्पातसंयुतैः ।
अभिषिञ्चेद् ग्रहाविष्टमभिचारातुरं नरम् ॥ ११४ ॥
सुस्थो भवति शीघ्रेण विधानेनाऽमुना नरः ।
भानुवारेऽभिषेकस्य विधानेन सुसाधितैः ॥ ११५ ॥
सलिलैः स्नापयेन्नारीं सुखप्रसवकाङ्क्षिणीम् ।
सप्तवाराभिषेकेण सर्वे नश्यन्त्युपद्रवाः ॥ ११६ ॥

क्षीरशाखिनामिति पलाशस्याऽप्युपलक्षणम् । तदुक्तं नारायणीये—

फलकैः कल्पिते पात्रे पलाशक्षीरशाखिनाम् । इति ।

आचार्याश्च—पालाशैर्वा स्तनजद्रुमजैर्वा पञ्जरे कृते फलकैः । इति ॥

अनेन क्षीरद्रुमेष्वपि विकल्पो ज्ञेयः । सम्यक् जपेदिति चतुर्दिक्षु क्रियमाणहोमसमाप्तिपर्यन्तमित्युक्तम् । पूर्वसन्दिष्टैः घृतादिभिरष्टद्रव्यैः । विधानविदित्यनेन प्रतिद्रव्यं षड्विंशत्यधिकशतं होम इत्युक्तम् । पञ्चगव्यैः पूरितैरिति व्यधिकरणे तृतीये । कलशैरिति नवमिः । सम्पातेन होमाक्षेपः । होमोऽपि पूर्वोक्ताष्टद्रव्यैः पूर्वोक्तसंख्यः । अमुना विधानेन नरः शीघ्रेण सुस्थो भवतीति सम्बन्धः । तद्विधानप्रकारो यथा । पूर्वोक्तं नवनाभं मण्डलं कृत्वा पूर्ववत् कलशान्नव संस्थाप्य उक्तद्रव्यैरापूर्य मध्ये मन्त्रोक्तदेवतां संपूज्य परितोऽष्टकलशेषु आयुधाष्टकं संपूज्य कार्यानुरूपं होमं कृत्वा तत्सम्पातयुक्तैर्घटैरभिषिञ्चेदिति । पञ्चकलशपक्षे पञ्चाब्जं मण्डलं कृत्वा दिक्षु चक्रगदामुशलपाशा अर्चनीयाः । शेषं पूर्ववत् । अभिषेकस्य विधानेनेति । एककलशस्थापनप्रकारेण उक्तरूपेण चेत्यर्थः । सुसाधितैरित्यनेन पूर्ववद्धोमः सम्पातश्च । सप्तसु वारेषु भानुवारेषु योऽभिषेकस्तेन ॥ १०९-११६ ॥

क्षीरी वृक्षों के फलकों (पटरों) से एक पात्र निर्माण करावे । उसे पञ्चगव्य से पूर्ण करे, तदनन्तर साध्य को स्नानादि से शुद्ध कर स्वच्छ वस्त्र धारण कराकर उसी पात्र पर बिठा देवे और उसका स्पर्श करते हुये आचार्य इस मन्त्र का जप करे । तदनन्तर साध्य के चारों ओर ब्राह्मण द्वारा अग्नि संस्थापन कर पूर्वोक्त आठ द्रव्यों से (द्र. १६. १००) पृथक् पृथक् उतनी ही संख्या में (१२६) विधानपूर्वक प्रज्वलित अग्नि में होम करावे । तदनन्तर यजमान शक्ति के अनुसार दक्षिणा के द्वारा उन ब्राह्मणों को सन्तुष्ट करे ॥ १०९-१११ ॥

इसी प्रकार गुरु को भी धन धान्यादि प्रदान कर और नमस्कार कर अच्छी तरह प्रसन्न करे। इस प्रकार से अनुष्ठित प्रयोग साध्य पुरुषों के समस्त रोगों को दूर करता है, कृत्याजन्य उपद्रव तथा शत्रु की शत्रुता का नाश करता है। इतना ही नहीं यह प्रयोग अपमृत्यु को भी दूर कर देता है। पञ्चगव्य से अथवा क्षीरी वृक्षों के कषाय से निर्मित क्वाथ से घड़ों को पूर्ण करे। तत्पश्चात् मध्य कलश का स्पर्श कर जप करे। तदनन्तर होम करते समय आहुति शेष घृत प्रधान कलश में छोड़ता जाय। फिर उस कलश के जल से ग्रहाविष्ट अथवा अभिचार से आतुर साध्य पुरुष का अभिषेक करे, तो इस विधान के करने से वह पुरुष शीघ्र ही स्वस्थ हो जाता है। रविवार के दिन पूर्वोक्त विधि से सुसिद्ध कलश के जल से सुखपूर्वक प्रसव की इच्छा करने वाली गर्भिणी नारी को स्नान करावे। इस प्रकार सात रविवार पर्यन्त प्रयोग करे तो गर्भिणी के प्रसव से होने वाले समस्त उपद्रव नष्ट हो जाते हैं ॥ ११३-११६ ॥

**पञ्चगव्ये श्रृतं सर्पिर्मन्त्रितं मनुनाऽमुना।**
**गर्भिणीनां ग्रहार्त्तानां सेवितं तच्छुभावहम् ॥ ११७ ॥**

**पञ्चगव्य इति। 'अकल्कोऽपि भवेत् स्नेहो यः साध्यः केवले द्रवे' इति परिभाषणात् कल्कं विनैव तद्घृतं साध्यम्। तत्र**

**पञ्चप्रभृति यत्र स्युर्द्रव्याणि स्नेहसंविधौ। तत्र क्षीरसमान्याहुः। इत्युक्तेः। घृतसमान्येव पञ्चगव्यानि दत्त्वा घृतं पचेत्। क्षीरदध्यारनालैः वचनात् प्राप्तमपि जलं न देयम्। गोमूत्रस्य सत्त्वादिति ॥ ११७ ॥**

पञ्चगव्य में पकाये गये घी को इस मन्त्र से अभिमन्त्रित करे और उस घृत को ग्रहार्त्त अथवा गर्भिणी को किञ्चित् किञ्चित्मात्रा में पिलाता रहे, तो उस घृत के सेवन से उन सबका कल्याण हो जाता है ॥ ११७ ॥

**उच्चस्थानगते शुक्रे मनुना साधुसाधिता।**
**त्रिलोहीमुद्रिका हन्यात् क्षुद्रभूतग्रहान् ज्वरान् ॥ ११८ ॥**

**शुक्रे उच्चस्थानगते मीनगते। साधुसाधितेति षष्ठोक्तरीत्या ॥ ११८ ॥**

जिसके उच्चस्थान में शुक्र हों उसे इस मन्त्र से सिद्ध की गई (त्रिलौह द्र. ६. १०५-१०९) (सममात्रात्मक चाँदी, सुवर्ण और ताँबा) की बनी हुई मुद्रिका हाथ में पहना दे तो क्षुद्र रोग, भूत बाधा एवं ग्रहबाधा तथा ज्वर आदि नष्ट हो जाते है ॥ ११८ ॥

**तद्वर्णसंख्यया सूत्रे ग्रन्थीन् कृत्वा जपादिभिः।**
**साधितं कल्पयेद्धस्ते कण्ठे वा दुःखशान्तये ॥ ११९ ॥**

**तद्वर्णसंख्यया मन्त्रवर्णसंख्यया। इदमुभयत्र सम्बध्यते। तेन सप्त सूत्राणि कृत्वा तत्र सप्त ग्रन्थयो देयाः।**

अस्य प्रयोगस्य विशेषो नारायणीये—

हुनेद् गव्याक्तापामार्गसमिदाज्यं चरुं घृतम् ।
परिस्तीर्णसितातांम्रसूत्रसन्धिस्थितान् घटान् ॥
क्षीरवृक्षक्वाथपूर्णान् होमकालेऽभिमन्त्रयेत् ।
तत्संख्यपातैः स्नापयेत् गव्यशेषपुरःसरम् ॥
कल्पयेत्तस्य हस्तादौ तत् सूत्रं ग्रन्थितं जपात् । इति ।

जपादिभिरित्यादिशब्देन पूजासम्पातौ हस्ते कर्णे चेति । पुमान् दक्षिणे स्त्री वाम इति ज्ञेयम् ॥ ११९ ॥

इस मन्त्र में जितने वर्ण हैं उतने सहस्र जप कर प्रत्येक सहस्र पर सूत्र में ग्रन्थि देता रहे । मन्त्रवर्ण की संख्या के अनुसार उतने वर्ण की संख्या के बराबर ग्रन्थि हो जाय अर्थात् सात सूत्र और उसमें से प्रत्येक में सात सात ग्रन्थि हो जाय तो उस पर आहुति शेष घृत का उतनी ही बार संपात करे । पुनः उस सिद्ध सूत्र को हाथ में अथवा कण्ठ में धारण कर लेवे तो अवश्य ही दुःख की शान्ति हो जाती है ॥ ११९ ॥

पञ्चगव्यं जपेत् स्पृष्ट्वा मन्त्रं दशशतावधि ।
न्यस्तं तत् पद्मपत्रादौ पत्रे वा ब्रह्मवृक्षजे ॥ १२० ॥
फले बिल्वस्य वा मन्त्री गृहे स्वस्य परस्य च।
निखनेत् सर्वरक्षा स्याद्वर्धते सर्वसम्पदः॥ १२१ ॥

पञ्चगव्यघृतपाकविधिः

पलाशक्षीरवृक्षाणां त्वचो मलयजं पुरुम्।
कुङ्कुमं यामिनीं कुष्ठं बिल्वापामार्गसर्षपान्॥ १२२ ॥
तिलदूर्वायवान् देवीं तुलसीयुगलं कुशम् ।
लक्ष्मीं गोरोचनां पद्मं वचां गोमयसंयुताम् ॥ १२३ ॥
विष्णुक्रान्तामर्कयुतां जपन्मन्त्रं विनिक्षिपेत् ।
पञ्चगव्येन सम्पूर्णे पात्रे तत् संस्कृतेऽनले ॥ १२४ ॥
संस्थाप्य क्वाथयेत् सम्यग्यावद्भस्म भविष्यति ।
तदादाय जपेद् भूयः प्रयुतं देवता धिया ॥ १२५ ॥
लिपेत्सर्वाङ्गमेतेन किञ्चिच्छिरसि निक्षिपेत् ।
कृत्याद्रोहग्रहोन्मादव्याधिदुःखनिवारणम् ॥ १२६ ॥
सर्वशत्रुप्रशमनं सर्वपापहरं परम् ।
शुभदं वश्यदं पुंसां समस्तापन्निवारणम् ॥ १२७ ॥
गर्भिणीबालरुग्णानां विशेषेण प्रशस्यते ।
अस्मात्परतरा रक्षा नास्ति लोके प्रकीर्त्तिता ॥ १२८ ॥

**पद्मपत्रादावित्यादिशब्देन ब्रह्मपत्रादिपात्र इत्यादि । मन्त्री नरः स्वस्य परस्य वा गृहे निखनेदिति सम्बन्धः । पुरुं गुग्गुलम् । यामिनी हरिद्रा । कुष्ठं कूडम् ।**

**बिल्वेति बिल्वपञ्चाङ्गम् । देवी सहदेवी । पद्मेति । पद्मपञ्चाङ्गम् । पद्मदलादिकमित्यस्य व्याख्याने अपेक्षितार्थद्योतनिकायां विल्वपञ्चाङ्गं पद्मपञ्चाङ्गमित्युक्तम् । अर्केति अर्कत्वक् । तदिति पात्रम् । सम्यक् क्वाथयेदिति । मन्त्रं जपन्नित्युक्तम् । प्रयुतमिति दशलक्षम् । क्वचिदयुतमिति पाठः ॥ १२०-१२८ ॥**

पञ्चगव्य का स्पर्श कर एक हजार बार इस मन्त्र का जप करे । फिर उस पञ्चगव्य को कमल पत्र पर अथवा पलाश पत्र पर गिरावे । अथवा विल्व के फल पर गिरा देवे । तदनन्तर उस पत्र को अथवा फल को अपने घर में अथवा दूसरे के घर में गाड़ देवे तो सब प्रकार की रक्षा होती है और सब प्रकार की संपत्ति बढ़ती है ॥ १२०-१२१ ॥

पलाश और क्षीरी वृक्षों की छाल, मलयागिरिचन्दन, गुग्गुल, केशर, हरिद्रा, कुष्ठ विल्व का पञ्चाङ्ग अपामार्ग सर्षप, तिल, दूर्वा, यव, सहदेवी श्यामा और रामा दोनों प्रकार की तुलसी, कुशा, लक्ष्मी, गोरोचना, पञ्चाङ्ग, कमल, गोमय युक्त वचा, विष्णुकान्ता और मन्दार का त्वक्, इन सभी औषधियों को मन्त्र का जप करते हुये पञ्चगव्य से परिपूर्ण पात्र में छोड़ देवे । पश्चात् सुसंस्कृत अग्नि (द्र. ५. २-६) के ऊपर उस पात्र को स्थापित कर तब तक क्वाथ बनाता रहे जब तक वह भस्म नहीं हो जाता । इस प्रकार भस्म तैयार हो जाने पर उसे ग्रहण कर देवता का ध्यान कर दश लाख जप करे । फिर उस भस्म को शिर पर छिड़क देवे और सर्वांग में लेप भी कर देवे तो ऐसा करने से कृत्या जन्य उपद्रव, शत्रुद्रोह, ग्रहबाधा, उन्माद एवं व्याधि तथा अन्य प्रकार के दुःखों का निवारण हो जाता है । इससे शत्रुबाधा शान्त हो जाती है, सारे पाप दूर हो जाते हैं यह भस्म सब प्रकार का कल्याण करता है वशीकरण है और पुरुष की समस्त विपत्तियों का विनाश करता है ॥ १२२-१२७ ॥

इस प्रकार का भस्म गर्भिणी, बालक तथा रोगीजनों को विशेष रूप से लाभदायी है, इस लोक में इससे बढ़कर अन्य कोई रक्षा का उपाय नहीं कहा गया है ॥ १२८ ॥

**मुस्ता शुण्ठी निशा वह्निरेला यष्टिर्वचा वृषा ।**
**पाठा विडङ्गं मञ्जिष्ठा द्राक्षा दार्वी सरोहिणी ॥ १२९ ॥**
**फलत्रयं च तैः कल्कैः पञ्चगव्येषु सर्पिषाम् ।**
**प्रस्थं पचेद्यथान्यायं मन्त्रेणाऽनेन साधितम् ॥ १३० ॥**
**कान्तिदं सुतदं स्त्रीणां भूतप्रेतभयापहम् ।**
**गर्भरक्षाकरं शुद्धं पञ्चगव्यघृतं विदुः ॥ १३१ ॥**

**मुस्तेति । मुस्ता मोच्छ्य (मुथा) । निशा हरिद्रा । वह्निश्चित्रकः । यष्टिः**

**यष्टिमधु । वृषा आढरूषः । वासक इति यावत् । दार्वी दारुहरिद्रा । रोहिणी कटकी । फलत्रयं हरितकीबिभीतकामलकानि । यथान्यायं वैद्यकशास्त्रोक्तप्रकारेण । तत्र सर्पिःप्रमाणमुक्तमेव । कल्कश्च स्नेहपादिकमित्युक्तत्वात् कुडवमात्रं कल्को ग्राह्यः । पञ्चप्रभृतीति वचनात् प्रत्येकं पञ्चगव्यानि स्नेहसमानि । आज्यावशेषमुत्तार्य शीतलं कृत्वाऽनेन मन्त्रेन साधितं संजप्तम् ॥ १२९-१३१ ॥**

नागरमोथा, शुण्ठी, हरदी, चित्रक, इलायची, जेठीमध, वच, अरुष, पाठा, विडङ्ग, मजीठा, द्राक्षा, दारुहल्दी, कुटकी तथा त्रिफला—इनका वैद्य के शास्त्र के अनुसार यथाभाग लेकर चूर्ण करे । घी युक्त प्रस्थमान पञ्चगव्य में पकावे और मन्त्र पढ़ता रहे जब घी मात्र शेष रह जावे तब उसे उतार लेवे ॥ १२९-१३० ॥

इस प्रकार से मन्त्र द्वारा सिद्ध किया गया घृत कान्ति प्रदान करता है, पुत्र देता है, स्त्रियों के भूतभय तथा प्रेतभय को दूर भगाता है और गर्भ की रक्षा करता है । इस प्रकार से सिद्ध किये गये घी का नाम पञ्चगव्यघृत है ॥ १३१ ॥

**आपन्निवारणयन्त्रम्**

**टान्तान् सप्त लिखेन्मध्ये षट्सु कोणेषु तेष्वथ ।**
**मन्त्रवर्णान् लिखेदेतच्चक्रमापन्निवारणम् ॥ १३२ ॥**

**यन्त्रमाह टान्तानिति । मध्यादिषट्कोणेषु सप्त ठकारान् विलिख्य तेषु ठकारेषु क्रमेण मन्त्राक्षराणि लिखेत् । मध्ये साध्यसाधककर्मलिखनं च ज्ञेयम् । आपदिति श्वासज्वरौ । 'चक्रं श्वासज्वरापहम्' इति नारायणीय उक्तेः ॥ १३२ ॥**

षट्कोण यन्त्र के मध्य में तथा उसके छः कोणों में इस प्रकार ७ स्थानों में एक एक के क्रम से सात ठकार लिखे और उन्हीं ठकारों के साथ, चक्र मन्त्र के ('ॐ सहस्रार हुँ फट्', द्र. १६. ६७) एक एक अक्षरों को भी लिखे । मध्य में साध्य साधक तथा उनका कर्म लिखना न भूले । इस प्रकार निर्मित यह चक्र यन्त्र 'चक्रं श्वास ज्वरापहम्' के अनुसार श्वास तथा ज्वर के उपद्रवों को नष्ट कर देता है ॥ १३२ ॥

**रक्षायन्त्रम्**

**षट्कोणमध्ये विलिखेत् ससाध्यं**
**तारं षडस्त्रिष्ववशिष्टवर्णान् ।**
**अङ्गानि तत्सन्धिषु यन्त्रमेतत्**
**करोति रक्षां विधिवत् प्रजप्तम् ॥ १३३ ॥**

**यन्त्रान्तरमाह षडिति । षडस्त्रिष्वित्यग्न्यादि । विधिवदित्यनेनाऽष्टोत्तरसहस्रं जप उक्तः । रक्षां करोति तत्र स्थापितमिति शेषः । तदुक्तम्—**

**मध्ये तारं तदनु च मनुं वर्णशः कोणषट्के**
**बाह्ये चाऽङ्गं लिखतु कनके ताम्रके वाऽथ रौप्ये ।**

पाषाणे वा विधिवदभिजप्याऽथ संस्थापितं
तत् चक्रं चोरग्रहरिपुभयध्वंसि रक्षाकरं च ॥ इति ॥ १३३ ॥

अब **अन्य यन्त्र** कहते हैं—षट्कोण के मध्य में साध्य के सहित प्रणव लिखे। पुनः षट्कोणों में चक्र मन्त्र के अवशिष्ट अक्षरों को लिखे। सन्धियों में अङ्ग मन्त्र लिखे। १०८ बार मन्त्र का जप करते हुये यन्त्र को विधिपूर्वक सारी क्रिया करे तो यह यन्त्र सब प्रकार से मनुष्यों की रक्षा करता है ॥ १३३ ॥

षोडशारयन्त्रम्

**तारं लिखेत् ठान्तगतं ससाध्यं**
**कोणेषु शिष्टं मनुवर्णषट्कम्।**
**अङ्गानि सन्धिष्वथ षोडशारं**
**सषोडशार्णं वसुधापुरस्थम् ॥ १३४ ॥**
**जपित्वा कृतसम्पातं गर्भिणीनां हितं पुरम्।**
**अभिचारग्रहोन्मादान् यन्त्रमेतद्विनाशयेत् ॥ १३५ ॥**

यन्त्रान्तरमाह तारमिति। ठान्तगतमिति तारविशेषणम्। षोडशारमिति।

षोडशाङ्के समे वृत्ते पञ्चमे पञ्चमे लिखेत्।
रेखा अङ्के षोडशाद्यं षोडशारमिदं मतम् ॥

इति षोडशारलेखनप्रकारः। षोडशार्णं वक्ष्यमाणषोडशाक्षरं चक्रमन्त्रम्। अन्येषां षोडशाक्षरशब्देन षोडशदलं तदुपरि च वृत्तं तदुपरि पार्थिवमण्डलम्। मन्त्रश्च। ॐ नमो भगवते वासुदेवाय हुँ फट् स्वाहा।

तदुक्तं नारायणीये—सांख्यादिन्दोर्बहिः कोणषट्के मन्त्राक्षरान् लिखेत्।
सन्धिष्वङ्गाद्बहिर्वृत्तात्पत्रषोडशके मनुम्।
पुनर्वृत्तं च भूगेहे लिखेदेतद्यथाविधि ॥ इति।

क्वचित् षोडशार्णं तत्संख्यपत्रे इति पाठः। जपित्वेत्यतो हुत्वेति शेषः ॥ १३४-१३५ ॥

अब एक **अन्य प्रकार का चक्र यन्त्र** कहते हैं—षट्कोण यन्त्र के मध्य में ठ अन्त में हो जिसके ऐसा तार प्रणव लिखे और उसी में साध्याक्षरों को लिखे (ॐ ठः ममामुकं शत्रुं विनाशय इत्यादि)। शेष छः कोणों में सुदर्शन मन्त्र के शेष छः अक्षरों को लिखे (द्र. १६. ६७)। सन्धियों में अङ्ग मन्त्र लिखे, पुनः उसके आगे के षोडशदलात्मक वृत्त पर वक्ष्यमाण चक्र मन्त्र के १६ अक्षरों को प्रत्येक दल पर लिखे (द्र. १६. १३७)। उसके बाहर भूपुर के षोडश दलात्मक वृत्त पर १६ अक्षर वाले चक्र मन्त्र को पुनः लिखे ॥ १३४ ॥

इस प्रकार यन्त्र लिख कर उसे हाथ में लेकर जप करे। पश्चात् होम करते समय आहुति शेष घृत को उस यन्त्र पर छोड़ता जाय तो इस प्रकार से निर्मित

यन्त्र गर्भिणियों के लिये हितकारक होता है तथा अभिचार (मारण), ग्रह बाधा एवं उन्माद के दोषों को दूर करता है ॥ १३५ ॥

**मध्ये तारं ससाध्यं मनुमथ विलिखेत् षट्सु कोणेषु सन्धि-**
**ष्वङ्गान्यन्ते कलानां युगयुगविलसत् केशराष्टार्णपत्रम् ।**
**किञ्जल्कान् कादिवर्णैर्द्विवसुदललसत्षोडशार्णं स्वनाम्ना**
**हक्षाभ्यां त्रिःप्रवीतं लिखतु परिवृतं तत् त्रिपाशाङ्कुशाभ्याम् ॥१३६॥**

**यन्त्रान्तरमाह मध्ये इति । मनुं तारव्यतिरिक्तचक्रमन्त्रम् । अन्ते षट्कोणबाह्ये । कलानां स्वराणाम् । अष्टार्णो नारायणाष्टाक्षरः । द्विवसुदलं षोडशदलम् । स्वनाम्ना साध्यनाम्ना सह हक्षाभ्यां त्रिःप्रवीतं हक्षयोर्मध्ये साध्यनामेत्यर्थः । तत् त्रिपाशाङ्कुशाभ्यामित्यावृत्तित्रयम् । यस्तु त्रिःप्रवीतमित्यावृत्तित्रयं कथमावृत्तित्रय-मित्यपेक्षायां स्वनाम्ना हक्षाभ्यामेका द्वितीया पाशेन तृतीयाऽङ्कुशेन । द्वितीयं त्रिःपदं सत्त्वरजस्तमोरूपतया आवृत्तिध्यानमिति व्याख्यानात् । स नमस्य एव । केचन तार पाशाङ्कुशाभ्यामिति पाठं पठित्वा योजयन्ति । त्रिःप्रवीतं तत्रैका हक्षाभ्यां स्वनाम्ना अपरा तारेण तृतीया पाशाङ्कुशाभ्यामिति । अयमेव पक्षः साम्प्रदायिकः । केचन द्वितीयत्रिशब्दस्यैव अकारोकारमकारात्मकत्वात् प्रणव एवार्थ इति व्याचक्षते । द्विवचनमावृत्त्यपेक्षया । तदुक्तम्—**

**त्रिवीतं व्योमान्त्यार्णं स्वनाम्ना विरचितगुणपाशाङ्कुशं चक्रयन्त्रम् । इति ।**

**एतद्व्याख्याने पद्मपादाचार्याः । गुणः प्रणवः । केवलहक्षाभ्यामावृत्तित्रयम् । अपरायामावृत्तौ तारमुक्त्वा साध्यनाम्नोऽक्षरद्वयमुच्चार्य पुनः पाशमुच्चार्य साध्य-नाम्नोऽक्षरद्वयमुच्चार्य पुनरङ्कुशबीजमुच्चार्य पुनः साध्यनाम्नोऽक्षरद्वयमुच्चारयेत् । एवं रूपैर्वर्णैर्वेष्टयेदित्याहुः । पाशाङ्कुशवेष्टितमित्यस्य व्याख्याने अपेक्षितार्थद्योत-निकायां पाशेन त्रिवारं अङ्कुशेनापि त्रिवारमित्युक्तम् ॥ १३६ ॥**

अब **अन्य प्रकार का चक्र यन्त्र** कहते हैं—मध्य में साध्य सहित तार लिखे । छः कोणों में १६. ६७ में कहे गये सुदर्शन मन्त्र के शेष छः अक्षरों को लिखे । सन्धि स्थानों में अङ्गमन्त्रों को लिखे तथा चार केशरों पर दो दो अक्षरों के क्रम से नारायण मन्त्र ('ॐ नमो नारायणाय', द्र. १५. २) के आठ अक्षरों को लिखे । किञ्जल्कों पर ककारादिक्षान्त समुदाय मन्त्र के १६ अक्षरों को एक एक के क्रम से लिखे । इसके अनन्तर अपना नाम, साध्याक्षर तथा कार्य तीन आवृत्ति में लिखकर उसे परिवेष्टित करे ।

**विमर्श**—उसका क्रम इस प्रकार है—यथा ह के बाद साध्यनाम, स्वनाम तथा कार्य लिख कर उसके बाद क्ष वर्ण लिखे । यह स्वनाम की प्रथम आवृत्ति हुई । पुनः तीन पाश (आँ) के मध्य में साध्यनाम, स्वनाम तथा कार्य लिखे, यह द्वितीय आवृत्ति हुई, पुनः तीन अंकुश (क्रोँ) के मध्य में साध्य नाम, स्वनाम तथा कार्य लिखे, यह तृतीय आवृत्ति हुई ॥ १३६ ॥

चक्रमन्त्रः

तारं नमो भगवते महासुदर्शनाय च ।
वर्मास्त्रान्तश्चक्रमन्त्रः षोडशाक्षर ईरितः ॥ १३७ ॥

षोडशाक्षरं मन्त्रमुद्धरति तारमिति । अयमपि स्वतन्त्रो मन्त्रः । अस्यर्ष्यादि सर्वं पूर्वमन्त्रोक्तम् । अथास्य तन्त्रान्तरस्थं यन्त्रमुच्यते—

षट्कोणं चक्रमालिख्य तस्यारेषु सुदर्शनम् ।
अष्टारं पङ्कजं बाह्ये दलेष्वष्टाक्षरं परम् ॥
तद्बाह्ये द्वादशारं स्याल्लिखेच्च द्वादशाक्षरम् ।
षोडशारं ततः पद्मं मूलमन्त्रं समालिखेत् ॥
कामबीजेन परितो वेष्टयेद्यन्त्रमुत्तमम् ।
महासुदर्शनं बाह्ये विलिखेद्देशिकोत्तमः ॥
तारं नमो भगवते महासुदर्शनाय च ।
महाचक्राय च महाज्वालङे दीप्तरूपङे ॥
सर्वतो रक्षयुग्मं च महाबलसङे द्विठः ।
मध्ये साध्यं समालिख्य प्रणवस्योदरे मुने ॥
सर्वसिद्धिप्रदं यन्त्रमिति देवोऽब्रवीत् स्वयम् । इति ॥ १३७ ॥

अब **१६ अक्षरात्मक सुदर्शन मन्त्र का उद्धार** कहते हैं—

प्रथम 'ॐ नमो भगवते महासुदर्शनाय', उसके बाद 'हुँ फट्' कहे । यह षोडशाक्षरात्मक सुदर्शन मन्त्र कहा गया ॥ १३७ ॥

चक्रमन्त्रमिदं प्रोक्तं सर्वभीतिनिवारणम् ।
क्षुद्रापमृत्युशमनं राज्ञां विजयवर्धनम् ॥ १३८ ॥

सप्तकोष्ठयन्त्रम्

रेखा विलिख्याऽष्ट शिरांसि तासा-
माबध्य बाह्ये श्रुतिशः क्रमेण ।
स्थानेहृषीकेशमनुं विभज्य
पादान् लिखेत् कोष्ठचतुष्टयस्थान् ॥ १३९ ॥

अष्टाक्षरार्णैः प्रविदर्भितांस्तान्
कोष्ठद्वये चक्रमनुं यथावत् ।
मध्यस्थकोष्ठे विलिखेत्ससाध्यं
स्यात्सप्तकोष्ठाह्वययन्त्रमेतत् ॥ १४० ॥

स्थाने हृषीकेश तव प्रकीर्त्या
जगत् प्रहृष्यत्यनुरज्यते च ।

रक्षांसि भीतानि दिशो द्रवन्ति
सर्वे नमस्यन्ति च सिद्धसङ्घाः॥ १४१ ॥

सप्तकोष्ठयन्त्रमाह रेखा इति। पूर्वापरायता रेखा लिखेत्। तासां शिरांसि बाह्ये क्रमेण श्रुतिश आबध्येति सम्बन्धः। प्रथमादिरेखाग्रं स्वतुर्याग्रेण मेलयेत्। तेन हरीतकीवद्भवतीति केचित्। पद्मपादाचार्यप्रभृतिभिः श्रुतिशस्त्रिश इति व्याख्यातम्। तेषां मते प्रथमादिरेखाग्रं स्वस्वतृतीयादिरेखाग्रेण सह मेलयेदित्यर्थः। अन्ये तु पूज्यपादा एवं व्याचक्षते। प्रथमरेखाग्रं स्वतुर्यरेखाग्रेणाबध्य पुनस्तृतीयरेखाग्रात् षष्ठरेखाग्रमाबध्य पुनः पञ्चमरेखाग्रादष्टमरेखाग्रं बन्धयेत्। एवं द्वितीयापार्श्वेऽपि। तदा द्वितीयरेखा सप्तमी च केवलं मध्येऽवशिष्यते। ततो द्वितीयरेखायाः पूर्वाग्रमारभ्योत्तरतो नीत्वा तत्पश्चिमाग्रेण बन्धयेत्। एवं सप्तमरेखापूर्वाग्रमारभ्य दक्षिणतो नीत्वा तत्पश्चिमाग्रेण बन्धयेत्। एवं बाह्ये इत्युक्तिश्च सार्थका भवति। एवं मध्यकोष्ठत्रयमेकरेखाबद्धं च भवतीति। एवमेतद्यन्त्रलिखनं स्वगुरुसम्प्रदायानुसारेण बोद्धव्यमिति संक्षेपः। अष्टाक्षर प्रविदर्भितान् पादान् कोष्ठचतुष्टयस्थान् प्रथमद्वितीयषष्ठसप्तमस्थान् लिखेत्। विदर्भितलक्षणं त्रयोविंशे वक्ष्यते। कोष्ठद्वये तृतीयपञ्चमरूपे। यथावदिति ससाध्यम्। मध्यस्थकोष्ठे चतुर्थकोष्ठे। ससाध्यं चक्रमनुमित्यनुषज्यते।

तदुक्तमाचार्यैः—कोष्ठत्रयलिखितसाध्य सुदर्शनं च। इति॥ १३९-१४१ ॥

ऊपर कहा गया १६ अक्षरात्मक सुदर्शन मन्त्र समस्त भय को दूर करने वाला है, क्षुद्र रोग और अपमृत्यु का शामक है और राजाओं के लिये विजय वर्धक है ॥ १३८ ॥

अब **सप्त कोष्ठक यन्त्र का वर्णन** करते हैं—

| |
|---|
| स्थाने हृषीकेश तव प्रकीर्त्या |
| जगत्प्र हृस्यत्यनुरज्यते च |
| ॐ नमोः भगवते मः |
| साध्यसाधक कर्मानमः |
| ह। सुदर्शनाय हुँ फट् |
| रक्षांसि भीतानि दिशोद्रवन्ति |
| सर्वे नमस्यन्ति च सिद्ध संघाट |

पूर्व, पश्चिम के क्रम से आठ रेखा खीचे। पुनः उसे बाहर की ओर चौथे चौथे रेखा में मिला देवे। प्रथमादि रेखा को उससे चतुर्थ रेखा के अग्रभाग में मिलाता जावे। तदनन्तर प्रथम, द्वितीय, षष्ठ और सप्तम इन चार कोष्ठकों में 'स्थाने हृषीकेश' इस श्लोक के चार पादों को प्रविभक्त कर लिख देवे। शेष तृतीय पञ्चम कोष्ठ में अष्टाक्षर नारायण मन्त्र से विदर्भित अष्टाक्षर चक्र मन्त्र को लिख देवे। (विदर्भित लक्षण देखें २३. १३७) और मध्य के कोष्ठ में (चतुर्थ कोष्ठ में) साध्य के साथ चक्र मन्त्र को लिख देवे। इस प्रकार के लिखे गये यन्त्र को सप्त कोष्ठात्मक यन्त्र कहते हैं। 'स्थान हृषिकेश' यह श्लोक १३९ में कहा गया है। 'स्थाने हृषीकेश से नमस्यन्ति च सिद्धसंघा' पर्यन्त यह (गीतोक्त) श्लोक है ॥ १३९-१४१ ॥

धारितं सप्तकोष्ठं तत् त्रायते महतो भयात्।
दुःस्वप्नदुर्निमित्तादिशमनं कीर्त्तितं बुधैः ॥ १४२ ॥

॥ इति श्रीलक्ष्मणदेशिकेन्द्रविरचिते शारदातिलके
षोडशः पटलः समाप्तः ॥ १६ ॥



धारितमिति । धारणप्रकार उक्त आचार्यैः—

भूर्जे वा क्षौमपट्टे तनुमसृणतरे कर्पटे वाऽस्य यन्त्रं
मन्त्री सम्यग् लिखित्वा पुनरपि गुलिकीकृत्य लाक्षाभिवीतम् ।
कृत्वा भस्मादिहोमप्रविहितघृतसम्पातपातात्तशक्ति
जप्तं सम्यक् प्रबध्यात्प्रतिशममुपयान्त्येव सर्वे विकाराः ॥ इति ॥

तन्मन्त्रमित्यर्थः । नपुंसकलिङ्गेऽपि मन्त्रशब्दस्य बहुषु स्थलेषु प्रयोगात् । तेनायमर्थः । गीतामन्त्रविदर्भितः साष्टाक्षरश्चक्रमन्त्रोऽपि जप्त एतत्फलद इति । तदुक्तमाचार्यैः—स्थाने हृषीकेशविदर्भितं च साष्टाक्षरं चाप्यभिजप्तमेतत् ।
रक्षां ग्रहादेः सततं विधत्ते यन्त्रं सुक्लृप्तं च मनुत्रयेण ॥ इति ॥
स्थाने हृषीकेशेति मन्त्रस्य चतुर्भिश्चरणैः सर्वेण पञ्चाङ्गं कृत्वा
अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृत्तिश्च वेदाः ।
वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा ॥

इति ध्यात्वा कर्णिकायां देवं पत्रेष्वङ्गानि तद्बहिर्लोकपालानर्चयेत् । दशलक्षजपः पुरश्चरणम् । दशांशं घृतेन होमः । सर्वपापक्षयसर्वशान्तिसर्वग्रहनिवारण सर्वरक्षोघ्नमिति फलम् ॥ १४२ ॥

॥ इति श्रीराघवभट्टविरचित-शारदातिलकटीकायां सत्सम्प्रदायकृतव्याख्यायां
पदार्थादर्शाभिख्यायां षोडशः पटलः ॥ १६ ॥



इस सप्त कोष्ठ यन्त्र के धारण करने से महान् भय से रक्षा होती है । यह यन्त्र दुःस्वप्न, अपशकुन को दूर करने वाला है तथा कीर्त्ति प्रदान करने वाला है ऐसा बुद्धिमानों का कहना है ॥ १४२ ॥

॥ इस प्रकार शारदातिलक के सोलहवें पटल की डॉ० सुधाकर मालवीय
कृत हिन्दी व्याख्या पूर्ण हुई ॥ १६ ॥



# अथ सप्तदशः पटलः

## अथ पुरुषोत्तमप्रकरणम्

अथ वक्ष्ये जगन्मूलं मन्त्रं श्रीपुरुषोत्तमम् ।
गोपितं वैष्णवे तन्त्रे भुक्तिमुक्तिफलप्रदम् ॥ १ ॥

वैष्णवतन्त्रगोपितत्वादन्ते स्मरणारूढत्वात् पुरुषोत्तमादिमन्त्रान् वक्तुमुपक्रमते अथेति । उक्तं च मन्त्रतन्त्रप्रकाशे—

पुरुषोत्तमसंज्ञस्य विष्णोर्भेदचतुष्टयम् ।
त्रैलोक्यमोहनस्तेषां प्रथमः प्रकृतिर्मतः ॥
श्रीकरश्च हृषीकेशः कृष्णश्चात्र चतुर्थकः ।
श्रीधरो वा चतुर्थः स्यात्प्रद्युम्नो वेति केचन ॥ इति ॥

मन्त्रदेवतयोरभेदेन पुरुषोत्तममित्युक्तिः । अतिरहस्यत्वाद् गोपितम् । अत एवाऽऽचार्यैः गुप्तपटले उद्धारः कृतः । भुक्तिमुक्तीत्यनेन विनियोग उक्तः ॥ १ ॥

वैष्णव तन्त्र के गुप्त होने के कारण तथा अन्त में स्मृतिपथ में आने के कारण पुरुषोत्तमादि मन्त्रों के वर्णन का उपक्रम करते हैं—

अब मैं श्री पुरुषोत्तम मन्त्र को कहता हूँ, जो जगत् का मूल कारण हैं । इन मन्त्रों को वैष्णव तन्त्रों में अत्यन्त सुगुप्त रूप रखा गया था । यह भोग एवं मोक्ष दोनों को देने वाला है ॥ १ ॥

मन्त्रः

तारमाररमाबीजं नत्यन्ते पुरुषोत्तमम् ।
पुनरप्रतिरूपान्ते ततो लक्ष्मीनिवास च ॥ २ ॥
सकलान्ते जगत्पूर्वं क्षोभणेतिपदं पुनः ।
सर्वस्त्रीहृदयोपेतं विदारणपदं पुनः ॥ ३ ॥
ततः परं त्रिभुवनमदोन्मादकरं ततः ।
सुरासुरान्ते मनुजसुन्दरीजनशब्दतः ॥ ४ ॥
मनांसि तापयद्वन्द्वं दीपयद्वितयं पुनः ।
शोषयद्वितयं भूयो मारयद्वितयं पुनः ॥ ५ ॥
स्तम्भयद्वितयं पश्चान्मोहयद्वितयं पुनः ।

द्रावयद्वितयं पश्चादाकर्षययुगं ततः ॥ ६ ॥
समस्तपरमोपेतसुभगेन च संयुतम् ।
सर्वसौभाग्यशब्दान्ते करेतिपदसंयुतम् ॥ ७ ॥
सर्वकामप्रदपदममुकं हनयुग्मकम् ।
चक्रेण गदया पश्चात् खड्गेन तदनन्तरम् ॥ ८ ॥
सर्वबाणैर्भिन्दयुगं पाशेनेतिपदं ततः ।
कट्टद्वयान्तेऽङ्कुशेन ताडयद्वितयं पुनः ॥ ९ ॥
कुरुशब्दद्वयमथो किं तिष्ठसि पदं पुनः ।
तावद्यावत्पदस्याऽन्ते समीहितमनन्तरम् ॥ १० ॥
ततो मे सिद्धमाभाष्य भवत्यन्ते सवर्म फट् ।
नमोऽन्तोऽयं मनुः प्रोक्तो द्विशताक्षरसंयुतः ॥ ११ ॥

ऋष्यादिकथनम् । षडङ्गमन्त्रः

जैमिनिर्मुनिराख्यातश्छन्दोऽस्याऽमितमीरितम् ।
समस्तजगतामादिर्देवता पुरुषोत्तमः ॥ १२ ॥

मन्त्रमुद्धरति तारेति । तारो देवीप्रणवः । ओङ्कारस्य सामान्येन सर्वमन्त्रादित्वेनोक्तेः अत्रापि तथा सम्प्रदायाद्वा प्रणवादित्वम् । यद्वा तारश्च तारश्चेत्येकशेषे तारौ पश्चाद्रमादिपदैः सह समासः । तत्र प्रथमतारपदेन प्रणवः द्वितीयतारपदेन देवीप्रणवः । इदं व्याख्यानं पद्मपादाचार्याणां सम्मतम् । मारः कामबीजम् । रमा श्रीबीजम् । नतिर्नमःपदम् । सर्वस्त्रीहृदयेति स्वरूपम् । अत्र क्वापि न सन्धिः । द्वितीयान्तानि सर्वाणि आभाष्येत्यस्य कर्माणि मन्त्रे तु सम्बुद्धयः । समीहितं सिद्धमिति च मन्त्रेऽपि द्वितीयान्तम् । द्विशताक्षर इत्युक्तिस्तु अमुकेति साध्यनामपरमित्येतत्केति केचन । अन्ये तु अमुकपदस्थाने दुरितादिपद प्रक्षेपाद् द्विशताक्षरसंयुत इत्युक्तेः । अधिकाक्षरत्वमपि न दोषायेत्यूचुः ।

केचिदेवमाहुः— शक्तिश्रीमारीभिः पुटितः स्मरणाच्च लोकमोहनकृत् । इति । प्रणवो बीजं हुँ शक्तिः ॥ २-१२ ॥

'तार (प्रणव) मार (क्लीँ) रमा (श्रीम्) के पश्चात् 'नमः पुरुषोत्तम्', अप्रतिरूप लक्ष्मीनिवास सकल जगत्क्षोभण सर्वस्त्रीहृदयविदारण त्रिभुवनमदोन्मादकर सुरासुरमनुज सुन्दरीजनमनांसि तापय तापय दीपय दीपय शोषय शोषय मारय मारय स्तम्भय स्तम्भय मोहय मोहय द्रावय द्रावय आकर्षय आकर्षय समस्त परमसुभग सर्वसौभाग्यकर सर्वकामप्रद अमुकं हन हन चक्रेण गदया खड्गेन सर्वबाणैर्भिन्द भिन्द पाशेन कट्ट कट्टांकुशेन ताडय ताडय कुरु कुरु किं तिष्ठसि तावद् यावत्समीहितम् ततो मे सिद्धं भवति हुँ फट् नमः' । इस प्रकार यह दो सौ अक्षरों का मन्त्र कहा गया ।

**विमर्श**—'उपेत' लगाने से यह मन्त्र दो सौ अक्षर से अधिक हो जाता है, किन्तु श्लोक में दो सौ अक्षर ही कहा गया है अत: 'उपेत' नहीं लगाना चाहिए ॥ २-११ ॥

इस मन्त्र के जैमिनि ऋषि हैं, अमित छन्द है और समस्त जगत् के आदि कारण पुरुषोत्तम इसके देवता हैं ॥ १२ ॥

**पुरुषोत्तमशब्दान्ते वदेत् त्रिभुवनं ततः ।**
**मदोन्मादकरान्ते हुँ हृदयं सकलं ततः ॥ १३ ॥**
**जगत्क्षोभणशब्दान्ते लक्ष्मीदयित हुँ शिरः।**
**मन्मथोत्तमसंयुक्तमङ्गजे कामदायिनि ॥ १४ ॥**
**हुँ शिखा परमोपेत सुभगाक्षरसंयुतम् ।**
**सर्वसौभाग्यकर हुँ कवचं परिकीर्त्तितम् ॥ १५ ॥**
**ततः सुरासुरोपेतमनुजान्वितसुन्दरी ।**
**ततः परस्ताद् हृदयविदारणपदं वदेत् ॥ १६ ॥**
**सर्वप्रहरणधर सर्वकामिक तत्परम् ।**
**हनद्वयं च हृदयं बन्धनानि ततः परम् ॥ १७ ॥**
**आकर्षयपदद्वन्द्वं महाबल हुमस्त्रकम् ।**
**त्रिभुवनेश्वरपदं ततः सर्वजनान्ततः ॥ १८ ॥**
**मनांसि हनयुग्मान्ते दारयद्वितयं च मे ।**
**वशमानय हुँ नेत्रं ताराद्याः फट् नमोऽन्तिकाः ।**
**षडङ्गमन्त्राः सन्दिष्टा नेत्रान्तास्तन्त्रवेदिभिः ॥ १९ ॥**

षडङ्गमन्त्रानुद्धरति पुरुषोत्तमेति । शिखामन्त्रे अङ्गजे इत्यस्य पूर्वेण सह सन्धिः ।

तदुक्तम्— मन्मथवर्णानुक्त्वा तदनु वदेदुत्तमाङ्गजेवर्णान् । इति ।

अस्त्रमन्त्रे हृदयेतिद्वयमपि स्वरूपम् । ताराद्या इति । उक्ता नेत्रान्ताः षडङ्गमन्त्राः। ताराद्याः प्रणवाद्याः फट् नमोऽन्तिकाः सन्दिष्टा इति सम्बन्धः । तन्त्रवेदिभिरित्यनेनैतदुक्तं भवति । यदाहुः—

करयोर्व्यापकं मन्त्रं न्यस्याऽङ्गान्यङ्गुलीषु तलयोश्च ।
न्यस्य बाणाननङ्गसहितान् व्यापकमन्त्रं ततो न्यसेद्वपुषि ॥
मातृकया विन्यसेत् प्रत्यर्णं मारबीजसंपुटया ।
न्यसेच्च मारमालामन्त्रार्णान् मातृकावदङ्गानि (दानाभि) ॥
चत्वारिंशद्वर्णान् पञ्चोदरसुहृद्गलास्यनासासु ।
संख्यापयेच्च देहे त्रीनर्णान् सकृत् सकृत् समस्तेन ॥
क्लीमातृकार्णपूर्वा मूर्त्तीर्न्यस्येच कामरतिपूर्वाः । इति ।

पीठमन्त्रात् पूर्वं गरुडमुद्रया गरुडमन्त्रं हृदि न्यसेत् । यदाहुः—

ईरितरीत्या देहे पीठन्यासान्तिकं विधाय हृदि ।
गरुडस्य मुद्रया तन्मन्त्रं न्यस्य न्यसेत् तु पीठमनुम् ॥ इति ॥ १३-१९ ॥

अब इस मन्त्र का **षडङ्गन्यास** कहते हैं—ॐ पुरुषोत्तम त्रिभुवन मदोन्माद कर हुँ इति हृदये से हृदय में, तदनन्तर 'ॐ सकल जगत्क्षोभण लक्ष्मीदयित हुँ' इति शिरसि से सिर में, 'ॐ मन्मथोत्तम अङ्गजे कामदायिनि हुँ' इति शिखायाम् से शिखा में, 'ॐ परम सुभगाक्षर सर्वसौभाग्यकर हुँ' इति कवचम् ॥ १३-१५ ॥

'सुरासुर मनुज सुन्दरी हृदय विदारण सर्वप्रहरणधर, सर्वकामिक हन हन हृदय बन्धनानि आकर्षय आकर्षय महाबल हुँ' अस्त्राय फट् से अस्त्र का, 'ॐ त्रिभुवनेश्वर सर्वजनमनांसि हन हन दारय दारय वशमानय हुं फट् नमः' इति नेत्रयो:, मन्त्र से दोनों नेत्रों में न्यास करे । तन्त्रवेत्ताओं ने इस प्रकार नेत्रन्त इस मन्त्र के षडङ्ग का उपदेश किया है ॥ १६-१९ ॥

**त्रैलोक्यमोहनार्णान्ते हृषीकेशपदं पुनः ।**
**पश्चादप्रतिरूपादि मन्मथानन्तरं वदेत् ॥ २० ॥**
**सर्वादि स्त्रीपदं पश्चाद्धृदयाकर्षणं ततः ।**
**आगच्छाऽऽगच्छ मन्त्रोऽयं ताराद्यो नमसाऽन्वितः ॥ २१ ॥**
**अनेन मनुना कृत्वा व्यापकं न्यस्य बाहुषु ।**
**अष्टायुधानि मुद्राभिर्मन्त्रैः सार्धं विचिन्तयेत् ॥ २२ ॥**

व्यापकमन्त्रे अप्रतिरूपेत्यस्य पूर्वेण सह सन्धिर्नाऽन्यस्येति । बाहुषु तत्तन् मुद्राभिः तत्तन्मन्त्रैः सार्धमष्टायुधानि विन्यस्य चिन्तयेत् देवमिति शेषः । अष्टायुधानि ध्यानोक्तानि । न्यासक्रमोऽपि तत्रैव वक्ष्यते । मुद्रालक्षणानि तु । पूर्वोक्ता पाशमुद्रा ज्ञेया । अथवेयं पाशमुद्रा । यदाहुः—

तर्जन्यङ्गुष्ठकौ कृत्वा सक्ताग्रौ कुञ्चिताः पराः ।
पाशमुद्रा समाख्याता । इति ।
वामस्य मध्यमाग्रं तु तर्जन्यग्रे नियोजयेत् ।
अनामिकां कनिष्ठां च तस्याङ्गुष्ठेन पीडयेत् ॥
दर्शयेद्दक्षिणस्कन्धे धनुर्मुद्रेयमीरिता ॥ इति ।

अथवेयं धनुर्मद्रा ज्ञेया । यदाहुः—

बाहुमूलं स्पृशेत्तेन बाह्वग्रेणैव साधकः ।
धनुर्मुद्रा यशः कीर्त्तिबलवीर्यविवर्धिनी ॥ इति ॥
कनिष्ठानामिके बद्ध्वा स्वाङ्गुष्ठेनैव वामतः ।
शिष्टाङ्गुली तु प्रसृते संश्लिष्टे खड्गमुद्रिका ॥ इति ॥

शङ्खमुशलचक्रगदाङ्कुशमुद्रा मया पूर्वमुक्ताः । एतदनन्तरं देहे श्रीवत्स-कौस्तुभवनमाला यथास्थानं स्वमन्त्रमुद्राभिर्न्यसेत् । तदुक्तम्—

अथ भूषणानि विद्वान् विन्यसेन्निजतनौ यथास्थानम् । इति ।

**एतेषां मुद्राः प्रागुक्ताः । मन्त्रास्तु वक्ष्यन्ते ॥ २०-२२ ॥**

अब इसके बाद **व्यापक मुद्रा का मन्त्र** कहते हैं—'त्रैलोक्यमोहन हृषीकेशाप्रतिरूपमन्मथ सर्वस्त्रीहृदयाकर्षण आगच्छ आगच्छ' इस मन्त्र के आदि में ॐ तथा अन्त में नमः लगावे । पुनः इस मन्त्र को पढ़ते हुये, अष्टायुध तथा अष्ट मुद्रा का चिन्तन करे । तदनन्तर व्यापक मुद्रा द्वारा बाहु के सभी भाग में न्यास करे ॥ २०-२२ ॥

**जगन्नाथध्यानम्**

**क्षीराम्भोनिधिमध्यस्थं निरन्तरसुरद्रुमम् ।**
**उद्यदर्केन्दुकिरणदूरीकृततमोभरम् ॥ २३ ॥**
**कालमेघसमालोकनृत्यद् बर्हिकदम्बकम् ।**
**उत्फुल्लकुसुमामोदप्रहृष्यद्भृङ्गसङ्कुलम् ॥ २४ ॥**
**कूजत्कोकिलसङ्घेन वाचालितदिगन्तरम् ।**
**नानाकुसुमसौरभ्यवाहिगन्धवहान्वितम् ॥ २५ ॥**
**कल्पवल्लीनिकुञ्जेषु क्रीडत्सिद्धकदम्बकम् ।**
**देवगन्धर्वकन्याभिर्गायन्तीभिरलङ्कृतम् ॥ २६ ॥**
**अनेकदीर्घिकायुक्तमुद्यानं महदद्भुतम् ।**
**तस्य मध्ये मणिमये मण्डपे तोरणान्विते ॥ २७ ॥**
**ऋतुभिः षड्भिरनिशं सेवितस्य महीयसः ।**
**सुरद्रुमस्य मूलस्थे महासिंहासने शुभे ॥ २८ ॥**
**रक्तारविन्दमध्यस्थगरुडोपरि संस्थितम् ।**
**ध्यायेद्वल्लभया सार्धं जगन्नाथं जगन्मयम् ॥ २९ ॥**

**क्षीरेत्यनेन पृथिव्यनन्तरं क्षीरसमुद्ररत्नद्वीपाद्भुतोद्यानमणिमण्डपकल्पतरुमहासिंहासनगरुडान् पीठन्यासादौ योजयेदित्युक्तम् ॥२३-२९ ।**

अब क्षीरसमुद्र रत्नद्वीप, अद्भुतोद्यान, मणिमण्डप, कल्पवृक्ष, महासिंहासन और गरुड़ की भी पीठन्यास में योजना करे । इसके लिये अद्भुतोद्यान का वर्णन करते हैं—

क्षीर समुद्र के मध्य में जहाँ कल्पवृक्षों का एक अद्भुत उद्यान है । उदीयमान् सूर्य की किरणों द्वारा जिसका सारा अन्धकार समूह नष्ट कर दिया गया है । इस प्रकार के उद्यान में काले मेघों को देखकर मयूर समूह मस्ती से नाच रहे हैं, फूले हुये पुष्पों के गन्ध को ग्रहण कर भ्रमर समूह प्रदृष्ट हो रहे हैं, कोकिल समूह के कूक से दिशायें गुञ्जायमान हैं और अनेक पुष्पों के सौरभ से सुगन्धित वायु बह रही है । कल्पलताओं के निकुञ्ज में सिद्धों का समूह क्रीडा कर रहा है । गाती हुई देव गन्धर्वों की कन्यायें जिसे अलंकृत कर रही हैं, जिसमें अनेक बावलियाँ हैं ।

इस प्रकार के अद्भुत उद्यान के मध्य भाग में तारण युक्त मणिमण्डप बना हुआ है, उस मणिमय मण्डप में निरन्तर षड् ऋतुओं से सेवित एक बहुत बड़े कल्पवृक्ष के नीचे एक उत्तम सिहांसन है, उस सिंहासन पर लालकमल के मध्य में बैठे हुये एवं गरुड़ की पीठ पर बैठे हुये महालक्ष्मी से युक्त जगन्मय जगन्नाथ का ध्यान करना चाहिए ॥ २३-२९ ॥

**देवं श्रीपुरुषोत्तमं कमलया स्वाङ्कस्थया पङ्कजं**
**बिभ्रत्या परिरब्धमम्बुजरुचा तस्यां निबद्धेक्षणम् ।**
**ध्यायेच्चेतसि शङ्खपाशमुशलांश्चापेषुखड्गान् गदां**
**हस्तैरङ्कुशमुद्वहन्तमरुणं स्मेरारविन्दाननम् ॥ ३० ॥**

ध्यानमाह देवमिति । अम्बुजरुचेति पीतवर्णया । तत्र कमला द्विभुजा । वामे पद्मं दक्षेणालिङ्गनम् । तदुक्तम्—

साब्जवामकरां पीतां श्लिष्यन्तीं पाणिना पतिम् ॥ इति ।

अन्यत्रापि-वामकरस्थाम्बुजया प्रतप्तकनकाभयाऽतिसुन्दर्या । इति ।

आयुधध्यानं तु वामेषु ऊर्ध्वादि बाधशङ्खधनुर्गदाः दक्षेषु ऊर्ध्वादि अङ्कुश-मुशलखड्गचक्राणि । तदुक्तं मन्त्रतन्त्रप्रकाशे—

दक्षिणाधःकरे चक्रं चिन्तयेदर्कभास्वरम् ।
खड्गं तथोपरितने मुशलं च तदुत्तरे ॥
सव्योर्ध्वदक्षिणे हस्ते चिन्तयेद्रुचिराङ्कुशम् ।
वामोर्ध्वे चिन्तयेत् पाशं तदधः शङ्खमेव च ।
सशरं च धनुर्वामे गदां ध्यायेदधःकरे ॥ इति ।

पूर्वोक्तायुधन्यासो देहेऽनेन क्रमेण ज्ञेयः । अत्र ध्यानानन्तरमेता मुद्रा दर्शनीयाः।
यदाहुः— श्रीवत्सकौस्तुभौ वनमालाख्या च मारबीजेन ।
ऊर्ध्वाङ्गुष्ठौ मुष्टी नियोजितौ मस्तके मिथः श्लिष्टौ ॥
त्रैलोक्यमोहनाख्या मुद्रा तां मूर्ध्नि योजयेत्तदनु । इति ॥ ३० ॥

अब **ध्यान के लिये जगन्नाथ के स्वरूप का वर्णन** करते हैं—

अपनी गोद में बैठी हुई पंकज धारिणी पंकजवर्णा श्री महालक्ष्मी जिनका आलिङ्गन की हुई हैं, जो स्वयं भी टकटकी लगाये महालक्ष्मी को निहार रहे हैं ऐसे श्री पुरुषोत्तम का चित्त में ध्यान करना चाहिए । जो अपने हाथों में शङ्ख, पाश, मुशल, धनुष, बाण, खड्ग, गदा और अंकुश धारण किये हुये हैं तथा जिनका मुखमण्डल मन्द मन्द हास्य से युक्त है ॥ ३० ॥

पुरश्चरणादिकथनम्

**एवं ध्यात्वा श्रियः कान्तं मनुं लक्षचतुष्टयम् ।**
**जपेद्वशी विधायाऽथ कुण्डमर्धेन्दुसन्निभम् ॥ ३१ ॥**

**जुहुयाद्वैष्णवे वह्नौ पद्मैर्जातिसमुद्भवैः ।**
**पुष्पैर्यवैः क्रमात्पश्चाद् ब्राह्मणानपि भोजयेत् ॥ ३२ ॥**

वशीत्येनेनाचार्योक्ता पूर्वमेव सूचिता । यदाहुः—

ध्यात्वा लक्षार्धसंख्यं जपतु मनुमिमं प्राप्तमन्त्राभिषेको
द्रव्यैरेभिश्च जुह्वद्भवति मनुवरस्याऽधिकारी क्रियासु ॥

शतं दधिघृतं पयः पृथगथाऽयुतं साज्यहविषा शृतेन
पयसा हुनेद्रविमितं तथा साक्षततिलैः ।
तथा दशदशोन्मितं त्रिमधुभिर्वरैश्चार्त्तवफलैः
पलाशसमिधां शतं समभितोषयेत् स्वगुरुवरम् ॥ इति ॥

जुहुयादिति । दशांशमिति शेषः । तदुक्तं 'दशांशं वैष्णवे वह्नौ' इति । क्रमात् पश्चादित्यनेन तर्पणाद्युक्तम् ॥ ३१-३२ ॥

इस प्रकार श्रीकान्त पुरुषोत्तम का ध्यान कर जितेन्द्रिय हो उक्त मन्त्र का चार लाख जप करे । तदनन्तर अर्धचन्द्र के समान कुण्ड बना कर जाती (मालती) कमल एवं यव से विशुद्ध वैष्णवाग्नि में वक्ष्यमाण प्रकार से दशांश होम करे तदनन्तर ब्राह्मणों को भोजन करावे ॥ ३१-३२ ॥

**अर्चयिष्यन् जगन्नाथं गायत्र्या परिशोधयेत् ।**
**आत्मानं यागवस्तूनि यागभूमिं च देशिकः ॥ ३३ ॥**

देशिक इत्यनेन कामाद्ययेत्युक्तम् ॥ ३३ ॥

अब **होम का प्रकार** तथा **जगन्नाथ की पूजा-विधि का वर्णन** करते हैं— जगन्नाथ की पूजा करने के पहले वक्ष्यमाण वैष्णवी गायत्री के द्वारा अपने को, यज्ञ की वस्तुओं को और यज्ञभूमि को आचार्य शुद्ध करे ॥ ३३ ॥

वैष्णवीगायत्री

**त्रैलोक्यमोहनायेति विद्महे पदमीरयेत् ।**
**स्मराय धीमहि पश्चात्तन्नो विष्णुः प्रचोदयात् ॥ ३४ ॥**
**गायत्र्येषा समाख्याता वैष्णवी सर्वसिद्धिदा ।**
**प्राक्प्रोक्ते वैष्णवे पीठे कल्पयेदासनं ततः ॥ ३५ ॥**

आसनमन्त्रः

**पक्षिराजाय ठद्वन्द्वमस्य मन्त्रः प्रकीर्त्तितः ।**

सर्वसिद्धिदेति स्वातन्त्र्येण जपेत् । तदृष्यादिकं यथा—

संकर्षणो मुनिश्छन्दो गायत्रं पुरुषोत्तमः ।
देवता मूर्ध्नि भालाक्षिदोःपत्सन्ध्यग्रकेषु च ॥

अक्षराणि प्रविन्यस्य षडङ्गानि समाचरेत् ।
पञ्चभिश्च त्रिभिश्चैव पञ्चभिश्च त्रिभिः पुनः ॥
चतुर्भिश्च चतुर्भिश्च कुर्यादङ्गानि वर्णकैः ।
द्विशताक्षरवच्चाऽस्याः पूजाद्यन्यत् समीरितम् ॥ इति ॥

प्राक्प्रोक्ते पञ्चदशोक्ते पीठे । अनेन विमलाद्याः शक्तीः पूजयेदित्यर्थः । पूजायन्त्रं तु मन्त्रतन्त्रप्रकाशोक्तम् । यथा—

लिखेदष्टदलं पद्मं चन्दनेन सुगन्धिना ।
युगद्वारं सुशोभाढ्यं कामं तन्मध्यतो लिखेत् ॥ इति ।

अस्येत्यासनस्य ॥ ३४-३६ ॥

'त्रैलोक्य मोहनाय विद्महे स्मराय धीमहि तन्नो विष्णुः प्रचोदयात्'—यह वैष्णवी गायत्री कही जाती है जो संपूर्ण सिद्धियों को देने वाली है । इसके बाद साधक पूर्व में (१५. २४-२७) में कहे गये वैष्णव पीठ पर आसन की कल्पना करे ॥ ३४-३५ ॥

आसन के लिये 'पक्षिराजाय स्वाहा' यह मन्त्र कहा गया है ॥ ३६ ॥

**सङ्कल्पितायां मूलेन मूर्त्तौ देवमनन्यधीः ॥ ३६ ॥**
**आवाह्य मनुना विद्वान् व्यापकेन समर्चयेत् ।**

लक्ष्म्यादिमन्त्राः

**भृगुर्लान्तयुतः सेन्दुर्बीजं देव्याः प्रकीर्त्तितम् ॥ ३७ ॥**

अवधानं विना आवाहनमेव कर्त्तुमशक्यमित्यनन्यधीरित्युक्तिः । आवाह्येति । व्यापकेनेति व्यापकेन मनुना देवमावाह्य कर्णिकायां समर्चयेदिति सम्बन्धः । पूर्वोक्तेनैव व्यापकमन्त्रेण । विद्वानिति । षोडशोपचारा व्यापकमन्त्रेणैवेत्युक्तम् ।

तदुक्तम्—आवाहनविसर्गान्तेषूक्तोऽयं पूर्वसूरिभिः । इति ।

देवीबीजमुद्धरति भृगुरिति । भृगुः सः । लान्तयुतो वयुक् । सेन्दुः सबिन्दुः । इदं देव्या बीजम् । अनेनाऽङ्गपूजायाः पूर्वम् अङ्कस्थाया देव्याः पूजां कुर्यादिति शेषः । तदुक्तम्—

दक्षेतरोरौ कमलामथेष्ट्वा समर्चयेदावरणानि भूयः । इति ।

अन्यत्रापि— वामोरौ संस्थितामिष्ट्वा श्रियमङ्गानि पूजयेत् । इति ।

अत्र भूषणानि पूजयित्वाऽङ्गानि पूजयेत् । तदुक्तं नारायणीये—

श्रीवत्सकौस्तुभौ विद्वान् स्तनस्योपरि वक्षसि ।
वनमालां गले चान्यत् पीतवस्त्रादि पूजयेत् ॥ इति ॥ ३६-३७ ॥

इस मन्त्र से आसन देने के उपरान्त मूल मन्त्र से मूर्ति का संकल्प कर उसमें व्यापक मन्त्र से (द्र. १७. २०-२२) श्री जगन्नाथ जी का आवाहन करे । तदनन्तर उनकी अर्चना करे ॥ ३६-३७ ॥

भृगु (सकार), लान्त (व) से युक्त कर उस पर बीज (अनुस्वार) लगावे । अर्थात् 'स्वं'—यह देवी के बीज मन्त्र का उद्धार है ।

**विमर्श**—इससे यह सूचित किया गया है कि अङ्गपूजा से पूर्व देवी के बीज द्वारा पुरुषोत्तम की अंकस्था महाश्री की पूजा करे ॥ ३६-३७ ॥

**कर्णिकायां यजेदादौ विधानेनाऽङ्गदेवताः ।**
**दलेषु पूजयेत् पश्चाल्लक्ष्म्याद्या धृतचामराः ॥ ३८ ॥**
**मुक्ताहारलसच्चारुपयोधरभरानताः ।**
**जवाकुसुमसङ्काशा मदविभ्रममन्थराः ॥ ३९ ॥**

देवीबीजम्

**ह्रस्वत्रयक्लीबसर्ग रहितस्वरशोभितम् ।**
**देवीबीजं क्रमादासां मन्त्रमाहुर्मनीषिणः ॥ ४० ॥**

विधानेनेति । केसरेष्वग्रादिचतुर्दिक्षु वर्मान्तानि सम्पूज्य विदिक्षु अस्त्रं पुरतो नेत्रमित्यर्थः । तदुक्तं मन्त्रतन्त्रप्रकाशे—

पूर्वादि दिक्षु चाऽभ्यर्चेद्धृदाद्यङ्गचतुष्टयम् ।
कोणेष्वस्त्रं प्रपूज्याऽथ पुरतो नेत्रमर्चयेत् ॥ इति ॥

अन्यत्रापि— अङ्गानि वर्मावधिकानि दिक्षु विदिक्षु चास्त्रं पुरतश्च नेत्रम् । इति ।

दलेषु दलमूलेषु । लक्ष्म्याद्या इति पूर्वमन्त्रोक्ताः । सर्गो विसर्गः । एभिरष्ठभी रहिताः स्वराः । आ ई ऊ ए ऐ ओ औ अं एतद्युक्तं देवीबीजमासां मन्त्रमाहुरिति सम्बन्धः ॥ ३८-४० ॥

साधक सर्वप्रथम कर्णिका में विधानपूर्वक अङ्ग देवताओं की इस प्रकार पूजा करे । कर्णिका की चारों दिशाओं में वर्मावधि का (हृदय, शिर शिखाओं वर्ग अङ्ग की, कोणों में अस्त्र की तथा आगे नेत्र का) पूजन करे । इसके पश्चात् पत्र के मूलभाग में पूर्व मन्त्रोक्त चामरधारिणी लक्ष्मी आदि की पूजा करनी चाहिए । (द्र. १६. ७८-७९) ॥ ३८ ॥

ये सभी देवियाँ मोतियों के हार से सुशोभित हैं । सभी पयोधर के भार से झुकी हुई हैं सब के शरीर की कान्ति जवा पुष्प के सदृश हैं, सभी मस्ती की विलास से अलसाई हुई हैं ॥ ३९ ॥

तीन ह्रस्व (अ इ उ), ४ क्लीव (ऋ ॠ ऌ ॡ) और विसर्ग से रहित इस प्रकार आ ई ऊ ए ऐ ओ औ अं—ये आठ स्वर इन आठ देवियों के बीज मन्त्र कहे गये हैं ॥ ४० ॥

**दलाग्रेषु यजेच्छङ्खं शार्ङ्गं चक्रमसिं गदाम् ।**
**अङ्कुशं मुशलं पाशमेतान्यस्त्राणि शार्ङ्गिणः ॥ ४१ ॥**

स्वमुद्राभिः स्वमनुभिः कथ्यन्ते मनवः क्रमात् ।

शङ्खमन्त्रः

आद्यो जलचरायाऽन्ते ठद्वयं मनुरीरितः ॥ ४२ ॥

शार्ङ्गमन्त्रः

शार्ङ्गाय सशरायाऽन्ते स्वाहान्तोऽनन्तरो मनुः ।

चक्रमन्त्रः

सुदर्शनमहाचक्रराजाऽन्ते स्याद्दहद्वयम् ॥ ४३ ॥
सर्वदुष्टभयं पश्चात् कुरु छिन्दिद्वयं पृथक् ।
विदारयपदद्वयं परमन्त्रान् ग्रस ग्रस ॥ ४४ ॥
भक्षयत्रासयद्वन्द्वां प्रत्येकं वर्म फट् द्वयम् ।
चक्राय नम इत्येष तृतीयो मन्त्र ईरितः ॥ ४५ ॥

स्वमुद्राभिरिति । दलाग्रेषु शार्ङ्गिण एतान्यस्त्राणि स्वमुद्राभिः सह स्वमनुभिर्यजेदिति सम्बन्धः । तत्र मुद्रालक्षणं मयोक्तं प्राक् । आद्यः शङ्खमन्त्रः । जलचरायेति महाजलचरायेति ज्ञेयम् । अन्ते ठद्वयमिति च कवचास्त्रयोः पूर्वमुच्चारणं सूचितम् । मनुरीरित इत्यनेन पाञ्चजन्याय नम इत्यस्यान्ते प्रयोगः सूचितः । आचार्यैः प्रथमं चक्रमन्त्रोद्धारे महासुदर्शनायेति हुँ फट् स्वाहेत्यन्तः सुदर्शनाय नम इत्युद्धृतम् । तदनन्तरं शङ्खादिमन्त्रा उद्धृताः । तत्र पद्मपादाचार्यैर्व्याख्यातं शङ्खादिमन्त्रेष्वपि महाशब्दः अन्ते च पाञ्चजन्याय नम इत्यादि प्रयोक्तव्यम् इति । मन्त्रतन्त्रप्रकाशे अपेक्षितार्थद्योतनिकायामपि एवमेव मन्त्रा उद्धृताः । मूलकारेणापि चक्रमन्त्रे चक्राय नम इति । कौमोदकीमन्त्रे च कौमोदकीपर इति वदता स्पष्टमेवोक्तम् । तेनायं मन्त्रः ॐ महाजलचराय हुँ फट् स्वाहा पाञ्चजन्याय नमः (१) । अन्ते महाशब्दान्ते शार्ङ्गाय सशराय । स्वाहान्त इत्यनेन हुँ फट् स्वाहान्त इत्युक्तम् । अन्यथा स्वाहेत्येव वदेत् ।

तदुक्तम्—धनुषः शार्ङ्गायाऽथ सशराय हुँ फट् युग्मको मन्त्रः । इति ।

आचार्यैरपि 'हुँ फट् स्वाहा मुशलस्य' इत्युद्धृत्य 'शार्ङ्गाय सशराय च' इत्युक्तम् । तत्र चकारेण हुँ फट स्वाहेत्यस्य समुच्चय इति । एवं तदग्रिमयोरपि खड्गाङ्कुशयोः तट्टीकाकारैर्व्याख्यातम् । मनुरित्यनेन शार्ङ्गाय नम इत्युक्तम् । अनन्तरः शार्ङ्गमन्त्रः । मन्त्रस्तु महाशार्ङ्गाय सशराय हुँ फट् स्वाहा शार्ङ्गाय नमः (२) । सुदर्शनेति । पृथगिति । कुरुकुरु छिन्दिछिन्दीति । प्रत्येकमिति । भक्षय भक्षय त्रासय त्रासयेति अनयोर्मध्ये भूतानीत्यपि ज्ञेयम् ।

तदुक्तमाचार्यैः—भक्षयद्वयभूतानि त्रासयद्वयवर्मफट् । इति ।

अन्यत्रापि—भूतानि त्रासयद्वयम् । हुँ फडिति द्वयं । ठद्वयं स्वाहेत्यर्थः । चक्रायेति सुदर्शनायेति ज्ञेयम् । तदुक्तम्—

स्वाहा सुदर्शनायेत्यथ नतिरिति चक्रमन्त्र उपदिष्टः । इति ।

**तृतीय इति चक्रमन्त्रः । मन्त्रो यथा । सुदर्शन महाचक्रराज दह दह सर्वदुष्टभयं कुरु कुरु छिन्दि छिन्दि विदारय विदारय परमन्त्रान् ग्रस ग्रस भक्षय भक्षय भूतानि त्रासय त्रासय हुँ फट् स्वाहा सुदर्शनाय नमः (३) ॥ ४५ ॥**

इसके पश्चात् पत्र के अग्रभाग में शङ्ख, शार्ङ्गधनुष, चक्र, खङ्ग, गदा, अंकुश, मुशल और पाश—इन अस्त्रों की पूजा करे ॥ ४१ ॥

इन अस्त्रों की पूजा इनके मुद्राओं के साथ तथा मन्त्रों के साथ करनी चाहिए । उसमें मुद्रा लक्षण पहले कह चुके हैं । अब इनके मन्त्र कहता हूँ । 'जलचराय स्वाहा' यह प्रथम शङ्ख का मन्त्र है ॥ ४२ ॥

'शार्ङ्गाय सशराय स्वाहा' यह दूसरे शार्ङ्ग अस्त्र के पूजन का मन्त्र है । 'सुदर्शन महाचक्र दह दह सर्वदुष्टभयं कुरु कुरु छिन्दि छिन्दि विदारय विदारय परमन्त्रान् ग्रस ग्रस भक्षय भक्षय त्रासय त्रासय प्रत्येकं हुँ फट् चक्राय नमः' यह तृतीय चक्र अस्त्र का तृतीय मन्त्र है । (दो पहले कह आये हैं जिसमें एक आठ अक्षर का है और दूसरा १६ अक्षर का है (द्र. १६. ६७,१३७) ॥ ४३-४५ ॥

**खङ्गमन्त्रः**

**खङ्गतीक्ष्णपदान्ते स्याच्छिन्दयुग्मं हुमादि च ।**

**गदामन्त्रः**

**चतुर्थोऽयं मनुः प्रोक्तः कौमोदकि महाबले ॥ ४६ ॥**
**सर्वासुरान्तकिपदं प्रसीदयुगवर्मफट् ।**
**स्वाहान्तोऽयं मनुः प्रोक्तः सद्भिः कौमोदकीपरः ॥ ४७ ॥**

**खङ्गेति । महाखङ्गेति ज्ञेयम् । छिन्दिकट्टयुगं पृथगित्यपपाटः । बहुग्रन्थविरोधात्। अपेक्षितपदानुद्धाराच्च ।**

**तदुक्तमाचार्यैः—खङ्गतीक्ष्णान्ते छिन्दयुक् खङ्गमन्त्रकः । इति ।**

**'खङ्गतीक्ष्णछिन्दयुगं हुँ फडाद्ययं मन्त्रः' इति अपेक्षितार्थद्योतनिकायां मन्त्र-तन्त्रप्रकाशेऽपि एतादृशस्योद्धृतत्वात् । तेनायं पाठः छिन्दयुग्मं हुमादि चेति । आदिशब्दात् फट् स्वाहेति च । खङ्गाय नम इति । चतुर्थः खङ्गमन्त्रः । मन्त्रो यथा । महाखङ्ग तीक्ष्ण छिन्द छिन्द हुँ फट् स्वाहा खङ्गाय नमः (४) ।**

**कौमोदकीति महाकौमोदकीपरः । कौमोदक्यै नम इत्यन्तः । मन्त्रस्तु । महाकौमोदकि महाबले सर्वासुरान्तकि प्रसीद प्रसीद हुँ फट् स्वाहा कौमोदक्यै नमः (५) ॥ ४७ ॥**

'हुं खङ्गतीक्ष्ण छिन्द छिन्द' यह चतुर्थ खङ्ग अस्त्र का मन्त्र है । 'कौमोदकि महाबले सर्वसुरान्तकि प्रसीद प्रसीद हुँ फट् स्वाहा' यह सज्जनों ने विष्णु भगवान् कौमोदकी गदा का मन्त्र कहा है ॥ ४६-४७ ॥

अङ्कुशमन्त्रः

अङ्कुशान्ते कट्टयुगं षष्ठोऽयं मनुरीरितः ।

मुशलमन्त्रः

संवर्त्तकान्ते मुशल पोथयद्वितयं पुनः ॥ ४८ ॥
हुँ फट् द्विठान्तो मन्त्रोऽयं सप्तमः परिकीर्त्तितः ।

पाशमन्त्रः

पाशैर्बन्धद्वयं पश्चादाकर्षय पदद्वयम् ॥ ४९ ॥
वह्निजायावधिः सद्भिरष्टमो मन्त्र ईरितः ।
लोकेशान् पूजयेत् पश्चाद्वज्राद्यैरायुधैः सह ॥ ५० ॥

अङ्कुशेति महाङ्कुशेति । अयमिति हुँ फट् स्वाहा समुदायः । तदुक्तम् 'अङ्कुशकट्टयुगोपरि हुमादि' इति । मनुरित्यङ्कुशाय नम इति । षष्ठ इत्यङ्कुशस्य। मन्त्रस्तु । महाङ्कुश कट्ट कट्ट हुँ फट् स्वाहा अङ्कुशाय नमः (६) ।

मुशलेति महामुशल । मन्त्र इति मुशलाय नम इति । सप्तम इति मुशलस्य । मन्त्रस्तुं संवर्त्तक महामुशल पोथय हुँ फट् स्वाहा मुशलाय नमः (७) ।

पाशेति महापाश । वह्निजायावधिरिति हुँ फट् स्वाहान्त इत्यर्थः । तदुक्तम्— महापाशपदोपरि बन्धद्वयं तथा कर्षयद्वयं हुँ फट् स्वाहा । इति । पाशमन्त्र इति । पाशाय नम इति । अष्टम इति पाशस्य । मन्त्रस्तु । महापाश बन्ध बन्ध आकर्षय आकर्षय हुँ फट् स्वाहा पाशाय नमः (८) ।

अन्यत्रैषां प्रणवकामादित्वमुक्तम् । आयुधमन्त्राः क्रमतो वक्ष्यन्ते । तारमार-बीजाद्या इति । एषां पूजायां विशेषः । यदाहुराचार्याः—

दरचक्रगदामुशलाः पूर्वाद्याशासु चाथ कोणेषु ।
वह्न्यादिषु शार्ङ्गखड्गाङ्कुशपाशाः । इति ॥

आयुधानां वर्णा उक्ता मन्त्रतन्त्रप्रकाशेऽपि—

चक्रं भास्करसङ्काशं खड्गमाकाशसन्निभम् ।
मुशलं श्यामलं ज्ञेयमङ्कुशः कृष्णवर्णकः ॥
पीतं पाशं विजानीयाच्छङ्खं चन्द्रप्रभं स्मरेत् ।
धनुः स्याद्धेमपिङ्गाभं गदा पावकसन्निभा ॥ इति ॥

पश्चादित्यनेन श्रीवत्सकौस्तुभवनमाला अपि स्वस्वस्थाने स्वमुद्रास्वमन्त्रैः पूजनीया इत्युक्तम् । अपेक्षितार्थद्योतनिकामन्त्रतन्त्रप्रकाशादिषु उक्तत्वात् । केचन प्रधानपूजायामेव पूजयन्ति । तथोक्तं मया प्राक् । तत्र मुद्रालक्षणानि मयोक्तानि प्राक् । मन्त्रास्तु । ॐ महाश्रीवत्साय हुँ फट् स्वाहा श्रीवत्साय नमः । ॐ महामृतसम्भवाय हुँ फट् स्वाहा कौस्तुभाय नमः । ॐ महावनमाले हुँ फट् स्वाहा वनमालायै नमः ॥ ४८-५० ॥

'अंकुश कट्ट कट्ट हुँ' यह छठे अंकुश का मन्त्र है । 'संवर्त्तक मुशल पोथय पोथय हुँ फट् स्वाहा' यह सप्तम मुशल का मन्त्र है । 'पाशैर्बन्ध बन्ध आकर्षय आकर्षय स्वाहा' यह सज्जनों ने आठवें पाश का मन्त्र कहा है । इसके पश्चात् वज्रादि अस्त्रों के साथ इन्द्रादि लोकपालों की पूजा करे ॥ ४८-५० ॥

पुरश्चरणादिकथनम्

**इत्थमभ्यर्चयन्नित्यं यथावत् पुरुषोत्तमम् ।**
**प्राप्नोति महतीं लक्ष्मीं सौभाग्यमतुलं यशः ।**
**आयुरारोग्यमैश्वर्यं मनोऽभीष्टानि विन्दति ॥ ५१ ॥**

**यथावदिति । पूर्वोक्तप्रकारेण ॥ ५१ ॥**

इस प्रकार शास्त्रीय रीति से नित्य पुरुषोत्तम भगवान् की पूजा करने वाला महती लक्ष्मी महान् सौभाग्य एवं अतुलनीय यश प्राप्त करता है । इतना ही नहीं वह आयु, आरोग्य, ऐश्वर्य तथा स्वमनोऽभिलषित पदार्थ प्राप्त करता है ॥ ५१ ॥

**हयारिकुसुमैर्देवमर्चयित्वा यथाविधि ।**
**शशिप्रसूनैर्जुहुयादष्टोत्तरसहस्रकम् ॥ ५२ ॥**
**मासमात्रेण वशगास्तस्य स्युः सकला नृपाः ।**
**हुत्वा बिल्वफलैः पक्वैः श्रियं विन्देदनिन्दिताम् ॥ ५३ ॥**
**प्रफुल्लैररुणाम्भोजैस्तामेव लभते पुनः ।**
**हुत्वा ज्योतिष्मतीतैलं सहस्रं वसुसंख्यकम् ॥ ५४ ॥**
**सुभगो जायते सम्यक् सर्वेषां नात्र संशयः ।**
**विधानेनाऽमुना मन्त्री महारोगात् प्रमुच्यते ॥ ५५ ॥**
**अश्वत्थसमिधां होमः पराहृतधनप्रदः ।**
**आज्याक्तदूर्वाहोमेन मुच्यते महतो भयात् ॥ ५६ ॥**
**यस्य नामयुतं मन्त्रं जपेदयुतसंख्यया ।**
**स भवेद्दासवत् तस्य नात्र कार्या विचारणा ॥ ५७ ॥**
**बहुना किमिहोक्तेन मनुना साधकोत्तमः ।**
**साधयेत्सकलान् कामान् साक्षाद्विष्णुरिवापरः॥ ५८ ॥**

**हयारिः करवीरः। यथाविधीत्यग्नौ पीठपूजापूर्वकमित्यर्थः। शशिप्रसूनैः कुमुदैः। वसुसंख्यकं सहस्रम् अष्टसहस्रम् । यस्य नामयुतमिति अमुकपदस्थाने ॥ ५२-५८ ॥**

ऊपर कही गई विधि के अनुसार करवीर के पुष्पों से जो भगवान् पुरुषोत्तम की पूजा करता है और कुमुद के पुष्पों से १००८ बार एक महीने तक इस मन्त्र से होम करता है, सभी राजागण उसके वशीभूत हो जाते हैं । इस मन्त्र से विल्व फल का हवन करने वाला विशुद्ध श्री प्राप्त करता है ॥ ५२-५३ ॥

यदि फूले हुये कमलों से उतनी ही संख्या में होम करे तो भी लक्ष्मी की प्राप्ति होती है । ज्योतिष्मती के तेल का १००८ बार होम करे तो वह सभी में अधिक सौभाग्यवान् हो जाता है, इसमें संशय नहीं । इस रीति से किया गया होम साधक को महारोगों से छुटकारा दिला देता है ॥ ५४-५५ ॥

अश्वत्थ की समिधाओं का होम दूसरों के द्वारा लाये गये धन को दिलाता है । घृताक्त दूर्वा के होम से महान् से महान् भय भाग जाता है ॥ ५६ ॥

पूर्वोक्त (१७. ७-११) श्लोक में कहे गये मन्त्र में अमुक के स्थान में यदि जिसका नाम जोड़कर इस मन्त्र का दस हजार जप करे तो वह (साध्य) दास के समान हो जाता है इसमें विचार की आवश्यकता नहीं ॥ ५७ ॥

अब इस मन्त्र के विषय में बहुत क्या कहें, साधक इस मन्त्र के प्रभाव से साक्षात् विष्णु के समान अपनी सभी कामनायें पूर्ण कर लेता है ॥ ५८ ॥

**श्रीकरमन्त्रः । ऋष्यादिकथनम्**

**उत्तिष्ठपदमाभाष्य श्री क्रोधीशहुताशनौ ।**
**वह्निजायावधिर्मन्त्रो वस्वक्षरसमन्वितः ॥ ५९ ॥**

**श्रीकरमन्त्रमाह उत्तिष्ठेति । श्री स्वरूपम् । क्रोधीशः कः । हुताशो रेफः । वस्वक्षरः अष्टाक्षरः । केचन श्रीबीजपूर्वकम् अपरे तारपूर्वकमेनमाहुः । तदुक्तम्—**

**केचिच्छ्रीबीजाद्यं केचित्ताराद्यमेनमिच्छन्ति । इति ।**

**प्रणवमारश्रीबीजैः सम्पुट इति पद्मपादाचार्याः । अतएव समन्वित इत्युक्तिः ॥ ५९ ॥**

अब **श्रीकर मन्त्र के उद्धार का प्रकार** कहते हैं—'उत्तिष्ठ' पद कहने के बाद 'श्री' यह पद, तदनन्तर क्रोधीश (क), उसके बाद हुताश (र), इसके बाद वह्निजाया (स्वाहा) यह आठ अक्षरों वाले श्रीकर मन्त्र का उद्धार हुआ । इसका स्वरूप 'उत्तिष्ठ श्रीकर स्वाहा' (८) हुआ ॥ ५९ ॥

**ऋषिरस्य भवेद्वामः पङ्क्तिश्छन्द उदाहृतम् ।**
**श्रीकराख्यो हरिः प्रोक्तो देवताऽस्य मनीषिभिः॥ ६० ॥**

**षडङ्गन्यासः**

**हृदयं भीषयद्वन्द्वं त्रासयद्वितयं शिरः ।**
**शिखा प्रमर्दययुगं वर्म प्रध्वंसयद्वयम् ॥ ६१ ॥**
**अस्त्रं रक्षयुगं सर्वे हुमन्ताः समुदीरिताः।**
**मूर्ध्नि नेत्रद्वये कण्ठे हृदयोदरयोः पुनः ॥ ६२ ॥**
**ऊरुजाङ्घपदद्वन्द्वे मन्त्रवर्णान् प्रविन्यसेत् ।**
**मुखे न्यसेद् ब्राह्मणोऽस्य मुखमासीदिमं मनुम् ॥ ६३ ॥**

**बाहू राजन्यः कृतोऽयं न्यस्तव्यो बाहुयुग्मके ।**
**ऊरू तदस्य यद्वैश्य इममूरुद्वये न्यसेत् ॥ ६४ ॥**
**पादद्वये न्यसेन्मन्त्रं पद्भ्यां शूद्रो अजायत ।**

**आयुधन्यासः**

**चक्रं शङ्खं गदां पद्मं हस्ताग्रेष्वथ विन्यसेत् ॥ ६५ ॥**
**इत्थं न्यासं तनौ कृत्वा देवं पूर्वोक्तमण्डपे ।**
**रक्तपद्मासनस्थस्य गरुडस्योपरि स्थितम् ॥ ६६ ॥**

**वामो वामदेव इत्यर्थः । तदूक्तम् 'ऋषिरस्य वामदेवः' इति । ॐ बीजं स्वाहा शक्तिः । तदुक्तम्—**

**विष्णुः सबिन्दुरुदितो बीजं शक्तिः शिरोऽस्य विज्ञेयम् । इति ।**

**मनीषिभिर्हुमन्ताः समुदीरिता इति सम्बन्धः । मनीषिभिरित्यनेन पञ्चाङ्गान्तरमष्टाङ्गं कर्त्तव्यमित्युक्तम् । यदाहुः—**

**अष्टाङ्गानि च कुर्यान् मन्त्रार्णैरुदितवर्त्मना क्रमतः ।**
**हृदयशिरः पूर्वशिखाकवचास्त्राक्ष्युदरपृष्ठसंभिन्नैः ॥ इति ॥**

**मूर्ध्नीति । अयं सृष्टिन्यासः । यदाहुः—**

**सृष्टिरियं निर्दिष्टा तुन्दादिहृदन्तिका स्थितिस्तद्वत् ।**
**पादाद्यो मूर्धान्तः कथित एष सृष्ट्यादिः ॥ इति ॥**

**विन्यसेदिति स्वस्वमन्त्रैः स्वस्वमुद्राभिः ॥ ६०-६६ ॥**

इस मन्त्र के वामदेव ऋषि हैं तथा पङ्क्ति छन्द है । मनीषियों ने श्री देने वाले विष्णु को इसका देवता कहा गया है ॥ ६० ॥

अब इस मन्त्र के **पञ्चाङ्ग तथा अष्टाङ्ग न्यास का प्रकार** कहते हैं—'भीषय भीषय हुँ' इति हृदये, 'त्रासय त्रासय हुँ' इति शिरसि, 'प्रमर्दय प्रमर्दय हुँ' इति शिखायाम्, 'प्रध्वंसय प्रध्वंसय हुँ' इति कवचयोः, 'रक्ष रक्ष हुँ' अस्त्राय फट्—इस प्रकार पञ्चाङ्ग न्यास करे । तदनन्तर शिर, दोनों नेत्र, कण्ठ, हृदय, उदर, ऊरु, जङ्घा और दोनों पैर—इन आठ स्थानों पर ऊपर कहे गये मन्त्र के आठ अक्षरों में प्रत्येक से न्यास करे ॥ ६१-६२ ॥

इसके बाद 'ब्राह्मणोऽस्य मुखमासीत्' से मुख में, 'बाहू राजन्यः कृतः' से दोनों बाहुओं में, 'ऊरु तदस्य यद्वैश्यः' इस मन्त्र से दोनों ऊरुओं का न्यास करना चाहिए ॥ ६३-६४ ॥

इसके बाद 'पद्भ्याम् शूद्रो अजायत' से दोनों पैरों में, फिर चक्र, शङ्ख, गदा और पद्म के मुद्राओं एवं उनके मन्त्रों से हाथ के अग्रभाग में न्यास करना चाहिए ॥ ६५ ॥

इस प्रकार से शरीर का न्यास कर पूर्वोक्त मण्डप में रक्त पद्मासनस्थ गरुड़ के ऊपर बैठे हुये श्री हरि का ध्यान करे ॥ ६६ ॥

श्रीहरिध्यानम्

**काञ्चनाद्रिसमप्रभं कमलाननं कमलेक्षणं**
**चक्रशङ्खगदासरोजधरं मनोहरदर्शनम्।**
**कौस्तुभाङ्कितवक्षसं मुकुटाङ्गदादिविभूषणं**
**तार्क्ष्यवाहनमच्युतं हृदि भावयामि जगत्पतिम् ॥ ६७ ॥**

**न्यासस्थानमायुधध्यानेन ज्ञेयम् । आयुधध्यानं तु दक्षाद्यूर्ध्वयोराद्ये तदधस्थयोरन्ये । अत्र ध्यानानन्तरं श्रीवत्सकौस्तुभवनमालामुद्राः प्रदर्शयेत् ॥ ६७ ॥**

**श्रीहरि का ध्यान**—जिनके शरीर की कान्ति सुवर्णमयपर्वत के समान है, जिनका मुख एवं नेत्र कमल के सदृश है, जो हाथों में चक्र, शङ्ख, गदा और कमल धारण किये हुये हैं। जिनका वक्ष:प्रदेश कौस्तुभ से उद्भासित है एवं जो मुकुट अङ्गदादि भूषणों से भूषित हैं, जो देखने में अत्यन्त मनोहर हैं ऐसे गरुड़ वाहन जगत्पति श्री हरि का मैं अपने हृदय में ध्यान करता हूँ ॥ ६७ ॥

पुरश्चरणादिकथनम्

**अष्टलक्षं जपेन्मन्त्री मन्त्रमेनं दशांशतः।**
**बिल्वक्षीरद्रुमोत्थाभिः समिद्भिररुणाम्बुजैः ॥ ६८ ॥**
**पयोऽन्नैः सर्पिषा हुत्वा गुरुं सन्तोषयेद्धनैः ।**
**मूर्त्तौ मूलेन क्लृप्तायां पूजयेद् देवमन्वहम् ॥ ६९ ॥**
**अङ्गान्यादौ केसरेषु दिक्पत्रेषु समर्चयेत् ।**
**श्रियं रतिं धृतिं कान्तिं लीलापङ्कजधारिणीः ॥ ७० ॥**
**पीतारुणाश्यामनीला विदिक्पत्रेषु पूजयेत् ।**
**वासुदेवादिकाः मूर्त्तीः पार्श्वयोर्निधियुग्मकम् ॥ ७१ ॥**

**क्षीरद्रुमेति अश्वत्थोदुम्बरप्लक्षवटाः । तेनाष्टभिर्द्रव्यैः प्रत्येकमयुतरीत्या दशांशसिद्धिः । मूलेन क्लृप्तायामिति । पूर्वोक्ते वैष्णवे पीठे इति शेषः । अङ्गानि समाराध्येति शेषः । समाराध्येति केसरेष्विति शेषः । अन्ये कर्णिकायां पूजयन्ति । पार्श्वयोरित्यष्टदलबाह्ये ॥ ६८-७१ ॥**

साधक इस अष्टाक्षर मन्त्र का आठ लाख जप करे । पश्चात् विल्व तथा क्षीरी वृक्षों की (अश्वत्थ, उदुम्बर, प्लक्ष एवं वट) समिधाओं से एवं रक्त कमलों से उसका दशांश हवन करे ॥ ६८ ॥

अथवा घृत मिश्रित खीर से होम करे । इसके पश्चात् गुरु को धन देकर संतुष्ट करे । मूल मन्त्र से मूर्त्ति का संकल्प कर श्री विष्णु का पूजन करे ॥ ६९ ॥

केशरों पर अङ्ग की पूजा करे । चारों दिशाओं के पत्रों पर लीलाकमल धारण करने वाली श्री, रति, धृति और कान्ति की पूजा करे ॥ ७० ॥

दिशाओं के आग्नेयादि कोणों में क्रमशः पीत, अरुण, श्याम और नील वर्ण वाली वासुदेव, संकर्षण, प्रद्युम्न और अनिरुद्ध (द्र १५. २९-३०) की मूर्त्तियों का पूजन करे । पुनः अष्टदल के बाहर पार्श्वभाग में शङ्खनिधि एवं पद्मनिधि का पूजन करे ॥ ७१ ॥

**विष्वक्सेनं यजेदीशे लोकपालाननन्तरम् ।**
**एवं सम्पूजयेद् देवं साधयेदिष्टमात्मनः ॥ ७२ ॥**
**दूर्वाचरुभ्यां साज्याभ्यां जुहुयादयुतं बुधः ।**
**सम्पातितं चरुं पश्चात्साध्यो भुञ्जीत साधितम् ॥ ७३ ॥**
**ब्राह्मणान् भोजयेत् सम्यङ्मधुरैर्होमवासरे ।**
**तोषयेद् गुरुमर्थेन वस्त्रैर्धान्यैर्विभूषणैः ॥ ७४ ॥**
**जित्वाऽपमृत्युरोगादीन् दीर्घमायुः स विन्दति ।**
**आज्यसिक्तैः सरसिजैर्जुहुयादयुतत्रयम् ॥ ७५ ॥**
**निवसेत् कमला तस्मिन् न त्यजेत् तत्सुतानपि ।**
**बिल्ववृक्षसमिद्धोमात् साक्षद्धनपतिर्भवेत् ॥ ७६ ॥**
**पूगपुष्पसमायुक्तैस्तन्दुलैर्मधुरोक्षितैः ।**
**जुहुयादचिरादेव सम्पदां जायते निधिः ॥ ७७ ॥**

विष्वक्सेनं यजेदिति । अत्र विष्वकोनमुद्रा प्रदर्शनीया । यदाहुः—

नासिकाग्रसमीपस्थां कृत्वा वामस्य तर्जनीम् ।
दण्डवद्दक्षिणे कुर्याद्दक्षिणस्य प्रदेशिनीम् ॥
विष्वक्सेनस्य मुद्रेयं तत्पूजायां प्रदर्शयेत् ॥ इति ।

**ईश इति पद्मबाह्ये । अन्ये अग्रे पूजयन्ति । एतदन्तं द्वितीयावरणम् । अनन्तरमिति वज्रादीन् । चरुमिति होमशेषम् । सुसाधितमिति जपादिना ॥ ७२-७७ ॥**

ईशान कोण में विष्वक्सेन की पूजा करे एवं लोकपालों की पूजा करे । इस प्रकार कहे गये श्री विष्णु की पूजा कर अपना मनोरथ सिद्ध करे ॥ ७२ ॥

बुद्धिमान साधक आज्ययुक्त दूर्वा एवं आज्ययुक्त खीर से दस हजार होम करे और हुतशेष चरु किसी अन्य पात्र में छोड़ता जाय । पुनः मन्त्रसिद्ध चरु साधक स्वयं भोजन करे ॥ ७३ ॥

होम के दिन ब्राह्मणों को मधुर पदार्थ का भोजन करावे तथा वस्त्र धान्य और आभूषण देकर अपने गुरु को प्रसन्न करे ॥ ७४ ॥

ऐसा करने से यजमान अपमृत्यु एवं रोगादि पर विजय प्राप्त कर दीर्घ आयु

प्राप्त करता है। घृत से सिञ्चित कमलों से इस मन्त्र के द्वारा तीन अयुत (तीस हजार) होम करे। ऐसे पुरुष के पास कमला सर्वदा निवास करती हैं। यहाँ तक कि उसके पुत्रों का सान्निध्य कभी नहीं छोड़ती। विल्ववृक्ष की समिधा का होम करने से मनुष्य साक्षात् कुबेर हो जाता है ॥ ७५-७६ ॥

त्रिमधुर मिश्रित पूगपुष्प से युक्त तण्डुलों के हवन से पुरुष के पास समस्त सम्पत्तियों का भण्डार हो जाता है ॥ ७७ ॥

**आज्येन जुहुयाल्लक्षं परान् जयति पार्थिवः।**
**अब्जसूत्रं भुजे बद्धं मनुनाऽनेन साधितम् ॥ ७८ ॥**
**रोगापमृत्युदुःखानि नाशयेन्नाऽत्र संशयः।**
**जलाञ्जलिभिरात्मानमभिषिञ्चेत् दिने दिने ॥ ७९ ॥**
**स्नानकालेषु स भवेत् सौभाग्यश्रीसमृद्धिमान्।**

अब्जसूत्रमिति मन्त्रवर्णसंख्यान्यब्जसूत्राण्यानीय मन्त्रेणाऽष्टौ ग्रन्थयो देयाः। तदुक्तफलदम् ॥ ७८-८० ॥

**ऊर्ध्वबाहुद्वयो मन्त्री पश्यन्नादित्यमण्डलम् ॥ ८० ॥**
**सहस्रमानं प्रजपेन्नित्यं निशितधीर्मनुम्।**
**सर्वे मनोरथास्तस्य सिद्ध्येयुर्नाऽत्र संशयः ॥ ८१ ॥**

निशितधीरित्यनेन तत्र देवतां ध्यायन्नित्युक्तम्। गौतमकल्पोक्तं यन्त्रमुच्यते—

तारं ससाध्यमष्टारे कोणे मूलाक्षराणि तु।
प्रत्येकं शक्त्यस्त्रिपुञ्जिकोणाग्रेषु षडङ्गकम् ॥
बहिरष्टदले पद्मे लिखेदष्टाक्षरं मनुम्।
पञ्चाङ्गैर्वेष्टयेद्बाह्ये द्वादशाक्षरसंयुतम् ॥
पद्मं द्वादशपत्रं तु वृत्तात् षट्कोणकं बहिः।
कोणेष्वनङ्गबीजं तु बहिरष्टदलाम्बुजम् ॥
केसरेषु कलाः पत्रे द्वन्द्वशः श्रीकरं मनुम्।
तारः श्रीकरकृष्णौ च ङेन्तौ गोपीकुचान्ततः ॥
भूषणायेति मन्त्रोऽयं तत्पाशाङ्कुशवेष्टितम्।
संवीतं च सदण्डेन व्योम्नैतद्यन्त्रमुत्तमम् ॥
भूतप्रेतपिशाचाश्च यक्षगन्धर्वराक्षसाः।
लयं यान्ति तथा सर्वे केवलं यन्त्रधारणात् ॥
संसाधितं महायन्त्रमपस्मारहरं परम्।
साध्यनामाङ्कितं यन्त्रं धारयित्वा वशङ्करम् ॥
यद्यत्कामयते वत्स तत् प्राप्नोति समाहितः ॥ इति ॥ ८०-८१ ॥

यदि राजा इस मन्त्र से घृत द्वारा एक लाख होम करे तो वह अपने प्रतिपक्षी राजा पर विजय प्राप्त करता है। इस मन्त्र जपादि द्वारा सिद्ध किये गये

कमल सूत्र को हाथ में बाँधे तो रोग, अपमृत्यु एवं दुःख नष्ट हो जाते हैं । इसमें संशय नहीं है ॥ ७८-७९ ॥

यदि स्नानकाल में इस मन्त्र को पढ़ते हुये प्रतिदिन जलाञ्जलि द्वारा अपने को अभिमन्त्रित करे तो वह भाग्यशाली, श्रीमान् एवं समृद्धिशाली हो जाता है ॥ ७९-८० ॥

यदि दोनों हाथों को ऊपर किये हुये आदित्यमण्डल की ओर देखते हुये, इस मन्त्र के देवता का ध्यान कर एक सहस्र जप करे तो उसके सभी मनोरथ सिद्ध हो जाते हैं इसमें संशय नहीं ॥ ८०-८१ ॥

गोपालमन्त्रः । ऋष्यादिकथनम्

**कृष्णाय पदमाभाष्य गोविन्दाय ततः परम् ।**
**गोपीजनपदस्याऽन्ते वल्लभाय द्विठावधिः॥ ८२ ॥**
**कामबीजादिराख्यातो मनुरष्टादशाक्षरः।**
**नारदोऽस्य मुनिः प्रोक्तो गायत्रं छन्द उच्यते ॥ ८३ ॥**
**देवता कथितः कृष्णः सर्वकामफलप्रदः ।**

पञ्चाङ्गन्यासः

**चतुःकरणवेदाब्धिनेत्रसंख्याक्षरैः क्रमात् ।**
**पञ्चाङ्गानि मनोः कुर्यान्मन्त्रविज्जातिसंयुतैः ॥ ८४ ॥**

**गोपालमन्त्रमाह कृष्णायेति । द्विठेति स्वाहा । क्लीं बीजं स्वाहा शक्तिः । तदुक्तम्—**

**वक्ष्ये मन्त्रस्याऽस्य बीजं सशक्ति चक्रो शक्रो वामनेत्रप्रदीप्तः ।**
**सप्रद्युम्नो बीजमेतत्प्रदिष्टं मन्त्रः प्राद्युम्नो जगन्मोहनोऽयम् ॥**
**हंसो मेदो वक्त्रवृत्ताभ्युपेतः पोत्रीनेत्राद्यन्वितोऽसौ युगार्णा ।**
**प्रोक्ता शक्तिः सर्वगीर्वाणवृन्दैर्वन्द्यस्याग्नेर्वल्लभा कामदेयम् ॥ इति ॥**

**करणेति चत्वारि ॥ ८२-८४ ॥**

अब **गोपाल मन्त्र का उद्धार** कहते हैं—प्रथम 'कृष्णाय', तदनन्तर 'गोविन्दाय', तदनन्तर 'गोपीजनवल्लभाय' तथा इसके बाद स्वाहा कहे ॥ ८२ ॥

आदि में कामबीज लगाये । इस प्रकार 'क्लीँ कृष्णाय गोविन्दाय गोपीजनवल्लभाय स्वाहा'—यह अट्ठारह अक्षरों का मन्त्र हुआ । इस मन्त्र के ऋषि नारद हैं तथा इसका छन्द गायत्री कहा गया है ॥ ८३ ॥

मन्त्रवेत्ताओं ने इसके देवता संपूर्ण कामनाओं को पूर्ण करने वाले श्री कृष्ण को कहा है । इस मन्त्र के चार, चार, चार और दो अक्षरों से क्रमशः हृदयादि पञ्चाङ्गन्यास करना चाहिए ॥ ८४ ॥

गोपालध्यानम्

स्मरेद् वृन्दावने रम्ये मोहयन्तं मनोरमम् ।
गोविन्दं पुण्डरीकाक्षं गोपकन्याः सहस्रशः ॥ ८५ ॥
आत्मनो वदनाम्भोजप्रेषिताक्षिमधुव्रताः ।
पीडिताः कामबाणेन चिरमाश्लेषणोत्सुकाः ॥ ८६ ॥
मुक्ताहारलसत्पीततुङ्गस्तनभरानताः ।
स्रस्तधम्मिल्लवसना मदस्खलितभाषणाः ॥ ८७ ॥
दन्तपङ्क्तिप्रभोद्भासि स्पन्दमानाधराञ्चिताः ।
विलोभयन्तीर्विविधैर्विभ्रमैर्भावगर्भितैः ॥ ८८ ॥

गोपकन्या मोहयन्तमिति सम्बन्धः । आत्मनो जगदात्मनः । तासां चात्मरूपस्य कृष्णस्येत्यर्थः । स्पन्दमानाः सस्फुरणा ये अधराः तैरञ्चिताः पुष्पिताः ॥ ८५-८८ ॥

अब **गोपाल का ध्यान** कहते हैं—सुरम्य वृन्दावन में सहस्रों गोप कन्याओं को मोहित करने वाले, मनोरम आकृति वाले, पुण्डरीक के समान विशाल नेत्रों वाले गोपाल का ध्यान करे ॥ ८५ ॥

जिन गोपियों के नेत्र रूपी भौंरे जगदात्मा गोपाल के मुख कमल पर मँडरा रहे हैं और जो स्वयं भी कामबाण से पीड़ित हुए चिरकाल तक श्री कृष्ण गोपाल के आलिङ्गन के लिये उत्सुक हैं । ऐसी गोपाङ्गनाओं से घिरे हुये गोपाल का ध्यान करना चाहिए ॥ ८६ ॥

मुक्ताहारों से आच्छादित तुङ्ग स्तनों के भार से जो झुकी हुई हैं, जिनके केशर और वस्त्र श्री कृष्ण में आसक्ति के कारण अपने स्थान से विस्रस्त हो रहे हैं, काममद की विह्वलता से जिनके भाषण स्खलित हो रहे हैं । ऐसी गोपियों से घिरे हुये गोपाल का ध्यान करे । दाँतो की कान्ति से जिनके अधर स्फुरित होने के कारण विकसित जैसे जान पड़ते हैं और जो अपने हाव भाव से काम चेष्टाओं द्वारा श्री कृष्ण को अपनी ओर आकृष्ट कर रही हैं, ऐसी गोपकन्याओं से आवृत्त गोपाल का ध्यान करे ॥ ८७-८८ ॥

फुल्लेन्दीवरकान्तिमिन्दुवदनं बर्हावतंसप्रियं
श्रीवत्साङ्कमुदारकौस्तुभधरं पीताम्बरं सुन्दरम् ।
गोपीनां नयनोत्पलार्चिततनुं गोपाल(गोगोप)सङ्घावृतं
गोविन्दं कलवेणुवादनपरं दिव्याङ्गभूषं भजे ॥ ८९ ॥

फुल्लेति । इन्दीवरं नीलोत्पलम् । बर्हावतंसं मयूरपिच्छकर्णाभरणम् । कलवेणुवादनपरम् । अनेन द्विभुजं ध्यानमुक्तम् । अत्र ध्यानान्तरं वेणुश्रीवत्सकौस्तुभवनमालाबिल्वमुद्राः प्रदर्शयेत् । तत्र वेणुबिल्वमुद्रालक्षणं यथा—

ओष्ठे वामकराङ्गुष्ठो लग्नस्तस्य कनिष्ठिका ।

दक्षिणाङ्गुष्ठसंसक्ता तत्कनिष्ठा प्रसारिता ॥
तर्जनीमध्यमानामाः किञ्चित् सङ्कुच्य चालिताः ।
वेणुमुद्रेह कथिता सुगुप्ता प्रेयसी हरेः ॥
उच्यतेऽच्युतमुद्राणां भद्रा बिल्वफलाकृतिः ॥

अङ्गुष्ठं वाममुद्दण्डितमितरकराङ्गुष्ठकेनाऽथ बद्धा
तस्याऽग्रं पीडयित्वाऽङ्गुलिभिरपि च ता वामहस्ताङ्गुलीभिः ।
बद्धा गाढं हृदि स्थापयतु विमलधीर्व्याहरन् मारबीजं
बिल्वाख्या मुद्रिकैषा स्फुटमिह गदिता गोपनीया विधिज्ञैः ॥

मनो वाणी देहैर्यदिह च पुरा वापि विहितं
त्वमत्या मत्या वा तदखिलमसौ दुष्कृतचयम् ।
इमां मुद्रां जानन् क्षपयति नरस्तं सुरगणा
नमन्त्यस्याऽधीना भवति सततं सर्वजनता ॥ इति ॥ ८९ ॥

विकसित नीले कमल के समान जिनका मुख कमल है, जिन्हें मयूर पुच्छ का आभूषण अत्यन्त प्रिय है, जिनके वक्षःस्थल पर श्रीवत्स का चिन्ह तथा कौस्तुभमणि शोभित हो रही है, जो मनोहर पीताम्बर धारण किये हुये अत्यन्त सुन्दर प्रतीत हो रहे हैं, जिनका शरीर गोपियों के नेत्र कमलों से अर्चित है, जो गौ एवं गोप समूहों से घिरे हुये हैं, जो श्री दिव्याङ्गपूर भूषण धारण किये मनोहर वंशीवादन में लगे हुये हैं ऐसे गोविन्द गोपाल का मैं भजन करता हूँ ॥ ८९ ॥

पुरश्चरणादिकथनम्

**मन्त्रमेनं यथान्यायमयुतद्वितयं जपेत् ।**
**जुहुयादरुणाम्भोजैस्तद्दशांशं समाहितः ॥ ९० ॥**

यथान्यायमित्यनेनैतदुक्तं भवति । यदाहुः—

अद्रेः शृङ्गे नद्यास्तटे बिल्वमूले तोये हृद्घ्ने गोकुले विष्णुगेहे ।
अश्वत्थाधस्तादम्बुधेश्चापि तीरे स्थानेष्वेतेष्वासीन एकैकशस्तु ॥
प्रजपेदयुतचतुष्कं दशाक्षरं मनुवरं पृथक् क्रमशः ।
अष्टादशाक्षरं चेदयुतद्वयमित्युदीरिता संख्या ॥
शाकं मूलं फलं गोस्तनभवदधिनी भैक्ष्यमन्नं च सक्तुम् ।
दौग्धान्नं चेत्याददानः क्षितिधरशिखरादौ क्रमात् स्थानभेदे ॥
एकं चैषामशक्तौ गदितमिह मया पूर्वसेवाविधानम् ।
निर्वृत्तेऽस्मिन् पुनश्च प्रजपतु विधिवत् सिद्धये साधकेशः ॥
दशलक्षमक्षयफलप्रदं मनुं प्रतिजप्य शिक्षितमतिर्दशाक्षरम् ।
सुषिरयुगलवर्णं चेन्मनुं पञ्चलक्षम् । इति ॥

तद्दशांशं पञ्चलक्षदशांशम् । समाहित इत्यनेनैतदुक्तं भवति । यदाहुः—
अमलमतिरलाभे पायसैरम्बुजानां ससितघृतसुसिक्तैरारभेद्धोमकर्म । इति ॥ ९० ॥

इस मन्त्र को यथास्थान समाहित चित्त हो (दूध, फल एवं शाकादि पदार्थों

से जीवन निर्वाह करते हुये) बीस हजार जपे और एकाग्रचित्त हो लाल कमलों द्वारा उसका दशांश होम करे ॥ ९० ॥

**वैष्णवे पूजयेत् पीठे यथावत् देवकीसुतम् ।**
**अङ्गावरणमाराध्य पत्रेषु प्रयजेत् प्रियाः ॥ ९१ ॥**
**कालिन्दी नाग्नजित्याख्या मित्रविन्दा ततः परम् ।**
**चारुहासिन्यथ परा रोहिणी जाम्बवत्यथ ॥ ९२ ॥**
**रुक्मिणी सत्यभामेति कथिताश्चारुभूषणाः ।**
**पीताम्बरधराः सौम्याः कराम्बुजधृताम्बुजाः॥ ९३ ॥**
**ऐरावतादीनभ्यर्च्येत् गजानष्टौ ततो बहिः ।**
**लोकपालान् यजेन्मन्त्री वज्राद्यस्त्राणि तद्बहिः ॥ ९४ ॥**
**इति सम्पूजयेत् देवं गोविन्दं जगतां पतिम् ।**
**कुर्वीत कल्पनिर्दिष्टान् प्रयोगान्निजवाञ्छितान् ॥ ९५ ॥**
**लक्ष्मीप्रसूनैर्जुहुयाच्छ्रियाच्छ्रियमिच्छन्ननिन्दिताम् ।**
**साज्येनाऽन्नेन जुहुयादाज्यान्नस्य समृद्धये ॥ ९६ ॥**

वैष्णव इति नारायणाष्टाक्षरोक्ते । यथावदित्यनेनैतदुक्तं भवति । दामादि-वज्रास्त्रान्तैः सप्तभिरावरणैर्देवमर्चयेत् । ग्रन्थोक्ताङ्गादिवज्रास्त्रान्तं पञ्चावरणं वा । अङ्गलोकपालतदस्त्राणीत्यावरणत्रयं वा । कृष्णाष्टकेनैकावरणं वेति । तदुक्तम्—

कथितमावृतिसप्तकमच्युतार्चनविधाविति सर्वसुखावहम् ।
प्रयजतादथवाऽङ्गपुरन्दराशनिमुखैस्त्रितयावरणं त्विदम् ॥

श्रीकृष्णो वासुदेवश्च नारायणसमाह्वयः ।
देवकीनन्दनो यदुश्रेष्ठो वार्ष्णेय इत्यपि ॥
असुराक्रान्तशब्दान्ते भारहारीति सप्तमः ।
धर्मसंस्थापकश्चाऽष्टौ चतुर्थ्यन्ताः क्रमादिमे ॥
एभिरेवाऽथवा पूजा कर्त्तव्या कंसवैरिणः ॥ इति ।

एते चत्वारोऽपि पक्षा मुख्या एव । कल्पभेदाद्भेदः । आराध्येति केसरेष्विति । ऐरावतादीनष्टमोक्तान् ॥ ९१-९६ ॥

पूर्वोक्त वैष्णव पीठ पर (द्र. १५. २४-२८) गोपाल की पूजा करे, केशरों पर अङ्ग पूजा करने के पश्चात् पत्रों पर उनकी प्रियतमाओं का इस प्रकार पूजन करना चाहिए ॥ ९१ ॥

कालिन्दी, नाग्नजिती, मित्रविन्दा, चारुहासिनी, रोहिणी, जाम्बवती, रुक्मिणी और सत्यभामा—ये आठ श्री कृष्ण की पटरानियाँ हैं जो उत्तमोत्तम आभूषणों से सुशोभित हैं । सभी पीताम्बर धारण की हुई हैं और अपने अपने कर कमलों में कमल धारण की हुई हैं ॥ ९२-९३ ॥

तदनन्तर उसके बाहर ऐरावतादि अष्टगजों (द्र. अष्टम पटल ) की पूजा करे । उसके बाहर लोकपालों की उसके भी बाहर उनके वज्रादि आयुधों की पूजा करे ॥ ९४ ॥

इस प्रकार से जगत्पति गोविन्द गोपाल की पूजा करनी चाहिए । तदनन्तर गोपाल कल्प में कहे गये स्वकीयमनोभिलषित प्रयोगों का अनुष्ठान करे ॥ ९५ ॥

निर्दोष लक्ष्मी चाहने वाला पुरुष श्रीवृक्ष (कुरवक या मौलसिरी) के पुष्पों से होम करे और इसी प्रकार घी एवं अन्न की समृद्धि के लिये आज्यमिश्रित अन्न का होम करना चाहिए ॥ ९६ ॥

**आरण्यैः कुसुमैर्विप्रान् जातिभिः पृथिवीपतीन् ।**
**प्रसूनैरसितैर्वैश्यान् शूद्रान्नीलोत्पलैर्नवैः ॥ ९७ ॥**
**वशयेल्लवणैः सर्वान् पङ्कजैर्वनिताजनान् ।**
**गोशालासु कृतो होमः पायसेन ससर्पिषा ॥ ९८ ॥**
**गवां शान्तिं करोत्याशु गोविन्दो गोकुलप्रियः ।**
**शिशुवेशधरं देवं किङ्किणीदामशोभितम् ॥ ९९ ॥**
**स्मृत्वा प्रतर्पयेन्मन्त्री दुग्धबुध्या शुभैर्जलैः ।**
**धनधान्यांशुकादीनि प्रीतस्तस्मै ददाति सः ॥ १०० ॥**

ब्राह्मणों को वश में करने के लिये आरण्य कुसुमों से, राजा को वश में करने के लिये जाती (मालती) पुष्पों से, वैश्यों को वश में करने के लिये सितेतर कमल पुष्पों से तथा शूद्रों को वश में करने के लिये नीले कमल से होम करना चाहिए ॥ ९७ ॥

सबको वश में करने के लिये लवण का होम तथा वनिता जनों को वश में करने के लिये कमल से होम करना चाहिए । घृत युक्त खीर से गोशाला में होम करने से गोकुलप्रिय गोविन्द बहुत शीघ्र ही गायों पर आने वाले उपद्रवों को शान्त कर देते हैं । किंकिणी हार काञ्ची या करधनी पर धारण करने वाले बालक रूप धारी श्री कृष्ण का स्मरण कर विशुद्ध जल में दुग्ध बुद्धि करते हुये गोपाल का तर्पण करे तो प्रसन्न हुये गोपाल उस साधक को धन धान्य तथा नाना प्रकार के वस्त्रों से परिपूर्ण कर देते हैं ॥ ९८-१०० ॥

**गोपालयन्त्रम् । पिण्डबीजम्**

**पिण्डं मूलेन वीतं दहनपुरयुगे कोणराजद्रसार्णे**
**कुर्यात् पद्मं दशार्णस्फुरितदशदलं कामबीजेन वीतम् ।**
**पद्मं किञ्जल्कसंस्थं स्वरविकृतिदलं प्रोल्लसत्षोडशार्णं**
**किञ्जल्कं व्यञ्जनाढ्यं विकृतियुगदलेष्वर्पितानुष्टुबर्णम् ॥१०१॥**

**पाशाङ्कुशाभ्यामावीतं क्षौणीपुरयुगस्त्रिषु ।**
**अष्टाक्षरेण लसितं यन्त्रं गोविन्ददैवतम् ।**
**धमार्थकामफलदं सर्वरक्षाकरं स्मृतम् ॥ १०२ ॥**

**यन्त्रमाह पिण्डमिति । वक्ष्यमाणं पिण्डबीजम् । परस्परव्यतिभिन्ने दहनपुरयुगे षट्कोणे । रसार्णं षडर्णम् । षडर्णदशार्णषोडशार्णानुष्टुबष्टार्णान् वक्ष्यति । विकृतिदलं षोडशदलम् । विकृतियुगदलं द्वात्रिंशद्दलम् । अत्रोभयत्र केसरस्थानेषु एकैकार्णलेखः । पाशाङ्कुशाभ्यामित्येकावृतिः ॥ १०१-१०२ ॥**

अब **गोपाल यन्त्र का विधान** कहते हैं—प्रथम परस्पर भिन्न षट्कोण, उसके बाद दश दल कमल युक्त वृत्त, उसके बाद षोडश दल कमल युक्त वृत्त, पश्चात् बत्तीस दल युक्त वृत्त, उसके बाद भूपुर निर्माण करे । षट्कोण के मध्य में मूल मन्त्र से संपुटित वक्ष्यमाण पिण्ड मन्त्र (द्र. १७. १०३) लिखे । दोनों षट्कोणों में वक्ष्यमाण षडक्षर मन्त्र के एक एक अक्षर को लिखे । दशदलों में जप बीज से संपुटित वक्ष्यमाण दशाक्षर मन्त्र का एक एक अक्षर लिखे । उसके बाद षोडशदल के केशरों पर १६ स्वर लिखे तथा पत्र पर वक्ष्यमाण षोडशाक्षर मन्त्र का एक एक अक्षर लिखे । पुनः ३२ दल वाले कमल के केशरों पर ३२ व्यञ्जनाक्षर तथा पत्रों पर वक्ष्यमाण अनुष्टुप् मन्त्र का एक एक अक्षर लिखे । (द्र. १७. १०७-१०८) ॥ १०१ ॥

भूपुर के प्रत्येक दोनों कोणों पर पाश अंकुश (आँ क्रोँ) से संपुटित वक्ष्यमाण अष्टाक्षर मन्त्र का एक एक अक्षर (द्र. १७. १०९) 'क्लीँ कृष्णाय गोविन्दाय' लिखे । इस प्रकार गोविन्द गोपाल दैवताक यह यन्त्र धर्म, अर्थ और काम रूप त्रिव्रतों के फलों को देने वाला है और मनुष्यों की सब प्रकार से रक्षा करता है ॥ १०२ ॥

**पञ्चान्तको धरेरस्थो मनुबिन्दुविभूषितः ।**
**पिण्डबीजमिदं प्रोक्तं सर्वसिद्धिकरं परम् ॥ १०३ ॥**

**पिण्डबीजमाह पञ्चान्तक इति । पञ्चान्तको गः धरा लः इरो यः तत्संस्थः ग्ल्यः । मनुरौ बिन्दुश्च एतद्युक्तस्तेन ग्ल्यौं । सर्वसिद्धिकरं परमित्यनेनाऽस्य स्वातन्त्र्यं नमोऽन्तत्वेन त्र्यक्षरत्वम् । प्रणवमायादित्वेन वा त्र्यक्षरत्वमुक्तम् ।**

**अस्यर्ष्यादिकमुच्यते—मुनिर्नारद आख्यातश्छन्दो गायत्रमीरितम् ।**
**देवता बालकृष्णोऽङ्गं षड्दीर्घाक्रान्तबीजतः ॥**
**अव्यात् व्याकोशनीलाम्बुजरुचिररुणाम्भोजनेत्रोऽम्बुजस्थो**
**बालो जङ्घाकटीरस्थलकलितरणत्किङ्किणीको मुकुन्दः ।**
**दोर्भ्यां हैयङ्गवीनं दधदतिविमलं पायसं विश्ववन्द्यो**
**गोगोपीगोपवीतो रुरुनखविलसत्कण्ठभूषश्चिरं वः ॥**
**जपेल्लक्षं मनुवरं पायसैरयुतं हुनेत् ।**
**पूजा तु वैष्णवे पीठे अङ्गदिक्पालवज्रकैः ॥ इति ॥**

यदृषिर्नारदः प्रोक्तो जगती छन्द ईरितम् ।
श्रीकृष्णो देवता बीजं ग्लौं य शक्तिः प्रकीर्त्तिता ॥
षडङ्गं मूलमन्त्रेण कुर्यात् देवं विचिन्तयेत् ।
कदम्बमूले तिष्ठन्तं देवदेवं जनार्दनम् ॥
इन्दीवरदलश्यामं पूर्णचन्द्रनिभाननम् ।
देवगन्धर्वयक्षौघकिन्नरोरगसेवितम् ॥
मोहनं गोपगोपीनां वल्लभं देवकीसुतम् ।
मयूरपिच्छसंयुक्तं वनमालाविभूषितम् ॥
पूर्णचन्द्रनिभं कान्तं वृन्दावननिवासिनम् ।
वेणुं गायन्तममलं सर्वभूतमनोहरम् ॥
लेलिह्यमानं वत्सैश्च मृगैः सिंहैस्तथा द्विजैः ।
सर्वाभरणसंयुक्तं सर्वाभरणशोभितम् ॥
कौस्तुभोद्भासितोरस्कं दामपिच्छसमावृतम् ।
अप्रमेयमचिन्त्यं च गोपालं शिशुरूपिणम् ॥
ध्यायेत्तं देवदेवेशं सर्वलोकैकनायकम् ।
अङ्गैश्च वासुदेवाद्यैरुक्मिण्याद्यैस्तृतीयकम् ॥
कुमुदेन्द्रायुधैश्चापि षडावरणमीरितम् ।
जपोऽयुतचतुष्कः स्याद्दशांशं जुहुयात्ततः ॥
पायसेन सिताक्तेन तर्पयेत्तावदेव तु ।
मन्त्रसिद्धस्य लोकोऽयं सद्यो वश्यो भविष्यति ॥ इति ॥ १०३ ॥

अब **पिण्ड मन्त्र का उद्धार** कहते हैं—पञ्चान्तक (ग), जो धरा (ल), दूर (य) पर स्थित हो और औ तथा बिन्दु से युक्त हो । इस प्रकार 'ग्ल्यौं'—यह इस पिण्ड मन्त्र का स्वरूप हुआ । यह पिण्ड बीज सभी प्रकार की सिद्धि प्रदान करता है ॥ १०३ ॥

**षडक्षरगोपालमन्त्रः**

**स्मरः कृष्णाय ठद्वन्द्वं षडर्णो मनुरीरितः ॥ १०४ ॥**

**षडर्णमाह स्मर इति । स्मरः कामबीजम् । मनुरीरित इत्यनेनाऽयमपि स्वतन्त्रो मन्त्र इत्युक्तम् । अस्य मुन्यादि प्रजान्तं अष्टादशार्णवत् षड्लक्षं जपः । दशांशं होमोऽष्टादशार्णोक्तद्रव्येणेति ज्ञेयम् । पञ्चाङ्गानि तु—**

**ङेस्वाहान्तैश्चक्रपदैः पञ्चाङ्गान्याविसुस्थितैः ।**
**त्रैलोक्यरक्षणयुतैरसुरान्तकसंयुतैः । इति ॥ १०४ ॥**

अब पूर्वोक्त (१७. १०१) में कहे गये षडर्ण मन्त्र का उद्धार कहते हैं । स्मर 'क्लीँ कृष्णाय स्वाहा' यह षडक्षर मन्त्र का उद्धार कहा गया ॥ १०४ ॥

**दशाक्षरगोपालमन्त्रः**

**गोपीजनान्ते प्रवदेद् वल्लभायाऽग्निसुन्दरी ।**
**अयं दशाक्षरो मन्त्रो दृष्टादृष्टफलप्रदः ॥ १०५ ॥**

दशार्णमाह गोपीति । अग्निसुन्दरी स्वाहा । दृष्टादृष्टफलप्रद इत्यनेनाऽस्य स्वातन्त्र्यमुक्तम् । अस्य सर्वं षडक्षरवत् ज्ञेयम् ॥ १०५ ॥

अब पूर्वोक्त (१७. १०१) में कहे गये **दशार्ण मन्त्र** कहते हैं—'गोपीजन वल्लभाय स्वाहा' यह दशाक्षर मन्त्र है, जो दृष्ट एवं अदृष्ट दोनों प्रकार के फलों को देने वाला है ॥ १०५ ॥

षोडशाक्षरगोपालमन्त्रः

**प्रणवं हृदयं कृष्णं ङेऽन्तमुक्त्वा ततः परम् ।**
**तादृशं देवकीपुत्रं हुँफट्स्वाहासमन्वितम् ॥ १०६ ॥**

अष्टाक्षरगोपालमन्त्रः

**षोडशाक्षरमन्त्रोऽयं गोविन्दस्य समीरितः ।**

षोडशार्णमाह प्रणवमिति । हृदयं नमः पदम् । ङेऽन्तं कृष्णं कृष्णाय । तादृशञ्च ङेऽन्तं तेन देवकीपुत्रायेति । गोविन्दस्येत्यनेनाऽयमपि स्वतन्त्रो मन्त्र इत्युक्तम् । अस्य सर्वं दशाक्षरवत् ज्ञेयम् ॥ १०६-१०७ ॥

अब पूर्वोक्त (१७. १०१) में कहे गये **षोडशार्ण मन्त्र का उद्धार** कहते हैं—प्रणव (ॐ), हृदय (नमः), चतुर्थ्यन्त कृष्ण (कृष्णाय), इसके बाद चतुर्थ्यन्त देवकी पुत्र शब्द (देवकीपुत्राय), पश्चात् 'हुँ फट् स्वाहा' यह षोडशाक्षर मन्त्र का उद्धार कहा गया । इसका स्वरूप इस प्रकार है—'ॐ नमः कृष्णाय देवकीपुत्राय हुँ फट् स्वाहा' । इस प्रकार गोपाल का षोडशाक्षर मन्त्र कहा गया ॥ १०६ ॥

गोपालमन्त्रोद्धारः

**पिण्डं रतिपतेर्बीजं नमो भगवते ततः ॥ १०७ ॥**
**नन्दपुत्राय बालादिवपुषे श्यामलाय च ।**
**गोपीजनपदस्याऽन्ते वल्लभाय द्विठावधिः॥ १०८ ॥**
**अनुष्टुब्मन्त्र आख्यातो गोपालस्य जगत्पतेः ।**
**अनङ्गः कृष्णगोविन्दौ ङेऽन्तावष्टाक्षरो मनुः ॥ १०९ ॥**

द्वात्रिंशदर्णमाह पिण्डमिति । पूर्वोक्तं पिण्डबीजम् । रतिपतेर्बीजं कामबीजम् । गोपालस्य जगत्पतेरित्यनेनाऽयमपि स्वतन्त्रो मन्त्र इत्युक्तम् । अस्यर्ष्यादिकं यथा—

अमुष्य नारद ऋषिश्छन्दोऽनुष्टुप् समीरितम् ।
देवता हरिराख्यात आचक्राद्यैरथाऽङ्गकम् ॥
दक्षिणे रत्नचषकं वामे सौवर्णवेत्रकम् ।
करे दधानं देवीभ्यामाश्लिष्टं चिन्तयेद्धरिम् ॥
जपेल्लक्षं मनुवरं पायसैरयुतं हुनेत् ।
पूजा तु वैष्णवे पीठे ह्यङ्गदिक्पालवज्रकैः ॥
एवं सिद्धमनुर्मन्त्री त्रैलोक्यैश्वर्यभाग्भवेत् ॥ इति ।

**अष्टार्णमाह अनङ्गेति । अनङ्गः कामबीजम् । ङेऽन्तौ कृष्णगोविन्दौ कृष्णाय गोविन्दाय। अयमपि स्वतन्त्रो मन्त्रः । अस्य मुन्यादि सर्वं पूर्वोक्तषडक्षरवत् ज्ञेयम् ॥१०७-१०९॥**

अब **बत्तीस अक्षर वाले मन्त्र का उद्धार** कहते हैं—पिण्ड (ग्ल्यौँ), रतिपति का बीज (क्लीँ), इसके बाद 'नमो भगवते' पद, इसके बाद 'नन्दपुत्राय बालादिवपुषे श्यामलाय', पुनः 'गोपीजनवल्लभाय स्वाहा' कहे ।

**विमर्श**—इस प्रकार इसका स्वरूप—'ग्ल्यौँ क्लीँ नमो भगवते नन्दपुत्राय बालादिवपुषे श्यामलाय गोपीजनवल्लभाय स्वाहा' हुआ ॥ १०७-१०८ ॥

**जगत्पति गोपाल का अनुष्टुप् मन्त्र** इस प्रकार है—'क्लीँ कृष्णाय गोविन्दाय' यह आठ अक्षर का अनुष्टुप् है ॥ १०९ ॥

**कामलिङ्गयन्त्रम्**

**प्राक्प्रत्यग्दक्षिणोदग्विधिवदभिलिखेत् स्पष्टरेखाचतुष्कं**
**कोणोद्यच्छूलयुक्तं वलययुगयुतं मध्यपूर्वं तदन्तम् ।**
**श्लोकस्याऽर्णान् परस्ताद्वसुपदविवरेष्वष्टवर्णान् लिखित्वा**
**तद्बाह्ये द्वादशार्णैस्तदनु परिवृतं देवकीपुत्रयन्त्रम् ॥११०॥**

**कामलिङ्गयन्त्रमाह प्रागिति । प्राक्प्रत्यग्रेखाद्वयं दक्षिणोदग्रेखाद्वयं लिखेत् । एवमुभयं मिलित्वा रेखाचतुष्कं भवति । इदमेव विधिवत्पदेनोक्तम् । कोणोद्यच्छूलयुक्तम् । मध्यकोष्ठकोणेभ्यो बहिः कर्णसूत्रचतुष्टयं दद्यात् तेन शूलाकारता भवत्येव । वलययुगयुतम् । तत्रैकं वृत्तं रेखाग्रस्पर्शि द्वितीयं मध्यकोष्ठे तद्वृत्तान्तराले । मध्यपूर्वमिति । मध्यकोष्टमारभ्य लेखनारम्भः । तदन्तम् । मध्यकोष्ठ एव समाप्तिरित्यर्थः । तत्राऽक्षरलेखनक्रमः । प्राक्संस्थतया मध्यादि कोष्ठत्रये आद्यवर्णत्रयमालिख्य आग्नेयां वृत्तद्वयान्तराले कोणरेखामभितः कोष्ठद्वये देवेत्यक्षरं लिखेत् । ततो दक्षिणे ऊर्ध्वादि कोष्ठद्वये देवे इत्यक्षरद्वयं लिखेत् । तकारस्तु मध्यकोष्ठस्थ एव वाचनीयः । ततो मध्यकोष्ठाद्दक्षिणस्थमेवाक्षरद्वयं संवाच्य नैर्ऋत्यकोणे मध्यरेखोभयतः कोष्ठद्वये वरेत्यक्षरद्वयं लिखेत् । पश्चिमे तु दक्षिणवदेव । ततो वायव्यकोणे मध्यरेखोभयतः कोष्ठद्वये रुटेत्यक्षरद्वयं लिखेत् । ततः उत्तरे तु दक्षिणवदेव । ईशकोणे मध्यरेखोभयतः कोष्ठद्वये देवेत्यक्षरद्वयं लिखेत् । ततः प्राच्यां लिखितान्यक्षराणि ऊर्ध्वतो वाचयेत् । एवं श्लोकमन्त्राक्षरलेखनक्रमः । परस्तादिति मध्यकोष्ठाद्बहिः प्रथमवृत्तान्तः एकैकस्मिन् कोणे कर्णसूत्रोभयतः कोष्ठद्वन्द्वमवशिष्यते । तत्र प्रादक्षिण्यक्रमेण ईशानादि पूर्वोक्तमष्टवर्णं लिखेत् । तदनु तदनन्तरम् । तद्बाह्ये द्वितीयवृत्तबाह्ये । द्वादशार्णैः पञ्चदशोक्तवासुदेवमन्त्रार्णैः परिवृतम् । शूलोत्पन्नद्वादशसु कोष्ठेषु द्वादशवर्णलिखनेनार्थात् वृत्तं भवति इति वृत्तमित्युक्तिः । एवंभूतं यन्त्रमुक्तफलदम् । एष साम्प्रदायिकः पक्षः ।**

**केचन प्रागपरायताश्चतस्त्रः उदग्दक्षिणायताश्चतस्त्रो रेखाः कुर्यात् । एवं नवकोष्ठानि संपद्यन्ते । तत्र मध्यकोष्ठे वलययुगयुतं कार्यमित्याहुः । ते मध्यपूर्वं तदन्तमित्यस्य व्याख्यानं प्रष्टव्या भवन्ति । भूर्जपत्रादावित्यादिशब्देन ताम्ररजत-**

**काञ्चनादीनां ग्रहणम् । तत्तल्लेख्यविशेषेण कालविशेषोऽपि पूर्वोक्तोऽनुसन्धेयः । यथाविधीति विधिर्दर्शितः । एवं लिखनप्रस्तावे ॥ ११०-११३ ॥**

अब **काम लिङ्ग मन्त्र** कहते हैं—पूर्व से पश्चिम दो रेखा तथा दक्षिण से उत्तर दो रेखा खींचे इस प्रकार चार रेखायें हो जाती हैं । मध्य कोष्ठ के कोणों से बाहर चार कर्णसूत्र खीचे । इस प्रकार कोणों पर शूल का आकार बनावे, फिर उस पर एक वृत्त आगे के रेखाओं का स्पर्श करते हुये बनावे । दूसरा वृत्त उसी के भीतर मध्य कोष्ठ में बनावे । इसके बाद मध्यकोष्ठ से लिखना आरम्भ कर उसके अन्त में समाप्त करे ॥ ११० ॥

**तं सुकीदेवदेवे तं तं देवे वरतो रतम् ।**
**तं रतो रुटतो ख्यातं तं ख्यातं देवकीसुतम् ॥ १११ ॥**

उसका क्रम इस प्रकार है—पूर्व के मध्य के तीन कोष्ठों में आदि के तीन वर्ण (द्र. १७. १११) तं सुकी, आग्नेय में दोनों वृत्तों के मध्य में कोण रेखा के चारों ओर दो कोष्ठों में दो अक्षर (देव) लिखे, फिर दक्षिण के ऊपर वाले दोनों कोष्ठों में, 'देवे' यह अक्षर लिखे, तं तं इसे मध्यकोष्ठ में ही लिखे, फिर मध्यकोष्ठ से दक्षिण में द्वितीय 'देवे' लिखे । नैर्ऋत्यकोण में मध्यरेखा से दोनों ओर 'वर' इन अक्षरों को लिखे, पुनः पश्चिम में तो रतम् तं रतो दक्षिणवत् लिखे । फिर वायव्यकोण में मध्य रेखा से दोनों ओर दो कोष्ठों में 'रुढ़' इस दो अक्षर को लिखे । पुनः उत्तर में दक्षिणवत् 'तं ख्यातं लिखेत्' ईशान कोण में मध्यरेखा से दोनों ओर दो कोष्ठों में देवे इस अक्षर को लिखे । इसके बाद शेष अक्षरों को दक्षिणवत् लिखे—इस प्रकार श्लोकाक्षरों के लिखने का क्रम कहा गया। मध्य कोष्ठ से बाहर प्रथम वृत्त के भीतर रहने वाले एक एक कोण में ईशान कोण से आरम्भ कर प्रदक्षिण क्रम से पूर्वोक्त आठ वर्ण लिखे । इसके बाद द्वितीय वृत्त के बाहर १५ पटल में कहे गये वासुदेव के द्वादश वर्णों को लिखकर घेर देवें । फिर शूल से उत्पन्न बारह कोणों में द्वादशवर्णों को लिखकर घेर देवे, इस प्रकार देवकीपुत्र का यन्त्र कहा गया ॥ ११०-१११ ॥

**कामलिङ्ग यन्त्रम्**




**लिखितं भूर्जपत्रादौ यन्त्रमेतद्यथाविधि ।**
**विधृतं बाहुना नित्यं सर्वकामफलप्रदम् ॥ ११२ ॥**

इस मन्त्र को भूर्जपत्र, ताम्र पत्र, रजत पत्र अथवा काञ्चन पत्र पर यथाविधि लिखकर बाहु में धारण करे तो संपूर्ण मनोरथों को सिद्ध कर देता है ॥ ११२ ॥

**पलाशवृक्षफलके लिखितं साधुसाधितम् ।**
**गोस्थाने निखनेदेतद् गवां वृद्धिर्भवेत् सदा ॥ ११३ ॥**

पलाशवृक्ष के फलक (पटरी) पर लिखकर अच्छी प्रथम उपर्युक्त रीति से सिद्ध करे, पुन: गोशाला में गाड़ देवे तो सदा गायों की वृद्धि होती है ॥ ११३ ॥

सर्वतोभद्रयन्त्रम्

**श्लोकं चतु:षष्टिपदेषु भूर्जे**
**शिवादि दैत्यादि लिखेत् क्रमेण ।**
**तत् सर्वतोभद्रमिति प्रसिद्धं**
**यन्त्रं यशः श्रीविजयप्रदायि ॥ ११४ ॥**
**फलके खादिरे क्लृप्तं गवां गोष्ठे निवेशितम् ।**
**रक्षाकृच्चौरमारिघ्नं सवत्सानां गवां हितम् ॥ ११५ ॥**
**क्षीरगोपयगोरक्षीरक्षमाक्षक्षमाक्षर ।**
**गोमानोगगनोमागोपक्षगक्षक्षगक्षप ॥ ११६ ॥**

**यन्त्रान्तरमाह श्लोकमिति । श्लोकं वक्ष्यमाणम् । चतु:षष्टिपदेष्विति । सर्वतः सशूलेष्विति ज्ञेयम् । तदुक्तमपेक्षितार्थद्योतनिकायाम्—**

**चतु:षष्टिपदोपेतं शूलमालाविभूषितम् । इति ।**

**शिवादि ईशानादि । दैत्यादि नैर्ऋत्यादि । कोष्ठोत्पादनसाध्यादि लेखनप्रकारो दशमे मदुक्तोऽनुसन्धेय । एतावपि द्वौ सिद्धमन्त्रौ । आभ्यां क्रमेण आर्त्तबालगोरक्षां कुर्यात् ॥ ११४-११६ ॥**

अब **अन्य यन्त्र** कहते हैं—भूर्ज पत्र पर नव रेखा पूर्व से पश्चिम तथा नव रेखा दक्षिण से उत्तर परस्पर संभिन्न करती हुई खीचे । सबमें त्रिशूल बनावे, इस प्रकार निर्मित ६४ कोष्ठों में ईशान कोण से आरम्भ कर ईशान पर्यन्त १७. ११६ में कहे गये ३२ अक्षरों वाले श्लोकों को लिखे । पुन: नैर्ऋत्य कोण से आरम्भ कर उसी को नैऋत्य पर्यन्त लिखे । इस यन्त्र का नाम सर्वतोभद्र है । यह यश श्री तथा विजय प्रदान करता है ॥ ११४ ॥

खैर के पटरी पर इस मन्त्र को लिख कर गोशाला में गाड़ देवे तो गायों की रक्षा करता है । चौर और मारीभय का सर्वनाश करता है तथा सवत्सा गौओं के लिये अत्यन्त हितकारी है ॥ ११५ ॥

क्षीरगोपयगोरक्षीरक्षमाक्षक्षमाक्षर ।
गोमानोगगनोमागोपक्षगक्षक्षगक्षप ॥

यह श्लोक ११४ में निर्दिष्ट यन्त्र में लिखना चाहिए ॥ ११६ ॥

एकाक्षरकाममन्त्रः

**ब्रह्मा भूम्यां समासीनः शान्तिबिन्दुसमन्वितः ।**
**बीजं मनोभुवः प्रोक्तं जगत्त्रितयमोहनम् ॥ ११७ ॥**

एकाक्षरं काममन्त्रमाह ब्रह्मेति । ब्रह्मा कः । भूमिर्लः । एतदासीनः । शान्तिरी बिन्दुस्तेन क्लीं । ककारो बीजम् ईकारः शक्तिः । तदुक्तं दक्षिणामूर्त्तिसंहितायां 'कतुर्ये बीजशक्तिके' इति । जगत्त्रितयमोहनमित्यनेन हकारसकारादित्वं सूचितम् । केवलहकारादित्वं महावश्यदम् । केवलसकारादित्वं दीर्घायुष्ट्वदमिति । तदुक्तं—

हंसारूढो मदनस्त्रैलोक्यक्षोभको भवेदाशु ।
हयुतो रञ्जनकृत् स्याज्जीवेन युतस्तथाऽऽयुषे शस्तः ॥ इति ॥ ११७ ॥

अब **एकाक्षर काम मन्त्र** को कहते हैं—ब्रह्मा (क) को भूमि (ल) से युक्त करे, उसको शान्ति (ईकार) तथा बिन्दु से संयुक्त करे, इस प्रकार 'क्लीँ' यह काम का बीज कहा गया है । जो तीनों जगत् को मोहित करने वाला है ॥ ११७॥

ऋष्यादिकथनम्

**ऋषिः सम्मोहनः प्रोक्तो गायत्रं छन्द ईरितम् ।**
**सर्वसम्मोहनः साक्षाद्देवता मकरध्वजः॥ ११८ ॥**

'सर्वसम्मोहनकृष्ण एतयोः स्याद्देवता' इत्युक्तेः साक्षादित्यनेन केवलः कृष्णोऽपि । तत्र सम्मोहनकृष्णदेवतापक्षे अष्टभुजध्यानम् । यदाहुः—

विश्वप्राणस्योद्यत्प्रद्योतनसद्युतेः सुपर्णस्य ।
आसीनमुन्नतांसे वैद्रुममङ्गाङ्गमङ्गजोन्मथितम् ॥
चक्रदराङ्कुशपाशान् सुमनोबाणेक्षुचापमुशलगदाः ।
दधतं स्वदोर्भिररुणायतविपुलविघूर्णिताक्षियुगनलिनम् ॥
स्व.त्माभेदतयेत्थं ध्यात्वैकाक्षरमथाऽष्टवर्णं वा ।
प्रजपेद्दिनकरलक्षं त्रिमधुरसिक्तैश्च किंशुकप्रसवैः ॥
जुहुयात्तरणिसहस्रं विमलैः सलिलैश्च तर्पयेत्तावत् । इति ।

एवमष्टभुजो वा ध्येयः । तदुक्तं मन्त्रतन्त्रप्रकाशे—

नित्यमष्टभुजं ध्यायेदरुणं पुरुषोत्तमम् ।
रमयाऽऽलिङ्गितं वामे लोकत्रितयमोहनम् ॥
चक्रं खड्गं च मुशलं दक्षे बिभ्राणमङ्कुशम् ।
वामे पाशं तथा शङ्खं सशरं चापमेव च ॥
कौमोदकी च बिभ्राणं सर्वभूषणभूषितम् ।
दशलक्षजपादेष सिद्धमन्त्रः प्रजायते ॥ इति ॥

अस्य मन्त्रद्वयस्य पूजादिकं सर्वं पुरुषोत्तममन्त्रवदेव । यदाहुः—

प्रायः पुरुषोत्तमविधिरेवमतोऽन्यत्ततोऽवगतव्यम् । इति ।

केवलकृष्णदेवतापक्षे तु अष्टादशाक्षरोक्त मार्गेण ध्यानपूजादिकं सर्वमस्य

विज्ञेयम् । विशेषान्तरं च—एतदेव रमाबीजपुटितं चाखिलार्थदम् ।
लक्ष्मीनारायणौ हेममण्डपे चिन्तयेच्छुभौ ॥
तदेव मायापुटितं विद्यावश्यं प्रयच्छति ।
स्वभावाद्वश्यदं त्वेतद् धनदं भोगदं तथा ॥
यद्यस्मात्कामयेद्विद्यां द्विजेन्दो मन्त्रतत्त्ववित् ।
भारत्या सहितं विष्णुं तत्र ध्यायेच्छशिप्रभम् ॥
गद्यपद्यैस्तथा शास्त्रैः पूरयन्ती जगत्रयम् ।
ध्यातव्या तु तदा दक्षे विष्णोर्वाणी सुभूषणा । इति ॥
तारेण वेष्टितं कामं प्रजपेद्धर्ममोक्षयोः ।
सिद्धये श्रीहरिं ध्यायेत् श्वेतं मुनिगणावृतम् ॥ इति ॥

अन्यत्र तु— कमलासनस्थो नकुली वामनेत्रार्धचन्द्रवान् । इति ।

अनेन कामबीजानन्तरं भुवनेशीबीजमित्युक्तम् । ध्यानं च—
नाभिमध्ये समुद्भूतां भ्रूमध्ये च विनिःसृताम् ।
प्रणवांबुजमध्यस्थां मुक्तालङ्कारभूषिताम् ।
लेखनीं पुस्तकं हस्ते धारयन्तीं समभ्यसेत् ॥ इति ।

तत्रैव विशेषः—लिपिभिन्नो मनुर्जप्तो लोकक्षोभकरो भवेत् । इति ।

अन्यत्रापि— वरपाशाङ्कुशधरां मद्यपूर्णकपालभृत् ।
नित्यां ध्यात्वा जपेत् कामबीजमिष्टार्थसिद्धये ॥ इति ।

अन्यत्रापि— सकृज्जप्तेन बीजेन ब्रह्महत्यां व्यपोहति ।
द्विजप्तेन तथा ब्रह्मचतुर्भिरितरैरपि ॥
सर्वयज्ञफलं चापि त्रिजप्तेन तु लभ्यते ।
चतुर्जप्तेन तृप्यन्ते सर्वदेवगणास्तथा ॥
पञ्चजप्तेन देवेन्द्रं षड्जप्तेन तथा पितृन् ।
सप्तजप्तेन योगोन्द्रान् सर्वान् प्रीणाति साधकः ॥
अष्टजप्तेन प्रीणाति स्वयमेव पितामहः ।
नवजप्तेन वै विष्णुर्दशजप्तेन शङ्करः ॥
कारणं यत्प्रधानाख्यं प्रकृतिः सगुणात्मकम् ।
प्रीणाति साधकेन्द्रस्तु नामैकादशाभिर्मुने ॥
तथा द्वादशजप्तेन सर्वगं पुरुषं हितम् ।
मोक्षं च साधकेन्द्राणां नित्यं जप्तं प्रयच्छति ॥
विधानेन गृहीतं स्यान्मोक्षदं भवतो मुने ।
अन्यथा भोगदं वत्स स्त्रीणामाकर्षणे मुने ॥
यथा यथा हि जपति व्याप्तिं गत्वा तु साधकः ।
तथा तथा हि सिध्यन्ति सिद्धविद्याधरस्त्रियः ॥ इति ॥ ११८ ॥

इस एकाक्षर काम मन्त्र के सम्मोहन ऋषि हैं, गायत्री छन्द है और सबको मोहित करने वाले मकरध्वज इसके साक्षात् देवता हैं ॥ ११८ ॥

षडङ्गविधिः

**बीजेन दीर्घयुक्तेन षडङ्गविधिरीरितः ॥ ११९ ॥**

दीर्घयुक्तेन षड्दीर्घयुक्तेन । एतदनन्तरं भालास्यकण्ठहृन्मूलाधारेषु पञ्चवाणान् विन्यसेत् । अग्रे पूजायामावृतित्वेनोक्तैः ।

तदुक्तमाचार्यैः—'न्यस्तशरबीजदेहः' इति ॥ ११९ ॥

षड्दीर्घ (आ ई उ ए ऐ ओ औ) से युक्त बीज मन्त्र द्वारा षडङ्गन्यास करे यथा—'क्लाम् हृदये', 'क्लीँ शिरसि' इत्यादि ॥ ११९ ॥

कामदेवध्यानम्

**जवारुणं रत्नविभूषणाढ्यं मीनध्वजं चारुकृताङ्गरागम् ।**
**कराम्बुजैरङ्कुशमिक्षुचापं पुष्पास्त्रपाशौ दधतं भजामि ॥१२०॥**

आयुधध्यानं वामोर्ध्वाद्दक्षोर्ध्वं यावत् । अत्र ध्यानानन्तरमेते मुद्रे दर्शनीये ।

हस्तौ तु संपुटौ कृत्वा प्रसृताङ्गुलिकौ तथा ।
तर्जन्यौ मध्यमापृष्ठे अङ्गुष्ठौ मध्यमान्वितौ ॥
काममुद्रेयमाख्याता सर्वसत्त्वप्रियङ्करी ।
मूर्धन्यगुष्ठमुष्टी द्वे मुद्रा त्रैलोक्यमोहिनी ॥ इति ॥ १२० ॥

अब **काम के ध्यान का प्रकार** कहते हैं—जवापुष्प के समान जिनके शरीर की कान्ति रक्तवर्ण की है, जो रत्न निर्मित आभूषणों से विभूषित हैं, जिनकी ध्वजा में मीन का चिन्ह है तथा जिनका शरीर अत्यन्त सुगन्धित अङ्गराग से युक्त है । जो अपने कर कमलों में अंकुश इक्षु निर्मित धनुष पुष्प का बाण तथा पाश धारण किये हुये हैं । ऐसे कामदेव का मैं भजन करता हूँ ॥ १२० ॥

पुरश्चरणकथनम्

**लक्षत्रयं जपेन्मन्त्रं मधुरत्रयसंयुतैः ।**
**पुष्पैः किंशुकजैः फुल्लैर्जुहुयात्तद्दशांशतः ॥ १२१ ॥**

पीठशक्तयः

**वक्ष्यमाणे यजेत् पीठे विधिना मकरध्वजम् ।**
**मोहिनी क्षोभिणी त्रासा स्तम्भिन्याकर्षिणी पुनः ॥ १२२ ॥**
**द्राविण्युन्मादिनीक्लिन्नाक्लेदिन्यः पीठशक्तयः ।**
**बीजाद्यमासनं दत्त्वा मूर्त्तिं मूलेन कल्पयेत् ॥ १२३ ॥**

वक्ष्यमाणे पीठे विधिना वक्ष्यमाणेन यजेदिति । मण्डूकादिपरतत्त्वान्तं संपूज्य वक्ष्यमाणाः पीठशक्तीः पूजयेदित्यर्थः । बीजाद्यमिति । क्लीं कामयोगपीठाय नम इति आसनं पूजयेदित्यर्थः ॥ १२१-१२३ ॥

साधक ऊपर कहे गये एकाक्षर काम मन्त्र का तीन लाख जप करे और मधु, पय तथा आज्य इन तीन मधुर द्रव्यों से संयुक्त पलाश पुष्प से दशांश होम करे ॥ १२१ ॥

पुनः आगे कहे जाने वाले पीठ पर विधिपूर्वक कामदेव की पूजा करे । १. मोहिनी, २. क्षोभिणी, ३. त्रासा, ४. स्तम्भिनी, ५. आकर्षिणी, ६. द्राविणी, ७. उन्मादिनी, ८. क्लिन्ना और ९. क्लेदिनी—ये नौ कामदेव की पीठशक्तियाँ हैं । 'क्लीँ कामयोगपीठाय नमः' इस मन्त्र से आसन की पूजा करे । पुनः मूल मन्त्र से मूर्त्ति की कल्पना करे ॥ १२२-१२३ ॥

**कामदेवस्ययजनम्**

**अस्यां सम्यग्यजेद् देवं वक्ष्यमाणेन वर्त्मना ।**
**इष्ट्वाङ्गावरणं पूर्वं मध्ये दिक्षु यजेच्छरान् ॥ १२४ ॥**
**द्रामाद्यं शोषणं पूर्वं द्रीमाद्यं मोहनं ततः ।**
**संदीपनाख्यं क्लीमाद्यं ब्लूमाद्यं तापनं ततः ॥ १२५ ॥**
**सर्गान्तभृगुणा भूयो मादनं पञ्चमं ततः ।**
**प्रणामबाणहस्ताब्जा ध्येयास्ता बाणदेवताः ॥ १२६ ॥**

**वक्ष्यमाणेनेत्युक्तं वर्त्माऽऽह इष्ट्वेति । कर्णिकायामिति शेषः । तदुक्तम्—'इष्ट्वा कर्णिकायामङ्गानि' इति । मध्य इति पञ्चमम् । 'दिक्षु शरान् मध्ये च पञ्चमं पुनः' इत्युक्तेः । द्रामित्यादौ अनुस्वारे आचार्याणां ङकारव्यवहार इति ज्ञेयम् । सर्गान्तभृगुरिति सः । प्रणामेति । एकहस्ते प्रणामः अपरहस्ते बाणः ॥१२४-१२६ ॥**

इस प्रकार की मूर्त्ति में वक्ष्यमाण प्रकार से कामदेव का यजन करे । सर्वप्रथम कर्णिका में अङ्गावरणों की पूजा करे, तदनन्तर कर्णिका की चारों दिशाओं में और मध्य में कामदेव के पाँच बाण देवताओं की पूजा करे, पूर्व में द्राँ शोषणाय नमः से शोषण की, तदनन्तर द्रीं मोहनाय नमः से दक्षिण में मोहन की, क्लीँ संदीपनाय नमः से पश्चिम में संदीपन की, तदनन्तर ब्लूं तापनाय नमः से उत्तर में तापन की तथा सः मादनाय नमः से मध्य में मादन की पूजा करे । ये सभी बाण देवता एक हाथ से प्रणाम करते हैं और दूसरे हाथ में बाण धारण किये हुये हैं ॥ १२४-१२६ ॥

**सम्पूज्यास्तत्र मध्येषु शक्तयोऽष्टौ यथाक्रमम् ।**
**अनङ्गरूपाऽऽद्याऽनङ्गमदनाऽनङ्गमन्मथा ॥ १२७ ॥**
**अनङ्गकुसुमा पश्चादनङ्गमदनातुरा ।**
**अनङ्गशिशिराऽनङ्गमेखलाऽनङ्गदीपिका ॥ १२८ ॥**
**लीलाकमलधारिण्यः स्मेरवक्त्राः सुशोभिताः ।**
**बहिः षोडशपत्रेषु पूज्याः षोडशशक्तयः ॥ १२९ ॥**

युवतिर्विप्रलम्भाऽन्या ज्योत्स्ना सुभ्रूर्मदद्रवा ।
सुरता वारुणी लोला कान्तिः सौदामिनी पुनः ॥ १३० ॥
कामच्छत्रा चन्द्ररेखा शुक्ली स्यान्मदना पुनः ।
ज्योतिर्मायावती ताः स्युः कह्लारविलसत्कराः ॥ १३१॥
स्मेरवक्त्रा युवतयो मदविभ्रममन्थराः ।
दलाग्रेषु पुनः पूज्याः स्मरस्य परिचारकाः ॥ १३२ ॥
शोकमोहौ विलासोऽन्यो विभ्रमो मदनातुरः ।
अपत्रपो युवा कामी धृ(चू)तपुष्पो रतिप्रियः ॥ १३३ ॥
ग्रीष्मस्तपान्त ऊर्जोऽन्यो हेमन्तः शिशिरो मदः ।
इक्षुकार्मुकपुष्पेषुधरा रक्ताः सुभूषिताः ॥ १३४ ॥
अपराङ्गनिषङ्गाढ्या वनितासक्तमानसाः ।
रतिप्रियानष्टदिक्षु यजेदष्टौ विशिष्टधीः ॥ १३५ ॥
परभृत्सारसौ पश्चाच्छुकमेधाह्वयौ पुनः ।
अपाङ्गभ्रूविलासौ द्वौ हावभावौ प्रकीर्त्तिताः ॥ १३६ ॥

**यथाक्रममित्यनेन कामबीजादित्वम् । युवत्यादीनां सर्वासां मायाबीजादित्वं ज्ञेयम् । यदाहुः—**

**हल्लेखया स्वनाम्ना च शक्त्यादीनां समर्चनम् । इति ॥ विशिष्टधीरित्यनेन सर्वत्र सम्बध्यमानेनेदमेव सूचितम् । युवतयस्तरुण्य इत्यर्थः ॥ १२७-१३६ ॥**

इसके पश्चात् साधक मध्य में काम के आठ शक्तियों की कामबीज से युक्त कर पूजा करे, अनङ्गरूपा, अनङ्गमदना, अनङ्गमन्मथा, अनङ्गकुसुमा, अनङ्गमदनातुरा, अनङ्गशिशिरा, अनङ्गमेखला तथा अनङ्गदीपिका—ये उन आठ शक्तियों के नाम हैं ॥ १२७-१२८ ॥

**अष्ट शक्तियों का ध्यान**—ये सभी शक्तियाँ लालकमल धारण की हुई हैं । सभी मन्दस्मित मुख होने के कारण शोभा पा रही हैं । इसके बाद बाहर १६ दल कमल पर काम की षोडशशक्तियों का पूजन करे । इन शक्तियों के आदि में माया बीज (ह्रीँ) लगा कर पूजा करे ॥ १२९ ॥

१. युवति, २. विप्रलम्भा, ३. ज्योत्स्ना, ४. सुभ्रू, ५. मदद्रवा, ६. सुरता, ७. वारुणी, ८.लीला, ९.कान्ति, १०.सौदामिनी, ११.कामच्छत्रा, १२.चन्द्ररेखा, १३. शुक्ली, १४. मदना, १५. ज्योति और १६. मायावती—ये षोडश शक्तियों के नाम हैं । सभी के हाथों में कह्लार शोभित हो रहा है ॥ १३०-१३१ ॥

**षोडश शक्तियों का ध्यान**—ये सभी युवतियाँ मन्दस्मित मुख वाली हैं और मस्ती के विलास से अलसाई हुई हैं । इसके बाद षोडशदल के अग्रभाग में कामदेव के परिचरों की पूजा करे ॥ १३२ ॥

शोक, मोह, विलास, विभ्रम, मदनातुर, अपत्राय, युवा, कामी, चूतपुष्प, रतिप्रिय, ग्रीष्म, तपान्त, ऊर्ज, हेमन्त, शिशिर तथा मद—ये काम के परिचारकों के नाम हैं। सभी ऊख का धनुष तथा पुष्प का बाण धारण किये हुये हैं और उत्तमोत्तम आभूषणों से सुशोभित हैं ॥ १३३-१३४ ॥

पीठ पर तरकस धारण किये हुये हैं, सभी स्त्री में आसक्त रहने वाले हैं। इसके बाद विशिष्ट बुद्धि वाला साधक पत्र के आठों दिशाओं में आठ रतिप्रियों की पूजा करे ॥ १३५ ॥

परभृत (कोयल), सारस, शुक, मेध, अपाङ्ग, भ्रूविलास, हाव तथा भाव—ये रति के अत्यन्त प्रिय पात्र हैं ॥ १३६ ॥

**चतुरस्तस्य कोणेषु पूज्यास्तत्परिचारिकाः।**
**माधवी मालती पश्चाद्धरिणाक्षी मदोत्कटा ॥ १३७ ॥**
**सितचामरधारिण्यः सर्वाभरणभूषिताः।**
**बाह्ये लोकेश्वरान् पश्चात्तदस्त्राण्यर्चयेत् क्रमात्॥ १३८ ॥**

होमफलम्

**इत्थं यो भजते देवं सुगन्धिकुसुमादिभिः।**
**स भवेल्लब्धसौभाग्यो लक्ष्म्या जितधनेश्वरः॥ १३९ ॥**

पुनः उसके चारों कोणों पर माधवी, मालती, हरिणाक्षी और मदोत्कटा इन चार रति की परिचारिकाओं की पूजा करे ॥ १३७ ॥

उक्त सभी आठों परिचारिकायें श्वेत चामर धारण की हुई हैं और सभी प्रकार के आभूषणों से भूषित हैं। उसके बाद लोकपालों की, उसके बाहर उनके वज्रादि अस्त्रों की पूजा करे ॥ १३८ ॥

जो कोई इस प्रकार सुगन्धित पुष्पों से कामदेव का पूजन करते हैं वे सौभाग्य तो प्राप्त करते ही हैं अपनी लक्ष्मी से कुबेर पर भी विजय प्राप्त कर लेते हैं ॥ १३९ ॥

**अशोकपुष्पैर्दध्यक्तैर्जुहुयाद्दिवसत्रयम् ।**
**अष्टोत्तरसहस्रं यो स भवेज्जगतां प्रियः॥ १४० ॥**
**गव्येनाज्येन जुहुयान्मन्त्रेणाऽष्टोत्तरं शतम्।**
**साधकेन्द्रः ससम्पातमर्चिते हव्यवाहने ॥ १४१ ॥**
**सम्पाताज्येन वनिता भोजयेदात्मनः पतिम्।**
**अनया यद्यदादिष्टं तत्तत् स कुरुते सदा ॥ १४२ ॥**
**कन्यार्थी जुहुयाल्लाजैर्दध्यक्तैर्मण्डलान्तरे ।**
**कन्यामिष्टामवाप्नोति साऽपि सत्पतिप्राप्नुयात् ॥ १४३ ॥**

**अर्चिते हव्यवाहने जुहुयादिति सम्बन्धः । ससम्पातमिति । पात्रान्तरे सम्पातं कुर्वन् । साधकेन्द्र इत्यनेन सम्पातस्याऽष्टोत्तरशतवारं जप उक्तः ॥ १४१ ॥**

**सम्पाताज्यस्य विनियोगमाह सम्पातेति । मण्डलान्तरे कन्यामाप्नोतीति सम्बन्धः । तेन एकोनपञ्चाशद्दिनं होम उक्तः ॥ १४२-१४३ ॥**

दधि से अभिषिक्त अशोक पुष्पों से निरन्तर तीन दिन पर्यन्त १००८ बार होम करे, तो वह समस्त जगत् का प्रिय बन जाता है ॥ १४० ॥

इस मन्त्र के द्वारा गाय के घृत से एक सौ आठ बार पूजा की गई अग्नि में होम करे और हुत शेष घृत किसी अन्य पात्र में छोड़ता जाय (पुनः संपात संस्त्रव को ले कर इस मन्त्र का जप कर) यदि स्त्री अपने पति को वह संस्त्रव खिला दे तो वह जो चाहे अपने पति से करा सकती है ॥ १४१-१४२ ॥

उत्तम कन्या से विवाह चाहने वाला दधि से अभिषिक्त लावा द्वारा यदि उतनी ही संख्या में पूजित अग्नि में इस मन्त्र द्वारा होम करे तो वह अनुकूल कन्या प्राप्त कर लेता है ॥ १४३ ॥

**जगन्मोहनयन्त्रम्**

**कामोल्लासितमध्यमङ्गविलसत् षट्कोणमेत्‌दबहि-**
**र्गायत्रीगुणवर्णवद्वसुदलं मालामनोरक्षरैः ।**
**षट्संख्यैः सहिताष्टपत्रसहितं क्षौणीपुरेणावृतं**
**कोणन्यस्तमनोभवेन कथितं यन्त्रं जगन्मोहनम् ॥ १४४ ॥**

**यन्त्रमाह कामेति । षट्कोणमध्ये कामबीजान्तः साध्यसाधककर्मनाम लिखनीयम् । कामषडङ्गान्याग्नेयादिषट्कोणेषु लिखेत् । तदुक्तम्—**

**षडङ्गान्यग्निकोणादिकोणेष्वेव क्रमाल्लिखेत् । इति ।**

**एतद्बहिरष्टदलमध्ये वक्ष्यमाणगायत्र्यर्णां स्त्रिशस्त्रिशो लिखित्वा मालामनोर्वक्ष्यमाणस्य षट् षडक्षराणि दलाग्रेषु लिखेत् । मूले वसुदलाष्टपत्रशब्दौ तत्रैकत्र दलमध्यमन्यत्र दलाग्रमिति ज्ञेयम् । कोणन्यस्तमनोभवेन क्षौणीपुरेणावृतमिति सम्बन्धः ।**

**तदुक्तमाचार्यैः—आलिख्यात्कर्णिकायामनलपुरयुगे मारबीजं ससाध्यं**
**तद्रन्ध्रेष्वङ्गषट्कं बहिरपि गुणशो मारगायत्रिवर्णान् ।**
**मालामन्त्रं दलाग्रेष्वपि गुहमुखशः पार्थिवास्त्रिष्वनङ्गम् ॥ इति ॥ १४४ ॥**

अब **जगन्मोहन यन्त्र का प्रकार** कहते हैं—परस्पर भिन्न षट्कोण के मध्य में कामबीज से संपुटित साध्य, कर्म तथा साधक का नाम लिखे । षट्कोणों में अङ्ग मन्त्र (१७. ११९) लिखे । इसके बाहर अष्टदल के मध्य में वक्ष्यमाण गायत्री (द्र. १७. १४५) के तीन तीन अक्षर लिखे । तदनन्तर वक्ष्यमाण माला मन्त्र (१७. १४६-१४७) के छः छः अक्षरों को पत्र के अग्रभाग में लिखें । फिर भूपुर में से उसे आवृत्त कर देवे और उसके प्रत्येक कोणों पर काम मन्त्र (क्लीँ) लिख देवे ॥ १४४ ॥

कामगायत्री

**कामदेवायशब्दान्ते विद्महे ङेऽन्तमीरयेत्।**
**पुष्पबाणं धीमहि स्यात् तन्नोऽनङ्गः प्रचोदयात्॥ १४५ ॥**

कामगायत्रीमुद्धरति कामदेवायेति । ङेऽन्तं पुष्पबाणं पुष्पबाणाय ॥ १४५ ॥

अब **कामगायत्री का उद्धार** कहते हैं—'कामदेवाय' शब्द के अन्त में 'विद्महे', तदनन्तर 'पुष्पबाणाय धीमहि', तदनन्तर 'तन्नोऽनङ्गः प्रचोदयात्' कहे । यह काम गायत्री का उद्धार हुआ ॥ १४५ ॥

कामदेवमालामन्त्रः

**नमोऽन्ते कामदेवाय वदेत् सर्वजनं ततः ।**
**प्रियाय सर्ववर्णान्ते जनसम्मोहनाय च ॥ १४६ ॥**
**ज्वलद्वयं प्रज्वलार्णान् वदेत् सर्वजनस्य च।**
**हृदयं मम शब्दान्ते वशं कुरुयुगं शिरः ।**
**मालामनुरयं साष्टचत्वारिंशद्भिरक्षरैः॥ १४७ ॥**

मालामन्त्रमाह नमोऽन्ते इति । सर्व इति यद्वर्णद्वयं तदन्ते । हृदयमिति स्वरूपम् । शिरः स्वाहा । अयं स्वतन्त्रो मन्त्रः । अस्यर्ष्यादिकं यथा—

नारदो जगती कामो मुन्याद्याः परिकीर्त्तिताः ।
सप्तसप्तनवमुनिदशाष्टार्णैः षडङ्गकम् ॥
यद्वाऽमृतोद्भवश्चैव परो मकरकेतनः ।
सङ्कल्पजन्मान्यश्चाऽक्षतरूपेक्षुधनुर्धरौ ॥
पुष्पबाणश्च कामाद्यैर्ङेस्वाहान्तैः षडङ्गकम् ।
बाणान् भालास्यगलहृदाधारेषु प्रविन्यसेत् ॥
शेषमन्यत्तु पूजादिकामबीजवदीरितम् ।
जपादौ मारबीजाद्यो जगत्त्रयवशीकरः ॥
विलिप्य गन्धपङ्केन लिखेदष्टदलाम्बुजम् ।
कर्णिकायां लिखेद्वह्निपुटितं मण्डलद्वयम् ॥
तस्य मध्ये लिखेत्कामं साध्याख्याकर्मसंयुतम् ।
साध्याख्यापुटितैः कामैस्तं कामं वेष्टयेद् बुधः ॥
श्रियं च षट्सु कोणेषु ऐन्द्रनिर्ऋतिवायुषु ।
आलिखेच्च तथा मायां वह्निवारुणशूलिषु ॥
अक्षरैः कामगायत्र्या वेष्टयेत् केसरे सुधीः ।
मारमालामनोर्वर्णैर्दलेष्वष्टसु मन्त्रवित् ॥
लिखेद् गुहाननसंख्यैर्मातृकां तु विलेखयेत् ।
भूबिम्बं च लिखेद्बाह्ये श्रीमाये दिग्विदिक्ष्वपि ॥
यन्त्रमेवं समालिख्य जातरूपमये पटे ।
राजते ताम्रपट्टे वा भूर्जे क्षौममयेऽपि वा ॥

सूक्ष्मतन्तुमये वापि प्रतिष्ठाप्य समीरणम् ।
हुत्वा सहस्रमाज्येन यन्त्रसम्पातपूर्वकम् ॥
अर्चयित्वाऽयुतं जप्त्वा धारयेत्तदनुत्तमम् ।
त्रैलोक्यैश्वर्यमाप्नोति देवैरपि सुपूजितम् ॥
आकर्षणं सुरस्त्रीणां नागलोकनिवासिनाम् ।
पिशाचयक्षरक्षांसि गन्धर्वाप्सरकिन्नराः ॥
दुष्टसत्त्वाश्च ये सत्त्वाः प्रसर्पन्त्येव दूरतः ।
यन्त्रराजमिमं दृष्ट्वा विद्रवन्त्यतिमोहिताः ॥
बहुना किमिहोक्तेन सर्वलोकसुखावहम् ।
स्त्रीणामाकर्षकं सद्यो राज्ञो वश्यकरं भुवि ॥
योगसिद्धिकरं पुंसां भवसागरतारकम् ।
भुक्तिमुक्तिप्रदं पुंसामिति प्रोक्तं स्वयम्भुवा ॥इति ॥१४६-१४७॥

अब **माला मन्त्र** कहते हैं—'नमः कामदेवाय सर्वजनप्रियाय सर्वजन संमोहनाय ज्वल ज्वल प्रज्वल सर्वजनस्य हृदयं मम वशं कुरु कुरु स्वाहा' । (४८) यह अड़तालीस अक्षरों का माला मन्त्र कहा गया है ॥ १४६-१४७ ॥

वश्यकरयन्त्रम्

**साध्याख्यापुटितैः स्मरैः परिवृतं कामं लिखेन्मध्यतः**
**पश्चात्तारविकारपक्षकपरान्नासार्घिझिण्टीशघान् ।**
**शूलाढ्याष्टदलेषु साधु विलिखेत्ताम्बूलपत्रोदरे**
**यन्त्रं यां निशि खादयेत् कृतजपं वश्या भवेत्तस्य सा ॥ १४८ ॥**
**कथितं पुष्पबाणस्य साङ्गोपाङ्गसमर्चनम् ।**
**सौभाग्यकान्तिविभवदारपुत्रसमृद्धिदम् ॥ १४९ ॥**

यन्त्रान्तरमाह साध्येति । मध्यतः अष्टदलकर्णिकायाम् साध्यसाधककर्मनामपुटितैः स्मरैः कामबीजैः परिवृतं कामं साध्यसाधककर्मसहितं लिखेत् । अष्टसु दलेषु लिखनीयमाह तार इति । तारेण त्रित्वसंख्यातेन इकारः । अन्ये प्रणवमाहुस्तदसत् । पद्मपादाचार्यादिबहुग्रन्थविरोधात् । विकारोऽन्त्यः स्वरः । पक्षो द्वितीयः स्वर इति । केचन साम्प्रदायिकास्तु पञ्चदश स्वरमाहुः । पद्मपादाचार्यस्य सम्मतेः । को वायुस्तेन यः स परो यस्य तेन मकारः । तदुक्तं गौतमेन मन्त्रव्याकरणे—

ब्रह्मणो वाचकः कः स्यात् कशब्दो मूर्धवाचकः ।
सूर्यस्य वाचकः कः स्यात् कशब्दो वायुवाचकः ॥ इति ॥

अन्ये कपरः ख इत्याहुस्तदसत् । पद्मपादाचार्यग्रन्थविरोधात् । नासाशब्देन तदुच्चारणीयः अनुनासिकः । तन्मध्येऽपि प्रथमातिक्रमे कारणाभावात् ङकारः । केचन नासा अकार इत्यूचुस्तदसत् । तद्ग्रन्थादिविरोधादेव । अर्घिरर्घीशः ऊ । झिंटीश ए । घ इति स्वरूपम् । क्वचित् झिण्टीशकानिति पाठः । स प्रामादिकः ।

तदुक्तमाचार्यैः—तारर्त्विक्पक्षजाष्टादशसमिदृतुगण्डान्तगान्ताक्षराढ्यम् । इति ।

**एतद्व्याख्याने पद्मपादाचार्यैर्व्याख्यातम् । तार इः । ऋत्विक् अः । पक्षः अं । जाष्ठादशो मः । समित् ङः ऋतुः ऊः । गण्डान्तः ए । गान्तो घ इति । शूलाढ्येति दलाग्रेषु शूलानि कुर्यात् ॥ १४८-१४९ ॥**

**अन्य वश्यकर यन्त्र**—अष्टदल की कर्णिका के मध्य में साध्य साधक नाम तथा कर्म से संपुटित काम बीज लिखे । पुनः काम बीज से संपुटित साध्य साधक नाम तथा कर्म लिखे । पुनः शूल युक्त अष्टदलों पर क्रमशः तार (तीसरा स्वर इकार), विकार (अन्त्य स्वर अः), पक्ष (द्वितीय स्वर आ), कपर (वायु यकार है पर में जिसके), म नासा (ङ्), अर्घीश (उकार), झिण्टीश (एँ) और घ लिखे । यह यन्त्र ताम्बूल पत्र पर भीतर की ओर लिखे । फिर रात्रि के समय जिस स्त्री को वह ताम्बूल पत्र खिला दे वह स्त्री उसके वश में हो जाती है ॥ १४८ ॥

हमने कामदेव की पूजा का साङ्गोपाङ्ग वर्णन किया, जो सौभाग्य कान्ति, विभव, स्त्री, पुत्र तथा समृद्धि प्रदान करने वाला है ॥ १४९ ॥

**दशावतारस्तोत्रम्**

**आदाय वेदाः सकलाः समुद्रान् निहत्य शङ्खासुरमत्युदग्रम् ।**
**दत्ताः पुरा येन पितामहाय विष्णुं तमाद्यं भज मत्स्यरूपम् ॥१५०॥**

**एवं सप्रपञ्चं विष्णुमन्त्रान्निरूप्य शिष्यचेतसि दृढभक्तेरुत्पादनाय दशावतार क्रमेण विष्णुं स्तौति आदायेत्यादिना । येन शङ्खासुरं निहत्य समुद्रादादाय तेनेत्यर्थात् पितामहाय ब्रह्मणे सकला वेदा दत्ता इत्यन्वयः । वेदानिति पाठे ते इत्यर्थः ॥ १५० ॥**

यहाँ तक विस्तारपूर्वक विष्णु के मन्त्रों का निरूपण कर शिष्य के चित्त में विष्णु के प्रति दृढ़ भक्ति उत्पन्न कराने के लिये दशावतार के क्रम से **विष्णु की स्तुति का वर्णन** करते हैं—

(१) पूर्वकाल में जिन्होने शङ्खासुर का वध कर समुद्र के समस्त वेदों को निकाल कर ब्रह्मदेव को प्रदान किया ऐसे सृष्टि के आदि में **मत्स्यावतार** धारण करने वाले विष्णु का भजन करो ॥ १५० ॥

**दिव्यामृतार्थं मथिते महाब्धौ**
**देवासुराभ्यां वासुकिमन्दराभ्याम् ।**
**भूमेर्महावेगविघूर्णिताया-**
**स्तं कूर्ममाधारगतं स्मरामि ॥ १५१ ॥**

**भूमेराधारगतमिति सम्बन्धः ॥ १५१ ॥**

(२) दिव्य अमृत की संप्राप्ति के लिये देवताओं एवं असुरों ने जब वासुकि तथा मन्दराचल की सहायता से समुद्र मन्थन आरम्भ किया तब उनके वेग से डाँवाडोल हो रही पृथ्वी को कूर्म रूप से धारण करने वाले **कूर्मावतार** श्री हरि का मैं स्मरण करता हूँ ॥ १५१ ॥

**समुद्रकाञ्ची सरिदुत्तरीया वसुन्धरा मेरुकिरीटभारा ।**
**दंष्ट्राग्रतो येन समुद्धृता भूस्तमादिकोलं शरणं प्रपद्ये ॥१५२॥**
**भक्तार्त्तिभङ्गक्षमया धिया यः स्तम्भान्तरालादुदितो नृसिंहः।**
**रिपुं सुराणां निशितैर्नखाग्रै र्विदारयन्तं न च विस्मरामि ॥१५३॥**

**येनैवंभूता भूर्दंष्ट्राग्रतो दंष्ट्राग्रेण उद्धृतेति सम्बन्धः ॥ १५२-१५३ ॥**

(३) समुद्र जिसकी काञ्ची है, नदियाँ जिसकी उत्तरीय हैं एवं महान् सुमेरु पर्वत जिसका किरीट है इस प्रकार की महाविशाल पृथ्वी को जिन्होंने अपने दाँत के अग्र भाग पर धारण किया उन आदि वाराह भगवान् **वराहावतार** की मैं शरण लेता हूँ ॥ १५२ ॥

(४) अपने भक्त के ऊपर आई विपत्ति का विनाश करना चाहिए, ऐसा सोचकर प्रह्लाद की रक्षा के लिये स्तम्भ के मध्य से जिन्होंने नृसिंहरूप धारण किया और अपने तीक्ष्ण नखाग्रों से देवशत्रु हिरण्यकशिपु की छाती को विदीर्ण कर दिया भला ऐसे **नृसिंहावतार** का मैं किस प्रकार विस्मरण कर सकता हूँ ? ॥ १५३ ॥

**चतुः समुद्राभरणा धरित्री**
**न्यासाय नाऽलं चरणस्य यस्य ।**
**एकस्य नाऽन्यस्य पदं सुराणां**
**त्रिविक्रमं सर्वगतं स्मरामि ॥ १५४ ॥**

**अन्यस्य द्वितीयस्य चरणस्य न्यासाय सुराणां पदं नालमिति सम्बन्धः ॥१५४॥**

(५) चार समुद्र से युक्त पृथ्वी जिसके एक पग के लिये पर्याप्त नहीं हुई । किं बहुना स्वर्ग भी जिनके दूसरे चरण के लिये पर्याप्त नहीं हुआ, ऐसे त्रिविक्रम वामन देव को जो सर्वत्र विष्णुरूपेण व्याप्त हैं मैं उन **वामनावतार** का स्मरण करता हूँ ॥ १५४ ॥

**त्रिःसप्तवारं नृपतीन् निहत्य**
**यस्तर्पणं रक्तमयं पितृभ्यः ।**
**चकार दोर्दण्डबलेन सम्यक्**
**तमादिशूरं प्रणमामि भक्त्या ॥ १५५ ॥**

**कुले रघूणां समवाप्य जन्म**
**विधाय सेतुं जलधेर्जलान्तः ।**
**लङ्केश्वरं यः शमयाञ्चकार**
**सीतापतिं तं प्रणमामि भक्त्या ॥ १५६ ॥**

**हलेन सर्वानसुरान् विकृष्य**
**चकार चूर्णं मुशलप्रहारैः ।**

**यः कृष्णमासाद्य बलं बलीयान्**
**भक्त्या भजे तं बलभद्ररामम् ॥ १५७ ॥**

**चूर्णं चूर्णीभूतान् चकारेत्यन्वयः । यः कृष्णं बलं सहायमासाद्य ॥१५५-१५७॥**

(६) जिन्होंने इक्कीस बार क्षत्रियों का अपने बाहुबल से विनाश कर उनके रक्त से अपने पितरों का तर्पण किया, उन आदि शूर **परशुरामावतार** को भक्तिपूर्वक प्रणाम करता हूँ ॥ १५५ ॥

(७) जिन्होंने रघुकुल में जन्म लेकर समुद्र के जल पर पुल बाँध रावण जैसे दुर्दान्त राक्षस का विनाश किया, ऐसे सीतापति **श्रीरामावतार** को मैं भक्ति पूर्वक प्रणाम करता हूँ ॥ १५६ ॥

(८) जिन्होंने श्री कृष्ण का बल प्राप्त कर समस्त असुरों को जो उस समय क्षत्रिय रूप में उत्पन्न हुये थे अपने हल से खींचकर मुशल प्रहार से चूर चूर कर दिया उन **बलभद्ररामावतार** का मैं भक्ति से भजन करता हूँ ।

**विमर्श**—तीन राम हैं—प्रथम जामदग्न्य राम परशुराम, दूसरे दाशरथि राम राघव और तीसरे बलभद्र राम बलराम ॥ १५७ ॥

**पुरा पुराणामसुरान् विजेतुं**
**सम्भावयन् चीवरचिन्हवेशम् ।**
**चकार यः शास्त्रममोघकल्पं**
**तं मूलभूतं प्रणतोऽस्मि बुद्धम्॥ १५८ ॥**
**कल्पावसाने निखिलैः खुरैः स्वैः**
**सङ्घट्टयामास निमेषमात्रात् ।**
**यस्तेजसा निर्दहतीति भीमो**
**विश्वात्मकं तं तुरगं भजामः॥ १५९ ॥**
**शङ्ख सुचक्रं सुगदां सरोजं**
**दोर्भिर्दधानं गरुडाधिरूढम् ।**
**श्रीवत्सचिन्हं जगदादिमूलं**
**तमालनीलं हृदि विष्णुमीडे ॥ १६० ॥**

**चीवरचिह्नवेशं सम्भावयन् धारयन्नित्यन्वयः ॥ १५८-१६० ॥**

(९) पूर्वकाल में त्रिपुर में रहने वाले समस्त असुरों को धर्म मार्ग से विचलित करने के लिये जिन्होंने बुद्ध के रूप में अवतार लिया तथा कन्या मात्र परिग्रह धारण कर असुरों को प्रवञ्चित करने के लिये अमोघ नास्तिक दर्शनों की रचना की ऐसे नास्तिकता के मूल कारण वाले **बुद्धावतार** को मैं नमस्कार करता हूँ ॥ १५८ ॥

(१०) जिन्होंने प्रलय काल में अपने समस्त खुरों से सारी पृथ्वी को चूर्ण चूर्ण कर दिया। इतना ही नहीं अपने तेज से समस्त विश्वात्मक जगत् को जला भी दिया ऐसे संवर्त्तक अग्नि रूप तुरग वेषधारी भगवान् **हयग्रीवावतार** का मैं भजन करता हूँ ॥ १५९ ॥

जिन्होंने अपने हाथों में शङ्ख, चक्र, गदा एवं पद्म धारण किया है, जो गरुड़ पर सवार हैं, जिनके वक्षःस्थल में श्रीवत्स का चिन्ह है। जो इस जगत् के आदि मूल कारण हैं—ऐसे तमाल के समान नीले वर्ण वाले विष्णु की मैं स्तुति करता हूँ ॥ १६० ॥

**क्षीराम्बुधौ शेषविशेषतल्पे शयानमन्तः स्मितशोभिवक्त्रम्।**
**उत्फुल्लनेत्राम्बुजमम्बुजाभमाद्यं श्रुतीनामसकृत् स्मरामि ॥१६१॥**

**प्रीणयेदनया स्तुत्या जगन्नाथं जगन्मयम्।**
**धर्मार्थकाममोक्षाणामाप्तये पुरुषोत्तमम् ॥ १६२ ॥**

**॥ इति श्रीलक्ष्मणदेशिकेन्द्रविरचिते शारदातिलके सप्तदशः पटलः समाप्तः ॥ १७ ॥**



**शेष एव विशेषः असाधारणात् ॥ १६१-१६२ ॥**

**॥ इति श्रीराघवभट्टविरचित-शारदातिलकटीकायां सत्सम्प्रदायकृतव्याख्यायां पदार्थादर्शाभिख्यायां सप्तदशः पटलः ॥ १७ ॥**



जो क्षीर समुद्र में शेष की विशेष शय्या पर शयन करते हैं, जिनका मुखारविन्द अन्तःस्मित से शोभित हो रहा है, जिसके नेत्र कमल के समान विशाल हैं, ऐसे कमल के समान कान्तिमान श्रुति के एकमात्र आदि कारण विष्णु का मैं अनेक बार स्मरण करता हूँ ॥ १६१ ॥

साधक धर्म, अर्थ, काम एवं मोक्ष—इन चारों पुरुषार्थों की प्राप्ति के लिये इन स्तुतियों से जगन्मय जगन्नाथ विष्णु को प्रसन्न करे ॥ १६२ ॥

**॥ इस प्रकार शारदातिलक के सत्रहवें पटल की डॉ० सुधाकर मालवीय कृत हिन्दी व्याख्या पूर्ण हुई ॥ १७ ॥**



# अथाष्टादशः पटलः

## अथ शिवप्रकरणम्

अथ वक्ष्ये महेशस्य मन्त्रान् सर्वसमृद्धिदान् ।
यैः पूर्वमृषयः प्राप्ताः शिवसायुज्यमञ्जसा ॥ १ ॥

**क्रमप्राप्तान् शैवमन्त्रानाह अथेति । सर्वसमृद्धिदान् यैरित्यादिना च तत्तदधिकारिणं प्रति विनियोग उक्तः ॥ १ ॥**

अब इसके बाद क्रम प्राप्त संपूर्ण सिद्धियों के देने वाले महेश्वर के मन्त्र को कहता हूँ, जिसके अनुष्ठान करने से पूर्वकाल में अनेक महर्षियों ने अनायास ही शिव सायुज्य प्राप्त किया ॥ १ ॥

शिवमन्त्रः । ऋष्यादिकथनम्

हृदयं वपरं साक्षि लान्तोऽनन्तान्वितो मरुत् ।
पञ्चाक्षरो मनुः प्रोक्तस्ताराद्योऽयं षडक्षरः ॥ २ ॥
वामदेवो मुनिश्छन्दः पङ्क्तिरीशोऽस्य देवता ।

षडङ्गन्यासः

षड्भिर्वर्णैः षडङ्गानि कुर्यान्मन्त्रस्य देशिकः ॥ ३ ॥

पञ्चमूर्तिन्यासः

मन्त्रवर्णादिका न्यस्येत् पञ्चमूर्त्तीर्यथाक्रमम् ।
तर्जनीमध्ययोरन्त्यानामिकाङ्गुष्ठके पुनः ॥ ४ ॥

**मन्त्रमुद्धरति हृदयमिति । हृदयं नमःपदम् । वपरं शः साक्षि इकारयुक् तेन शि । लान्तो वः अनन्त आ तदन्वितस्तेन वा । मरुत् यः । षडक्षर इत्यनेन वाग्भवादिरित्युक्तम् । आद्यं बीजम् उमेति शक्तिः । केचित्प्रणवादनन्तरं प्रासादबीजप्रक्षेपात् सप्ताक्षरमिति वदन्ति । तन्त्रान्तरे—**

**आद्यन्ते सम्पुटीकृत्य हंसवागीश्वरं मनुम् ।
शिवमन्त्रं जपेद्धीमान् सद्यः प्रत्ययमेष्यति ॥
सम्पुटं शिवमन्त्रस्य जपेन् मासम्मतन्द्रितः ।
एकाकी यतचित्तात्मा वश्यमर्थं स विन्दति ॥ इति ॥**

**अत्र वागीश्वरशब्देन वाग्भवं केवलं रेफरहितं तार्त्तीयं चेति परमगुरवः । षड्भिरिति षडङ्गमन्त्रोद्धारमात्रमुक्तम् । न्यासमग्रे वक्ष्यतीति न पुनरुक्तिः । देशिको यथाक्रममिति । प्रत्यक्षरमादौ प्रणव इत्युक्तम् । अन्त्या कनिष्ठा ॥ २-४ ॥**

हृदय (नमः), वपर (श), साक्षि (उसे इकार से संयुक्त करे), लान्त (व) अनन्त (उसे आकार से संयुक्त करे), तदनन्तर मरुत् (य) । इस प्रकार 'नमः शिवाय' यह पञ्चाक्षर शिव मन्त्र निष्पन्न हुआ । यदि इसके आदि में प्रणव (ॐ) का योग कर दें तो 'ॐ नमः शिवाय' यह षड्क्षर मन्त्र निष्पन्न होता है ॥ २ ॥

इस महामन्त्र के वामदेव ऋषि हैं, पङ्क्ति छन्द है और ईश्वर इसके देवता हैं । साधक इस मन्त्र के छः अक्षरों से षडङ्गन्यास करे ॥ ३ ॥

पुनः इस मन्त्र के आदिवर्णों के क्रम से क्रमानुसार पञ्चमूर्त्तियों द्वारा हाथ के दोनों तर्जनी, मध्यमा, कनिष्ठा, अनामिका तथा अङ्गुष्ठ में न्यास करे ॥ ४ ॥

**ताः स्युस्तत्पुरुषाघोरसद्योवामेशसंज्ञकाः ।**
**वक्त्रहृत्पादगुह्येषु निजमूर्धनि ताः पुनः ॥ ५ ॥**
**प्राग्याम्यवारुणोदीच्यमध्यवक्त्रेषु पञ्चसु ।**
**मन्त्राङ्गानि न्यसेत् पश्चाज्जातियुक्तानि षट् क्रमात्॥ ६ ॥**

**ता मूर्त्तयः । सद्यः सद्योजातः । वामो वामदेवः । ईश ईशानः । ताः पुनर्मूर्धनीत्यन्तेषु स्थानेषु न्यसेदिति पश्चात्तनेन सम्बन्धः । चतुर्थीनमोऽन्ताश्च मूर्त्तय इति सम्प्रदायविदः । मूर्धनीति काकाक्षिगोलकन्यायेन उभयत्र सम्बध्यते । ताः पुनर्निज-मूर्धनि पञ्चसु वक्त्रेषु न्यसेदिति पश्चात्तनेन सम्बन्धः । तदुक्तमाचार्यैः—**

**वक्त्रहृत्पादगुह्याख्यामूर्धस्वपि च नामभिः ।**
**प्राग्याम्यवारुणोदीच्यवक्त्रेष्वपि च मूर्धनि ॥ इति ॥**

**मन्त्राङ्गानीति । तत्र प्रयोगः—ॐ हृत् नं शिर इत्यादि । सम्प्रदायविदस्तु । ॐ ॐ सर्वज्ञधाम्ने हृत् । ॐ नं तृप्तिधाम्ने शिरः । ॐ मः अनादिबोधधाम्ने शिखा । ॐ शिं अलुप्तशक्तिधाम्ने वर्म । ॐ वां स्वतन्त्रशक्तिधाम्ने नेत्रम् । ॐ यं अनन्तशक्तिधाम्ने अस्त्रम् । एवं षडङ्गमिच्छन्ति । तदुक्तं वायवीयसंहितायाम्—**

**तथैव तु षडङ्गानि पुनरस्योपपादयेत् ।**
**सर्वज्ञतां तथा तृप्तिं बोधं चाद्यन्तवर्जितम् ॥**
**अलुप्तशक्तिं स्वातन्त्र्यमनन्तां शक्तिमेव च ॥ इति ।**

**क्वचित्तु वर्मनेत्रयोर्व्यत्ययः । तदुक्तम्—**

**सर्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तशक्तिः ।**
**अनन्तशक्तिश्च विभोर्विधिज्ञाः प्राहुः षडङ्गानि महेश्वरस्य ॥ इति ॥**

**यथागुरुसम्प्रदायमूहनीयम् ॥ ५-६ ॥**

वे पञ्चमूर्त्तियाँ क्रमशः तत्पुरुष-अघोर-सद्योजात वामदेव तथा ईशान संज्ञक हैं (पूर्वोक्त (१८-४) अङ्गुलियों में न्यास का प्रयोग 'शिं तत्पुरुषमूर्त्यै तर्जनीभ्यां

नमः', 'वां अघोरमूर्त्यौ मध्यमाभ्यां नमः' इत्यादि प्रकार से करे ।) तदनन्तर इसी प्रकार पञ्चाक्षर मन्त्र के एक एक अक्षर से संयुक्त एक एक मूर्त्ति का न्यास मुख, हृदय, पाद, गुह्य तथा शिर प्रदेश में करे ॥ ५ ॥

इसके पश्चात् अपने शिरःप्रदेश में पञ्चवक्त्रत्त्व की भावना करते हुये पूर्व, दक्षिण, पश्चिम, उत्तर तथा मध्य इस प्रकार पाँच मुखों में पूर्वोक्त विधि से न्यास करे । पुनः मन्त्र के अङ्ग से तत्तदञ्जलि युक्त षडङ्गन्यास करे । यथा—'ॐ हृत् नं शिर' इत्यादि ॥ ६ ॥

दशावृतिमयगोलकन्यासः

कुर्वीत गोलकन्यासं रक्षायै तदनन्तरम् ।
हृदि वक्त्रेंऽसयोऽर्वोः कण्ठे नाभौ द्विपार्श्वयोः ॥ ७ ॥
पृष्ठे हृदि ततो मूर्ध्नि वदने नेत्रयोर्नसोः ।
दोःपत्सन्धिषु साग्रेषु विन्यसेत्तदनन्तरम् ॥ ८ ॥
शिरोवदनहृत्कुक्षिसोरुपादद्वये पुनः ।
हृदि वक्त्राम्बुजे टङ्के मृगाभयवरेष्वथ ॥ ९ ॥
वक्त्रांसहृत्सपादोरुजठरेषु क्रमान् न्यसेत् ।
मूलमन्त्रस्य षड्वर्णान् यथावद्देशिकोत्तमः ॥ १० ॥
मूर्ध्नि भालोदरांसेषु हृदये ताः पुनर्न्यसेत् ।
पश्चादनेन मन्त्रेण कुर्वीत व्यापकं सुधीः ॥ ११ ॥

व्यापकमन्त्रः

नमोऽस्तु स्थाणुरूपाय ज्योतिर्लिङ्गामृतात्मने।
चतुर्मूर्त्तिवपुच्छायाभासिताङ्गाय शम्भवे ।
एवं न्यस्तशरीरोऽसौ चिन्तयेत्पार्वतीपतिम् ॥ १२ ॥

दशावृतिमयं गोलकन्यासमाह कुर्वीतेति । तदनन्तरं तत्त्वन्यासानन्तरमित्यर्थः । तत्त्वन्यासो यथा—

वक्ष्यतेऽथो शैवतत्त्वन्यासः प्रसादतः परम् ।
पञ्चाक्षरी परायेति तत्त्वनामात्मने नमः ॥
आवृत्त्या शिवपञ्चाक्षर्यर्णयुक्तं पृथक् सह ।
द्वितीयादि क्षादिवर्णैरान्तैराद्यं ध्रुवादिकैः (कम्) ॥
शिवः शक्तिः सदापूर्वः शिव ईश्वर एव च ।
शुद्धविद्या च माया च कालश्च नियतिः कला ॥
स्मृतोपरागः पुरुषः प्रकृतिर्बुद्ध्यहङ्कृती ।
मन एतान् हृदि न्यस्येत् श्रोत्रादिषु स्थले तथा ।
वागाद्यप्यथशब्दादि मूर्धास्योरौ गुदे पदे ॥

आकाशादीन्न्यसेदेषु वक्ष्यमाणं च पञ्चकम् ।
सदाशिवाद्या आकाशाद्याधिपत्यन्तकाः सङे: ॥
शान्त्यतीताकलाद्यन्ता निवृत्त्याद्याः स्वबीजतः ।
न्यसेत् पादादिशीर्षान्ते मूर्धादिचरणान्तिके ॥
शान्त्यात्मेशानमूर्धा च ङेयुतश्च सदाशिवः ।
सत्यात्मा तत्पुरुषवक्त्रो ङेसंयुत ईश्वरः ॥
नादात्माऽघोरहृदयो ङेयुतश्च महेश्वरः ।
बिन्द्वात्माऽथो वामदेवगुह्यो विष्णुश्च ङेयुतः ॥
बीजात्मा च सद्योजातपादो ब्रह्मा च ङेयुतः ।
ईशानाद्यानूर्ध्ववक्त्राद्यान् सदाशिवपूर्वकान् ॥
ऊर्ध्वादिपञ्चवक्त्रेषु ङेन्तानक्षरपूर्वकान् ॥ इति ।

स्वबीजत इति । ह्रां ह्रीँ ह्रूँ ह्रैँ ह्रौँ । ईशानाद्यान् ईशानतत्पुरुषाघोरवाम सद्यान् । ऊर्ध्ववक्त्राद्यान् ऊर्ध्वपूर्वदक्षोत्तरपश्चिमान् । प्रयोगस्तु—ॐ हों नमः शिवाय पराय शिवात्मने नमः । नं क्षं हौं नमः शिवाय पराय शक्त्यात्पने नमः । मं लं हौं नमः शिवाय पराय सदाशिवात्मने नम इत्यादि । प्रथमचरणेनैकाऽऽवृतिः । कण्ठादिहृदन्तं द्वितीया । मूर्धादिनासिकान्तं तृतीया । ततोऽर्धेनावृतिचतुष्टयम् । अन्यत्र सर्वत्र दोःपत्सन्धयश्चत्वार एव गृहीताः । अत्राऽङ्गुलिमध्यसन्धिमपि गृहीत्वा पञ्च सन्धयः । षष्ठमग्रमिति । एकैकस्मिन्नेकैकावृतिः । साग्रमित्यत्राऽङ्गुलीनामन्त्यसन्धियोगात् अग्रत्वमपि ज्ञेयम् ।

अत्र सर्वत्र केचन पञ्चाक्षरन्यासमाहुः । तन्मते मूलमन्त्रस्य षड्वर्णानित्यनेन । अन्यत्रापि 'हृन्मुखांसोरुयुग्मेषु षड्वर्णान् क्रमशो न्यसेत्' इत्यनेन च विरोधः स्यात् । तत्परिहाराय प्रत्यर्णमादौ प्रणवमाहुः । एवमपि अष्टमनवमदशमेषु पृथक् षट्स्थान-निर्देशो वृथा स्यात् । अन्यत्रापि दशमावृतौ 'मुखांसहृदयेषु त्रीन् परान् पादोरुकुक्षिषु' इति अनेन विरोधात् तदसङ्गतम् । कश्चित्तु दोः सन्धिद्वयं तृतीयमग्रम् एवं दोर्द्वन्द्व एका पदद्वन्द्व एका इत्यष्टौ न्यासानेवाह । सभ्रान्त एव । यतः सर्वत्र गोलकन्यासे ग्रन्थान्तरे च दशावृतीनामेवोक्तत्वात् । सन्धिशब्दार्थस्य सङ्कोचे कारणाभावा च । ततोऽर्धेनाऽष्टमी । पुनरर्धेन नवमी । तत्र टङ्कादिषु तत्तन् मुद्रया न्यासो विधेय इति साम्प्रदायिकाः । टङ्कः परशुः । मुद्रालक्षणानि तु—

करे करं तु करयोस्तिर्यक् संयोज्य चाऽङ्गुलीः ।
संहताः प्रसृताः कुर्यान् मुद्रेयं परशोर्मता ॥
मिलित्वाऽनामिकाङ्गुष्ठमध्यमाग्राणि योजयेत् ।
शिष्टाङ्गुल्युच्छ्रिते कुर्यान् मृगमुद्रेयमीरिता ॥ इति ॥
ऊर्ध्वीकृतो वामहस्तः प्रसृतोऽभयमुद्रिका ।
अधोमुखो दक्षहस्तः प्रसृतो वरमुद्रिका ॥ इति ॥

अर्धेन दशमी । यथावदिति । देशिकोत्तमः ता मूर्त्तीर्यथावत् पुनर्न्यसेदिति सम्बन्धः । यथावदित्यनेन प्रणवादि मन्त्रवर्णा इत्युक्तम् । देशिकोत्तम इत्यनेन तत्तदङ्गुल्येति ज्ञेयम् । इदं पूर्वन्यासयोरप्यूह्यम् । अंसेति अंसद्वयम् ॥ ७-१२ ॥

इस प्रकार तत्त्वन्यास करने के बाद दशावृत्ति में किये जाने वाले गोलक न्यास अपनी रक्षा के लिये करे । हृदय, मुख, दो कन्धे और दोनों ऊरु में प्रथमावृत्ति, कण्ठ, नाभि दोनों पार्श्व, पृष्ठ तथा हृदय में द्वितीयावृत्ति, मूर्धा, मुख, दोनों नेत्र तथा दोनों नासिका में तृतीयावृत्ति, इसके बाद बाहु तथा पैर में चतुर्थावृत्ति, उनकी सन्धियों में पञ्चम आवृत्ति, अङ्गुलियों के मध्य सन्धि में षष्ठावृत्ति उनके अग्रभाग में सप्तम आवृत्ति से न्यास करे ॥ ८ ॥

पुनः शिर, मुख, हृदय, कुक्षि, ऊरु तथा दोनों पैरों में अष्टम आवृत्ति हृदय, मुख, परशु, मृग, अभय तथा वर में नवम आवृत्ति, इसके पश्चात् मुख, कन्धा, हृदय, पाद, ऊरु और जठर में दशावृत्ति के क्रम से न्यास करे । उत्तम आचार्य इस प्रकार मूल मन्त्र के छः अक्षरों के प्रत्येक वर्ण से उक्त स्थानों में दशावृत्ति युक्त न्यास करें ॥ १० ॥

पुनः शिर, भाल, उदर दोनों कन्धे तथा हृदय में पञ्च मूर्त्तियों के द्वारा पुनः न्यास करे, इस प्रकार आगे कहे जाने वाले मन्त्र से बुद्धिमान् साधक व्यापक न्यास करे । वह मन्त्र इस प्रकार है—'नमोऽस्तु स्थाणुरूपाय ज्योतिर्लिङ्गात्मने चतुर्मूर्त्तिवपुच्छायाभासिताङ्गाय शम्भवे' । इस मन्त्र से व्यापक न्यास कर तदनन्तर पार्वतीपति शंकर का इस रूप में ध्यान करे— ॥ ११-१२ ॥

पञ्चमुखशिवध्यानम्

**ध्यायेन्नित्यं महेशं रजतगिरिनिभं चारुचन्द्रावतंसं**
**रत्नाकल्पोज्ज्वलाङ्गं परशुमृगवराभीतिहस्तं प्रसन्नम् ।**
**पद्मासीनं समन्तात् स्तुतममरगणैर्व्याघ्रकृत्तिं वसानं**
**विश्वाद्यं विश्वरूपं निखिलभयहरं पञ्चवक्त्रं त्रिनेत्रम् ॥ १३ ॥**

**ध्यायेदिति । पद्मासीनमिति श्वेतपद्मं चिन्तनीयम् । आयुधध्यानं दक्षाद्यूर्ध्वयोराद्ये तदधस्तनयोरन्त्ये । अनेनैव क्रमेण स्वशरीरे पूर्वोक्तो न्यासः । अत्र ध्यानानन्तरं पद्मलिङ्गमुद्रे दर्शनीये । आयुधमुद्राश्च ।**

**तदुक्तं प्रयोगसारे—दर्शयित्वा यतः पद्मलिङ्गमुद्रे तदग्रतः । इति ।**

**तत्र पद्ममुद्रालक्षणमुक्तं प्राक् । लिङ्गमुद्रालक्षणं तु—**

**उच्छ्रितं दक्षिणाङ्गुष्ठं वामाङ्गुष्ठेन बन्धयेत् ।**
**वामाङ्गुलीर्दक्षिणाभिरङ्गुलीभिश्च वेष्टयेत् ।**
**लिङ्गमुद्रेयमाख्याता शिवसान्निध्यकारिणी ॥ इति ॥**

**इयं सर्वशैवमन्त्रसाधारणीति ज्ञेयम् ॥ १३ ॥**

रजत पर्वत के समान जिनके शरीर का वर्ण सर्वथा श्वेत है, जिनके भाल प्रदेश में द्वितीया का चन्द्रमा आभूषण रूप में भूषित है, जिनका समस्त अङ्ग रत्न के समान उज्ज्वल है, जिनके हाथ में परशु, मृग, वर और अभय मुद्रा हैं, जो

सर्वथा प्रसन्न रहने वाले हैं, जो श्वेत पद्म के आसन पर विराजमान हैं, देवता लोग जिनकी चारों ओर से स्तुति कर रहे हैं, व्याघ्र चर्म को धारण किये उन विश्व के आदि, विश्वरूप, निखिल भयहर्त्ता, पञ्चमुख तथा त्रिनेत्र महेश्वर का ध्यान करना चाहिए ॥ १३ ॥

### पुरश्चरणादिकथनम्

**तत्त्वलक्षं जपेन्मन्त्रं दीक्षितः शैववर्त्मना ।**
**तावत्संख्यासहस्राणि जुहुयात् पायसैः शुभैः ।**
**ततः सिद्धो भवेन्मन्त्रः साधकाभीष्टसिद्धिदः ॥ १४ ॥**

शैववर्त्मना दीक्षितः कृतदीक्षः । सा च शैवतन्त्रात् कामिकादितो ज्ञेया । तत्त्वलक्षं चतुर्विंशतिलक्षं मन्त्रं जपेदित्यन्वयः । उक्तञ्च—अक्षरलक्षचतुष्कं जप्यात् । इति । तावत्संख्यासहस्राणि चतुर्विंशतिसहस्राणि । अत्र द्रव्यप्रोक्षणे मूलमन्त्रो हुँ फडन्तो ज्ञेयः । तदुक्तं नारायणीयप्रयोगसारयोः—

वर्मास्त्रान्तेन मूलेन सम्प्रोक्ष्यैवं प्रकल्पितम् । इति ॥ १४ ॥

शैव मार्ग के अनुसार दीक्षा लेने के पश्चात् इस मन्त्र का २४ लाख जप करे । तदनन्तर पायस से चौबिस हजार संख्या में होम करे । तब यह मन्त्र सिद्ध हो जाता है और साधक को अभीष्ट प्रदान करता है ॥ १४ ॥

**देवं सम्पूजयेत्पीठे वामादिनवशक्तिके ।**
**वामा ज्येष्ठा ततो रौद्री काली कलपदादिका ॥ १५ ॥**
**विकारिण्याह्वया प्रोक्ता बलाद्या विकरिण्यथ ।**
**बलप्रमथनी पश्चात्सर्वभूतदमन्यथ ॥ १६ ॥**
**मनोन्मनीति संप्रोक्ताः शैवपीठस्य शक्तयः ।**

### आसनमन्त्रः

**नमो भगवते पश्चात्सकलादि वदेत् पुनः ॥ १७ ॥**
**गुणात्मशक्तियुक्ताय ततोऽनन्ताय तत्परम् ।**
**योगपीठात्मने भूयो नमस्तारादिको मनुः ॥ १८ ॥**

देवमिति । वामादिनवशक्तिके पीठे देवं पूजयेदिति सम्बन्धः । तत्र मण्डूकादि परतत्त्वान्तं पीठं सम्पूज्य नव शक्तीः पूजयेदित्यर्थः । कलपदादिका इति अग्रिमाया विशेषणम् । आसां ध्यानमुक्तं प्रयोगसार नारायणीययोः—

श्वेता रक्तासिता पीता श्यामाऽरुणा सिताऽसिता ।
शोणा च ताः स्मरेच्छक्तीः पीठरूपा यथाक्रमम् ॥ इति ॥ १५-१८ ॥

इसके अनन्तर वामादि नव शक्तियों से युक्त पीठ पर सदाशिव की पूजा करनी चाहिए । १. वामा, २. ज्येष्ठा, ३. रौद्री, ४. कलपदा, ५. विकरिणी, ६.

बलविकरिणी, ७. बलप्रमथिनी, ८. सर्वभूतदमनी और ९. मनोन्मयी—ये शैव पीठ की नव शक्तियाँ हैं । ॐ नमो भगवते सकलगुणात्मशक्तियुक्ताय अनन्ताय योगपीठात्मने नमः—यह कहे ॥ १५-१८ ॥

**अमुना मनुना दद्यादासनं गिरिजापतेः ।**
**मूर्त्तिं मूलेन सङ्कल्प्या तत्राऽऽवाह्य यजेच्छिवम् ॥ १९ ॥**

**गिरिजापतेरित्यनेनैतदुक्तम् । आत्मयागे आसनं सम्पूज्य स्वागतादिगन्धान्तं दत्त्वा नमोऽस्तु स्थाणुभूतायेति मन्त्रेण पञ्च पुष्पाञ्जलीर्दद्यादिति । तदुक्तमाचार्यैः—**

**कुर्यादनेन मन्त्रेण निजदेहे समाहितः ।**
**मन्त्री पुष्पाञ्जलिं सम्यक् त्रिशः पञ्चश एव च ॥ इति ॥ १९ ॥**

ऊपर कहे गये मन्त्र से गिरिजापति को आसन प्रदान करे, मूल मन्त्र पढ़कर मूर्त्ति की कल्पना करे, तदनन्तर उसी में शिवावाहन कर पूजा करे ॥ १९ ॥

**आवरणदेवताध्यानम्**

**कर्णिकायां यजेन्मूर्त्तीरीशमीशानदिग्गतम् ।**
**शुद्धस्फटिकसङ्काशं दिक्षु तत्पुरुषादिकाः ॥ २० ॥**
**पीताञ्जनश्वेतरक्ताः प्रधानसदृशायुधाः ।**
**चतुर्वक्त्रसमायुक्ता यथावत् संप्रपूजयेत् ॥ २१ ॥**

**कर्णिकायां दिक्षु 'तत्पुरुषादिका मूर्त्तीश्चतस्रो यथावत् संपूजयेदित्यन्वयः । यथावदित्यनेन प्रणवादि मन्त्रवर्णाद्या इत्युक्तम् । ईशानदिग्गतं शुद्धस्फटिकसङ्काश-मीशं पञ्चमं यजेदित्यन्वयः ॥ २०-२१ ॥**

कर्णिका में चारों दिशाओं में तत्पुरुषः, अघोर, सद्योजात और वामदेव की मूर्त्तियों की पूजा करे । पश्चात् ईशान कोण में शुद्धस्फटिक के समान ईशान मूर्त्ति की पूजा करे ॥ २० ॥

ऊपर ईशान का रूप शुद्ध स्फटिक सङ्काश कह दिया गया है । अब शेष चार मूर्त्तियों के वर्ण कहते हैं—ये मूर्त्तियाँ क्रमशः पीत, अञ्जन, श्वेत तथा रक्त वर्ण की हैं । सभी के आयुध (द्र. २०.१३) प्रधान के सदृश हैं । सभी चार मुखों से युक्त हैं, उनकी प्रणव से युक्त मन्त्र वर्णों से यथाविधि पूजा करे ॥ २१ ॥

**कोणेष्वर्च्याः निवृत्त्याद्यास्तेजोरूपाः कलाः क्रमात् ।**
**अङ्गानि केसरस्थानि विद्येशान् पत्रगान् यजेत् ॥ २२ ॥**

**कोणेषु आग्नेयादिषु । द्वितीयोक्ता निवृत्त्याद्याश्चतस्रः । तेजोरूपा इति ध्यानम् । प्रथमपटलोक्ता पञ्चीकृतभूतबीजाद्या इति ज्ञेयम् । शान्त्यतीतामपि ईशे यजेदिति क्रमादित्यनेनोक्तमित्यन्ये ॥ २२ ॥**

इसके बाद कर्णिकाओं के चारों कोणों में तेजःस्वरूपा निवृत्ति आदि चार

कलाओं (निवृत्ति प्रतिष्ठा विद्या और शान्ति) की पूजा करे । ईशान में शान्त्यतीता की पूजा करे । केशरों पर अङ्गो की तथा पत्रों पर विद्येश्वरों की पूजा करे ॥२२॥

अनन्तं सूक्ष्मनामानं शिवोत्तममनन्तरम् ।
एकनेत्रमेकरुद्रं त्रिनेत्रं तदनन्तरम् ॥ २३ ॥
पश्चाच्छ्रीकण्ठनामानं शिखण्डिनमनन्तरम् ।
रक्तपीतसितारक्तकृष्णरक्ताञ्जनासितान् ॥ २४ ॥
किरीटार्पितबालेन्दून् पद्मस्थान् भूषणान्वितान् ।
त्रिनेत्रान् शूलवज्रास्त्रचापहस्तान् मनोहरान् ॥ २५ ॥
उत्तरादि यजेत्पश्चादुमां चण्डेश्वरं पुनः ।
ततो नन्दिमहाकालौ गणेशवृषभौ पुनः ॥ २६ ॥
अथ भृङ्गरीटिं स्कन्दमेतान् पद्मासनस्थितान् ।
स्वर्णतोयारुणश्याममुक्तेन्दुसितपाटलान् ॥ २७ ॥
इन्द्रादयस्ततः पूज्या वज्राद्यायुधसंयुताः ।
इत्थं संपूजयेद्देवं सहस्रं नित्यशो जपेत् ॥ २८ ॥
सर्वपापविनिर्मुक्तः प्राप्नुयाद्वाञ्छितां श्रियम् ।
द्विसहस्रं जपेद्रोगान् मुच्यते नात्र संशयः ॥ २९ ॥
त्रिसहस्रं जपेन्मन्त्रं दीर्घमायुरवाप्नुयात् ।
सहस्रवृद्ध्या प्रजपन् सर्वान् कामानवाप्नुयात् ॥ ३० ॥
आज्यान्वितैस्तिलैः शुद्धैर्जुहुयाल्लक्षमादरात् ।
उत्पातजनितान् क्लेशान्नाशयेन्नाऽत्र संशयः ।
शतलक्षं जपेत्साक्षाच्छिवो भवति मानवः ॥ ३१ ॥

विद्येशानेवाह अनन्तमिति । अस्त्रं बाणः । पश्चादेतानुत्तरादि यजेदिति सम्बन्धः। शतलक्षमिति कोटिम् । तत्रान्तरादिदं यन्त्रं लिख्यते—

रेखाषट्कं न्यसेदूर्ध्वं तथा तिर्यक्प्रमाणकम् ।
अग्राग्रसंहताकारं ऋज्वग्रं च सरेखकम् ॥
वसुपत्रस्वराब्जं च मातृकार्णसमन्वितम् ।
चतुरस्रं द्विधा कृत्वा यन्त्रं पञ्चाक्षराख्यकम् ॥
पञ्चाक्षरीं न्यसेन्मध्ये द्वादशार्णमतः परम् ।
विद्येश्वरांस्तथा न्यस्य द्वादशार्कमतः परम् ॥
बृहत्सौरं ततो न्यस्य कलाशक्तीस्ततः परम् ।
गायत्रीमष्टमातृश्च स्वरांश्चैव ततः परम् ॥
मातृका लोकपालांश्च यन्त्रं पञ्चाक्षराख्यकम् ॥ इति ।
हृदयं ङेणभगवन्नादित्यश्च सङे सह ॥

**आद्यं च किरणं सद्योत मानेङे च ठद्वयम् ।**

**अयं महासौरः कलाशक्तीरमृताद्याः । तत्पुरुषायेति गायत्री । मातृका ककाराद्या सान्ता । शैवागमोक्तं यन्त्रान्तरमुच्यते—**

**षट्कोणान्तः साध्ययुक्तं प्रासादं मूलमस्त्रिषु ।**
**सन्धिष्वङ्गानि तद्बाह्ये पद्मं पञ्चदलं त्विह ॥**
**ईशानाद्याः पञ्चमूर्त्तीर्ङेहृदन्ता लिखेत्ततः ।**
**अष्टपत्रं मातृकाष्टवर्गयुक्तं लिखेद्बहिः ॥**
**संवेष्ट्याऽनुष्टुभा यन्त्रं जपहोमादिसाधितम् ।**
**आरोग्यायुःसुतैश्वर्यचतुर्वर्गफलप्रदम् ॥ इति ॥ २३-३१ ॥**

अनन्त, सूक्ष्म, शिवोत्तम, एकनेत्र, एकरुद्र, त्रिनेत्र, श्रीकण्ठ एवं शिखण्डी—ये विद्येशों के नाम हैं । इनका वर्ण क्रमशः रक्त, पीत, सित, रक्त, कृष्ण रक्त, अञ्जन एवं श्वेत है ॥ २३-२४ ॥

इन सभी के किरीट में बालेन्दु विराजमान हैं, सभी पद्म पर आसीन हैं और भूषण से भूषित हैं एवं त्रिनेत्र हैं । सभी अपने हाथों में शूल, वज्र, बाण और धनुष लिए हुए हैं और सभी आकृति से मनोहर हैं ॥ २५ ॥

इसके बाद उत्तर के क्रम से उमा, चण्डेश्वर, नन्दी, महाकाल, गणेश, वृषभ, भृङ्गरीटि और स्कन्द—इन आठों विद्येश्वरों की आठों दिशाओं में पूजा करे । ये सभी पद्मासन पर स्थित हैं । इनके शरीर का वर्ण सुवर्ण, जल, अरुण, श्याम, मुक्ता, चन्द्रमा, श्वेत और पाटल (रक्त) हैं ॥ २६-२७ ॥

इसके बाद वज्रादि आयुधों से संयुक्त इन्द्रादि दश दिक्पालों की पूजा करे । इस प्रकार आवरण सहित देवाधिदेव की पूजा करे और एक हजार नित्यप्रति उक्त मन्त्र का जप करे ॥ २८ ॥

ऐसा करने से साधक सभी प्रकार के पापों से मुक्त हो जाता है, वाञ्छित श्री प्राप्त करता हैं । यदि ऊपरोक्त विधि से पूजा कर दो सहस्त्र नित्य जप करे तो साधक रोगमुक्त हो जाता है इसमें संशय नहीं ॥ २९ ॥

यदि तीन सहस्त्र नित्य जप करे तो दीर्घ आयु प्राप्त करता है । इस प्रकार सहस्त्र संख्या बढाते हुये अर्थात् चार सहस्त्र जप करे तो संपूर्ण कामनायें सिद्ध कर लेता है । यदि इस मन्त्र से घृत मिश्रित शुद्ध तिलों द्वारा भक्तिपूर्वक एक लाख जप करे तो साधक दिव्य भौम अन्तरिक्ष जन्य उत्पातों को विनष्ट कर देता है इसमें संशय नहीं । यदि इस मन्त्र का एक करोड़ जप करे तो वह मनुष्य साक्षात् शिव हो जाता है ॥ ३०-३१ ॥

**अष्टाक्षरमन्त्रः । ऋष्यादिकथनम्**

**षडक्षरः शक्तिरुद्धः कथितोऽष्टाक्षरो मनुः ।**
**ऋषिश्छन्दः पुरा प्रोक्तो देवता स्यादुमापतिः ॥ ३२ ॥**

**मन्त्रान्तरमाह षडिति । रुद्धः सम्पुटितः । प्रणवो बीजं माया शक्तिः । पुरा प्रोक्त इति । वामदेव ऋषिः पङ्क्तिश्छन्दः ॥ ३२ ॥**

**अङ्गानि पूर्वमुक्तानि सोममीशं विचिन्तयेत् ॥ ३३ ॥**

**अङ्गानीति । तत्र षड्दीर्घयुक्तबीजाद्यैः षडर्णैः षडङ्गविधिरिति सम्प्रदायविदः । प्रयोगस्तु ह्रां ॐ हृत् । ह्रो नं शिरः । ह्रूं मः शिखा । ह्रैं शिं वर्म । ह्रौं वा नेत्रम् । ह्रः यं अस्त्रम् । सोममित्युमया सहितम् ॥ ३३ ॥**

अब **शिव के मन्त्रान्तर का उद्धार** कहते हैं—शक्ति (ह्रीँ) से संपुटित षड्क्षर (ॐ नमः शिवाय) यह शिव का अष्टाक्षर मन्त्र कहा जाता है । (प्रयोग, ह्रीँ ॐ नमः शिवाय ह्रीँ) । इसके ऋषि एवं छन्द पहले के जैसे हैं (द्र. १८. ३) उमापति देवता हैं इसके षडङ्ग पहले जैसे हैं ॥ ३२-३३ ॥

**उमापतिशिवध्यानम्**

**बन्धूकाभं त्रिनेत्रं शशिशकलधरं स्मेरवक्त्रं वहन्तं**
**हस्तैः शूलं कपालं वरदमभयदं चारुहासं नमामि ।**
**वामोरुस्तम्भगायाः करतलविलसच्चारुरक्तोत्पलाया**
**हस्तेनाऽऽश्लिष्टदेहं मणिमयविलसद्भूषणायाः प्रियायाः ॥३४॥**

**आयुधध्यानं दक्षाद्यूर्ध्वयोराद्ये तदधस्तनयोरन्त्ये । करतलेति वामे । तदुक्तम्—**

**वामोरुपीठगतया निजवामहस्तन्यस्तारुणोत्पलयुजा परिरब्धदेहम् । इति ।**

**हस्तेनेति दक्षिणेन ॥ ३४ ॥**

अब **उमा के सहित सदाशिव का ध्यान** कहते हैं—बन्धूक पुष्प के समान जिनके शरीर की कान्ति है, जो त्रिनेत्र हैं एवं चन्द्रमा की कला को धारण करने वाले हैं, स्मित पूर्ण जिनके मुख हैं, जो अपने हाथों में शूल, कपाल, वरद एवं अभय मुद्रा धारण किये हुये हैं, जो वाम ऊरु पर बैठी हुई, करतल में मनोहर पद्म धारण करने वाली मणिमय आभूषणों से विभूषित अपनी प्रिया पार्वती के दाहिने हाथ से जिनका शरीर आश्लिष्ट है—ऐसे उमा सहित सदाशिव को मैं प्रणाम करता हूँ ॥ ३४ ॥

**पुरश्चरणादिकथनम्**

**मनुलक्षं जपेन्मन्त्रं तत्सहस्रं यथाविधि ।**
**जुहुयान्मधुरासिक्तैरारग्वधसमिद्वरैः ॥ ३५ ॥**
**प्राक्प्रोक्ते पूजयेत् पीठे गन्धपुष्पैरुमापतिम् ।**
**अङ्गावृतीर्बहिः पूज्या हृल्लेखाद्या यथा पुरा ॥ ३६ ॥**

**मनुलक्षं चतुर्दशलक्षम् । तत्सहस्रं चतुर्दशसहस्रम् । यथाविधीति तान्त्रिकाग्निमुखविधानेनेत्यर्थः । यथा पुरेति नवमपटलोक्तस्वस्वबीजाद्या इत्युक्तम् । विधानतः पूज्या इति सम्बन्धः ॥ ३५-३६ ॥**

इस अष्टाक्षर मन्त्र का १४ लाख जप करे तथा उतने ही अर्थात् १४ सहस्र विधि के अनुसार होम करे । तदनन्तर त्रिमधुर मिश्रित आरग्वध की श्रेष्ठ समिधाओं से १४ सहस्र होम करे ॥ ३५ ॥

पूर्वोक्त (१८. १२-१९) पीठ पर गन्ध पुष्पादि द्वारा उमापति की पूजा करे। उसी प्रकार (द्र. १८. १९-२७) अङ्गावरण की पूजा करे । तदनन्तर बाहर हृल्लेखादि (द्र. ९. ५-६) की पूर्वोक्त रीति से बीजाक्षर युक्त हों हें हुं हिं हम् की पूजा करे ॥ ३६ ॥

**मध्यप्राग्दक्षिणोदीच्यपश्चिमेषु विधानतः ।**
**हृल्लेखा गगना रक्ता चतुर्थी तु करालिका ।**
**महोच्छुष्मा क्रमादेताः पञ्चभूतसमप्रभाः ॥ ३७ ॥**
**पाशाङ्कुशवराभीतिधारिण्योऽमितभूषणाः ।**
**यजेत् पूर्वादिपत्रेषु वृषभाद्याननुक्रमात् ॥ ३८ ॥**

**विधानमेवाह मध्येति । मध्यं कर्णिकामध्यम् । पश्चिमेषु दिग्भागेष्विति शेषः । पञ्चभूतेति पृथिव्यादि ॥ ३७-३८ ॥**

कर्णिका के मध्य, पूर्व, दक्षिण, उत्तर और पश्चिम की दिशाओं में विधानपूर्वक क्रमशः हृल्लेखा, गगना, रक्ता, करालिका और महोच्छुष्मा की पूजा करे । जिनके शरीर का वर्ण पृथ्वी आदि पञ्चाभूतों के सदृश है । हृल्लेखा का पीत, गगना का स्वच्छ, रक्ता का रक्त तथा करालिका का कृष्ण और महोच्छुष्म का श्वेत वर्ण है ॥ ३७ ॥

ये सभी पाश अंकुश, वर, अभय धारण करने वाली तथा अमित भूषणों से संयुक्त है । इसके बाद पूर्व के पत्रादि में क्रमशः वृषभादि का पूजन करे ॥ ३८ ॥

**वृषभध्यानम्**

**हिमालयाभं वृषभं तीक्ष्णशृङ्गं त्रिलोचनम्।**
**सर्वाभरणसन्दीप्तं साक्षाच्छन्दःस्वरूपिणम् ॥ ३९ ॥**

**क्षेत्रपालध्यानम्**

**कपालशूलविलसत्करं कालघनप्रभम् ।**
**क्षेत्रपालं त्रिनयनं दिगम्बरमथाऽर्चयेत् ॥ ४० ॥**

**चण्डेशध्यानम्**

**शूलटङ्काक्षवलयं कमण्डलुलसत्करम् ।**
**रक्ताकारं त्रिनयनं चण्डेशमथ पूजयेत् ॥ ४१ ॥**

**दुर्गाध्यानम्**

**चक्रशङ्खाभयाभीष्टकरां मरकतप्रभाम् ।**

**दुर्गां प्रपूजयेत् सौम्यां त्रिनेत्रां चारुभूषणाम् ॥ ४२ ॥**

षण्मुखध्यानम्

**कल्पशाखां रत्नघण्टां दधानं द्वादशेक्षणम् ।**
**बालार्काभं शिशुं कान्तं षण्मुखं पूजयेत् ततः ॥ ४३ ॥**

नन्दिध्यानम्

**नन्दिनं पूजयेत्सौम्यं रक्तभूषणमण्डितम् ।**
**परश्वेणवराभीतिधारिणं श्यामविग्रहम् ॥ ४४ ॥**

विघ्ननायकध्यानम्

**पाशाङ्कुशवराभीष्टधारिणं कुङ्कुमप्रभम् ।**
**विघ्ननायकमभ्यर्चेच्चन्द्रार्धकृतशेखरम् ॥ ४५ ॥**

सेनापतिध्यानम्

**श्यामं रक्तोत्पलकरं वामाङ्कन्यस्ततत्करम् ।**
**त्रिनेत्रं रक्तवस्त्राढ्यं सेनापतिमथाऽर्चयेत् ॥ ४६ ॥**

**ध्यानपूर्वकमनुक्रममेवाह हिमालयेति । प्रतिश्लोकमेकैकध्यानसमाप्तिः । एणो मृगः । अयुधध्यानक्रमस्तु तत्तत्प्रकरणेऽनुसन्धेयः । तत इति पत्राग्रेषु ॥ ३९-४६ ॥**

यह **वृषभ** हिमालय के समान ऊँचे हैं, इसके शृङ्ग तीक्ष्ण हैं तथा तीन नेत्र है । सम्पूर्ण आभरणों की प्रभा से प्रकाश युक्त हैं तथा साक्षात् वेद के स्वरूप हैं ॥ ३९ ॥

तत्पश्चात् हाथ में कपाल एवं शूल धारण करने वाले काले, मेघ के समान शरीर की छटा से युक्त, तीन नेत्र वाले दिगम्बर **क्षेत्रपाल** की पूजा करे ॥ ४० ॥

इनके बाद हाथ में त्रिशूल, परशु, अक्षमाला तथा कमण्डलु धारण किये हैं रक्त वर्ण की आकृति वाले त्रिनेत्र **चण्डेश्वर** की पूजा करे ॥ ४१ ॥

इसके अनन्तर चक्र, शङ्ख, अभय तथा वरदान मुद्रा हाथ में धारण करने वाली मरकत (हरे) वर्ण वाली, सौम्य स्वभाव वाली, त्रिनेत्र तथा मनोहर भूषणों से भूषित **दुर्गा देवी** की पूजा करे ॥ ४२ ॥

इसके बाद कल्पलता, रक्तघण्टा धारण करने वाले, द्वादश नेत्रों से युक्त उदीयमान सूर्य के समान कान्तिमान् महामनोहर शिशु स्वरूप **षण्मुख कार्त्तिकेय** की पूजा करे ॥ ४३ ॥

इसके बाद रक्तवर्ण के भूषणों से विभूषित सौम्य स्वभाव वाले **नन्दी** की पूजा करे, जो हाथ में परशु, मृग, वर तथा अभय धारण किये हुये हैं तथा शरीर से श्यामवर्ण वाले हैं ॥ ४४ ॥

इसके बाद पाश, अंकुश, वर एवं अभय धारण करने वाले, कुंकुम के समान कान्ति वाले विघ्ननायक गणेश की अर्चा करे जिनके ललाट प्रदेश में अर्धचन्द्र शोभित हैं ॥ ४५ ॥

इसके बाद श्यामवर्ण वाले एक हाथ में रक्त कमल तथा दूसरे को अपने बायें अंक में रखे हुये, त्रिनेत्र, रक्त वस्त्र युक्त सेनापति की अर्चा करे ॥ ४६ ॥

**ततोऽष्टमातरः पूज्या ब्राह्म्याद्याः प्रोक्तलक्षणाः ।**
**इन्द्रादिकान् लोकपालान् स्वस्वदिक्षु समर्चयेत् ॥ ४७ ॥**
**वज्रादीनि तदस्त्राणि तद्बहिः क्रमशोऽर्चयेत् ।**
**एवं यो भजते मन्त्री देवेशं तमुमापतिम् ।**
**स भवेत् सर्वलोकानां प्रियः सौभाग्यसम्पदाम् ॥ ४८ ॥**

प्रोक्तलक्षणा यथोक्तस्वरूपाः ॥ ४७-४८ ॥

इसके अनन्तर पत्र के अग्रभाग में ब्राह्मी आदि अष्ट मातृकाओं की, जिनका स्वरूप पूर्व में कहा जा चुका है (६. १७-२७) उनकी पूजा करे । तदनन्तर इन्द्रादि लोकपालों की उन उन दिशाओं में पूजा करे ॥ ४७ ॥

इसके अनन्तर पत्र के बाहर इन्द्रादि के आयुधों की क्रमशः पूजा करे । जो मन्त्रज्ञ इस प्रकार उन देवाधिदेव उमापति की पूजा करता है वह सभी लोगों की अपेक्षा सौभाग्य तथा संपत्ति का प्रिय पात्र हो जाता है ॥ ४८ ॥

प्रासादमन्त्रः

**सान्तः सद्यान्तसंयुक्तो बिन्दुभूषितमस्तकः ।**
**प्रासादाख्यो मनुः प्रोक्तो भजतां सर्वसिद्धिदः ॥ ४९ ॥**

ऋष्यादिकथनम् । मूर्त्तिन्यासः

**वामदेवो मुनिश्छन्दः पङ्क्तिर्देवः सदाशिवः ।**
**षड्दीर्घयुक्तबीजेन षडङ्गविधिरीरितः ॥ ५० ॥**
**ईशानादीन्न्यसेन् मूर्त्तीरङ्गुष्ठादिषु देशिकः ।**
**ईशानाख्यं तत्पुरुषमघोरं तदनन्तरम् ।**
**वामदेवाह्वयं सद्य आसां बीजं क्रमाद्विदुः ॥ ५१ ॥**

प्रासादमन्त्रमाह सान्त इति । सान्तो हः सद्यान्त औ तेन हौ । अस्य नामव्युत्पत्तिरुक्ताऽऽचार्यैः—प्रसादनत्वान् मनसो यथावत् प्रासादसंज्ञाऽस्य मनोः प्रदिष्टा । इति ।

हल्लेखासम्पुटम् इति केचित् । हकारो बीजम् औमिति शक्तिः । तदुक्तम्—

सान्तोऽनुग्रहसंयुक्तो बिन्दुभूषितमस्तकः ।
प्रासादाख्यो मनुः प्रोक्तो बीजं हं शक्तिरौं स्मृता ॥ इति ॥

**सर्वसिद्धिद इत्यनेन विनियोगोक्तिः । बीजेनेति मूलमन्त्रेण । वामदेव इत्यर्धं पठित्वा षड्दीर्घेत्यर्धं पठनीयम् । लेखकदोषवशात् व्यत्ययः ॥ ४९-५१ ॥**

अब **प्रासाद मन्त्र** कहते हैं—सान्त (ह), सद्यान्त (औ) से संयुक्त तथा मस्तक पर बिन्दु युक्त (इस प्रकार हौँ) प्रासादमन्त्र कहा गया है, जो जप करने वालों को समस्त सौख्य प्रदान करता है ॥ ४९ ॥

इस मन्त्र के वामदेव ऋषि हैं पङ्क्ति छन्द है और सदाशिव देवता हैं । षड्दीर्घ युक्त बीज मन्त्र (हाँ ह्रीँ हूँ हैँ हौँ हौँ) से इसका षडङ्गन्यास करना चाहिए ॥ ५०॥

इसके बाद आचार्य, अङ्गुष्ठादि अङ्गुलियों में ईशानादि मूर्त्तियों का न्यास करे, ईशान, तत्पुरुष, अघोर, वामदेव तथा सद्योजात—ये ईशानादि मूर्त्तियाँ कही गई है । इन मूर्त्तियों का बीज क्रमशः इस प्रकार कहा गया है ॥ ५१ ॥

**ओकाराद्यैः पञ्चह्रस्वैर्विलोमात् संयुतं वियत् ।**
**तत्तदङ्गुलिभिर्भूयस्तत्तद्बीजादिका न्यसेत् ॥ ५२ ॥**
**शिरोवदनहृद्गुह्यपाददेशे तथा क्रमात् ।**
**ऊर्ध्वप्राग्दक्षिणोदीच्यपश्चिमेषु मुखेषु ताः ॥ ५३ ॥**

**ओकाराद्यैरिति । ओ ए उ इ अ एतैः। तत्तदिति । यस्यां यस्यां यो यो न्यस्तस्तया तया । तेन समुष्ट्यङ्गुष्ठेन शिरसि । साङ्गुष्ठतर्जन्या वदने । साङ्गुष्ठ- मध्यमा हृदि । साङ्गुष्ठानामया गुह्ये । साङ्गुष्ठकनिष्ठिकया पादयोः । एवं पञ्चस्वपि मुखेष्विति साम्प्रदायिकाः । तथेति । ऊर्ध्वमुखादीनां समुच्चयः । ता इति मूर्त्तीः । तत्तद्बीजादिकाः तत्तदङ्गुलीभिर्न्यसेदिति सम्बन्धः ॥ ५२-५३ ॥**

(ओ ए उ इ अ द्र १२.१७) इन विलोम ह्रस्वों से संयुक्त हकार इनका बीज हैं (हों हें हुं हिं हं) । ऊपर जिस प्रकार अङ्गुष्ठ, तर्जनी, मध्यमा, अनामिका तथा कनिष्ठा अङ्गुलियों में ईशानादि मूर्तियों का न्यास कहा गया है, उसी क्रम से इन बीजाक्षरों को भी समझना चाहिए । अतः उन-उन अङ्गुलियों से उन-उन बीजाक्षरों का शिर, वदन, हृदय, गुह्य एवं पाद स्थान में न्यास करना चाहिए 'हौँ' इति अङ्गुष्ठाभ्यां शिरसि, हैँ इति तर्जनीभ्याम् वदने इत्यादि । इसी प्रकार इन बीजों का ऊर्ध्व, प्राक् दक्षिण, उत्तर एवं पश्चिम मुखों में भी उन-उन अङ्गुलियों से न्यास करे ॥ ५२-५३ ॥

**अष्टत्रिंशत्कलान्यासः**

**ततः प्रविन्यसेद्विद्वानष्टत्रिंशत्कलास्तनौ ।**
**ईशानाद्या ऋचः सम्यगङ्गुलीषु यथाक्रमम् ॥ ५४ ॥**
**अङ्गुष्ठादिकनिष्ठान्तं न्यसेद्देशिकसत्तमः ।**
**मूर्धास्यहृदयाम्भोजगुह्यपादेषु ताः पुनः ॥ ५५ ॥**

अष्टत्रिंशत्कलान्यासं वक्तुमारभते तत इति । अयं न्यासो ग्रन्थकृता यद्यपि प्रासादमन्त्राङ्गत्वेनोक्तः तथापीदं पञ्चऋग्विधानं स्वतन्त्रं सर्वशैवमन्त्रसाधारणं चेति ज्ञेयम् । आचार्यैः स्वतन्त्रतयैवोक्तम् । अङ्गानि प्रकल्पयेदिति वदता तेनापि सूचितमेव स्वातन्त्र्यम् । तानि षडङ्गानि पञ्चर्चानामेव न तु प्रासाद मन्त्रस्य । तदुक्तम्—

वक्ष्यामि शैवागमसारमष्टत्रिंशत्कलान्यासविधिं यथावत् ।
सपञ्चभिर्ब्रह्मभिरीशपूर्वैः सर्ष्यादिकैः साङ्गविशेषकैश्च ॥ इति ॥

अतस्तन्त्रान्तरोक्तमृष्यादि लिख्यते ।

ईशोऽनुष्टुप्भूरिक्शेषास्तत्पुरुषसंज्ञे गायत्र्यापः ।
पुनरग्न्यनुष्टुबापो वामकृतिभगाहरहस्त्वनुष्टुप्भगयुक् ॥ इति ॥

न्यासक्रममेवाह ईशानाद्या इति । ता ऋचो यथा—

१. ईशानः सर्वविद्यानामीश्वरः । सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम् ॥

२. तत्पुरुषाय विद्महे महादेवाय धीमहि तन्नो रुद्रः प्रचोदयात् ।

३. अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः सर्वतः सर्वशर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः ॥

४. वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय नमः सर्वभूतदमनाय नमो मनोन्मनाय नमः ॥

५. सद्योजातं प्रपद्यामि सद्योजाताय वै नमः भवेऽभवे नातिभवे भज (व) स्व मां भवोद्भवाय नमः ॥

सम्यगित्यनेनैतदुक्तं भवति। एतास्तैत्तिरीयशाखायां नारायणीयोपनिषदि द्राविड-पाठानुसारा ज्ञेयाः । आन्ध्रास्त्वन्यथा पठन्तीति । तत्पाठो नात्राऽभिप्रेत इति । देशिकासत्तम इत्यनेन अङ्गुष्ठाभ्यां नम इत्यादि योग उक्तः ॥ ५४-५५ ॥

**अड़तालिस कलान्यास**—इसके पश्चात् विद्वान् साधक अड़तीस कलाओं का अपने शरीर में न्यास करे । इसी क्रम से ईशानः सर्वविद्यानाम्, तत्पुरुषाय विद्महे, अघोरेभ्योऽथ, वामदेवाय नमो तथा सद्योजातम् इत्यादि पाँच ऋचाओं का अङ्गुष्ठ से कनिष्ठा पर्यन्त पाँचों अङ्गुलियों में न्यास करे ।

यथा—'ईशानः सर्वविद्यानामीश्वरः । सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम्' अङ्गुष्ठाभ्यां नमः, इत्यादि । इसके पश्चात् इन्हीं ऋचाओं से क्रमशः शिर, मुख, हृदय, गुह्य तथा पाद स्थानों में उत्तम देशिक न्यास करे ॥ ५४-५५ ॥

**वक्त्रेषूर्ध्वादि विन्यसेद्भूयोऽङ्गानि प्रकल्पयेत् ।**
**तारपञ्चकमुच्चार्य सर्वज्ञाय हृदीरितम् ॥ ५६ ॥**

अमृततेजोमालिनितृप्तायेति पदं पुनः।
तदन्ते ब्रह्म शिरसे शिरोङ्ग ज्वलितं ततः ॥ ५७ ॥
शिखिशिखाय परतोऽनादिबोधाय तच्छिखा।
वज्रिणे वज्रहस्ताय स्वतन्त्राय तनुच्छदम् ॥ ५८ ॥
सौं वौं हौमिति संभाष्य पुरतो लुप्तशक्तये।
नेत्रमुक्तं श्लीं पशुं हुँ फडन्तेऽनन्तशक्तये।
अस्त्रमुक्तषडङ्गानि कुर्याद्देशिकसत्तमः ॥ ५९ ॥

अङ्गानि प्रकल्पयेदित्युक्तम् । तान्येवाह तारेति । तारपञ्चकमिति द्वादशे मूर्त्तिकल्पनायामुक्तम् । शिरोङ्गं शिर इत्यर्थः । ज्वलितमित्यग्रिमेण सम्बध्यते । तनुच्छदं कवचम् । एवमुक्तानि षडङ्गानि देशिकसत्तमः कुर्यादिति सम्बन्धः । अत्र देशिकसत्तम इत्यनेनैतदुक्तं भवति । शिरोऽङ्गे तृप्तायेत्यस्य पूर्वे नित्यपद प्रयोगः । अस्त्रे श्लीमित्यस्याऽनन्तरं शक्तिबीजप्रयोग इति ॥ ५६-५९ ॥

इसी प्रकार इन ऋचाओं द्वारा ऊर्ध्व, पूर्व, दक्षिण, पश्चिम तथा उत्तर की दिशाओं में रहने वाले ईशानादि मुखों में न्यास करे । तदनन्तर अङ्गन्यास की कल्पना इस प्रकार करे ॥ ५६ ॥

प्रथम तारपञ्चक युक्त (ऐं, क्लीँ, ब्लूँ, स्त्रीं, सः, द्र. १२-२५) 'सर्वज्ञाय' से हृदय में, अमृततेजोमालिनि नित्यतृप्ताय ब्रह्मशिरसे' से शिर में, पुनः 'ज्वलित शिखिशिखाय अनादि बोधाय से शिखा में, वज्रिणे वज्रहस्ताय स्वतन्त्राय' से कवच, सौँ, वौँ हौँ पुरतो लुप्तशक्तये से दोनों नेत्रों में, 'श्लीं पशुं हुँ फट् अनन्तशक्तये' से अस्त्र का इस प्रकार देशिकसत्तम षडङ्गन्यास करे ॥ ५६-५९ ॥

### ईशमन्त्रकलान्यासः

पूर्वदक्षिणपाश्चात्यसौम्यमध्येषु पञ्चसु ।
वक्त्रेषु पञ्च विन्यस्येदीशानस्य कलाः क्रमात् ॥ ६० ॥
ईशानः सर्वविद्यानां शशिनी प्रथमा कला ।
ईश्वरः सर्वभूतानामङ्गदा तदनन्तरम् ॥ ६१ ॥
ब्रह्माधिपतिशब्दान्ते ब्रह्मणोऽधिपतिः पुनः।
ब्रह्मेष्टदा तृतीया स्याच्छिवो मेऽस्तु ततः परा ॥ ६२ ॥
मरीची कथिता तन्त्रे चतुर्थी च सदाशिवोम् ।
अंशुमालिन्यथ परा प्रणवाद्या नमोऽन्विताः ॥ ६३ ॥

ईशमन्त्रकलान्यासक्रममाह पूर्वेति । इष्टदेति कलानाम् । सदाशिवोमित्यग्रिमेण सम्बध्यते । परा पञ्चमी । प्रणवाद्या इति । प्रणवशक्तिप्रासादाद्या इत्यर्थः । पद्म-पादाचार्याः पञ्चाक्षरीयोगमप्याहुः । नमोऽन्विता इति । पञ्चापि चतुर्थ्यन्ता इत्यपि ।

**चतुर्थ्यन्ताः कलाः सर्वा इति वक्ष्यमाणत्वात् । तेन ॐ ह्रीँ हौं नमः शिवाय । ईशानः सर्वविद्यानां शशिन्यै नम इत्यादि प्रयोगः ॥ ६०-६३ ॥**

अब **पूर्व प्रतिज्ञात ईश मन्त्र का कलान्यास** कहते हैं—साधक पूर्व-दक्षिण-पश्चिम-उत्तर एवं मध्य इस प्रकार ५ मुखों में ईशान मन्त्र की कलान्यास इस प्रकार से करे ॥ ६० ॥

'ईशानः सर्वविद्यानाम्' यह शशिनी नाम की प्रथम कला है अतः 'ॐ ईशानः सर्वविद्यानाम् शशिन्यै नमः' से पूर्वमुख में, पुनः 'ईश्वरः सर्वभूतानाम्' यह अङ्गदा नाम की द्वितीय कला है, अतः 'ॐ ईश्वरः सर्वभूतानाम् अङ्गदायै नमः' से दक्षिणमुख में, 'ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिः' यह ब्रह्मेष्टदा नाम की तृतीय कला है, अतः 'ॐ ब्रह्माधिपतिर्ब्रह्मणोऽधिपति ब्रह्मेष्टदायै नमः' से पश्चिम मुख में, पुनः 'शिवो मेऽस्तु' यह मरीचि नाम की चतुर्थ कला है, अतः 'ॐ शिवो मेऽस्तु मरीच्यै नमः' से उत्तर मुख में, पुनः 'ॐ सदाशिवोऽम् नमः' यह अंशुमालिनि नामक पञ्चम कला है, अतः ॐ सदाशिवोम् नमः अंशुमालिन्यै नमः—इससे मध्य मुख में न्यास करे । यहाँ तक प्रणवपूर्वक नमोऽन्त ईशान की पाँच कला से पाँच मुखों का न्यास कहा गया । अब तत्पुरुष की चार कलाओं से चार मुख का न्यास कहते हैं ॥ ६१-६३ ॥

**पूर्वपश्चिमयाम्योदग्वक्त्रेषु तदनन्तरम् ।**
**चतस्रो विन्यसेन् मन्त्री पुरुषस्य कलाः क्रमात् ॥ ६४ ॥**
**आद्या तत्पुरुषायेति विद्महे शान्तिरीरिता ।**
**महादेवाय शब्दान्ते धीमहि स्यात् ततः परम् ॥ ६५ ॥**
**विद्या द्वितीया कथिता तन्नो रुद्रः पदं ततः ।**
**प्रतिष्ठा कथिता पश्चात् तृतीया स्यात् प्रचोदयात् ।**
**निवृत्तिस्तत्परा सर्वाः प्रणवाद्या नमोऽन्विताः ॥ ६६ ॥**

**पुरुषस्य तत्पुरुषस्य । प्रचोदयादित्यग्रिमेण सम्बध्यते । तत्परा चतुर्थी । सर्वा इति चतुर्थ्यन्ता इत्यपि ॥ ६४-६६ ॥**

इसके अनन्तर साधक पूर्व, पश्चिम, दक्षिण तथा उत्तर के मुखों में तत्पुरुष मन्त्र की चार कलाओं से इस प्रकार न्यास करें ॥ ६४ ॥

'तत्पुरुषाय विद्महे' यह शान्ति नाम की प्रथम कला है अतः ॐ तत्पुरुषाय विद्महे शान्त्यै नमः' से पूर्वमुख में, 'महादेवाय धीमहि' यह विद्या नाम की द्वितीय कला है, अतः 'ॐ तत्पुरुषाय विद्महे विद्यायै नमः' से पश्चिम मुख में, 'तन्नो रुद्र' यह प्रतिष्ठा नाम की तृतीय कला है, अतः 'ॐ तन्नो रुद्रः प्रतिष्ठायै नमः' से दक्षिण मुख में, तदनन्तर 'प्रचोदयात्' यह निवृत्ति नाम की चतुर्थ कला है, अतः 'ॐ प्रचोदयात् निवृत्यै नमः' से चौथे उत्तर मुख में न्यास करे । सभी के आदि में प्रणव तथा अन्त में नमः लगाकर यह न्यास करना चाहिए ॥ ६५-६६ ॥

**हृद्ग्रीवांसद्वये नाभौ कुक्षौ पुच्छे च वक्षसि ।**
**अघोरस्य कला न्यस्येदष्टौ मन्त्री यथाविधि ॥ ६७ ॥**
**अघोरेभ्यस्तथा पूर्वमरीरिता प्रथमा कला ।**
**अथ घोरेभ्य इत्यन्ते मोहा स्यात्तदनन्तरम् ॥ ६८ ॥**
**घोरान्ते स्यात् क्षमा पश्चात् तृतीया परिकीर्त्तिता ।**
**घोरतरेभ्यो निद्रा स्यात् सर्वतः सर्वतत्परा ॥ ६९ ॥**
**व्याधिस्तु पञ्चमी प्रोक्ता शर्वेभ्यस्तदनन्तरम् ।**
**मृत्युर्निगदिता षष्ठी नमस्ते अस्तु तत्परम् ॥ ७० ॥**
**क्षुधा स्यात्सप्तमी रुद्ररूपेभ्यः कथिता तृषा ।**
**अष्टमी कथिता एता ध्रुवाद्या नमसाऽन्विताः ॥ ७१ ॥**

**यथाविधीति । वक्ष्यमाणोऽङ्गुलीभिर्न्यासः सूचितः । अथ घोरेभ्य एतावानृगंशः । एता इति । चतुर्थ्यन्ता इत्यपि ॥ ६७-७१ ॥**

इसके बाद हृदय, ग्रीवा, दोनों कन्धे, नाभि, कुक्षि, पुच्छ तथा वक्षः स्थल में अघोर की आठ कलाओं द्वारा अङ्गुलियों से यथाविधि न्यास करे । बुद्धिमान् यथाविधि मन्त्र के आदि में ॐ तथा कला के अन्त में नमः लगा कर स्वयं अपनी बुद्धि से इन आठों स्थानों में क्रमशः न्यास कर लेवें ॥ ६७ ॥

इस प्रकार प्रकृति में आठ कलाओं का दिग्दर्शन करा देते हैं । 'अघोरेभ्यः' इस प्रथम कला का नाम **ईरिता** है । 'अथ घोरेभ्यः' इस द्वितीय कला का नाम **मोहा** है । 'घोर' इस तृतीय कला का नाम **क्षमा** है । 'घोरतरेभ्यः' इस चतुर्थी कला का नाम **निद्रा** है । 'सर्वतः सर्व' इस पञ्चमी कला का नाम **व्याधि** है । इसके बाद 'शर्वेभ्यः' इस छठवीं कला का नाम **मृत्यु** है । इसके बाद 'नमस्तेऽस्तु' इस सप्तमी कला का नाम **क्षुधा** है । 'रुद्ररूपेभ्यः' इस अष्टमी कला का नाम **तृषा** है । सभी के आदि में ॐ तथा अन्त में नमः लगाकर उक्त आठों स्थानों में न्यास करे ।

**विमर्श**—'ॐ अघोरेभ्यः ईरितायै नमः' इति हृदये, इसी प्रकार अन्य न्यासों को ऊह करके करना चाहिए ॥ ६८-७१ ॥

**गुह्यमुष्कोरुयुग्मेषु जानुजङ्घायुगे स्फिचोः ।**
**कट्यां पार्श्वद्वये वामकला न्यस्येत् त्रयोदश ॥ ७२ ॥**
**प्रथमा वामदेवाय नमोऽन्ते स्याद्वज्रा[१] कला ।**
**स्याज्ज्येष्ठाय नमो रक्षा द्वितीया परिकीर्त्तिता ॥ ७३ ॥**

१. 'वज्राय' इति पाठः, तुलनीय रुद्रयामल ४७. १६४ ।

स्याद्रुद्राय नमः पश्चात् तृतीया रतिरीरिता।
कालाय नम इत्यन्ते पालिनी परिकीर्त्तिता ॥ ७४ ॥
कलकामा पञ्चमी स्यात्ततो विकरणाय च।
नमः संयमनी षष्ठी कथिता तदनन्तरम् ॥ ७५ ॥
बलक्रिया समादिष्टा बलविकरणाय च।
नमो वृद्धिरष्टमी स्याद्बलान्ते च स्थिरा कला ॥ ७६ ॥
पश्चात् प्रमथनायाऽन्ते नमो रात्रिरुदीरिता।
सर्वभूतदमनाय नमोऽन्ते भ्रामणी कला ॥ ७७ ॥
नमोऽन्ते मोहिनी प्रोक्ता मन्त्रज्ञैर्द्वादशी कला।
उन्मनाय नमः पश्चाज्जरा प्रोक्ता त्रयोदशी।
प्रणवाद्याश्चतुर्थ्यन्ता नमोऽन्तास्ताः प्रकीर्तिताः ॥ ७८ ॥

मुष्कोऽण्डकोशः । वामकला वामदेवकलाः । कलकामेत्यत्र कलेति ऋगंशकामेति कला। विकरणाय नम इति ऋगंशः ।

बलेति ऋगंशः । क्रियेति कला । अत्रापि विकरणाय नम इति ऋगंशः ॥ ७२-७८ ॥

अब **वामदेव मन्त्र के कलान्यास का वर्णन** करते हैं—इस मन्त्र में १३ कलायें हैं—अत: उन कलाओं में प्रत्येक से १. गुह्य, २-३. दोनों अण्डकोश, ४-५. दोनों ऊरु, ६-७. दोनों जानु, ८-९. दोनों जङ्घा, १०. नितम्ब, ११. कटि और १२-१३. दोनों पार्श्व—इस प्रकार १३ स्थानो में इस प्रकार न्यास करे ॥ ७२ ॥

'वामदेवाय नम:' यह **वज्रा** नाम की प्रथम कला है । 'ज्येष्ठाय नम:' **रक्षा** नाम की द्वितीय कला है । 'रुद्राय नम:' यह **रति** नामक तृतीय कला है । 'कालाय नम:' यह **पालिनी** नाम की चतुर्थ कला है । 'कलाय नम:' **कामा** नाम की पञ्चमी कला है । 'विकरणाय नम:' यह **संयमिनी** नाम की षष्ठी कला है । 'वलाय नम:' **क्रिया** नाम की सप्तमी कला है । 'बलविकरणाय नम:' यह **वृद्धि** नाम की अष्टमी कला है । 'वलाय नम:' **स्थिरा** नाम की नवमी कला है । 'प्रमथनाय नम:' **रात्रि** नाम की दशमी कला है । 'सर्वभूतदमनाय नम:' **भ्रामणी** नाम की एकादश कला है । 'मन:' यह **मोहिनी** नाम की द्वादशी कला है । इसके बाद 'उन्मनाय नम:' यह **जरा** नाम की तेरहवीं कला है । इनमें भी आदि में प्रणव लगावें, पश्चात् कलाओं के नाम में चतुर्थ्यन्त लगा कर नम: पद का प्रयोग करे । पूर्वोक्त १३ स्थानों में न्यास करे ।

**विमर्श**—प्रयोग यथा—'ॐ वामदेवाय नम: ॐ वज्रायै नम:' इति गुह्ये, इत्यादि ॥ ७३-७८ ॥

पाददोस्तलनासासु मूर्ध्नि बाहुयुगे न्यसेत् ।
सद्योजातोद्भवाः सम्यगष्टौ मन्त्री कलाः क्रमात्॥ ७९ ॥
सद्योजातं प्रपद्यामि सिद्धिः स्यात्प्रथमा कला ।
सद्योजाताय वै भूयो नमः स्याद्वृद्धिरीरिता॥ ८० ॥
भवे द्युतिस्तृतीया स्यादभवे तदनन्तरम् ।
लक्ष्मीश्चतुर्थी कथिता ततो नातिभवे पदम् ॥ ८१ ॥
मेधा स्यात् पञ्चमी प्रोक्ता कला भूयो भज (व)स्व माम् ।
प्रज्ञा समीरिता षष्ठी भवान्ते स्यात् प्रभा कला ।
उद्भवाय नमः पश्चात् स्वधा स्यादष्टमी कला ॥ ८२ ॥
प्रणवाद्याश्चतुर्थ्यन्ताः कलाः सर्वा नमोऽन्विताः ।
अष्टत्रिंशत्कलाः प्रोक्ताः पञ्चब्रह्मपदान्तिकाः ॥ ८३ ॥
इति विन्यस्तदेहोऽसौ भवेद्गङ्गाधरः स्वयम् ।
ततः समाहितो भूत्वा ध्यायेद्देवं सदाशिवम् ॥ ८४ ॥

भूय इति पादपूरणे । भव इति ऋगंशः । पञ्चब्रह्मपदानि पञ्चानां ऋचां पदानि । अत्र पञ्चानामृचां पदानि कलासहितानि क्रमेण उक्त्वाऽङ्गुष्ठाद्यङ्गुलिभिर्विन्यसेत् । तेन प्रथमऋक्कलाः साङ्गुष्ठमुष्टिना द्वितीयऋक्कलास्तर्जन्यङ्गुष्ठाभ्यां तृतीयऋक्कला मध्यमाङ्गुष्ठाभ्यां चतुर्थऋक्कला अनामाङ्गुष्ठाभ्यां पञ्चमऋक्कलाः कनिष्ठाङ्गुष्ठाभ्यामिति । तदुक्तम्—इति विशदधीर्विन्यसेदङ्गुलीभिः । इति । अन्यत्रापि—

कनिष्ठाद्यङ्गुलीभिस्तु न्यसेत् सद्यादिकाः क्रमात् ।
साङ्गुष्ठाभिस्तथेशानं समुष्ट्यङ्गुष्ठकेन तु ॥ इति ॥

अस्य स्वतन्त्रत्वात् ध्यानावरणपूजादि वक्तव्यम् । तत्र ध्यानं प्रासादावरणपूजावसरे ग्रन्थकृदुक्तं ज्ञेयम् । आवरणपूजा तु आचार्योक्ता यथा—

न्यैस्यैवं पञ्चभिर्ब्रह्मभिरथ शिवमाराधयेदृग्भि-
राभिर्मध्यप्राग्याभ्यसौम्यापरदिशि पुनरङ्गैरनन्तादिभिश्च ।
अन्योमाद्यैर्दिशापैः पुनरपि कुलिशाद्यैर्यजेदेवमुक्तं
पाञ्चब्राह्मंविधानं सकलसुखयशोभुक्तिमुक्तिप्रदञ्च ॥ इति ॥ ७९-८४ ॥

इसके बाद **सद्योजात के कला न्यास का वर्णन** करते हैं—सद्योजात मन्त्र में वक्ष्यमाण आठ कलायें हैं । अतः उन आठ कलाओं से दोनों पैर के तलवे दोनों हाथ के तलवे नासिका दो शिर तथा दोनों बाहुओं में न्यास करें । अब उन आठ कलाओं का नाम कहते हैं ॥ ७९ ॥

'सद्योजातं प्रपद्यामि' यह सिद्धि नाम की प्रथम कला है । 'सद्योजाताय वै नमः' वृद्धि नाम की दूसरी कला है । 'भवे' यह द्युति नाम की तृतीया कला हैं । 'अभवे' यह लक्ष्मी नाम की चतुर्थी कला है । इसके बाद 'नातिभवे' यह मेधा नाम

की पञ्चम कला हैं । 'भजस्व माम्' यह प्रज्ञा नाम की षष्ठी कला है । 'भव:' यह प्रभा नाम की सप्तमी कला है । 'उद्भवाय नम:' यह स्वधा नाम की अष्टमी कला है । इन सभी मन्त्रों के आदि में ३ॐ तथा अन्त की कलाओं में चतुर्थ्यन्त नम: लगाकर उक्त आठ स्थानों में न्यास करे ।

**विमर्श**—प्रयोग यथा—'३ॐ सद्यो जातं प्रपद्यामि सिद्ध्यै नम:' दक्षिणपादंतले इत्यादि ॥ ८०-८३ ॥

इस प्रकार पञ्चब्रह्म के प्रत्येक पदों के अनुसार ३८ कलाओं का तत्तत्स्थानों में न्यास पूर्वक हमने वर्णन किया ॥ ८३ ॥

जो इस प्रकार पञ्चब्रह्म के ३८ कलाओं का न्यास करता है वह साक्षात् शिवस्वरूप हो जाता है । साधक इस प्रकार न्यास कर लेने के पश्चात् एकाग्रचित्त हो सदाशिव का इस प्रकार ध्यान करे ॥ ८४ ॥

**विमर्शः**—ऊपर कहे गये पाँचों ऋचाओं के पदों को क्रमशः इस प्रकार की अङ्गुलियों से न्यास करे—'ईशान: सर्वविद्यानाम्' इस समस्त ईशान मन्त्रों को अङ्गुष्ठ सहित मुष्टि से, द्वितीय तत्पुरुष कलाओं को तर्जनी और अङ्गुष्ठ से, तृतीय अघोर ऋचा की कलाओं को मध्यमा तथा अङ्गुष्ठ से सम्मिलित कर, चतुर्थ वामदेव नामक ऋचा की कलाओं को अनामिका तथा अङ्गुष्ठ को मिला कर तथा सद्योजात ऋचा की कलाओं को कनिष्ठा और अङ्गूठे को मिलाकर न्यास कर उन उन स्थानों में न्यास करे ॥ ८४ ॥

प्रासादध्यानम्

**मुक्तापीत-पयोदमौक्तिकजवावर्णैर्मुखैः पञ्चभिः**
**त्र्यक्षैरञ्चितमीशमिन्दुमुकुटं पूर्णेन्दुकोटिप्रभम् ।**
**शूलं टङ्ककृपाणवज्रदहनान्नागेन्द्रघण्टाङ्कुशान्**
**पाशं भीतिहरं दधानममिताकल्पोज्ज्वलं चिन्तयेत् ॥ ८५ ॥**

पुरश्चरणादिकथनम्

**एवं ध्यात्वा जपेन्मन्त्रं पञ्चलक्षं मधुप्लुतैः ।**
**प्रसूनैः करवीरोत्थैर्जुहुयात्तद्दशांशकम् ॥ ८६ ॥**

**मुक्तेति । मुक्तावर्णमूर्ध्वमुखं पीतवर्णं पूर्वमुखं नीलवर्णं दक्षिणमुखं मुक्तावर्णं पश्चिममुखं विद्रुमवर्णमुत्तरमुखम् । पयो ददातीति व्युत्पत्त्या नीलमेघ एव विवक्षितः । तदुक्तं वायवीयसंहितायाम्—**

**अस्य पूर्वमुखं सौम्यं बालार्कसदृशप्रभम् ।**
**त्रिलोचनारविन्दाढ्यं बालेन्दुकृतशेखरम् ॥**
**दक्षिणं नीलजीमूतसमानं चन्द्रभूषितम् ।**
**वक्रभ्रूकुटिलं घोरं रक्तवृत्तत्रिलोचनम् ॥**

उत्तरं विद्रुमप्रख्यं नीलालकविभूषितम् ।
सविलासं त्रिनयनं चन्द्राभरणशेखरम् ॥
पश्चिमं पूर्णचन्द्राभं लोचनत्रितयोज्ज्वलम् ।
चन्द्ररेखाधरं सौम्यं मन्दस्मितमनोहरम् ॥
पञ्चमं स्फटिकप्रख्यं चन्द्ररेखासमुज्ज्वलम् ।
अतीवसौम्यमुत्फुल्ललोचनत्रितयोज्ज्वलम् ॥ इति ॥

इन्दुमुकुटमिति प्रतिवक्त्रं ज्ञेयम् । टङ्कः परशुः । नागेशः सर्पेशः । भीतिहरम् अभयम् । आयुधध्यानं तु ऊर्ध्वादि दक्षे शूलाद्यग्न्यन्तानि वामे अन्त्यानि । तदुक्तं वायवीयसंहितायाम्—

दक्षिणे शूलपरशुवज्रखड्गानलोज्ज्वलम् ।
सव्ये च नागेशाभीतिघण्टापाशाङ्कुशोज्ज्वलम् ॥ इति ॥

अन्यत्र ऊर्ध्वदक्षवामयोराद्यम् एवमान्तमिति क्रमेणोक्तम्—शूलाही टङ्कघण्टासिसृणिकुलिशपाशाग्न्यभीतीर्दधानं दोर्भिः । इति । अन्यत्र व्यत्ययोऽप्युक्तः । यदाहुः— भुजङ्गघण्टाभयदाङ्कुशांश्च पाशं भुजैर्दक्षिणतो दधानम् ।
तथा त्रिशूलं परशुं च खड्गं वज्रं च वह्निं क्रमशो परैश्च ॥ इति ।

अन्यत्र एकवक्त्रं चतुर्भुजं च ध्यानमुक्तम् । अथवैकवक्त्रम् ।
दोर्भिश्चतुर्भिर्युतमिन्दुमौलिं धृताक्षमालात्रिशिखं क्रमात् तम् ।
यजेत् सखट्वाङ्गकपालहस्तम् । इति ।

अन्यत्र तु— देवं नमामि शिरसा परशुत्रिशूल ।
विद्याकपालपरिघमण्डितबाहुखण्डम् ॥ इति ॥ ८५-८६ ॥

अब **ध्यान का प्रकार** कहते हैं—मोती के समान ऊपर का मुख, पीतवर्ण का पूर्व मुख, नीलवर्ण का दक्षिण मुख, मुक्तावर्ण का पश्चिम मुख, विद्रुम के समान उत्तर मुख इस प्रकार पाँच मुख, तीन नेत्रों से युक्त, चन्द्रजटित मुकुट से मण्डित, करोड़ों पूर्णचन्द्र के समान प्रकाश वाले, हाथ में त्रिशूल, परशु, कृपाण, वज्र, अग्नि, सर्प, घण्टा तथा अंकुश पाश तथा अभय धारण करने वाले तथा उज्ज्वल कान्ति से युक्त सदाशिव का मैं ध्यान करता हूँ ॥ ८५ ॥

इस प्रकार सदाशिव का ध्यान कर उक्त मन्त्र का पाँच लाख जप करे तथा त्रिमधु से परिप्लुत करवीर के पुष्पों से उसका दशांश होम करे ॥ ८६ ॥

अङ्गावृतिदेवता

**पूर्वोक्ते प्रयजेत्पीठे मूर्त्तिं मूलेन कल्पयेत् ।**
**आवाह्य पूजयेत्तस्यां मूर्त्याद्यावरणैः सह ॥ ८७ ॥**
**शक्तिं डमरुकाभीतिवरान् सन्दधतं करैः ।**
**ईशानं त्रीक्षणं शुभ्रमैशान्यां दिशि पूजयेत् ॥ ८८ ॥**

परश्वेणवराभीतिर्दधानं विद्युदुज्ज्वलम् ।
चतुर्मुखं तत्पुरुषं त्रिनेत्रं पूर्वतोऽर्चयेत् ॥ ८९ ॥
अक्षस्रजं मृगपाशौ सृणिं डमरुकं ततः ।
खट्वाङ्गं निशितं शूलं कपालं बिभ्रतं करैः ॥ ९० ॥
अञ्जनाभं चतुर्वक्त्रं भीमदंष्ट्रं भयावहम् ।
अघोरं त्रीक्षणं याम्ये पूजयेन्मन्त्रवित्तमः ॥ ९१ ॥
कुङ्कुमाभं चतुर्वक्त्रं वामदेवं त्रिलोचनम् ।
वराभयाक्षवलयकुठारं दधतं करैः ॥ ९२ ॥
विलासिनं स्मेरवक्त्रं सौम्ये सम्यक् समर्चयेत् ।
कर्पूरेन्दुनिभं सौम्यं सद्योजातं त्रिलोचनम् ॥ ९३ ॥
हरिणाक्षगुणाभीतिवरहस्तं चतुर्मुखम् ।
बालेन्दुशेखरोल्लासि मुकुटं पश्चिमे यजेत् ॥ ९४ ॥

मूर्त्तीति । आदिशब्देनाऽङ्गावृतिरुक्ता । मूर्त्त्यावरणं च अङ्गावरणं च आवरणानि अनन्तोमेन्द्रवज्रादीनि च तैः मूर्त्त्याद्यावरणैरित्येकशेषेण समासः कार्यः । तेन मूर्त्तिपञ्चकनिवृत्त्यादिपञ्चकेन प्रथमावरणं सम्पूज्य द्वितीयाङ्गैस्तृतीया विद्येश्वरादिभिरित्यर्थः। तदुक्तं प्रयोगसारे—'मूर्त्यङ्गावरणोपेतम्' इति । अन्यत्रापि मूर्त्तिपूजामुक्त्वा उक्तम्—

आग्नेयेशाननैर्ऋत्यवायुपत्रेष्वथो परः ।
संपूज्याऽङ्गानि चोक्तानि दिक्ष्वस्त्रमपि पूजयेत् ॥
स्वनामकलितैर्मन्त्रैरनन्तं सूक्ष्ममेव च । इत्यादिना ।

वायवीयसंहितायामपि—पूजयेत्परमेश्वरम् । ब्रह्मभिश्च षडङ्गैश्च । इति । पद्मपादाचार्यैरपि मूर्त्त्यावरणाद्बहिरङ्गावरणं द्रष्टव्यमित्युक्तम् । तेन यत् केचन मूर्त्त्यावरणात् पूर्वम् अङ्गावरणं वदन्ति तदयुक्तम् । नारायणीयेऽपि—मूर्त्त्याङ्गानि यजेद्यथाविधि । इति । पूर्वत इत्यादि दिग्ग्रहणं न्यक्कृता प्रसिद्धदिशामेव कृतमिति ज्ञेयम् । मन्त्रवित्तमः सम्यक् समर्चयेदित्यनेनेशादीनां न्यासोक्तबीजादित्वेन पूजयेदित्युक्तं भवति ॥ ८७-९४ ॥

तदनन्तर पूर्वोक्त पीठ (१८. १५-१९) पर मूल मन्त्र से मूर्ति की कल्पना करे । पश्चात् उसी में देवाधिदेव सदाशिव का आवाहन कर अङ्गावरण एवं मूर्ति के आवरणों के सहित उनकी पूजा करे ॥ ८७ ॥

हाथों में शक्ति, डमरू, अभय तथा वर धारण करने वाले तीन नेत्रों से युक्त **ईशान** देव की ईशानकोणस्थ दिशा में पूजा करे ॥ ८८ ॥

साधक हाथों में परशु, मृग, वर तथा अभय धारण करने वाले, बिजली के समान उज्ज्वल, चार मुखों एवं तीन नेत्रों से युक्त **तत्पुरुष** की पूर्व दिशा में पूजा करे ॥ ८९ ॥

हाथों में अक्षमाला, मृग, पाश, अंकुश, डमरू, खट्वाङ्ग, तीक्ष्ण शूल और कपाल धारण करने वाले, अञ्जन के समान काले, भयानक दाँतों वाले महाभयानक तीन नेत्रों वाले **अघोर** की दक्षिण दिशा में पूजा करे ॥ ९०-९१ ॥

कुंकुम के समान कान्ति वाले चतुर्वक्त्र तथा तीन नेत्रों से युक्त, हाथों में वर, अभय, जपमाला और कुठार धारण करने वाले, विलासी एवं मन्दस्मित **वामदेव** की उत्तर दिशा में पूजा करे ॥ ९२-९३ ॥

कर्पूर एवं इन्दु के समान श्वेत, तीन नेत्रों से युक्त, हाथों में हरिण, अक्षमाला, अभय तथा वर धारण करने वाले चतुर्मुख, बालेन्दु से जटित मुकुट धारण करने वाले **सद्योजात** की पश्चिम दिशा में पूजा करे ॥ ९३-९४ ॥

**निवृत्त्याद्यास्ततः कोणे तेजोरूपाः कलाः क्रमात् ।**
**केसरेषु षडङ्गानि पूर्ववत् पूजयेत् सुधीः ॥ ९५ ॥**
**विद्येश्वराननन्ताद्यान् पत्रेषु परितो यजेत् ।**
**उमादिकास्ततो बाह्ये शक्राद्यानायुधैः सह ॥ ९६ ॥**
**इति सम्पूज्य देवेशं भक्त्या परमया युतः ।**
**प्रीणयेन्नृत्यगीताद्यैः स्तोत्रैर्मन्त्री मनोहरैः ॥ ९७ ॥**

तेजोरूपा इति । एषां शरीराद्याकाराभावे कारणमुक्तमाचार्यैः—

भूतानां शक्तित्वाद्व्याप्तत्वाज्जगति वा निवृत्त्याद्याः ।
तेजोरूपाः करपदवर्णविहीना मनीषिभिः प्रोक्ताः ॥ इति ॥

तन्त्रान्तरे आकारोऽप्युक्तः ।

वज्राक्षमालामभयमम्बुजं बिभ्रती करैः ।
हेमाभा चारुसर्वाङ्गा निवृत्तिः सितभूषणा ॥
श्वेताकल्पाऽक्षमालाब्जपाशाभयकरा सिता ।
सर्वाभरणसन्दीप्ता प्रतिष्ठाऽतिमनोहरा ॥
शक्त्यक्षमालाब्जाभीतिहस्ता गुञ्जारुणोज्ज्वला ।
कपर्देन्दुस्त्रिकमुखी ध्येया विद्या कला त्रिदृक् ॥
चतुर्वक्त्रभुजा कृष्णा नीलवस्त्रा कपर्दिनी ।
ध्वजाक्षमालाब्जाभीतिहस्ता शान्तिकला त्रिदृक् ॥
स्फटिकाभा पञ्चवक्त्रा वेदाक्षस्रग्वराभयान् ।
दधती सकपर्देन्दुः शान्त्यतीताऽच्छभूषणा ॥ इति ।

कला इत्यनेन प्रथमपटलोक्तापञ्चीकृतभूतबीजाद्या इत्युक्तम् । क्रमादित्यनेनैतदुक्तम् । आग्नेयादिषु निवृत्त्यादि चतुष्कं संपूज्य ईशस्थाने शान्त्यतीतां पूर्वमेव पूजयेदिति । अन्ये तु ईशानशान्त्यतीते मध्ये पूजयेदित्याहुः । प्रपञ्चसारसम्मतमेतत् । पूर्वमूर्ध्वप्रागित्युक्त्वा पश्चात् पूर्वोक्तदिक्षु मूर्त्तीरित्युक्तेः । अन्ये त्वेवं तयोः पूजामाहुः । उमादिका इति पूर्ववदुत्तरादि यजेत् । अस्य तन्त्रान्तरस्थं यन्त्रद्वयमुच्यते—

षट्कोणमण्डलं बाह्ये रोचनाचन्दनाक्तया ।
दूर्वया विलिखेन्मन्त्री प्रासादं नामसंयुतम् ॥
बहिः षट्सु च कोणेषु प्रणवाद्यं षडक्षरम् ।
त्रयस्त्रिंशद्दलं बाह्ये त्रिस्त्रिंशद्वर्णमालिखेत् ॥
ईशानवर्णषट्कं च तत्पुरुषं तु सप्तकम् ।
अघोरवर्णषट्कं च वामदेवस्य सप्तकम् ॥
सद्योजातं तथा सप्त नमोऽन्तं वर्णमालिखेत् ।
मृत्युञ्जयेन संवेष्ट्य धारयेद्यन्त्रमुत्तमम् ॥ इति ।
षट्कोणान्तः साध्ययुक्तं प्रासादं मूलमस्त्रिषु ।
सन्धिष्वङ्गानि तद्बाह्ये पद्मं पञ्चदलं त्विह ॥
ईशानाद्याः पञ्चमूर्त्तीर्ङेकृदन्ता लिखेत्ततः ।
अष्टपत्रं मातृकाष्टवर्गयुक्तं लिखेद्बहिः ॥
संवेष्ट्याऽनुष्टुभा यन्त्रं जपहोमादिसाधितम् ।
आरोग्यायुः सुतैश्वर्य चतुर्वर्गफलप्रदम् ॥ इति ॥ ९५-९७ ॥

इसके अनन्तर तेजःस्वरूप धारिणी निवृत्ति, प्रतिष्ठा, विद्या तथा शान्तिरूप कलाओं की कोणों में पूजा करे । केशरों पर षडङ्ग की पूजा पूर्ववत् करे । (द्र. १८. २२) ॥ ९५ ॥

पुनः पत्रों पर अनन्तादि विद्येश्वरों की पूजा करे (द्र. १८. २२-२५) । इसके बाद पूर्व से लेकर उत्तर दिशा में उमादि की पूजा करे (द्र १८. २६-२७)। तदनन्तर बाहर इन्द्रादिकों की उनके आयुधों के साथ पूजा करे ॥ ९६ ॥

इस प्रकार परम भक्ति से पूजा करने के पश्चात् नृत्य गीतादि एवं मनोहर स्तोत्रों से सदाशिव को प्रसन्न करे ॥ ९७ ॥

### अष्टाक्षरप्रासादमन्त्रः

**तारो माया वियद् बिन्दुमनुस्वरसमन्वितम् ।**
**पञ्चाक्षरसमायुक्तो वसुवर्णो मनुर्मतः ॥ ९८ ॥**

**अष्टाक्षरं प्रासादमन्त्रमाह तार इति । तारः प्रणवः । माया शक्तिबीजम् । वियत् हः बिन्दुमनुस्वरौ औं तद्युक् तेन हौं । पञ्चाक्षर इति शैवपञ्चाक्षरः । वसुवर्णोऽष्टाक्षरः पूर्वोक्ते ऋषिछन्दसी । उमापतिर्देवता ॥ ९८ ॥**

तार (प्रणव), माया (ह्रीँ), वियत् (हकार) उसको बिन्दु तथा मनुस्वर (औ) से युक्तकर पञ्चाक्षर से युक्त करे । इस प्रकार 'ॐ ह्रीँ हौँ नमः शिवाय'—यह अष्टाक्षर मन्त्र का उद्धार कहा गया ॥ ९८ ॥

**पञ्चाक्षरोक्तवत् कुर्यादङ्गन्यासादिकं बुधः ॥ ९९ ॥**

**पञ्चाक्षरोक्तवदिति । मायाषड्दीर्घाद्यबीजषडक्षरैः षडङ्गमिति संप्रदायविदः । आदिशब्देन मूर्त्तिपञ्चकन्यासः ॥ ९९ ॥**

साधक को इसका अङ्गन्यास पञ्चाक्षर में कही गई विधि के अनुसार करना चाहिए (द्र. १८. ३) ॥ ९९ ॥

ध्यानम् । पुरश्चरणादिकथनम्

**वन्दे सिन्दूरवर्णं मणिमुकुटलसच्चारुचन्द्रावतंसं**
**भालोद्यन्नेत्रमीशं स्मितमुखकमलं दिव्यभूषाङ्गरागम् ।**
**वामोरुन्यस्तपाणेररुणकुवलयं सन्दधत्याः प्रियाया**
**वृत्तोत्तुङ्गस्तनाग्रे निहितकरतलं वेदटङ्केष्टहस्तम् ॥१००॥**
**अष्टलक्षं जपेदेनं मनुं मनुविदां वरः ।**
**तत्सहस्रं प्रजुहुयात् पायसान्नैर्घृतप्लुतैः ॥ १०१ ॥**
**प्राक्पीठे मूलमन्त्रेण मूर्त्तिं सङ्कल्प्या पूजयेत् ।**
**अङ्गैरावरणं पूर्वमनन्ताद्यैरनन्तरम् ॥ १०२ ॥**
**उमादिभिः समुद्दिष्टं तृतीयं लोकनायकैः ।**
**चतुर्थं पञ्चमं तेषामायुधैः परिकीर्त्तितम् ॥ १०३ ॥**
**एवं प्रतिदिनं देवं पूजयेत्साधकोत्तमः ।**
**पुत्रमित्रादिसहितां श्रियं प्राप्य प्रमोदते ॥ १०४ ॥**

वन्दे इति । वेदः पुस्तकं टङ्कः परशुः । वामोरुन्यस्तपाणेरिति दक्षपाणेः । अरुणकुवलयमिति । वामपाणौ । निहितकरतलमिति । वामाधस्तनम् । तदुक्तम्—

वामाङ्कन्यस्तवामेतरकरकमलायास्तथा वामबाहु
न्यस्तरक्तोत्पलायाः स्तनविधृतलसद्वामबाहुः प्रियायाः । इति ।

ऊर्ध्ववामे इष्टं वरमित्यर्थः । वेदटङ्के दक्षस्थे ।
उमादिभिरिति पूर्वोक्तैः ॥ १००-१०४ ॥

अब **अष्टाक्षर मन्त्र के ध्यान का प्रकार** कहते हैं—सिन्दूर के समान कान्ति वाले, मनोहर चन्द्रजटित मणिमय मुकुट धारण किये हुये, भालेक्षण, मन्द स्मित युक्त मुख कमलों वाले, दिव्य आभूषण तथा दिव्य अङ्गरागों से युक्त सदाशिव की मैं वन्दना करता हूँ । वाम ऊरु पर एक हाथ रखने वाली तथा दूसरे हाथ में अरुण कमल धारण करने वाली प्रिया पार्वती के स्तन पर जिनका एक हाथ निहित है तथा अन्य में पुस्तक, परशु और वर धारण किये हुये हैं, ऐसे सदाशिव का ध्यान करे ॥ १०० ॥

मन्त्रवेत्ता साधक ऊपरोक्त अष्टाक्षर मन्त्र का आठ लाख जप करे और घृत परिप्लुत खीर से उसका दशांश होम करे ॥ १०१ ॥

पुनः पूर्वोक्त पीठ पर मूर्त्ति की कल्पना कर उसमें आवाहन करे पश्चात् मूर्त्ति की पूजा करे । पूर्व में अङ्गावरण की पश्चात् अनन्तादिकों की पूजा करे ॥ १०२॥

तृतीय में उमादि की, चतुर्थ में इन्द्रादि लोकपालों की तथा पञ्चम में उनके आयुधों की पूजा करे ॥ १०३ ॥

इस प्रकार उत्तम साधक प्रतिदिन देवाधिदेव शिव का पूजन करे तो पुत्र, मित्रादि सहित श्री प्राप्त कर प्रसन्नता प्राप्त करता है ॥ १०४ ॥

मृत्युञ्जयमन्त्रः । ऋष्यादिकथनम्

**तारं स्थिरा सकर्णेन्दुः भृगुः सर्गविभूषितः ।**
**त्र्यक्षरात्मा निगदितो मनुर्मृत्युञ्जयादिकः ॥ १०५ ॥**
**ऋषिः कहोलो देव्यादिगायत्री छन्द ईरितम् ।**
**मृत्युञ्जयो महादेवो देवताऽस्य समीरितः ॥ १०६ ॥**

**एवं पञ्चवक्त्रशिवस्य मन्त्रानभिधाय ऊर्ध्ववक्त्रप्रधानं मृत्युञ्जयमन्त्रमाह तारमिति । तारं प्रणवम् । स्थिरा जः । कर्णो वामकर्णः ऊ । अथवा कर्णशब्देन षट्संख्या तेन ऊ इन्दुर्बिन्दुः तेन जूं । भृगुः सकारः सर्गो विसर्गः तद्युक्तः । द्वन्द्वावयवसम्पाते पूर्वस्यादौ परिग्रहः । इति यद्यपि सामान्यपरिभाषा तथाप्यत्र विशेषवचनात्तद्बाधः पूर्वव्याख्याने । तदुक्तं प्रयोगसारे—**

**वेदादिः काष्टमः षष्ठस्वरार्धेन्द्वन्वितश्च सः ।**
**स्वरश्चतुर्थो बिन्द्वन्तौ जलौ (जसौ) बिन्द्वन्वितः शशी ॥**
**पञ्चाक्षरस्य मन्त्रस्य बीजान्युक्तानि यत्नतः ।**
**तस्यादितः क्रमाद्बीजैस्त्र्यक्षरः प्रोच्यते त्रिभिः ॥**
**बीजेनाऽन्त्येन तस्यैव स्यादेकाक्षर ईरितः ।**
**एते मृत्युञ्जया मन्त्राः क्रमात्प्रोक्ताः फलोत्तराः ॥ इति ।**

**नारायणीयेऽपि— सशिवं वामदोर्मध्यं बिन्दुमत्सकलो भृगुः । इति ।**

**तट्टीकायां सशिवं षष्ठस्वरयुक्तम् ।**

**शिवशब्देन षष्ठस्वरोऽत्र विवक्षितः इत्युक्तम् । प्रणवो बीजं स इति शक्तिः । जूं बीजमिति पद्मपादाचार्याः ॥ १०५-१०६ ॥**

तारम् (प्रणव), स्थिरा (जं), सकर्णेन्दु (दीर्घ अकार युक्त अनुस्वार), भृगु (सकार) जिस पर सर्ग (विसर्ग) हो । इस प्रकार—'ॐ जूँ सः' यह त्र्यक्षर मन्त्र कहा गया । यह मृत्युञ्जय मन्त्र के आदि में लगाया जाता है ॥ १०५ ॥

इस त्र्यक्षर मन्त्र के कहोल ऋषि हैं । सभी देवियों की आदि गायत्री इसका छन्द है और महामृत्युञ्जय महादेव इसके देवता हैं ॥ १०६ ॥

**भृगुणा दीर्घयुक्तेन षडङ्गानि समाचरेत् ॥ १०७ ॥**

**भृगुणा सकारेण । दीर्घयुक्तेन षड्दीर्घयुक्तेन समाचरेदिति । नाभिहृद्भ्रूमध्येऽप्यक्षरन्यासानन्तरमित्यर्थः ॥ १०७ ॥**

दीर्घयुक्त भृगु (सकार) से इसका षडङ्गन्यास करना चाहिए ॥ १०७ ॥

महामृत्युञ्जयध्यानम्

पुरश्चरणादिकथनम्

चन्द्रार्काग्निविलोचनं स्मितमुखं पद्मद्वयान्तः स्थितं
मुद्रापाशमृगाक्षसूत्रविलसत्पाणिं हिमांशुप्रभम् ।
कोटीरेन्दुगलत्सुधाप्लुततनुं हारादिभूषोज्ज्वलं
कान्त्या विश्वविमोहनं पशुपतिं मृत्युञ्जयं भावयेत् ॥ १०८॥

पद्मद्वयान्तः स्थितमिति । एकमूर्ध्वमुखं तदुपर्युपविष्टं द्वितीयमधोमुखं शिरसि । मुद्रा ज्ञानमुद्रा । दक्षोर्ध्वात् दक्षाधस्तनं यावदायुधध्यानम् ॥ १०८ ॥

जिनके सूर्य, चन्द्र और अग्निस्वरूप तीन नेत्र हैं, जिनका मुख मण्डल स्मित से युक्त है, जिनके शिरोभाग दो कमलों के मध्य (अर्थात् एक ऊर्ध्वमुख तथा उसके ऊपर विद्यमान दूसरा कमल अधोमुख रूपेण) स्थित है, जिन्होंने अपने हाथों में मुद्रा, पाश, मृग (मुद्रा) तथा अक्षमाला धारण किया है, जिनके मुख की कान्ति चन्द्रमा के समाज उज्ज्वल है, जिनका शरीर किरीट में जटित चन्द्रमण्डल से चूते हुये अमृत कणों से आप्लावित है और हारादि नाना प्रकार के भूषणों से उज्ज्वल है—ऐसे महामृत्युञ्जय पशुपति का ध्यान करना चाहिए, जो अपनी कान्ति से विश्व को मोहित कर रहे हैं ॥ १०८ ॥

गुणलक्षं जपेन्मन्त्रं तद्दशांशं विशालधीः ।
जुहुयादमृताखण्डैः शुद्धदुग्धाज्यलोलितैः ॥ १०९ ॥
शैवे संपूजयेत्पीठे मूर्त्तिं मूलेन कल्पयेत् ।
अङ्गावरणमाराध्य पश्चाल्लोकेश्वरान् यजेत् ॥ ११० ॥
तदस्त्राणि ततो बाह्ये पूजयेत् साधकोत्तमः ।
जपपूजादिभिः सिद्धे मन्त्रेऽस्मिन् मनुना क्रमात् ॥ १११ ॥
कुर्यात् प्रयोगान् कल्पोक्तानभीष्टफलसिद्धये ।
दुग्धयुक्तैः सुधाखण्डैर्मन्त्री मासं सहस्रकम् ॥ ११२ ॥
आराधितेऽग्नौ जुहुयाद्विधिवद्विजितेन्द्रियः ।
सन्तुष्टः शङ्करस्तेन सुधाप्लावितविग्रहः ॥ ११३ ॥
आयुरारोग्यसम्पत्तियशः पुत्रान् विवर्धयेत् ।
सुधावटौ तिलो दूर्वा पयः सर्पिः पयोहविः ॥ ११४ ॥
इत्युक्तैः सप्तभिर्द्रव्यैर्जुहुयात्सप्तवासरम् ।
क्रमाद्दशांशतो नित्यमष्टोत्तरमतन्द्रितः ॥ ११५ ॥
सप्ताधिकान् द्विजान्नित्यं भोजयेन्मधुरान्वितम् ।
विकारानुगुणं मन्त्री वर्धयेद्धोमवासरान् ॥ ११६ ॥

**गुणलक्षं त्रिलक्षम् । विशालधीरित्यनेन शैवं पीठमभ्यर्च्येत्युक्तम् । अमृता गुडूची । शुद्धेति वस्त्रादिना गालितैः । सुधा गुडूची । मन्त्रीति । एकाक्षरबीजादित्वमुक्तम् । मासं जुहुयादिति सम्बन्धः । सहस्रकमिति प्रत्येकम् । विधिवदाराधित इत्यग्नौ शैवं पीठं सम्पूज्येत्यर्थः । पयोहविरिति पायसम् । विकारमिति । रोगानुसाराच्चतुर्दशैकविंशेत्यादि दिनवृद्धिः ॥ १०९-११६ ॥**

विशाल बुद्धि वाला साधक तीन लाख इस मन्त्र का जप करे । तदनन्तर शुद्ध दूध तथा शुद्ध घृत से आप्लुत गुरुच की समिधाओं से उसका दशांश (तीस हजार) होम करे ॥ १०९ ॥

पुनः शैव पीठ पर मूल मन्त्र से मूर्ति की कल्पना करे । आवाहन पूर्वक पूजा करे । तदनन्तर अङ्गावरणों की पूजा कर लोकपालों की पूजा करे ॥ ११०॥

इसके बाद बाहर उनके वज्रादि आयुधों की पूजा करे । इस प्रकार जप पूजादि द्वारा जब मन्त्र सिद्ध हो जाय तो साधक क्रमशः इस मन्त्र के द्वारा अपनी अभीष्ट सिद्धि के लिये इस कल्प में आगे कहे गये प्रयोगों का अनुष्ठान करे ॥ १११-११२ ॥

दूध से परिषिञ्चित गुडूची की समिधा से एक मास पर्यन्त सहस्त्र संख्या में इन्द्रियों को वश में कर विशुद्ध सुसंस्कृत अग्नि में नित्य होम करे । उसके इस अनुष्ठान से अमृत प्रवाह से आप्लावित शरीर वाले शंकर संतुष्ट हो आयु, आरोग्य, संपत्ति यश और पुत्र की वृद्धि प्रदान करते हैं ॥ ११२-११४ ॥

गुडूची, वट, तिल, दूर्वा, दूध, घी एवं खीर—इन सात पदार्थों से अलग अलग निरन्तर सात दिन पर्यन्त दशांश १०८ बार होम करे तथा आठ ब्राह्मणों को नित्य मिष्ठान्न युक्त भोजन करावे । यदि भयानक पाप के कारण रोगादि विकार अत्यन्त प्रचण्ड हों तो उसके अनुसार इस अनुष्ठान के क्रम में सात-सात दिन और अर्थात चौदह अथवा २१ दिन अथवा इससे भी अधिक दिन संख्या बढ़ाता जाय ॥ ११४-११६ ॥

### महामृत्युञ्जयध्यानप्रयोगः

**होतृभ्यो दक्षिणां दद्यादरुणा गाः पयस्विनीः ।**
**गुरुं संप्रीणयेत्पश्चाद्धनाद्यैर्देवताधिया ॥ ११७ ॥**
**अनेन विधिना साध्यः कृत्याद्रोहज्वरादिभिः ।**
**विमुक्तः सुचिरं जीवेच्छरदां शतमञ्जसा ॥ ११८ ॥**

पश्चात् होम के अनन्तर होता को लाल वर्ण की दूध देने वाली गाय दान करे तथा गुरु में देवता बुद्धि कर धनादि द्वारा उन्हें संतुष्ट करे । तो इस विधि से साधक कृत्या (अभिचार मारणादि) शत्रुद्रोह एवं ज्वरादि से मुक्त हो जाता है और सैकड़ों वर्ष तक नीरोग रह कर जीता है ॥ ११७-११८ ॥

अभिचारे ज्वरे तीव्रे घोरोन्मादे शिरोगदे ।
असाध्यरोगक्ष्वेडादौ महादाहे महाभये ॥ ११९ ॥
होमोऽयं शान्तिदः प्रोक्तः सर्वसम्पत् प्रदायकः ।
द्रव्यैरेतैः प्रजुहुयात् त्रिजन्मसु यथाविधि ॥ १२० ॥
भोजयेन्मधुरैर्भोज्यैर्ब्राह्मणान् वेदपारगान् ।
दीर्घमायुरवाप्नोति वाञ्छितां विन्दति श्रियम् ॥ १२१ ॥

द्रव्यैरेतैरिति । पूर्वोक्तैः सप्तभिः । त्रिजन्मस्विति प्रथमदशमएकोनविंशतिसंख्येषु नक्षत्रेषु । यथाविधीति । पूर्वोक्तप्रकारेण ॥ ११९-१२१ ॥

मारणादि अभिचार में तीव्र ज्वर में घोर से घोर उन्माद में, शिरः पीडा में असाध्य रोग में खेद में, (विष) महादाह में, महाभय में यह होम साधक को शान्ति प्रदान करता है तथा सब प्रकार की संपत्ति प्रदान करता है । साधक (त्रिजन्म) अपने जन्म नक्षत्र में या जन्म से दशवें नक्षत्र में अथवा जन्म से २१ वें नक्षत्र में ऊपर कही गई विधि के अनुसार होम करे और वैदिक ब्राह्मणों को मिष्ठान भोजन करावे । ऐसा करने से साधक को दीर्घ आयु प्राप्त होती है और मनोभिलषित श्री भी प्राप्ति होती है ॥ ११९-१२१ ॥

एकादशाहुतीर्नित्यं दूर्वाभिर्जुहुयाद् बुधः ।
अपमृत्युजिदेषः स्यादायुरारोग्यवर्धनः ॥ १२२ ॥
त्रिजन्मसु सुधावल्लीकाश्मरीबकुलोद्भवैः ।
समिद्वरैः कृतो होमः सर्वमृत्युगदापहः ॥ १२३ ॥

यदि बुद्धिमान् साधक दूर्वा के द्वारा नित्य ११ आहुती प्रदान करे तो वह अपमृत्यु को जीत लेता है और उसकी आयु तथा आरोग्य की अभिवृद्धि होती है । जन्म नक्षत्र के दिन, जन्म नक्षत्र से दशवें नक्षत्र के दिन अथवा इक्कीसवें नक्षत्र के दिन गुडूची, काश्मरी, अथवा वकुल के समिधा द्वारा होम करे तो सब प्रकार की मृत्यु एवं सब प्रकार के रोगों से छुटकारा हो जाता है ॥ १२२-१२३ ॥

सिद्धान्नैर्विहितो होमो महाज्वरविनाशनः ।
अपामार्गसमिद्धोमः सर्वामयविषूदनः ॥ १२४ ॥

इस मन्त्र के द्वारा खीर से किया गया होम संपूर्ण ज्वरों को विनष्ट कर देता है । अपामार्ग की समिधा द्वारा किया गया होम सभी प्रकार के ज्वरों को विनष्ट कर देता है ॥ १२४ ॥

महामृत्युञ्जय यन्त्रमाह

प्रणवरचितनालं मन्त्रमध्यार्णपत्रं
भृगुविलसितमध्यं पद्मयुग्मं तदन्तः ।

**कृतवसतिमुमेशं वर्णनिर्यत्सुधार्द्रं**
**कलयतु हृदि नित्यं सर्वदुःखप्रशान्त्यै ॥ १२५ ॥**

प्रणवेति । मन्त्रमध्यार्णो जूं स चाष्टावृत्त्या अष्टसु पत्रेषु । भृगुविलसितेति । सविसर्गसकारेण । पद्मयुग्मं कलयतु तदन्तः कृतवसतिमुमेशं कलयत्विति सम्बन्धः । एवं पद्मद्वयसम्पुटमध्ये उमेशं ध्यायेत् । वर्णः कर्णिकास्थः सकारः तस्मान्निर्यती या सुधा तया आर्द्रम् ॥ १२५ ॥

अब इस **मन्त्र के यन्त्र का प्रकार** कहते हैं—दो अष्टदल कमल निर्माण करे । दोनों के नाल पर प्रणव लिखे, दोनों अष्टपत्र के मूल में प्रत्येक पर मध्य वर्ण जूँ आठ आवृत्ति में लिखें तथा मध्य भाग में 'सः' इस अक्षर को लिखे । इस प्रकार दोनों मन्त्रों को संपुट कर मध्य में एकार वर्ण से निकलते हुये अमृत रस से सराबोर महेश्वर का हृदय में ध्यान कर एक को ऊर्ध्वमुख स्थापित कर देवे, दूसरे को अधोमुख स्थापित कर देवे तो इस प्रकार का यन्त्र सारे दुःखों को शान्त कर देता है ॥ १२५ ॥

### अभिषेकविधिः

**यन्त्राढ्ये कमले सौम्ये कलशं प्रोक्तवर्त्मना ।**
**नवरत्नसमायुक्तं दुकूलाभ्यामलङ्कृतम् ॥ १२६ ॥**
**आपूर्य सलिलैः शुद्धैस्तस्मिन् देवं प्रपूजयेत् ।**
**उपचारैः षोडशभिर्विधानेन विधानवित् ।**
**अभिषिञ्चेत् प्रियं साध्यं विनीतं दत्तदक्षिणम् ॥ १२७ ॥**
**आधिव्याधिमहारोगकृत्याद्रोहनिवारणः ।**
**अभिषेकोऽयमाख्यातः कीर्त्तिलक्ष्मीजयप्रदः ॥ १२८ ॥**

अभिषेकमाह यन्त्रेति । यन्त्राढ्य इति वक्ष्यमाणयन्त्रयुक्ते । कमल इति भद्रकमण्डलस्थले । सौम्यं मनोहरम् । प्रोक्तवर्त्मनेति । षष्ठपटलोक्तरीत्या । विधानविद्विधानेनेत्यनेनैतदुक्तम् । तुर्योक्तागमश्लोकैरुपचारेषु तत्तद्द्रव्यविशेषस्तत्तन्मुद्राभिरिति ॥ १२६-१२८ ॥

आगे कहे जाने वाले मन्त्र युक्त सर्वतोभद्रमण्डल पर पहले कही गई विधि के अनुसार कलश स्थापित करे । उसमें नव रत्न छोड़े और दो वस्त्रों से उसे लपेट कर अच्छी तरह अलंकृत करे ॥ १२६ ॥

पुनः शुद्ध जल उसमें डालकर पूर्ण करे, तदनन्तर उस पर षोडशोपचार से सदाशिव का पूजन करे और कलश के जल से दक्षिणा से संतुष्ट करने वाले विनीत स्वभाव के यजमान को अभिषिक्त करे तो इस प्रकार का अभिषेक आधि, व्याधि, महारोग, अभिचार तथा शत्रुजन्य बाधा को दूर कर देता है । इस प्रकार यह अभिषेक कीर्त्ति, लक्ष्मी और जय प्रदान करने वाला है ॥ १२७-१२८ ॥

मृत्युञ्जययन्त्रम्

मध्ये साध्याक्षराढ्यं ध्रुवमभिविलिखेन्मध्यगं दिग्दलस्थं
कोणेष्वन्त्यं मनोस्तत्क्षितिभुवनमथो दिक्षु चन्द्रान्विदिक्षु ।
टान्तं यन्त्रं तदुक्तं सकलभयहरं क्ष्वेडभूतापमृत्यु-
व्याधिव्यामोहदुःखप्रशमनमुदितं श्रीप्रदं कीर्त्तिदायि ॥ १२९ ॥

॥ इति श्रीलक्ष्मणदेशिकेन्द्रविरचिते शारदातिलके
अष्टादशः पटलः समाप्तः ॥ १८ ॥



यन्त्रमाह मध्य इति । मध्ये कर्णिकायाम् । मध्यगं जूंकारम् । अन्त्यं सः । चन्द्रं ठकारम् । तदुक्तम्—

खड्गीशलाङ्गलिभ्यां तु दिग्विदिक्ष्वङ्कितं बहिः ।
भूपुरं विनिवेश्याऽस्मिन् कलशं समलङ्कृतम् ॥ इति ॥ १२९ ॥

॥ इति श्रीराघवभट्टविरचित-शारदातिलकटीकायां सत्सम्प्रदायकृतव्याख्यायां
पदार्थादर्शाभिख्यायामष्टादशः पटलः ॥ १८ ॥



अब १२०-१२६ में कहे गये **मन्त्र की विधि** कहते हैं—अष्टदल कमल की कर्णिका में साध्य के अक्षरों के साथ प्रणव लिखे, चारों दिशाओं के चार पत्रों पर मन्त्र के मध्य अक्षर (जूँ) वर्ण को लिखे । कोणों के चार पत्रों पर मन्त्र का अन्तिम अक्षर 'सः' लिखे । तदनन्तर भूपुर के चारों दिशाओं और चारों कोणों में चन्द्र बिन्दु युक्त ठकार लिखे । इस प्रकार का यन्त्र विष, भूत, अपमृत्यु, व्याधि, व्यामोह तथा दुःखो का प्रशमन कर देता है, श्री प्रदान करता है और कीर्त्तिकारक होता है ॥ १२९ ॥

॥ इस प्रकार शारदातिलक के अठारहवें पटल की डॉ० सुधाकर मालवीय
कृत हिन्दी व्याख्या पूर्ण हुई ॥ १८ ॥



# अथैकोनविंशः पटलः

## अथ दक्षिणामूर्त्तिप्रकरणम्

**अथ वक्ष्ये मन्त्ररत्नं समस्तपुरुषार्थदम्।**
**अवापुर्येन जप्तेन दिव्यं ज्ञानं मुनीश्वराः ॥ १ ॥**

**एवमूर्ध्ववक्त्रप्रधानमन्त्रनिरूपणानन्तरं दक्षिणवक्त्रप्रधानं सौम्य (शैव) मन्त्रमाह । अथेति । समस्तपुरुषार्थदमित्यनेन विनियोग उक्तः ॥ १ ॥**

१८ वें पटल में सदाशिव के ऊर्ध्व वक्त्र के प्रधान प्रधान मन्त्रों का निरूपण किया गया, अब दक्षिण वक्त्र प्रधान सौम्यात्मक सदाशिव के मन्त्रों का निरूपण करते हैं—

अब मैं समस्त पुरुषार्थों को प्रदान करने वाले मन्त्र रत्नों का निरूपण करता हूँ । जिसके जप मात्र से मुनीश्वरों ने दिव्य ज्ञान प्राप्त किया था ॥ १ ॥

**मन्त्रः । ऋष्यादिकथनम्**

**दक्षिणामूर्त्तये पूर्वं तुभ्यं पदमनन्तरम् ।**
**वटमूलपदस्याऽन्ते पदं पश्चान्निवासिने ॥ २ ॥**
**ध्यानैकनिरताङ्गाय पश्चाद् ब्रूयान्नमः पदम् ।**
**रुद्राय शम्भवे तारशक्तिरुद्धोऽयमीरितः ॥ ३ ॥**
**षट्त्रिंशदक्षरो मन्त्रः सर्वकामफलप्रदः ।**
**मुनिः शुकः समुद्दिष्टश्छन्दोऽनुष्टुप्समीरितम् ॥ ४ ॥**
**दक्षिणामूर्त्तिनामाऽस्य देवता शम्भुरीरितः ।**

**अङ्गन्यासः । ध्यानम्**

**षड्भिर्वर्णैर्हृदाख्यातं द्वाभ्यां शिर उदीरितम् ॥ ५ ॥**
**शिखाऽष्टभिः समुद्दिष्टा वस्वर्णैः कवचं मतम् ।**
**पञ्चभिर्नेत्रमाख्यातं त्रिभिरस्त्रमुदाहृतम् ॥ ६ ॥**
**षडेते तारशक्त्याद्या ह्राङाद्यन्ताः सजातयः ।**
**अङ्गमन्त्राः समुद्दिष्टा यथावद्देशिकोत्तमैः ॥ ७ ॥**

**मन्त्रमुद्धरति दक्षिणेति । श्लोकरूपो मन्त्रः । तारशक्तिरुद्धोऽयमित्युभाभ्यां रुद्धः पुटितः तेनान्ते व्युत्क्रमः । प्रणवो बीजं माया शक्तिः ।**

**ह्राङादीति मकारे ङकारः । प्रयोगस्तु—ॐ ह्रीँ दक्षिणामूर्त्तये ह्रां हृदयाय नमः ॐ ह्रीँ शिरसे स्वाहा इत्यादि । यथावद्देशिकोत्तमैरित्यनेन शैवषडङ्गमुद्राभिः सह कर्त्तव्यतोक्ता ॥ २-७ ॥**

अब **मन्त्र का उद्धार का क्रम** कहते हैं—प्रथम 'दक्षिणामूर्त्तये' पद, उसके बाद 'तुभ्यम्' पद, तदनन्तर 'वटमूलपदं', फिर 'निवासिने', तदनन्तर 'ध्यानैकनिरताङ्गाय', तदनन्तर 'नमः रुद्राय शम्भवे' कहे । मन्त्र के आदि तथा अन्त में प्रणव का उच्चारण करे । इस प्रकार—'ॐ दक्षिणामूर्त्तये तुभ्यं वटमूलपदं निवासिने ध्यानैकनिरताङ्गाय नमः रुद्राय शम्भवे ॐ' । यह ३६ अक्षरात्मक दक्षिणामूर्त्ति मन्त्र का उद्धार कहा गया ॥ २-३ ॥

३६ अक्षरों वाला दक्षिणामूर्त्ति का मन्त्र सभी कामनाओं का फल प्रदान करता है, इस मन्त्र के शुक ऋषि हैं और अनुष्टुप् छन्द है दक्षिणामूर्त्ति नाम वाले शम्भु इस मन्त्र के देवता हैं ॥ ४-५ ॥

अब इस मन्त्र से **अङ्गन्यास** का क्रम कहते हैं—छः अक्षरों से हृदय का, दो से शिर का, आठ से शिखा का, ८ अक्षर से कवच का, पाँच से नेत्र का और तीन अक्षर से अस्त्रन्यास करना चाहिए ॥ ५-६ ॥

इस षडङ्गन्यास के प्रत्येक न्यास के अक्षरों के आदि में माया बीज तथा अन्त में 'ह्राँ' लगाना चाहिए । जैसे—'ॐ ह्रीँ दक्षिणामूर्त्तये ह्राँ हृदयाय नमः' इति हृदये, 'ॐ ह्रीँ तुभ्यं ह्राँ शिरसे स्वाहा' इति शिरसि इत्यादि । आचार्यों ने इस प्रकार इस मन्त्र से अङ्गन्यास का प्रकार कहा है ॥ ७ ॥

**मूर्ध्नि भाले दृशोः श्रोत्रे गण्डयुग्मेऽथ नासिके ।**
**आस्ये दोः सन्धिषु गलेस्तनहृन्नाभिमण्डले ॥ ८ ॥**

दक्षिणामूर्त्तिध्यान । पुरश्चरणादिकथनम्

**कट्यां गुह्ये पुनः पादसन्धिष्वर्णान्न्यसेत् क्रमात् ।**
**व्यापकं तारशक्तिभ्यां कुर्याद्देहे ततः परम् ॥ ९ ॥**

**मूर्ध्नीत्यादि चतुस्त्रिंशत्स्थानेषु चतुस्त्रिंशद्वर्णान् विन्यस्य शिष्टाभ्यां व्यापकं कुर्यादित्यर्थः । तदुक्तम्—एवं प्रणवहृल्लेखापूर्वाक्षरन्यासादिकं कृत्वा । इति । आचार्या अपि—पुनर्द्वाभ्यां मन्त्रविद्व्यापकं न्यसेत् । इति । केचित् तु नसोस्तनयोरेकैकमक्षरं न्यसनीयमिति द्वाविंशदक्षरन्यासमेवाहुः । एष एव सांप्रदायिकः पक्षः ।**

**तदुक्तमाचार्यैः— कालिकश्रुतिदृग्गण्डद्वयनासास्यके दश । इत्यादिना ।**

**पूर्वलिखिताचार्यपद्यव्याख्याने पद्मपादाचार्यैर्द्वाभ्यां मन्त्रविदित्यनेन आद्यन्तप्रणवशक्त्योरेकत्वं जानन्नित्यर्थ इति व्याख्यातम् । व्यापकं तारशक्तिभ्यामिति वदता**

**मूलकारेणापि सूचितमेव । तेन ॐ ह्रीँ दं नम इत्यादि प्रयोगः । 'कृतसंदीक्षो मन्त्री' इत्यनेन न्यासमन्त्रादौ प्रणवशक्तियोग उक्त इत्यादि पद्मपादाचार्याः ॥ ८-९ ॥**

शिर, भाल, दोनों नेत्र, दोनों श्रोत्र, दोनों गण्डस्थल, दोनों नासिका, मुख, हाथ की सन्धियाँ, गला, दोनों स्तन, हृदय, नाभि, कटि, गुह्य तथा पैर के सन्धियों में—इस प्रकार ३४ स्थानों में मात्र ३४ अक्षरों के एक एक अक्षर के क्रम से न्यास करे । फिर 'ॐ ह्रीँ' लगा कर समस्त मन्त्रों द्वारा शरीर में व्यापक न्यास करे । यथा—'ॐ ह्रीँ दं नमः इति शिरसि', 'ॐ ह्रीँ क्षिं नमः इति भाले' इत्यादि ॥ ८-९ ॥

**हेमाचलतटे रम्ये सिद्धकिन्नरसेविते ।**
**विविधद्रुमशाखाभिः सर्वतो वारितातपे ॥ १० ॥**
**सुपुष्पितैर्लताजालैराश्लिष्टकुसुमद्रुमैः ।**
**शिलाविवरनिर्गच्छन्निर्झरानिलसेविते ॥ ११ ॥**
**गायद्भृङ्गाङ्गनासङ्घे नृत्यद्बर्हिकदम्बके ।**
**कूजत्कोकिलसङ्घेन मुखरीकृतदिङ्मुखे ॥ १२ ॥**
**परस्परविनिर्मुक्तमात्सर्यमृगसेविते ।**
**आद्यैः शुकाद्यैर्मुनिभिरजस्त्रं समुपस्थिते ॥ १३ ॥**
**पुरन्दरमुखैर्देवैः सेवायातैर्विलोकितम् ।**
**वटवृक्षं महोच्छ्रायं पद्मरागफलोज्ज्वलम् ॥ १४ ॥**
**गारुत्मतमयैः पत्रैर्निविडैरुपशोभितम् ।**
**नवरत्नमयाकल्पैर्लम्बमानैरलङ्कृतम् ॥ १५ ॥**
**जलजैः स्थलजैः पुष्पैरामोदिभिरलङ्कृतम् ।**
**शृण्वद्भिर्वेदशास्त्राणि शुकवृन्दैर्निषेवितम् ॥ १६ ॥**
**संसारतामविच्छेदकुशलच्छायमद्भुतम् ।**
**विचिन्त्य तस्य मूलस्थे रत्नसिंहासने शुभे ॥ १७ ॥**
**आसीनममिताकल्पं शरच्चन्द्रनिभाननम् ।**
**स्तूयमानं मुनिगणैर्दिव्यज्ञानाभिलाषिभिः ।**
**संस्मरेज्जगतामाद्यं दक्षिणामूर्त्तिमव्ययम् ॥ १८ ॥**

**ध्यानमाह हेमेति । हेमाचलतटे वटवृक्षं सञ्चिन्त्येति सम्बधः । लम्बमानैरिति वटप्ररोहैः । लीबणी इति गौडभाषायाम् । अनेनैतदुक्तं भवति । मणिमण्डपानन्तरं हेमाचलतटे वटवृक्षं तदधो रत्नसिंहासनमिति पीठन्यासे विशेषः शेषं समानमिति ॥ १०-१८ ॥**

अब **दक्षिणामूर्त्ति का ध्यान** कहते हैं—हेमाचल (सुवर्ण पर्वत) के मनोहर तट पर जहाँ सिद्ध किन्नरों का निवास है, नाना प्रकार के वृक्षों की शाखाओं की

छाया रहने के कारण जहाँ धूप का नामोनिशान नहीं, जहाँ फूली हुई लताओं के समूह से पुष्पित वृक्ष आलिंगित हो रहे हैं, शिला समूह के विवर से निकलते हुये झरनों के जल का स्पर्श कर जहाँ शीतल वायु का सञ्चार है, जहाँ भ्रमरियों का समूह कलगान कर रहा है तथा मयूर सङ्गनृत्य कर रहा है, कोकिलों की कूज से जहाँ दिशायें मुखरित हो रही हैं, जहाँ पर अरण्य जन्तु अपनी स्वाभाविक मत्सरता त्याग कर निवास करते हैं, जहाँ आद्य शुक्रादि मुनि नैरन्तर्येण निवास करते हैं। इस प्रकार सुरम्य तट पर श्री दक्षिणामूर्त्ति की सेवा के लिये आये हुये शुक्रादि देवगण जिसे बड़े ध्यान से देख रहे हैं। ऐसा एक महान् ऊँचा वट वृक्ष है, जिसमें पद्मराग के सदृश लाल लाल फल लगे हुये हैं, जो गारुत्मत मणि के समान लटकते हुये घने घने पत्तों से तथा नव रत्नमणियों के समान वट प्ररोहों से शोभित हो रहा है। जहाँ जल में तथा स्थल में उत्पन्न होने वाले पुष्प अपनी सुगन्धि विकीर्ण कर रहे हैं तथा वेदशास्त्र के सुनने वाले शुक समूहों का जहाँ निवास है। संसार के त्रिताप को शान्त करने वाली जिसकी अद्भुत छाया है, ऐसे वटवृक्ष के मूल में मणिमय मण्डप के मध्य में एक बहुत सुरम्य रत्न का सिंहासन है ॥ १०-१७ ॥

उस रत्नसिंहासन पर अनन्त भूषण से विभूषित, शरत् कालीन पूर्णचन्द्र के समान मनोहर मुख वाले, दिव्य ज्ञान की अभिलाषा रखने वाले, अनेक मुनिगणों से संस्तूयमान, जगत् के आदिकारण सर्वथा विकार रहित दक्षिणामूर्त्ति का ध्यान करे ॥ १८ ॥

**कैलासाद्रिनिभं शशाङ्कशकलस्फूर्जज्जटामण्डितं**
**नसालोकनतत्परं त्रिनयनयनं वीरासनाध्यासितम् ।**
**मुद्राटङ्ककुरङ्गजानुविलसत्पाणिं प्रसन्नाननं**
**कक्षाबद्धभुजङ्गमं मुनिवृतं वन्दे महेशं परम् ॥ १९ ॥**

**ध्यानमाह कैलासेति । वीरासनमन्त्यपटले वक्ष्यति । मुद्रा ज्ञानमुद्रा । तदुक्तमाचार्यैः—मुद्रां भद्रार्थदात्रीम् । इति । टङ्कः परशुः । दक्षयोराद्ये वामयोरन्ये आयुधे ॥ १९ ॥**

जो कैलास पर्वत के समान सर्वथा उज्ज्वल हैं, जिनकी जटा बाल चन्द्रमा की किरणों से चमक रही है, जो निरन्तर नासाग्र के अवलोकन में तत्पर हैं, तीन नेत्रों से युक्त हैं, वीरासन से बैठे हुये हैं (द्र. २५. १३)। जो अपने तीन हाथों में मुद्रा, परशु तथा हरिण धारण किये हुये हैं और एक हाथ जानु पर रखे हुये हैं, ऐसे प्रसन्न मुख वाले, कक्ष में सर्पराज को बाँधे हुये एवं मुनिगणों से आवृत परब्रह्मस्वरूप महेश्वर को नमस्कार करता हूँ ॥ १९ ॥

**अयुतद्वयसंयुक्तं गुणलक्षं जपेन्मनुम् ।**
**तद्दशांशं तिलैः शुद्धैर्जुहुयात् क्षीरसंयुतैः ॥ २० ॥**

**पञ्चाक्षरोदिते पीठे विधानेन प्रपूजयेत् ।**
**उपचारै समुत्पन्नैः पाद्याद्यैः परमेश्वरम् ॥ २१ ॥**
**एवं कृतपुरश्चर्यः सिद्धमन्त्रो भवेत् सुधीः ।**
**भिक्षाहारो जपेन्मासं मनुमेनं जितेन्द्रियः॥ २२ ॥**
**नित्यं सहस्रमष्टार्धं परं विन्दति वाङ्मयम् ।**
**त्रिवारं जप्तमेतेन मनुना सलिलं पिबेत् ॥ २३ ॥**
**नित्यशो दक्षिणामूर्त्तिं ध्यायन् साधकसत्तमः ।**
**शास्त्रव्याख्यानसामर्थ्यं लभते वत्सरान्तरे ॥ २४ ॥**

**गुणलक्षं त्रिलक्षम् । समुत्पन्नैः समुक्तैः समुत्पादितैरिति वार्थः । तेनोक्त-प्रकारेणैवोपचारान् कुर्यात् न जलादिनेत्युक्तं भवति ॥ २०-२४ ॥**

उक्त मन्त्र का तीन लाख बीस हजार जप करे । उसका दशांश क्षीर मिश्रित शुद्ध तिलों से होम करे ॥ २० ॥

तदनन्तर पञ्चाक्षर मन्त्र में कहे गये विधान के अनुसार पाद्यादि यथोपलब्ध उपचारों से परमेश्वर का पूजन करे ॥ २१ ॥

इस प्रकार पुरश्चरण करने के बाद जब साधक सिद्धमन्त्र हो जाय तब जितेन्द्रिय हो भिक्षाटन से निर्वाह करते हुए एक महीने तक निरन्तर इस मन्त्र का १००८ बार जप करे तो उत्कृष्ट वाणी का ऐश्वर्य प्राप्त करता है ॥ २२-२३॥

नित्य दक्षिणामूर्त्ति का ध्यान करते हुये तीन बार इस मन्त्र से अभिमन्त्रित जल पीवे तो वह उत्तम साधक एक वर्ष के भीतर शास्त्रों की व्याख्या करने में समर्थ हो जाता है ॥ २४ ॥

### पुरश्चरणादिकथनम्

**ब्राह्मीसैन्धवसिद्धार्थवचाकुष्ठकणोत्पलैः ।**
**सुगन्धिसंयुतैः कल्कैः शृतं ब्राह्मीरसे घृतम्॥ २५ ॥**

**सिद्धार्थो गौरसर्षपः । कणा पिप्पली । उत्पलं मुस्ता । सुगन्धिशब्देन त्वक्पत्रैलाकेसराणि । तदुक्तं वैद्यकनिघण्टौ—**

**त्वक्पत्रैलाकेसराणि चातुर्जातं सुगन्धिकम् ॥ इति ।**

**एतेषां कल्केन ब्राह्मीरसे घृतपाकः । तत्र—**

**स्नेहः सिध्यति शुद्धाम्बुनि क्वाथस्वरसैः क्रमात् ।**
**कल्कस्य योजयेदंशं चतुर्थं षष्ठमष्टमम् ॥**

**इति विशेषपरिभाषावचनात् पलमितेन कल्केन षट्पलं घृतं पचेत् ।**

**पञ्चप्रभृति यत्र स्युर्द्रव्याणि स्नेहसंविधौ ।**
**तत्र स्नेहसमान्याहुरर्वाक् च स्याच्चतुर्गुणम् ॥**

इत्युक्तत्वात् चतुर्विंशतिपलानि ब्राह्मीरसः । घृतावशेषमुत्तारितमुक्तफलदम् । शृतं पक्वम् ॥ २५ ॥

मनुनाऽनेन सञ्जप्तमयुतं साधुसाधितम् ।
निपीतं कविताकान्तिरक्षायुःश्रीधृतिप्रदम् ॥ २६ ॥

साधु साधितमिति । अयमर्थः । घृते उक्तप्रकारेण देवतापीठमभ्यर्च्य तत्र सावरणं देवमिष्ट्वा बहिरग्निं प्रतिष्ठाप्य तत्रापि ब्राह्मीरसेन देवपीठमभ्यर्च्य हुत्वा तत्सम्पाताज्येनाऽऽप्लुतं कुर्यादिति । निपीतमिति । शुचिना प्रातरिति शेषः ।

तन्त्रान्तरोक्तं यन्त्रमुच्यते—

अथ मेधाकरं ज्ञानवाक्सिद्धिकविताकरम् ।
वक्ष्येऽहं दक्षिणामूर्त्तियन्त्रं सर्वार्थसाधकम् ॥
दन्तपत्रदलोपेतं पङ्कजं भूर्जचर्मणि ।
दूर्वाग्रैः पशुपित्ताढ्यैर्लिखेच्च कर्णिकोदरे ॥
साध्याख्यां प्रविलिख्याऽथ पत्रेष्वानुष्टुभं लिखेत् ! ।
तद्बहिः पृथिवीगेहं तत्कोणे नकुलीश्वरम् ॥
तस्मिन्नावाह्य संपूज्य देवं सन्तर्प्य धारयेत् ।
तस्य हस्तगतं सद्यो ब्रह्मज्ञानादिकं भवेत् ॥ इति ॥ २६ ॥

ब्राह्मी, सेंधा नामक, सफेद सरसों, वचा, कुष्ठ, पीपर, नागरमोथा, तेजपत्ता, इलायची तथा केशर का चूर्ण कर २४ पल ब्राह्मीरस तथा घृत सब मिलाकर अग्नि में पकावे । जब घृत मात्र शेष रह जाय तो उसे उतार लेवे । इस प्रकार ब्राह्मीरस में पकाये गये घृत को हाथ से स्पर्श कर दस हजार जप कर उसे अच्छी तरह सिद्ध करे और प्रतिदिन उसे शुद्ध रीति से पवित्र हो पीता रहे, तो कविता की क्षमता हो जाती है, कान्ति बढ़ती है, अनेक प्रकार की बाधाओं से रक्षा होती है । आयु, श्री तथा धैर्य प्राप्त होता है ॥ २५-२६ ॥

मन्त्रान्तरम् । ऋष्यादिकथनम्

प्रणवो हृदयं पश्चात्ततो भगवते पदम् ।
ङेयुतं दक्षिणमूर्त्तिं मह्यं मेधामुदीरयेत् ॥ २७ ॥
प्रयच्छ ठद्वयान्तोऽयं द्वाविंशत्यक्षरो मनुः ।
मुनिश्चतुर्मुखश्छन्दो गायत्री देवता मनोः ॥ २८ ॥
दक्षिणामूर्त्तिराख्यातो वेदव्याख्यानतत्परः ।
ताररुद्धैः स्वरैर्दीर्घैः षड्भिरङ्गानि कल्पयेत् ॥ २९ ॥

मन्त्रान्तरमाह प्रणव इति । हृदयं नमःपदम् । अत्रापि पूर्ववद्विसर्गेण सन्धिः । ङेयुतो दक्षिणामूर्त्तिः दक्षिणामूर्त्तये । मह्यं मेधामित्यत्र हसमेधामित्येके । प्रज्ञामेधामित्यन्ये । केचन मेधापदस्थाने प्रज्ञाशब्दमाहुः । इदं तु स्वस्वगुरुसम्प्रदायानुसारेण बोद्धव्यम् । प्रणवान्तो नादो बीजं स्वाहा शक्तिः । नारदीये तु शक्तिरहस्येह

**वाग्भव इत्युक्तम् । ताररुद्धैरिति प्रणवसंपुटितैः । षड्भिर्दीर्घैः स्वरैः । आ ई ऊ ऐ औ अः एभिरित्यर्थः ॥ २७-२९ ॥**

अब **दक्षिणामूर्ति का अन्य मन्त्र** कहते हैं—प्रणव (ॐ), हृदय (नमः), उसके बाद 'भगवते', तदनन्तर 'दक्षिणामूर्त्तये', इसके बाद 'मह्यम् मेधां प्रयच्छ स्वाहा' कहे । यह ३२ अक्षर का मन्त्र हुआ ॥ २७-२८ ॥

इस मन्त्र के चतुर्मुख ब्रह्मा मुनि हैं, गायत्री छन्द है तथा दक्षिणामूर्त्ति देवता कहे गये हैं जो निरन्तर वेदों के व्याख्यान में तत्पर रहते हैं ॥ २८-२९ ॥

प्रणव से संपुटित दीर्घ स्वर 'आ ई ऊ ऐ औ अः' इनसे अङ्गन्यास करना चाहिए ।

**विमर्श**—यथा—'ॐ आँ ॐ इति हृदये, 'ॐ ईं ॐ शिरसे स्वाहा' इति शिरसि, इत्यादि ॥ २९ ॥

**अथवा मनुसम्भूतैः पदैर्वा कल्पयेत् क्रमात् ।**
**पूर्वोक्तवटमूलस्थं चिन्तयेन्मन्त्रनायकम् ॥ ३० ॥**

**अथवेति । अत्र प्रणवाद्यैर्नमोऽन्तैः षड्भिः पदैः षडङ्गमिति परमगुरवः । अक्षरन्यासस्तु नारदीये—**

**शिरोललाटहृदयनासागण्डरदद्वये ।**
**जिह्वानोग्रे गले बाह्वोर्हन्नाभ्यन्धुगुदोरुषु ।**
**जानुजङ्घापार्ष्णिपादे सर्वसन्धिषु चान्तिमम् ॥ इति ।**

**वटमूलस्थमित्यत्र विशेषः । व्याख्यापीठे समासीनमाक्रान्तापस्मृतिं पदे । इति ॥ ३० ॥**

अथवा इस मन्त्र को ६ पदों में प्रविभक्त कर क्रमशः षडङ्ग न्यास करे । यथा—१. ॐ नमः । २. भगवते । ३. दक्षिणामूर्त्तये । ४. मह्यं । ५. मेधां । ६. प्रयच्छ स्वाहा—यह मन्त्र का छः भाग कहा गया । पूर्व में कहे गये (१९. १०-१८) वट के नीचे समस्त मन्त्रों के देवता दक्षिणामूर्त्ति का इस प्रकार ध्यान करे ॥ ३० ॥

दक्षिणामूर्त्तिध्यानम्

**स्फटिकरजतवर्णं मौक्तिकीमक्षमाला-**
**ममृत कलशविद्याज्ञानमुद्राः कराग्रैः ।**
**दधतमुरगकक्षं चन्द्रचूडं त्रिनेत्रं**
**विधृतविविधभूषं दक्षिणामूर्त्तिमीडे ॥ ३१ ॥**

**उरगकक्षं विलम्बबद्धसर्पम् । दक्षोर्ध्वात् दक्षाधस्तनं यावत् आयुधध्यानम् । तदुक्तम्—दक्षिणे चाऽक्षमालां च ज्ञानमुद्रां च पावनीम् । वामे पुस्तकमापूर्णपीयूषकलशं तथा ॥ इति ॥ ३१ ॥**

जिनके शरीर का वर्ण स्फटिक मणि तथा रजत के समान अत्यन्त उज्ज्वल है, जो अपने हाथों में मोती की जपमाला, अमृतपूर्ण कलश पुस्तक तथा ज्ञानमुद्रा धारण किये हुये हैं, जिन्होंने अपने कक्ष में लटकते हुये साँपों को धारण किया है, जिन्होंने चन्द्रमा को अपने मुकुट में तथा शरीर में नाना प्रकार के आभूषणों को धारण किया है ऐसे तीन नेत्र वाले दक्षिणामूर्त्ति की मैं स्तुति करता हूँ ॥ ३१॥

पुरश्चरणादिकथनम्

**लक्षमेकं जपेन्मन्त्रं ब्रह्मचारिव्रते स्थितः ।**
**जुहुयात् सघृतैः पद्मैर्दशांशं संस्कृतेऽनले ॥ ३२ ॥**

निरन्तर ब्रह्मचर्य धारण करते हुये इस मन्त्र का एक लाख जप करे पश्चात् सुसंस्कृत अग्नि में घृतयुक्त पद्मों से दशांश होम करे ॥ ३२ ॥

**पूर्वोदिते यजेत्पीठे वक्ष्यमाणेन वर्त्मना ।**
**अङ्गानभ्यर्चयेद्बाह्ये पत्रेष्वष्टसु पूजयेत् ॥ ३३ ॥**
**सरस्वतीं वाचयन्तीं पुस्तकं सस्मिताननाम् ।**
**ब्रह्माणं सनकं पश्चात् सनन्दनमतःपरम् ॥ ३४ ॥**
**सनत्कुमार नामानं शुकं व्यासं गणेश्वरम् ।**
**सिद्धगन्धर्वयोगीन्द्रविद्याधरगणान् बहिः ॥ ३५ ॥**
**बाह्ये लोकेश्वरानर्चेद्वज्राद्यायुधसंयुतान् ।**
**इत्थं पूजादिभिः सिद्धे मन्त्रेऽस्मिन् साधकोत्तमः ॥ ३६ ॥**
**वल्लभो जायते वाचां वाचस्पतिरिवाऽपरः ।**
**मन्त्रेणाऽनेन सञ्जप्तैर्विशुद्धैः सलिलैः सुधीः ॥ ३७ ॥**
**अभिषिञ्चेत् स्वशिरसि श्रियमारोग्यमाप्नुयात् ।**
**कण्ठमात्रे जले स्थित्वा जपेन्मन्त्रं सहस्रकम् ।**
**प्रत्यहं मण्डलादर्वाक् कवीनामग्रणीर्भवेत् ॥ ३८ ॥**

**बहिरिति चतुरस्रान्तर्दिक्षु ॥ ३५ ॥**

पूर्वोक्त पीठ पर (द्र. १८. १५-१९) आगे वर्णित विधि के अनुसार दक्षिणामूर्त्ति की पूजा करे । चारों दिशाओं में अङ्गों की पूजा करे । तदनन्तर आठ पत्रों पर किञ्चित् मन्द मन्द ईषद्धास्य करती हुई और पुस्तक वाँचती हुई सरस्वती, ब्रह्मा, सनक, सनन्दन, सनत्कुमार, शुक, व्यास और गणेश की पूजा करे । पत्रों के बाहर सिद्ध गन्धर्व योगीन्द्र और विद्याधर गणों की पूजा करे ॥ ३३-३५ ॥

उसके भी बाहर वज्रादि आयुधों से युक्त इन्द्रादि लोकपालों की पूजा करे । इस प्रकार की पूजा से जब यह मन्त्र सिद्ध हो जाय तो उत्तम साधक बृहस्पति के समान समस्त वाणियों का वल्लभ हो जाता है । इस मन्त्र के द्वारा जपे गये

विशुद्ध जल से साधक अपने शिर को अभिषिञ्चित करे तो श्री और आरोग्य प्राप्त करता है । कण्ठ मात्र जल में खड़े रह कर इस मन्त्र का एक सहस्र प्रतिदिन जप करे तो वह ४९ दिन के भीतर कवियों में अग्रगण्य हो जाता है ॥ ३६-३८ ॥

**गौर्या पार्श्वस्थया सार्द्धं श्रीकामी चिन्तयन् विभुम् ।**
**अयुतं प्रजपेन्मन्त्रं भूयसीं श्रियमाप्नुयात् ॥ ३९ ॥**

**गौर्येति । तद्ध्यानं यथा—**

**ऐश्यर्यकामी देवेशं देव्या सार्धं यजेत् सुधीः ।**
**उदयार्कसमप्रख्यां बन्धूकसदृशप्रभाम् ॥**
**आपीनतुङ्गकठिनकुचद्वयविराजिताम् ।**
**द्विनेत्रां द्विभुजां पद्महस्तां च जनमोहिनीम् ॥**
**देवस्य वामपार्श्वस्थां सञ्चिन्त्याऽऽराधयेन्नरः ।**
**तदा मन्त्रे विशेषोऽस्ति मेधास्थाने श्रियं न्यसेत् । इति ॥**

**श्रीकामी इत्यत्र श्रीपुटितत्वं ज्ञेयम् ॥ ३९ ॥**

लक्ष्मी चाहने वाला गौरी के पार्श्व में स्थित दक्षिणामूर्त्ति का ध्यान करते हुये श्री संपुटित इस मन्त्र का दस हजार प्रतिदिन जप करे तो बहुत अधिक संपत्ति प्राप्त करता है ॥ ३९ ॥

**भुञ्जानः प्रयतो मन्त्री गोमूत्रे शृतमोदनम् ।**
**भिक्षान्नमथवा मन्त्रमयुतद्वितयं जपेत् ।**
**अश्रुतान् वेदशास्त्रादीन् व्याचष्टे नात्र संशयः॥ ४० ॥**

**भुञ्जान इत्यत्र प्रयोगे ध्यानविशेषो यथा—**

**वामपाणिगतद्योतज्जातवेदसपुस्तकम् ।**
**व्याख्यामुद्राक्षमालाभ्यां विराजितकरद्वयम् ॥ इति ॥**

**भिक्षान्नमथवेति भुञ्जान इति सम्बन्धः । अश्रुतानित्यत्र बालापुटितत्वं ज्ञेयम् ॥ ४० ॥**

गो मूत्र में पकाये गये, ओदन को नियमपूर्वक खाने वाला अथवा भिक्षान्न भोजन करने वाला मन्त्रज्ञ बीस हजार इस मन्त्र का जप करे, तो वह अश्रुत भी वेद और शास्त्रादि की व्याख्या करने में समर्थ हो जाता है इसमें संशय नहीं ।

**विमर्श**—इस श्लोक में 'अश्रुतान्' पद आया है, इससे सूचित किया कि बाला महाविद्या से संपुटित उक्त मन्त्र का जप करे ॥ ४० ॥

**सिद्धगन्धर्वमुनिभिर्योगीन्द्रैरपि सेवितौ ।**
**ज्ञानवागर्थिनां प्रीत्यै कथितौ मन्त्रनायकौ ॥ ४१ ॥**

**सिद्धेत्यनेन वश्यादिप्रयोगा अपि सूचिताः । तदुक्तम्—**

**वश्यकामो महादेवं रक्तवर्णं विचिन्तयेत् ।**

वामोरुसंस्थितां देवीं चिन्तयेन् मदविह्वलाम् ।
प्रजासृष्टिनिमित्तं च चिन्तयन्तौ स्मरेच्छिवौ ॥ इति ॥

कल्पोक्तं यन्त्रं लिख्यते—

भूर्जे रोचनया दशारसहितं पद्मं लिखेत्कर्णिका-
मध्ये तारलिपौ ससाधकनराभिख्यं मनुं द्वन्द्वशः ।
पत्रेष्वन्त्यदलेऽपि मन्त्रलिपिभिः संवेष्टयेद्बाह्यतः
सम्पूज्याऽथ जपेन तस्य फलितं कर्णेन सर्वज्ञताम् ॥
यात्येतेन च साधयेदनुदिनं स्तम्भादिकं वश्यकृद्य-
द्यद्वाञ्छितमन्यदत्र सुधियः कामानिहाऽमुत्र च । इति ॥ ४१ ॥

यहाँ तक हमने दक्षिणामूर्त्ति के दो मन्त्र प्रवरों का व्याख्यान किया । ये दोनों ही सिद्ध गन्धर्व एवं मुनियों तथा योगीन्द्रों से सेवित हैं । ज्ञान, वाणी तथा अर्थ की अपेक्षा रखने वालों के लिये हमने यहाँ इनका व्याख्यान किया है ॥ ४१ ॥

नीलकण्ठमन्त्रः

लोहितोऽग्न्यासनः सद्यो बिन्दुमान् प्रथमं ततः ।
द्वितीयं वह्निबीजस्था दीर्घा शान्तीन्दुभूषितः ॥ ४२ ॥
तृतीयं लाङ्गली सर्गी मन्त्रो बीजत्रयान्वितः ।
नीलकण्ठात्मकः प्रोक्तो विषद्वयहरः परः ॥ ४३ ॥

पञ्चाङ्गन्यासः

हरद्वयं वह्निजाया हृदयं परिकीर्त्तितम् ।
कपर्दिने ठयुगलं शिरोमन्त्र उदाहृतः ॥ ४४ ॥
नीलकण्ठाय ठद्वन्द्वं शिखामन्त्र उदाहृतः ।
कालकूटपदस्याऽन्ते विषभक्षणङेयुतम् ॥ ४५ ॥
हुँ फट् कवचमादिष्टं विद्वद्भिर्नीलकण्ठिने ।
स्वाहान्तमस्त्रमेतानि पञ्चाङ्गानि मनोर्विदुः ॥ ४६ ॥
मूर्ध्नि कण्ठे हृदम्भोजे क्रमाद्बीजत्रयं न्यसेत् ।
ततः समाहितो भूत्वा नीलकण्ठं विचिन्तयेत् ॥ ४७ ॥

नीलकण्ठमन्त्रमाह लोहित इति । लोहितः पः अग्नी रेफः तदासनः तेन प्र । सद्य ओ बिन्दुश्च तेन प्रों । दीर्घा नकारः वह्निबीजं रेफः तत्स्था तेन न्र । शान्तिरी इन्दुर्बिन्दुः तद्युक्ता तेन न्रीं । लाङ्गली ठकारः । सर्गो विसर्गः तद्युक्तः । अरुणा ऋषिः त्रिष्टुप् छन्दः । आद्यं बीजम् अन्त्यः शक्तिः । विषद्वयं स्थावरजङ्गमम् । तद्धरमेतदिति विनियोग उक्तः । ङेयुतमिति चतुर्थ्येकवचनान्तम् ॥ ४२-४७ ॥

अब **लोहित नीलकण्ठ मन्त्र** कहते हैं—लोहित (प), जिसमें अग्नि (रेफ) का आसन हो तथा जो सद्य (औ) और बिन्दु से युक्त हो । इस प्रकार इस मन्त्र

का 'प्रों' प्रथम अक्षर हुआ । दीर्घ (नकार), जो वह्निबीज (रेफ) पर स्थित हो और शान्ति (ई) तथा बिन्दु से युक्त हो इस प्रकार 'न्रीम्' यह इस मन्त्र का दूसरा अक्षर हुआ ॥ ४२ ॥

लाङ्गली (ठकार), जो सर्गी (विसर्ग) से युक्त हो यह तीसरा अक्षर हुआ । इस प्रकार 'ठः' यह 'प्रों न्रीं ठः' तीन बीजों वाला नीलकण्ठात्मक मन्त्र स्थावर तथा जङ्गम दोनों प्रकार के विषों को दूर करने वाला है ॥ ४३ ॥

'हर स्वाहा' से हृदय का न्यास, 'कपर्दिने स्वाहा' से शिरःन्यास, 'नीलकण्ठाय स्वाहा' से शिखा का, 'कालकूटविषभक्षणाय' हुँ फट् से कवच का, 'नीलकण्ठिने स्वाहा' इससे अस्त्र न्यास करे । इस प्रकार इस मन्त्र का पञ्चाङ्ग न्यास करे, ऐसा विद्वानों का मत है ॥ ४४-४६ ॥

इसके अनन्तर पुनः शिर, कण्ठ तथा हृदय में उक्त तीनों बीज मन्त्रों से न्यास करे । पश्चात् एकाग्रचित्त हो नीलकण्ठ का इस प्रकार ध्यान करे ॥ ४७ ॥

नीलकण्ठशिवध्यानम्

**बालार्कायुततेजसं धृतजटाजूटेन्दु खण्डोज्ज्वलं**
**नागेन्द्रैः कृतभूषणं जपवटीं शूलं कपालं करैः ।**
**खट्वाङ्गं दधतं त्रिनेत्रविलसत्पञ्चाननं सुन्दरं**
**व्याघ्रत्वक्परिधानमब्जनिलयं श्रीनीलकण्ठं भजे ॥ ४८ ॥**

पुरश्चरणादिकथनम्

**लक्षत्रयं जपेन्मन्त्रं तद्दशांशं ससर्पिषा ।**
**हविषा जुहुयात् सम्यक् संस्कृते हव्यवाहने ॥ ४९ ॥**
**शैवे पीठे यजेदेनं मृत्युञ्जयविधानतः ।**
**एवं पूजादिभिः सिद्धे मनौ मन्त्री विषद्वयम् ॥ ५० ॥**
**नाशयेदचिरादेव नीलकण्ठ इवाऽपरः ।**
**मनुनाऽनेन सञ्जप्तैः कुम्भस्थैः सलिलैः शुभैः ॥ ५१ ॥**
**अभिषिञ्चेद्विषाक्रान्तं स विषान्मुच्यते ध्रुवम् ।**
**स्पृष्ट्वा जपेद्विषाक्रान्तं तत्क्षणं निर्विषो भवेत् ॥ ५२ ॥**
**बीजाभ्यां प्रथमान्ताभ्यां पार्श्वयोर्विषमाहरेत् ।**
**मध्येन मध्यगं सर्वं मनुनाऽनेन संहरेत् ॥ ५३ ॥**
**बहुना किमिहोक्तेन मन्त्रेणाऽनेन मन्त्रवित् ।**
**कालकूटविषं साक्षाद् भुक्तं स्यात्परमामृतम् ॥ ५४ ॥**

ध्यानमाह बालेति । आयुधध्यानं पूर्ववत् ॥ ४८-५४ ॥

सहस्रों बाल सूर्य के समान तेज वाले, जटाजूट में धारण किये गये इन्दु खण्ड के प्रकाश से उज्ज्वल वर्ण युक्त, सर्पों के आभूषणों से भूषित, जप माला, शूल, कपाल तथा खट्वाङ्ग हाथों में धारण किये हुये, त्रिनेत्र, पञ्चानन, मनोहर वेष वाले बाघम्बर पर पद्मासन से विराजमान श्री नीलकण्ठ का मैं भजन करता हूँ ॥ ४८ ॥

ऊपर कहे गये मन्त्र का तीन लाख जप करे, उसका दशांश घी मिश्रित हवि द्वारा सुसंस्कृत अग्नि में होम करे ॥ ४९ ॥

पुनः शैव पीठ में मृत्युञ्जय विधि में कहे गये विधान से (द्र. १८. १०५-११८) नीलकण्ठ का पूजन करे। इस प्रकार की पूजा से मन्त्र के सिद्ध हो जाने पर साधक इस मन्त्र के प्रयोग से दोनों प्रकार के विषों को शीघ्रातिशीघ्र इस प्रकार नष्ट कर देता है जिस प्रकार सदाशिव विष को नष्ट कर देते हैं। इस मन्त्र से अभिमन्त्रित कलश के जल से विषाक्रान्त पुरुष को अभिषिक्त करे तो वह शीघ्र ही विष से मुक्त हो जाता है, यदि विषाक्रान्त का स्पर्श कर इस मन्त्र का जप करे तो वह तत्क्षण विषमुक्त हो जाता है ॥ ५१-५२ ॥

इस मन्त्र के प्रथम और अन्त के दो बीजों से दोनों पार्श्व का तथा मध्य के बीज से शरीर के मध्यभाग का विष आहृत करे ॥ ५३ ॥

इस मन्त्र के विषय में बहुत कहने से क्या ? मन्त्रवेत्ता इस मन्त्र से यदि कालकूट नामक विष का भी भक्षण कर लेवे तो वह उसके लिये परमामृत जैसा हो जाता है ॥ ५४ ॥

### चिन्तामणिमन्त्रः

**अग्निः संवर्त्तकादित्यरानिलौषष्ठबिन्दुमत् ।**
**चिन्तामणिरिति ख्यातं बीजं सर्वसमृद्धिदम् ॥ ५५ ॥**

### ऋष्यादिकथनम्

**काश्यपो मुनिराख्यातश्छन्दोऽनुष्टुबुदाहृतम् ।**
**अर्द्धनारीश्वरः प्रोक्तो देवता जगतां पतिः ॥ ५६ ॥**
**रेफादिव्यञ्जनैः षड्भिः कुर्यादङ्गानि षट् क्रमात्॥ ५७ ॥**

**दक्षिणवक्त्रप्रधानमन्त्रानन्तरं उत्तरवक्त्रप्रधानं चिन्तामणिमन्त्रमाह अग्निरिति । अग्नी रेफः संवर्तः क्षः आदित्यो मः रः स्वरूपम् । अनिलो यः औ स्वरूपम् षष्ठ ऊ बिन्दुः एतद्युक्तं बीजम् । अत्र स्वरद्वयोच्चारणमपि गुरूपदेशतो ज्ञेयम् । रेफो बीजम् । ऊकारः शक्तिः । सर्वसमृद्धिदमित्यनेन पौष्टिके सकारादिः शुभ्रः । आकर्षण-वश्ययोर्यथोद्धृतो यथाध्यानं च ।**

**क्षोभे हकारादी रक्तः हंसादिरपि यथोक्त उच्चाटने यकारादिर्धूम्रः ।**
**स्तम्भने लकारादिः पीतः मोक्षार्थे हादिः रेफरहितो वासितः ॥**

**इति सूचयता विनियोगः उक्तः । एषां संयोग ऊर्ध्वाग्निस्थानेकात्पूर्वमित्युक्तेः । जगतां पतिरित्यनेनोमेशोऽपि देवतेत्युक्तम् । यदाहुराचार्याः—**

**छन्दोऽनुष्टुप् देवतोमेशः । यान्तैः षड्भिर्वर्णैरङ्गं वा देवताऽर्धनारीशः । इति ।**

**रेफादीति । कषयोगे क्ष इति क्षकारस्य व्यञ्जनद्वयम् । एवं रेफादि यान्तैः षड्भिः सबिन्दुकैः षडङ्गानीति सम्प्रदायविदः ॥ ५५-५७ ॥**

यहाँ तक दक्षिणवक्त्र प्रधान मन्त्रों का वर्णन किया । अब उत्तरवक्त्र प्रधान चिन्तामणि मन्त्र का वर्णन करते हैं—अग्नि (र्), सवंर्त्तक (क्ष्), आदित्य (म्), 'र' यह अक्षर, अनिल (य्) उस पर औ, तदनन्तर षष्ठस्वर ऊ जो बिन्दु से युक्त हो, यह चिन्तामणि (क्ष्म्यौं ? ) बीज है । यह सर्व समृद्धियों को देने वाला है ।

**विमर्श**—इसमें औकार तथा 'ऊ' इन दो स्वरों का कहाँ एवं किस प्रकार उच्चारण करना चाहिए इसका निर्देश नहीं है, अतः साधक को इसे गुरुपरम्परा द्वारा जानना चाहिए ॥ ५५ ॥

इस मन्त्र के कश्यप् ऋषि हैं, अनुष्टुप् छन्द है जगत्पति अर्धनारीश्वर इसके देवता कहे गए हैं ॥ ५६ ॥

इस मन्त्र के कहे गये 'र' आदि ६ व्यञ्जनाक्षरों से षडङ्गन्यास करे ।

**विमर्श**—यहाँ र, क्ष में दो व्यञ्जन क और ष तदनन्तर र और य इस प्रकार छः व्यञ्जनाक्षर हो जाते हैं ॥ ५७ ॥

**अर्धनारीश्वरध्यानम्**

**नीलप्रवालरुचिरं विलसत्त्रिनेत्रं**
**पाशारुणोत्पलकपालत्रिशूलहस्तम् ।**
**अर्धाम्बिकेशमनिशं प्रविभक्तभूषं**
**बालेन्दुबद्धमुकुटं प्रणमामि रूपम् ॥ ५८ ॥**

**अर्धनारीश्वरपक्षे ध्यानमाह नीलेति । अर्धाम्बिकेशं महेशार्धं नीलं पार्वत्यर्धं प्रवालरुक् । पाशोत्पले देव्यर्धहस्ताग्रे । अन्ये महेशार्धहस्तजे । प्रविभक्तभूषमिति । महेशांशे सर्पाद्यलङ्कृतं पार्वत्यंशे रत्नताटङ्काद्यलङ्कृतमिति । उमेशपक्षे ध्यानमाचार्योक्तं यथा—**

**अहिशशधरगङ्गाबद्धतुङ्गाप्तमौलि-**
**स्त्रिदशगणनताङ्घ्रिस्त्रीक्षणः स्त्रीविलासः ।**
**भुजगपरशुशूलान् खड्गवह्नी कपालं**
**शरमपि धनुरीशो बिभ्रदव्याच्चिरं वः ॥**

**इदं ध्यानं प्रयोगविषये । पुरश्चरणनित्यजपादौ तु अर्धनारीश्वरध्यानमेव ।**

**यदाहुराचार्याः— हावभावललितार्धनारिकं भीषणार्धमथवा महेश्वरम् ।**
**पाशसोत्पलकपालशूलिनं चिन्तयेज्जपविधौ विभूतये ॥ इति ॥ ५८॥**

अब **अर्धनारीश्वर का ध्यान** कहते हैं—जिनका आधा (नीलकण्ठमय) शरीर नीला है और आधा (पार्वत्यर्ध) मूँगे के सदृश लाल है । आधे नारीमय शरीर के हाथ में पाश तथा अरुणोत्पल है और आधे महेशमय शरीर में कपाल एवं त्रिशूल है, जिनके शरीर के आधे भाग में सर्पादि का आभूषण है और आधे भाग में रत्नजटित ताटंक का अलङ्करण है, जिनके मुकुट में बालेन्दु बँधा हुआ है, ऐसे अर्धाम्बिकेश अर्धनारीश्वर रूप को मैं प्रणाम करता हूँ ॥ ५८ ॥

पुरश्चरणादिकथनम्

**एकलक्षं जपेद्बीजमित्थं मन्त्री विचिन्तयेत् ।**
**अयुतं मधुना सिक्तैर्जुहुयात्तिलतण्डुलैः ॥ ५९ ॥**
**शैवोदिते यजेत्पीठे प्रागङ्गैः षड्भिरीरितैः ।**
**वृषाद्यैर्मातृभिः पश्चाल्लोकपालैस्तदायुधैः ॥ ६० ॥**
**एवमभ्यर्चयेद् देवमर्धनारीश्वरं परम् ।**
**तेजः कान्ति यशो लक्ष्मीवाचां भवति वल्लभः ॥ ६१ ॥**
**प्रासादाद्यं जपेन्मन्त्रमयुतं रोगशान्तये ।**
**स्वरावृतमिदं बीजं विगलत्परमामृतम् ॥ ६२ ॥**
**चन्द्रबिम्बस्थितं मूर्ध्नि ध्यातं क्ष्वेडगदापहम् ।**
**प्रतिलोमात्स्वरावीतं बीजं वहिनगृहे स्थितम् ॥ ६३ ॥**
**रेफादिव्यञ्जनोल्लासि षट्कोणाभिवृतं बहिः ।**
**भूतार्त्तस्य स्मृतं मूर्ध्नि भूतमाशु विनाशयेत् ॥ ६४ ॥**

**यजेत्पीठे । उमेशमित्यर्थः । परमर्धनारीश्वरम् एवमभ्यर्चयेदित्यन्वयः । एवमुपदेशमार्गेणेत्यर्थः । तत्र शैवं पीठं सम्पूज्यार्द्धनारीश्वरमावाह्याऽभ्यर्च्याऽङ्गैः प्रथमावरणं, राद्यष्टवर्णैर्द्वितीयं, मातृभिः तृतीयं, तदनु लोकपालैर्वज्राद्यैश्च ।**

**तदुक्तमाचार्यैः— आरभ्यादिज्वलनमथ दिक्संस्थैरष्टभिर्मनोर्वर्णैः ।**
**आराधयेच्च मातृभिरिति संप्रोक्तः प्रयोगविधिरपरः ॥ इति ॥**

**चन्द्रबिम्बस्थितं ठकारस्थं मूर्ध्नि ध्यातं विषार्त्तस्येति शेषः । वह्निगृह इति । ऊर्ध्वाग्रे त्रिकोणे । रेफादीति रकषमरयानि ॥ ५९-६४ ॥**

इस चिन्तामणि बीज मन्त्र का एक लाख जप करे और मधुमिश्रित तिल तण्डुल से दस हजार होम करे ॥ ५९ ॥

तदनन्तर शैव मन्त्र में कहे गये ह (द्र. १८. १५-१९) पीठ पर अर्धनारीश्वर का आवाहन कर पूजन करे । पूर्व में कहे गये (१९. ५७) अङ्गादि की प्रथम आवरण में र से लेकर ह एवं क्ष पर्यन्त आठ वर्णों का द्वितीयावरण में, समस्त ८ मातृकाओं की पूजा तृतीय आवरण में, फिर वज्रादि आयुधों सहित लोकपालों की चतुर्थ आवरण में पूजा करे ॥ ६० ॥

इस प्रकार जो अर्धनारीश्वर की पूजा करता है वह तेज, कान्ति, यश, लक्ष्मी तथा वाणी का प्रभु बन जाता है ॥ ६१ ॥

रोग शान्ति के लिये पूर्व में कहे गये (१८. ४९) प्रासाद मन्त्र से युक्त इस मन्त्र का दस हजार जप करे । अथवा स्वर से संपुटित इस बीज मन्त्र का, विषार्त्त के शिर पर अमृत धारा बहाते हुये चन्द्रमण्डल (ठ) का ध्यान करते हुए जप करे तो विष तथा रोग दोनों ही दूर हो जाते हैं ॥ ६२ ॥

त्रिकोण के ऊर्ध्वाग्रभाग में प्रतिलोम स्वरों से संपुटित चिन्तामणि बीज लिखे। पुनः बाहर से उसे आवृत करने वाले षट्कोणों में 'र क ष म र य' इन छः वर्णों को लिखे । पश्चात् इस मन्त्र का जप करते हुये भूतार्त्त के शिर पर इस यन्त्र को रख दे तो यह यन्त्र भूतों को नष्ट कर देता है ॥ ६३-६४ ॥

**बीजं चन्द्रगतं वीतं स्वरैः षोडशभिः क्रमात् ।**
**गलत्परसुधापूरं नेत्रे ध्यातं रुजं हरेत् ॥ ६५ ॥**
**एवमेव स्मृतं बीजं कुक्षौ शूलादिरोगहृत् ।**

**चन्द्रगतं ठकारगम् । एवमेवेति ठकारगं स्वरावृतं गलत्परसुधारूपमिति ॥ ६५-६६ ॥**

सोलह स्वरों से संपुटित चन्द्रगत बीज (ठ) वर्ण से गिरते हुये सुधापूर्ण धारा का विषार्त्त के नेत्र में ध्यान करे तो विषार्त्त का सारा विष दूर हो जाता है ॥ ६५॥

इसी प्रकार स्वर से संपुटित ठकार से गिरते हुये सुधापूर्ण रसधारा का कुक्षि (पेट) में ध्यान करे तो शूलादि रोग नष्ट हो जाते हैं ॥ ६६ ॥

**स्फोटे विषज्वरे दाहे मोहे शीर्षगदे भ्रमे ॥ ६६ ॥**
**बीजमेतत्तथा ध्यातं तत्तत्क्लेशान् विनाशयेत् ।**
**कुङ्कुमाभमिदं बीजं त्रिकोणगतमुज्ज्वलम् ॥ ६७ ॥**
**यस्य मूर्ध्नि स्मरेन्मन्त्री स वश्यो जायतेऽचिरात्।**
**ऊर्ध्वरेफस्थसाध्याख्यं बीजं वह्निगृहे स्थितम् ॥ ६८ ॥**
**वह्निगेहद्वयेनाऽग्नियुक्तकोणेन संवृतम् ।**
**प्रतिलोमस्वरावीतं चुल्लीस्थाने निवेशितम् ॥ ६९ ॥**
**वशीकरोत्यामरणादचिरेणैव दासवत् ।**

पुत्तलीप्रयोगः

**मधुरत्रययुक्तेन शालिपिष्टेन पुत्तलीम् ॥ ७० ॥**
**कृत्वा प्रतिष्ठितप्राणां विभज्य जुहुयाद्वशी ।**
**त्रिवासरमनेनैव साध्यस्तस्य वशीभवेत् ॥ ७१ ॥**

**तथेति । ठकारगं स्वरावृतं गलत्परसुधापूरमिति । ध्यातं विनाशयेदिति । तत्तत्-स्थाने । अग्नी रेफः । भूर्जपत्रादौ यन्त्रं कृत्वा चुल्ल्यां निखनेदित्यर्थः ॥ ६७-७० ॥**

**पुत्तलीमिति । द्वादशाङ्गुलाम् । प्रतिष्ठितप्राणामिति । त्रयोविंशे वक्ष्यमाण प्रकारेण ॥ ७०-७१ ॥**

स्फोट (फोडा, चेचक), विषज्वर, दाह, मूर्च्छा, शिरो रोग तथा भ्रम में इस बीज का ध्यान करे तो सारे क्लेश दूर हो जाते हैं । इस बीज का स्वरूप कुकुंम के समान रक्त अथवा पीत है । साधक इसे त्रिकोण में उज्वल रंग से रंग कर साध्य के शिर पर स्थापित कर इस मन्त्र का जप करे तो वह साध्य शीघ्र ही उसके वश में हो जाता है ॥ ६६-६८ ॥

त्रिकोण के मध्य में साध्य का नाम तथा कार्य लिख कर उस पर ऊर्ध्व रेफ लगावे । तदनन्तर इस बीज को लिखे, पुनः उसे षट्कोण से आवृत करे तथा उसके कोणों पर अग्नि बीज (रं) लिख देवे । पुनः उस पर प्रतिलोम क्रम से १६ स्वरों से आवृत कर देवे, फिर उसे चुल्ली स्थान में गाड़ देवे तो साध्य जीवन भर के लिये शीघ्रातिशीघ्र दास के समान वशीभूत हो जाता है ॥ ६८-७० ॥

त्रिमधुर मिश्रित शालि के चूर्ण की पुतली बनावे, फिर साध्य के नाम से उसमें प्राण प्रतिष्ठा करवावे । पश्चात् उसका विभाग कर तीन दिन पर्यन्त इस मन्त्र द्वारा उससे होम करे, तो साध्य उसके वश में हो जाता है ॥ ७०-७१ ॥

**मकारगतसाध्याख्यमनलस्थगदाह्वयम् ।**
**चन्द्रगं चतुरस्त्रेण टान्तकोणेन वेष्टितम् ॥ ७२ ॥**
**बीजं ताम्बूलपत्रस्थं प्रजप्तं मनुनाऽमुना ।**
**भक्षितं नाशयेत्सम्यक् शिरोरोगं न संशयः ॥ ७३ ॥**

**मकार इति मन्त्रस्थे । अनलस्थेति ऊर्ध्वरेफगतरोगनामयुक्तम् । 'विष-पावकोद्यत्' इत्यस्य व्याख्याने विषसम्बन्धिरेफ इति पद्मपादाचार्यैर्व्याख्यातम् । चन्द्रगं ठकारस्थम् । टान्तकोणेन चतुरस्त्रेण वेष्टितं बीजमिति सम्बन्धः ॥ ७२-७३ ॥**

ताम्बूल पत्र पर दो मकार के भीतर इस मन्त्र को लिखे । पुनः साध्य लिखे । तदनन्तर उसके रोग का नाम लिख कर ऊर्ध्व रेफ से युक्त करे । पुनः उसके चारों ओर प्रत्येक कोणों पर 'ठं ठं' लिख कर उससे मध्य में स्थित चन्द्र बीज (ठं) को वेष्टित कर देवे । तदनन्तर वह पान उस साध्य रोगी को खिला देवें तो रोगी के शिर की सारी व्यथा दूर हो जाती है इसमें संशय नहीं ॥ ७३ ॥

**लिखित्वा बन्धुजीवेन त्रिकोणं बीजगर्भितम् ।**
**अत्र वह्निं समाधाय सम्यगाराध्य देवताम् ॥ ७४ ॥**
**जुहुयात् कृतसम्पातं सर्पिषाऽष्टोत्तरं शतम् ।**

सम्पाताज्येन संसिक्ता त्रिलोहकृतमुद्रिका ।
विधृता भूतवेतालकृत्यारोगविनाशिनी ॥ ७५ ॥

बन्धुजीवपुष्परसेन । अन्यत्र बन्धुजीवपदेन जवापुष्पं पठ्यते । उक्तञ्च— 'जपात्रिकोणगे वह्नौ' इति । प्रपञ्चसारटीकाकारेण विज्ञानचन्द्रिकाकृता व्याख्यातम् —'बन्धुजीवं बन्धूकं जपा वा' इति । त्रिलोहकृतेति । षष्ठोक्तरीत्या । पद्मपादाचार्यै-र्मन्त्राक्षरसंख्यं लोहत्रयं ग्राह्यमित्युक्तम् ॥ ७४-७५ ॥

वन्धुजीव (दुपहरिया या जपाकुसुम) के पुष्पों के रस से त्रिकोण बनाकर उसके बीच में चिन्तामणि बीज लिखे । तदनन्तर उस त्रिकोण में अग्नि स्थापन कर उसमें अर्धनारीश्वर देवता की आराधना करे । फिर घी से १०८ बार होम करे तथा हुत शेष घृत किसी पात्र में छोड़ता जाय । फिर उस संस्रव के घृत से त्रिलौह की अङ्गूठी को अच्छी तरह संसिक्त कर देवे । पश्चात् उसे धारण करे तो भूत, वेताल, कृत्या तथा रोग अपने आप ही आप नष्ट हो जाते हैं ॥ ७४-७५ ॥

चिन्तामणियन्त्रम्

ऊर्ध्ववह्निरहितं मनुमेनं वह्निगेहयुगले परिलेख्य ।
अग्निमस्त्रिषु महीपुरवीतं यन्त्रमेतदुदितं ग्रहवैरि ॥ ७६ ॥

अग्निं रं । अस्त्रिषु षट्सु कोणेषु ॥ ७६ ॥

ऊर्ध्व रेफ से रहित इस चिन्तामणि मन्त्र को षट्कोणों पर लिखे । फिर उन षट्कोणों को भूपुर बना कर घेर देवे, तो इस प्रकार का यह यन्त्र ग्रहों का विनाशक होता है ॥ ७६ ॥

अग्निबीजलसत्कोणत्रिकोणलिखिते ध्रुवे ।
शरावे कपिलाज्याब्जसूत्रदीपं प्रविन्यसेत् ॥ ७७ ॥
घटेनैनं पिधायाऽस्य पृष्ठे यन्त्रमिदं लिखेत् ।
भूतार्त्तमत्र संस्थाप्य चिन्तामणिमनुं जपेत् ।
तमाविश्य क्षणान् मुञ्चेद् ग्रहः क्रूरोऽपि सर्वथा ॥ ७८ ॥

लिखिते इति । रक्तरजसेति ज्ञेयम् । उक्तञ्च नारायणीये—

तारे बीजाङ्ककोणाग्निगेहस्थे रजसाऽर्पिते ॥ इति ।

अपेक्षितार्थद्योतनिकायां व्याख्यातं रक्तेन रजसाऽग्निगेहं संश्लिष्य तत्-कोणेष्वग्निबीजं लिखित्वा तन्मध्ये प्रणवं लिखेदिति । एनं शरावम् । अस्य घटस्य । इदमित्युक्तम् । लिखेदिति जपया । अत्रेति । लिखितयन्त्रपृष्ठे । जपेदिति । ग्रस्तं संस्पृश्येति शेषः । मुञ्चेदिति । मन्त्राभिषेकेण । तदुक्तं नारायणीये—

तत् पिधाय घटेनाऽन्यत् स्वयन्त्रे जपया कृते ।
घटपृष्ठगते ग्रस्तं न्यस्य चिन्तामणिं जपेत् ॥

ग्रहावेशविनाशार्थं ग्रस्तं तेनाऽभिषेचयेत् ॥ इति ।

स्वेति चिन्तामणियन्त्रे । तेनेति चिन्तामणिमन्त्रेणेति लघुटीकायां व्याख्यातम् ॥ ७७-७८ ॥

भूर्जपत्र अथवा रजत पट्ट अथवा सुवर्णपत्र पर लाल रंग से त्रिकोण मन्त्र लिखे । मध्य में प्रणव लिखकर उसके तीनों कोणों पर तीन अग्निबीज (रम्) लिखे, तदनन्तर कपिला के घी में कमल सूत्र की बत्ती डाल कर वहाँ मिट्टी का दीपक जलाकर स्थापित कर देवे और उस दीपक को घड़े से ढक देवे । उस घड़े की पीठ पर पुन: यही मन्त्र लिखे । भूत बाधा से पीड़ित व्यक्ति को उस घटस्थ यन्त्र पर बिठा देवे और उसका स्पर्श करते हुये चिन्तामणि मन्त्र का जप करे तो क्रूर से भी क्रूर ग्रह उस घट में प्रविष्ट हो रोगी को शीघ्र छोड़ देता है ॥ ७७-७८ ॥

### मनोरथप्रदयन्त्रम्

**कृशानुभवनद्वये मनुमिमं लिखित्वा**
**पुनस्तदस्त्रिषु हलो लिखेत्स्वरयुगं ततः सन्धिषु ।**
**ध्रुवेण परिवेष्टितं धरणिगेहमध्यस्थितं**
**मनोरथफलप्रदं भवति यन्त्रमेतन्नृणाम् ॥ ७९ ॥**

तदस्त्रिषु तत्कोणेषु । हलो व्यञ्जनानि बीजस्थानि रकषमरयाः । स्वरयुगं बीजस्थं औ ऊ । ध्रुवेण प्रणवेन एकावृत्तिः । धरणिगेहास्त्रिषु नृसिंहबीजलिखितं ज्ञेयम् ॥ ७९ ॥

षट्कोण के मध्य में चिन्तामणि मन्त्र को लिखे । पुन: छः कोणों पर 'र क ष म र य' इन व्यञ्जनाक्षरों को लिखे तथा आठों सन्धियों में दो दो स्वर के क्रम से १६ स्वरों को लिखे । उसके चारों ओर प्रणव लिख कर परिवेष्टित करे । फिर चौकोर भूपुर से उसे घेर देवें । इस प्रकार से निर्मित यह यन्त्र मनुष्यों के मनोरथों को परिपूर्ण करता है ॥ ७९ ॥

### आपदग्रहघ्नयन्त्रम्

**षट्कोणान्तस्त्रिकोणे लिखतु मनुमिमं साध्यनामाक्षराढ्यं**
**षट्कोणेष्वङ्गमन्त्रान् वसुदलविवरेष्ट मन्त्राक्षराणि ।**
**वीतं बाह्ये कलाभिस्तदनु परिवृतं कादिभिर्यादिभि-**
**स्तत् क्षौणीबिम्बेन युक्तं नृहरिमनुयुतं यन्त्रमापद्ग्रहघ्नम् ॥ ८० ॥**

अष्टमन्त्राक्षराणीति । षट् हलः द्वौ स्वरौ एकैकवर्णरीत्या । कलाभिः षोडश स्वरैः । कादिभिर्यादिभिरित्यनेन मातृकया आवृत्तित्रयमुक्तम् । नृहरिमन्विति । नृसिंहबीजं भूगृहकोणेषु ।

तदुक्तम्— 'कुगेहास्त्रके नारसिंहम्' इति ॥ ८० ॥

षट्कोण के मध्य में त्रिकोण बनावे। उस त्रिकोण में साध्य के नामाक्षरों से युक्त इस मन्त्र को लिखे। पुनः षट्कोण के प्रत्येक कोणों में अङ्गमन्त्रों को लिखे। षट्कोण के बाहर अष्टदल में पूर्वोक्त 'र क ष म र य' इन छः व्यञ्जन वर्णों को तथा औ ऊ इन दो दीर्घस्वरों को लिखे, उसके बाद बाहर षोडश स्वरों से उसे घेर देवे। पुनः उसे भी क से लेकर म वर्ण तक पुनः य से लेकर क्ष वर्ण तक (इस प्रकार तीन आवृत्ती प्रथम स्वर, दूसरे कादि वर्ण, तीसरे यकारादि क्षान्त समुदाय) मातृका से घेर देवे। उसके चारों ओर भूपुर बनावे तथा उसके चारों कोणों पर नृसिंह का बीज मन्त्र (क्ष्रौँ) लिख देवे। इस प्रकार निर्मित यह यन्त्र आपत्तियों तथा ग्रह बाधा को दूर करता है ॥ ८० ॥

रोगकृत्यापहयन्त्रम्

**अस्मिन्यन्त्रे प्रतिष्ठाप्य कलशं प्रोक्तवर्त्मना।**
**कृतोऽभिषेकः स्यात् कृत्याभूतद्रोहादिशान्तिदः॥ ८१ ॥**

प्रोक्तवर्त्मनेति। षष्ठोक्तरीत्या ॥ ८१ ॥

इस मन्त्र में षष्ठ पटल में कही गई विधि के अनुसार कलश प्रतिष्ठापित करे। फिर रोगी का उस कलश जल से अभिषेक करे तो कृत्या, भूत-बाधा, शत्रुता आदि से शान्ति प्राप्त होती है ॥ ८१ ॥

**स्वरावृतममुं मनुं लिखतु टान्तमध्ये ततः**
**षडस्त्रिषु हुताशनं तदनु कादिवर्णैर्वृतम्।**
**धरापुरयुगेन तन्नृहरिबीजयुक्तास्त्रिणा**
**प्रवेष्टितमुदाहृतं दुरितरोगकृत्यापहम् ॥ ८२ ॥**

टान्तमध्ये ठकारमध्ये। षडस्त्रिषु षट्कोणेषु। हुताशनं रेफम् ॥ ८२ ॥

षट्कोण के मध्य में 'ठ' वर्ण से संपुटित इस मन्त्र को लिखे। षटकोणों में रेफ लिखे, उसके बाद क से लेकर क्ष वर्ण पर्यन्त वर्णों से उसे घेर देवे। दो भूपुर के प्रत्येक कोण में नृसिंह बीज (क्ष्रौँ) लिख कर उसे वेष्टित कर देवे तो इस प्रकार का यन्त्र पापरोग तथा अभिचारादि प्रयोगों को नष्ट कर देता है ॥ ८२॥

तुम्बुरुबीजम्

**क्षकारो माग्निपवनवामकर्णार्धचन्द्रवान्।**
**उक्तं तुम्बुरुबीजं तु येन सिध्यन्ति साधकाः॥ ८३ ॥**

तुम्बुरुबीजमाह क्षकार इति। क्षकारः म स्वरूपम्। अग्नी रेफः पवनो यः वामकर्ण ऊकारः अर्धचन्द्रो बिन्दुः तद्युक्तः। बीजशक्ती पूर्ववत् ॥ ८३ ॥

अब **तुम्बुरु बीज का वर्णन** करते हैं—क्षकार, पुन: म, अग्नि (रेफ) पवन (य) वामकर्ण ऊकार और अर्धचन्द्र (अनुस्वार) से युक्त हो । इस प्रकार 'क्ष म र यूँ' यह तुम्बुरु बीज का उद्धार कहा गया । इसके अनुष्ठान से साधक को सिद्धि प्राप्त होती है ॥ ८३ ॥

**षडङ्गन्यासादि**

**षड्दीर्घभाजा बीजेन षडङ्गानि प्रकल्पयेत् ।**
**क्षकाररहितं बीजं क्रमाज्जभसहान्वितम् ॥ ८४ ॥**
**चत्वारि देवीबीजानि देव्यो ज्ञेया इमाः क्रमात् ।**
**जयाख्या विजया पश्चादजिता चाऽपराजिता ॥ ८५ ॥**

**षड्दीर्घेति षडङ्गमन्त्रोद्धारः । न्यासं त्वग्रे वक्ष्यति । जभसह इति स्वरूपम् । एतानि क्रमेण क्षकारस्थाने योजितानि चत्वारि देवीबीजानि । तदुक्तं प्रयोगसारे—**

**बीजं जभसहोपेतं क्षेत्रस्थाने यथाक्रमात् ॥ इति ।**

**नारायणीयेऽपि—**

**मूलं जभसहोपेतं देवीबीजान्यमन्दिरम् । इति ॥**

**अपेक्षितार्थद्योतनिकायामेव बीजान्युद्धृतानि । ज्वलस्तु लेखकदोषवशात् क्वचित् दृश्यते ॥ ८४-८५ ॥**

साधक षड्दीर्घ (आ ई ऊ ऐ औ अं) से युक्त बीज से आगे कहे जाने वाले न्यास करे । क्षकार को छोड़कर उसके स्थान में 'ज भ स ह' एक-एक वर्ण से युक्त उपर्युक्त तुम्बुरु बीज के चार अक्षर क्रमश: चार बीज 'देवी बीज' कहे जाते हैं ॥ ८४ ॥

अब उन देवियों के नाम कहते हैं—जया, विजया, अजिता तथा अपराजिता —ये उन देवियों के नाम हैं ॥ ८५ ॥

**बीजमङ्गुलिषु न्यस्य करयोर्व्यापकं ततः ।**
**कनिष्ठादिषु विन्यस्येत् षडङ्गानि तलावधि ॥ ८६ ॥**

**बीजमिति मूलबीजम् । करयोर्व्यापकमिति । हस्ततलयोरत्रोपरि च मूलबीजेनेति शेषः । तदुक्तं नारायणीये—**

**न्यस्याऽङ्गुलिषु मूलं तद्धस्तयोर्व्यापकं न्यसेत् । इति ।**

**अङ्गुष्ठादिष्वङ्गुलीषु न्यसेद्बीजमित्यनेनैव करन्यासस्य प्राप्तत्वात् । कनिष्ठादिष्विति । विशेषविधानार्थं पुनरुक्तिः ॥ ८६ ॥**

मूल मन्त्र (द्र. १९. ८३) जिसमें क्षकार को क और ष दो भागों में विभक्त कर इस प्रकार पाँच वर्णों का एक एक अक्षर से अङ्गुलियों में न्यास करे । तदनन्तर दोनों हस्त बलो में संपूर्ण मूल मन्त्र पढ़ कर व्यापक न्यास करे ॥ ८६॥

देवं देवीः स्वबीजादि कनिष्ठादिषु विन्यसेत् ।
पादान् मूर्धावधि न्यस्येन् मुष्टिनाऽवयवेषु तत्॥ ८७ ॥
तलाभ्यां व्यापकं कुर्यान् मूर्धादिचरणावधि ।
षडङ्गानि ततो न्यस्येद्यथास्थानं विशालधीः ॥ ८८ ॥
देवं देवीर्यथापूर्वं मूर्धास्यहृदयाम्बुजे ।
नाभौ गुह्ये क्रमान् न्यस्येत् पश्चाद्देवं विचिन्तयेत् ॥ ८९ ॥

स्वबीजादीति । देवस्य मूलं देवीनां तूक्तानि चत्वारि जभसहान्वितमूलम् । मुष्टिना दक्षिणेन । अवयवेषु पादजानुगुह्यनाभिहृदयकण्ठमुखशिरःसु । एवमपेक्षितार्थ-द्योतनिकाकारोक्ततलमूलम् । उक्तञ्च नारायणीये—

मुष्टिनाऽवयवेषु च पादादि न्यस्य मूर्धादि हस्ताभ्यां व्यापकं न्यसेत् । इति ।

व्यापकं कुर्यादिति । मूलेनेति शेषः । विशालधीरित्यनेन शैवमुद्राभिः सहेत्युक्तम् । यथापूर्वमिति । स्वस्वबीजादि ॥ ८७-८९ ॥

'जं भ स ह' इन चार देवी बीजों से युक्त उपर्युक्त पाँच तुम्बुरु बीज से कनिष्ठादि अङ्गुलियों में न्यास करे । पुनः पैर से शिर पर्यन्त, पुनः मुष्टिका से तदवयव पाद, जानु, गुह्य, नाभि, हृदय, कण्ठ, मुख तथा शिर इत्यादि स्थानों में न्यास करे ॥ ८७ ॥

पुनः दोनों हस्ततल में मूल मन्त्र पढ़कर शिर से पैर पर्यन्त व्यापक न्यास करे । तदनन्तर विद्वान् साधक यथा यथा स्थान में षडङ्ग न्यास करे ॥ ८८ ॥

इसके बाद पुनः देव एवं देवी बीजों से पूर्व की भाँति शिर, मुख, हृदय, नाभि एवं गुह्य स्थानों में न्यास करे । पश्चात् तुम्बुरु देव का इस प्रकार ध्यान करे ॥ ८९ ॥

तुम्बुरुध्यानम् । पुरश्चरणादिकथनम्

रक्ताभमिन्दुशकलाभरणं त्रिनेत्रं
खट्वाङ्गपाशसृणिशुभ्रकपालहस्तम् ।
वेदाननं चिपिटनासमनर्घभूषं
रक्ताङ्गराग कुसुमांशुकमीशमीडे ॥ ९० ॥
लक्षमानं जपेन्मन्त्रं जुहुयात्सर्पिषाऽन्वितम् ।
वक्ष्यमाणे यजेत्पीठे देवमावरणैः सह ॥ ९१ ॥

ध्यानमाह रक्ताभमिति । सृणिरङ्कुशः ।
दक्षाधस्ताद्वामाधःपर्यन्तमायुधध्यानम् ॥ ९०-९१ ॥

रक्त वर्ण की कान्ति से युक्त चन्द्र खण्ड के आभूषण को धारण करने वाले त्रिनेत्र, हाथो में खट्वाङ्ग, पाश, अंकुश तथा शुभ्र कपाल लिये हुये, चार

मुखों से युक्त चिपटी नाक वाले बहुमूल्य भूषणों से भूषित, रक्तवर्ण का अङ्गराग, रक्तवर्ण का पुष्प तथा रक्त वर्ण का वस्त्र धारण करने वाले तुम्बुरु सदाशिव की मैं स्तुति करता हूँ ॥ ९० ॥

इस मन्त्र का एक लाख जप करे। घी युक्त हवि पदार्थों से उसका दशांश होम करे, तदनन्तर वक्ष्यमाण पीठ पर आवरण सहित देव की पूजा करे ॥ ९१ ॥

**स्वदेहे पीठकल्पनम्**

**नपुंसकस्वरैर्विद्वान् स्वराद्यन्तद्वयेन च।**
**धर्मादिकानधर्माद्यान् पादान् गात्राणि विन्यसेत् ॥ ९२ ॥**

**स्वदेहे पीठकल्पनमाह नपुंसकेति। अनुलोमविलोमगैरिति लेखक दोषवशात् प्रामादिकः। स्वराद्यन्तद्वयेन चेति पाठः। तदुक्तं नारायणीये—**

**नासादिभिः स्वराद्यन्तैश्चतुर्भिश्च क्रमाद् बुधः। इति।**

**प्रयोगसारेऽपि— क्लीबैराभ्याममोभ्यां च क्रमाद्धर्मादिपूजनम्। इति।**

**एवं षोडशापि स्वरा उपयुक्ता भवन्ति। अपेक्षितार्थद्योतनिकाकारेण एवमेव प्रयोगो लिखितः। तेन क्लीबाद्यान् धर्मादीन्। अआ अंअः एतदाद्यानधर्मादीन्। विन्यसेदिति चतुर्थोक्तस्थानेषु ॥ ९२ ॥**

विद्वान् साधक 'ऋ ॠ ऌ ॡ'—इन चार नपुंसक स्वरों से क्रमशः धर्म, ज्ञान, वैराग्य और ऐश्वर्य युक्त पादों में, पुनः क्रमशः 'अ आ अं अः' आदि अन्त के स्वरों से युक्त उन नपुंसक वर्णों से (अधर्मादि अर्थात् अधर्म, अज्ञान, अवैराग्य, अनैश्वर्य) आसन के चार गात्रो में न्यास करे। यथा—'अ आ अं अः ऋ अधर्माय नमः', 'इ ई ओ औ ॠ अज्ञानाय नमः' इत्यादि ॥ ९२ ॥

**इकारेण न्यसेत्पश्चात्तनुरूपान् गुणानथ।**
**शान्त्या तत्परवर्णेन मायाविद्यामये क्रमात् ॥ ९३ ॥**
**अधऊर्ध्वच्छदे न्यस्येदर्घीशेन ततोऽम्बुजम्।**
**सन्ध्यक्षरैर्यजेन्मन्त्री शक्तीर्वामादिकाः क्रमात्॥ ९४ ॥**

**गुणानिति। सत्त्वादीन् त्रिवर्णान्। शान्त्या ईकारेण। तत्परवर्णेन उकारेण। अर्घीशेन ऊकारेण। सन्ध्यक्षरैरिति। ए ऐ ओ औ एभिः। एषां यथा सन्धिसम्भवत्वं तथा द्वितीयपटले प्रतिपादितम् ॥ ९३-९४ ॥**

इसके पश्चात् इकार से पीठ के शरीर रूप सत्त्वादि गुणों का न्यास करे। उसके परे शान्ति (ईकार) वर्ण से, माया का उससे परे उकार वर्ण से विद्या का न्यास करें ॥ ९३ ॥

इसके पश्चात् अर्घीश (दीर्घ ऊकार) से नीचे, ऊपर फिर हृदयाम्बुज का न्यास करे। पश्चात् सन्ध्यक्षरों (ए ऐ ओ औ) से क्रमशः वामादि शक्तियों का न्यास करे ॥ ९४ ॥

वामां ज्येष्ठां तथा रौद्रीमिच्छां ज्वालास्वरूपिणीः ।
एवं प्रकल्पिते पीठे मूर्त्तिं मूलेन कल्पयेत् ॥ ९५ ॥
आवाह्य पूजयेद्देवं तस्यामावरणैः सह ।
अङ्गावृतेर्बहिर्देवीर्दिक्पत्रेषु समर्चयेत् ॥ ९६ ॥
जयाद्याः स्वस्वबीजेन रक्ता रक्तानुलेपनाः ।
अरुणांशुकपुष्पाढ्यास्ताम्बूलापूरिताननाः ॥ ९७ ॥
वल्लकीवादनपरा मदमन्मथपीडिताः ।

ज्वालास्वरूपिणीरिति पीठशक्तिध्यानम् । तदुक्तं नारायणीये—

ज्वलदनलशिखाभा भास्वराः शक्तयः स्युः । इति ।

मूलबीजमुच्चार्य तुम्बुरुयोगपीठाय नम इति पीठमन्त्रोऽपि सूचितः । एवं प्रकल्पिते पीठे इत्यनेन एवमिति येन प्रकारेण देहे पीठं प्रकल्पितं तेनैव क्रमेण मण्डलेऽपि पीठे परिकल्पित इत्यर्थः । तस्यामिति । मूर्त्तौ ॥ ९५-९८ ॥

वामा ज्येष्ठा रौद्री और इच्छा—ये वामादि शक्तियाँ हैं सभी ज्वाला स्वरूपिणी हैं । इस प्रकार न्यास युक्त स्वशरीर में 'तुम्बुरुयोगपीठाय नमः' से पीठ का पूजन कर उस पीठ में मूल मन्त्र से मूर्त्ति की कल्पना करे ॥ ९५ ॥

तदनन्तर उस मूर्त्ति में देवाधिदेव का आवाहन कर आवरणों के साथ पूजन करे । सर्वप्रथम अङ्गावरणों की और उसके बाहर दिक्पत्रों में जयादि देवियों की तत्तद् बीजाक्षरों से (द्र. १९. ८४) पूजा करे । ये सभी देवियाँ लाल वर्ण की हैं तथा रक्त अनुलेपन से युक्त हैं । अरुण वर्ण के परिधान तथा अरुण वर्ण के पुष्पों को धारण की हैं, सभी के मुख ताम्बूल से परिपूर्ण हैं ॥ ९७ ॥

ईशादिकोणेष्वभ्यर्चेद् दूतीर्बीजादिकाः क्रमात् ॥ ९८ ॥
दुर्भगां सुभगां भूयः करालीं मोहिनीमिमाः ।
बद्धाञ्जलिपुटाः किञ्चिदानम्रवदनाम्बुजाः ॥ ९९ ॥
देवीसदृशभूषाढ्या दूतीमन्त्रान् विदुः क्रमात् ।
चतुरः शादिकान् वर्णानर्धेन्दुकृतशेखरान् ॥ १०० ॥

ईशादिकोणेष्विति । ईशकोणमारभ्याप्रदक्षिणम् आग्नेयपर्यन्तमित्यर्थः । बीजादिकाः वक्ष्यमाणबीजादिकाः । देव्यो जयाद्यास्तत्सदृशभूषणाः । तदुक्तं नारायणीये—

तादृग्रूपाश्च दूत्यो रचितकरपुटाः किञ्चिदानम्रवक्त्राः ।

शर्वाद्यग्न्यन्तसंस्थाः । इति ।

शादिकानिति । शषसहान् । अर्द्धेन्दुर्बिन्दुः । तदुक्तं प्रयोगसारे—

**ऊष्माणो बिन्दुशेखरा दूतीनामिति तद्बीजम् । इति ।**

**नारायणीयेऽपि—बीजानि दूतीनामूष्माणो बिन्दुशेखराः । इति ॥ ९८-१०१ ॥**

सभी वीणा बजाने में संलग्न हैं तथा सभी गर्व एवं काम से पीडित हैं । इसके बाद ईशानकोण से प्रदक्षिणा आग्नेयकोण पर्यन्त वक्ष्यमाण बीजादि मन्त्रों से क्रमशः उनके दूतियों की पूजा करे ॥ ९८ ॥

दुर्भगा, सुभगा, कराली तथा मोहिनी—ये उन दूतियों के नाम हैं । सभी अञ्जलि बाँधे स्थित हैं तथा मुख कमल नीचे की ओर किये झुकी सी हैं । सभी के वस्त्र तथा आभूषण उन उन देवियों के सदृश हैं । उन दूतीयों के बीज मन्त्र क्रमशः अनुस्वार युक्त श ष स ह वर्ण हैं ॥ ९९-१०० ॥

**लोकपालान् यजेद् बाह्ये वज्राद्यायुधसंयुतान् ।**
**एवं यो भजते भक्त्या देवमुक्तेन वर्त्मना ।**
**न तस्य दुर्लभं किञ्चित् त्रिषु लोकेषु विद्यते ॥ १०१ ॥**

इसके बाद बाहर वज्रादि आयुधों से युक्त लोकपालों की पूजा करे । इस प्रकार ऊपर कहे गये मार्ग से जो देवाधिदेव की पूजा करता है उसे तीनों लोकों में कुछ भी दुर्लभ नहीं है ॥ १०१ ॥

**वायुवह्निपुरान्तस्थं बीजं स्मृत्वा जपेत् सुधीः ।**
**ज्वरभूतमहारोगा नश्यन्ति तेन तत्क्षणात् ॥ १०२ ॥**

**वाय्विति । प्रथमपटलोक्तवायुमण्डलं तत्राग्निपुरं तदन्तश्च बीजमित्यर्थः । स्मृत्वा मूर्ध्नीति शेषः ॥ १०२ ॥**

प्रथम वायुमण्डल उसके भीतर अग्निपुर (द्र. १. २३) उसके भीतर इस बीज का साध्य के शिर पर स्मरण करते हुये जप करे तो उसके ज्वर भूतभय तथा महारोग तत्क्षण नष्ट हो जाते हैं ॥ १०२ ॥

**क्रुद्धस्य हृदये ध्यात्वा जपेद् बीजमनन्यधीः ।**
**स वश्यो जायते शीघ्रं मन्त्रस्याऽस्य प्रभावतः ॥ १०३ ॥**
**हृद्रोगे कामलारोगे विष्टम्भे श्वासकासयोः ।**
**एतज्जप्तं जलं प्रातः पिबेत्तद्रोगशान्तये ॥ १०४ ॥**

**वश्यो जायत इत्यत्र कामबीजादित्वम् । रोगशान्तये इत्यत्र नृसिंह-बीजादित्वम् ॥ १०३-१०४ ॥**

साधक अपने हृदय में क्रुद्ध हुये देवाधिदेव का ध्यान कर एकाग्रचित्त हो कामबीज सहित इस मन्त्र का जप करे तो इस मन्त्र में यह शक्ति है कि वह साध्य को वश में तत्क्षण कर लेता है ॥ १०३ ॥

हृद्रोग, पाण्डुरोग, गठिया तथा श्वास, कास—इन सभी रोगों की शान्ति के लिये नृसिंह बीज (क्षौँ) सहित इस मन्त्र से अभिमन्त्रित जल प्रातःकाल पीवे तो रोग शान्त हो जाता है ॥ १०४ ॥

**कृत्वा नवपदात्मानं मण्डलं तत्र शोभनान् ।**
**कलशान् स्थापयेन्मन्त्री नव पूर्वोक्तलक्षणान् ॥ १०५ ॥**
**मध्ये देवं यजेत्सम्यक् देवीः पूर्वोक्तकुम्भगाः ।**
**इष्ट्वा कोणस्थिता दूतीरभिषिञ्चेत् पतिव्रताम् ॥ १०६ ॥**
**नारी सा लभते पुत्रं बन्ध्याऽपि किमुताऽपरा ।**
**भूतकृत्याग्रहद्रोहशान्तिदः सम्पदावहः॥ १०७ ॥**
**अभिषेकोऽयमाख्यातो राज्ञां विजयवर्द्धनः॥ १०८ ॥**

**नवपदान्वितं नवनाभं तृतीयोक्तम् । पूर्वोक्तेति । षष्ठोक्तम् । कोणस्थिता ईशादि। लभते पुत्रमित्यत्र मायाबीजादित्वम् । विजयवर्द्धन दुर्गाबीजादित्वं ज्ञेयम् ॥ १०५-१०८ ॥**

नवपद का शोभायुक्त मण्डल निर्माण करे, उस पर पूर्वोक्त लक्षणयुक्त (द्र. ६. ९२-९७) नव कुम्भ स्थापित करे । मध्य कलश में देवाधिदेव की पूजा करे । पूर्वादि दिशाओं में जयादि देवियों की (द्र. १९. ९७) तथा कोणों में कराली आदि दूतियों (द्र. १९. ९९) की पूजा करे । पुनः उन कुम्भों से पतिव्रता स्त्री का अभिषेक करे ॥ १०५-१०६ ॥

इससे वह बन्ध्या भी स्त्री पुत्र प्राप्त करती है और की तो बात ही क्या ? । इस प्रकार का यह अभिषेक, भूतबाधा, अभिचार, ग्रहदोष, शत्रुद्रोहादि उपद्रवों को शान्त कर देता है, इतना ही नही संपत्ति भी प्रदान करता है ॥ १०७ ॥

यदि साधक इस प्रकार से राजा को अभिषिक्त करे तो उस राजा की सर्वत्र विजय होती है ॥ १०८ ॥

तुम्बुरुयन्त्रम्

**अन्तर्बीजं स्वरगणलसत्केसरं तस्य बाह्य**
**देवीदूतीमनुयुतदलं दिग्विदिक्षु क्रमेण ।**
**काद्यैर्वर्णैर्वृतमथ बहिर्भूमिगेहेन वीतं**
**यन्त्रं प्रोक्तं सकलसुखदं रोगकृत्याग्रहघ्नम् ॥ १०९॥**

**यन्त्रमाह अन्तरिति । अष्टदलं कमलं कृत्वा तत्कर्णिकायां मूलमालिख्य दिग्दलेषु देवीबीजानि विदिक्षु दूतीबीजानि क्रमेणेति पूर्ववल्लिखेत् ॥ १०९ ॥**

अब **तुम्बुरु का यन्त्र** कहते हैं—प्रथम अष्टदल कमल का निर्माण करे । उसकी कर्णिका में मूल मन्त्र लिखे । केशरों में स्वरों को लिखे । दिग्दलों में देवी

बीजों को तथा कोणों में दूती बीजों को लिखे । इसके बाद उसे ककारादि क्षान्त समुदाय वर्ण लिख कर आवृत करे । इसके बाद चारों ओर से भूपुर द्वारा उन वर्णों को घेर देवे । इस प्रकार निर्मित यह यन्त्र सब प्रकार का सुख प्रदान करता है तथा रोग कृत्या एवं ग्रह बाधा को विनष्ट करता है ॥ १०९ ॥

खड्गरावणमन्त्रः

**प्रणवो हृदयं पश्चात् ङेऽन्तं पशुपतिं पुनः।**
**तारो नमो भूतपदं ततोऽधिपतये ध्रुवम् ॥ ११० ॥**
**नमो रुद्राय युगलं खड्गरावणशब्दतः।**
**विहरद्वितयं पश्चात्सरनृत्ययुगं पृथक् ॥ १११ ॥**
**श्मशानभस्मार्चितान्ते शरीराय ततः परम्।**
**घण्टाकपालमालादिधरायेति पदं पुनः ॥ ११२ ॥**
**व्याघ्रचर्मपदस्याऽन्ते परिधानाय तत्परम्।**
**शशाङ्ककृतशब्दान्ते शेखराय ततः परम् ॥ ११३ ॥**
**कृष्णसर्पपदं पश्चात्ततो यज्ञोपवीतिने।**
**चलयुग्मं वल्गुयुगमनिवर्त्तकपालिने ॥ ११४ ॥**
**हनयुग्मं ततो भूतान् त्रासयद्वितयं पुनः।**
**भूयो मण्डलमध्ये स्यात् कटयुग्मं ततः परम् ॥ ११५ ॥**
**रुद्राङ्कुशेन शमय प्रवेशययुगं ततः।**
**आवेशययुगं पश्चाच्चण्डासिपदमीरयेत् ॥ ११६ ॥**
**धराधिपतिरुद्रोऽथ ज्ञापयेत्यग्निसुन्दरी।**
**खड्गरावणमन्त्रोऽयं सप्तत्यूर्ध्वशताक्षरः ॥ ११७ ॥**
**भूताधिपतये स्वाहा पूजामन्त्रोऽयमीरितः।**
**सद्यादिपञ्चह्रस्वाढ्यकान्तबीजादिकान् न्यसेत् ॥ ११८ ॥**

खड्गरावणमन्त्रमाह । प्रणव इति । ङेऽन्तं पशुपतिं पशुपतये । तारः प्रणवः । ततः अधिपतये । अत्र प्राक्तनेन सह सन्धिः । ध्रुवं प्रणवम् । पृथगिति सरसर नृत्यनृत्य । रुद्रो इति स्वरूपम् । अथाऽनन्तरमग्निसुन्दरी स्वाहा । अन्यत्र कुत्रापि न सन्धिः । प्रणवो बीजं स्वाहा शक्तिः । कान्तः खः ॥ ११०-११८ ॥

अब **खड्ग रावण मन्त्र का उद्धार** कहते हैं—प्रथम प्रणव (ॐ), इसके बाद हृदय (नमः), तदनन्तर चतुर्थ्यन्त पशुपति शब्द (पशुपतये), इसके बाद पुनः तार (ॐ), तदनन्तर 'भूत' यह पद, उसके बाद 'अधिपतये' शब्द, पुनः ध्रुव (प्रणव), उसके बाद 'नमो रुद्राय' यह दो पद, पुनः 'खड्गरावण' शब्द, उसके बाद दो बार विहर शब्द (विहर विहर), उसके बाद दो सर शब्द (सर सर) इसके बाद नृत्य युग (नृत्य नृत्य) शब्द, इसके बाद 'श्मशानभस्मार्चित शरीराय'

यह शब्द, उसके बाद 'घण्टामालाधराय' शब्द, पुनः 'व्याघ्रचर्मपरिधानाय' शब्द, इसके बाद 'शशांककृतशेखराय' शब्द, फिर 'कृष्णसर्पयज्ञोपवीतिने' शब्द, पुनः दो बार चल शब्द (चल चल), पुनः दो बार वल्गु शब्द (वल्गु वल्गु), पश्चात् 'अनिवर्त्तक पालिने', इसके बाद दो हन शब्द (हन हन), इसके बाद 'भूतान्' पश्चाद् दो बार त्रासय शब्द (त्रासय त्रासय), तदनन्तर 'मण्डलमध्ये कट कट' इसके बाद रुद्रांकुशेन 'शमय', तदनन्तर 'प्रवेशय प्रवेशय', 'आवेशय आवेशय', पश्चात् 'चण्डासि धराधिपतिरुद्र ज्ञापय स्वाहा' इतना कहे ।

**विमर्श**—इस प्रकार १७० अक्षरों के ११० से ११७ पर्यन्त श्लोक में कहे गये खड्गरावण मन्त्र का स्वरूप इस प्रकार होगा—'ॐ नमः पशुपतये ॐ नमो भूत अधिपतये ॐ नमो रुद्राय खड्गरावण विहर विहर सर सर नृत्य नृत्य श्मशान भस्मार्चितशरीराय घण्टाकपालमालादिधराय व्याघ्रचर्मपरिधानाय शशांककृतशेखराय कृष्णसर्पयज्ञोपवीतिने चल चल वल्गु वल्गु अनिवर्त्तकपालिने हन हन भूतान् त्रासय त्रासय मण्डलमध्ये कट कट रुद्रांकुशेन शमय प्रवेशय प्रवेशय आवेशय आवेशय चण्डासि धराधिपति रुद्र ज्ञापय स्वाहा ।' उक्त मन्त्र में भूत अधिपतये अलग अलग कहा गया है अतः १७० अक्षरों का मन्त्र जो श्लोक में दिया गया है वह ठीक ही है ॥ ११०-११७ ॥

'भूताधिपतये स्वाहा' यह पूजा का मन्त्र कहा गया है । सद्यादि पाँच ह्रस्व (ओ ए उ इ अ) से एवं बिन्दु से युक्त ख बीज से पञ्चाङ्गन्यास करे । यथा—'खों' इति हृदये इत्यादि ॥ ११८ ॥

### ईशानादिपञ्चमूर्त्तिन्यासः

**ईशानाद्याः पञ्चमूर्त्तीर्देहे वक्त्रेषु च क्रमात् ।**
**षड्दीर्घबिन्दुयुक्तेन कान्तेनाऽङ्गक्रिया मता ॥ ११९ ॥**

**ईशानाद्या इति पूर्वपटलोक्ताः । देह इति शिरोवदनहृद्गुह्यपादेषु । वक्त्रेष्विति । ऊर्ध्वादिपञ्चसु । कान्तेनेति । खकारेण ॥ ११९ ॥**

ईशानादि पञ्चमूर्त्तियों का न्यास शिर मुख, हृदय, गुह्य तथा पाद में करे, पुनः इन्हीं मूर्त्तियों का न्यास ऊर्ध्व तथा चारों दिशाओं के मुखों में करे । पुनः षड्दीर्घ (आ, ई, ऊ, ऐ, औ, अः) से तथा बिन्दु से युक्त ख बीज से षडङ्गन्यास करे । यथा—'खाँ' इति हृदये इत्यादि ॥ ११९ ॥

### सदाशिवध्यानम् । पुरश्चरणादिकथनम्

**घण्टाकपालसृणिमुण्डकृपाणखेट-**
**खट्वाङ्गशूलडमरूनभयं दधानम् ।**
**रक्ताङ्गमिन्दुशकलाभरणं त्रिनेत्रं**
**पञ्चाननाब्जमरुणां शुकमीशमीडे ॥ १२० ॥**

अयुतद्वितयं मन्त्रं जपित्वा तद्दशांशतः ।
पायसेन घृताक्तेन जुहुयात्तस्य सिद्धये ॥ १२१ ॥

आयुधध्यानं दक्षाद्यूर्ध्वयोराद्ये तदधस्तनयोरन्त्ये एवमन्तम् ॥ १२०-१२१ ॥

अब पुनः **ध्यान** कहते हैं—घण्टा, कपाल, अंकुश, नरमुण्ड, कृपाण, खेट खट्वाङ्ग, शूल, डमरूक एवं अभय धारण किये हुये, रक्त वर्ण की कान्ति से युक्त, इन्द्र कला का आभरण धारण करने वाले त्रिनेत्र एवं पाँच मुखों से युक्त रक्त वस्त्र धारण किये हुये सदाशिव की मैं स्तुति करता हूँ ॥ १२० ॥

उक्त मन्त्र का बीस हजार जप करे । तदनन्तर मन्त्र सिद्धि के लिये उसका दशांश घृतमिश्रित खीर से होम करे ॥ १२१ ॥

पञ्चाक्षरोदिते पीठे पूजयेत् खड्गरावणम् ।
बीजेन मूर्त्तिक्लृप्तिः स्यात् तत् कान्तं मनुबिन्दुमत् ॥१२२॥
अङ्गानि दलमूलेषु दूतीः पत्रेषु संयजेत् ।
चुलुकुण्डां प्रस्खलिनीं तृतीयां कृष्णपिङ्गलाम् ॥ १२३ ॥
फल्गुनीं टिरिटिल्लीं च पञ्चमीं मन्त्रमालिकाम् ।
सप्तमीं शङ्खिनी पश्चाच्चन्द्राङ्कितजटामिमाः ॥ १२४ ॥
पूर्वपत्रादि सव्येन खड्गरावणवल्लभाः ।
ऐन्द्रीं कौमारिकीं ब्राह्मीं वाराहीं वैष्णवीं पुनः ॥ १२५ ॥
वैनायकीं च चामुण्डां माहेशीं दिक्षु पूजयेत् ।
द्वारपालान् यजेद्दिक्षु द्वौ द्वौ प्रागादि देशिकः ॥ १२६ ॥
रौद्रपिङ्गलनामानौ द्वौ श्मशानविभीषणौ ।
दृढकर्णं भृङ्गिरीटिमुदीच्यामर्चयेत् पुनः ॥ १२७ ॥
आमर्दकमहाकालौ कोणपालान् यजेत् पुनः ।
कुम्भकर्णमशोकाख्यं भल्लाटं जातहारकम् ॥ १२८ ॥
इन्द्रादिकान् लोकपालान् सायुधान् पूजयेत् ततः ।
धूपदीपादिभिर्देवं प्रीणयित्वा महेश्वरम् ॥ १२९ ॥

पञ्चाक्षरोदिते शैवपञ्चाक्षरपीठे पूजा । बीजेनेति । अनन्तरं वक्ष्यमाणेन । तदिति बीजम् । मनुः औः । दूतीरिति । वक्ष्यमाणाः । चन्द्राङ्कितजटामित्यष्टमीम् । सव्येनेत्यप्रादक्षिण्यतः । उदीच्यामित्युत्तरेण सम्बध्यते । कोणपालानिति । आग्नेयादि । केशरेष्वङ्गपूजा ॥ १२२-१२९ ॥

पञ्चाक्षर में कहे गये पीठ पर (द्र. १८. १५-१९) खड्गरावण की पूजा करे वक्ष्यमाण बीजमन्त्र द्वारा मूर्त्ति की कल्पना करे । वह बीज मन्त्र ख पर औ तथा बिन्दु से युक्त कहा गया है इस प्रकार 'खौँ' यह बीज मन्त्र हुआ ॥ १२२ ॥

अष्टदल के मूल (केशरों) में अङ्गावरण की, तदनन्तर पत्र के मध्य में दूतियों की पूजा करनी चाहिए । चुलुकुण्डा, प्रस्खलिनी, तृतीया, कृष्णपिङ्गला, फल्गुनी, पाँचवीं टिरिटिल्ली, मन्त्रमालिका, शंखिनी पश्चात् आठवीं चन्द्रांकितजटा —ये ८ खड्गरावण की दूतियाँ कही गई हैं ॥ १२३-१२४ ॥

इसके बाद खड्गरावण की ८ पत्नियों की पूर्व दिग्दल से प्रदक्षिणा क्रम के अनुसार पूजा करे । ऐन्द्री, कौमारिकी, ब्राह्मी, वाराही, वैष्णवी, वैनायकी, चामुण्डा, माहेशी इनकी तत्तद्दिशाओं में पूजा करे । इसके बाद पूर्व दिशा के क्रम से आचार्य साधक दो दो द्वारपालों की पूजा करे ॥ १२६ ॥

रौद्र एवं पिङ्गल नामक दो द्वारपालों की पूर्व दिशा में, श्मशान एवं विभीषण नामक दो द्वारपालों की दक्षिण दिशा में, दृढकर्ण एवं भृङ्गिरीटि की पश्चिम दिशा में तथा आमदर्दक एवं महाकाल की उत्तर दिशा में पूजा करे ॥ १२७ ॥

इसके बाद कुम्भकर्ण, अशोक, भल्लाट एवं जातहारक इन कोणपालों की आग्नेयादि कोणों में पूजा करे ॥ १२८ ॥

तदनन्तर वज्रादि आयुधों के सहित इन्द्रादि लोकपालों की पूजा करे । इसके बाद धूप दीपादि उपचारों से महेश्वर को प्रसन्न करे ॥ १२९ ॥

**पञ्चक्रूरान्धसा बाह्ये ततो भूतबलिं हरेत् ।**
**एवं पूजादिभिः सिद्धे मन्त्रे मन्त्रविदां वरः ॥ १३० ॥**
**नाशयेत्सकलान् भूतान् कृत्याग्रहमहाभयान् ।**
**आदेशं तस्य कुर्वन्ति भूता भीता महात्मनः ॥ १३१ ॥**
**बहुना किमिहोक्तेन मन्त्रेणाऽनेन भूतले ।**
**सदृशो नास्ति मन्त्रोऽन्यो भूतनिग्रहसाधने ॥ १३२ ॥**

**॥ इति श्रीलक्ष्मणदेशिकेन्द्रविरचिते शारदातिलके**
**ऊनविंशः पटलः समाप्तः ॥ १९ ॥**



पञ्चक्रूरान्धसेति । अन्नदधिसक्तुहरिद्रालाजतिलरूपेण । तदुक्तमाचार्यैः— लाजतिलनक्तरजोदधिसक्त्वन्नानि भूतक्रूराख्यम् । इति ॥ १३०-१३२ ॥

**॥ इति श्रीराघवभट्टविरचित-शारदातिलकटीकायां सत्सम्प्रदायकृतव्याख्यायां पदार्थादर्शाभिख्यायामेकोनविंशतिः पटलः ॥ १९ ॥**



तत्पश्चात् पाँच क्रूर-अन्न १. भात सहित दही, २. सत्तू, ३. हरिद्रा, ४. लाजा एवं ५. तिल की भूतबलि बाहर देवे । इस प्रकार मन्त्रवेत्ता जब मन्त्र को सिद्ध करने में समर्थ हो जाता है तो वह समस्त भूत, कृत्या, ग्रह एवं महाभय को नष्ट करने में समर्थ हो जाता है । इन महात्मा खड्गरावण से भयभीत हुये भूतगण उनकी आज्ञा का पालन करते हैं ॥ १३०-१३१ ॥

इस विषय में अधिक क्या कहें इस मन्त्र के सदृश पृथ्वी में अन्य कोई मन्त्र भूतों का निग्रह करने में समर्थ नहीं है ॥ १३२ ॥

**॥ इस प्रकार शारदातिलक के उन्नीसवें पटल की डॉ० सुधाकर मालवीय कृत हिन्दी व्याख्या पूर्ण हुई ॥ १९ ॥**



# अथ विंशः पटलः

## अथ अघोर प्रकरणम्

अथाऽभिधास्ये विधिवदघोरास्त्रमनुत्तमम् ।
यस्य संस्मरणादेव सर्वे नश्यन्त्युपद्रवाः ॥ १ ॥
माया स्फुरद्वयं भूयः प्रस्फुरद्वितयं ततः ।
घोरघोरतरेत्यन्ते तनुरूपपदं पुनः ॥ २ ॥
चटयुग्मं तदन्ते स्यात् प्रचटद्वितयं ततः ।
कहयुग्मं वमद्वन्द्वं ततो बन्धयुगं पुनः ॥ ३ ॥
घातयद्वितयं वर्म फडन्तः समुदाहृतः ।
एकपञ्चाशदर्णोऽयमघोरास्त्रमहामनुः ॥ ४ ॥
अघोरोऽस्य मुनिः प्रोक्तश्छन्दस्त्रिष्टुबुदाहृतम् ।
अघोररुद्रः सन्दिष्टो देवता मन्त्रवित्तमैः ॥ ५ ॥
हृदयं पञ्चभिः प्रोक्तं शिरः षड्भिरुदाहृतम् ।
शिखा दशभिराख्याता तावद्भिः कवचं मतम् ॥ ६ ॥
वसुवर्णैः स्मृतं नेत्रं मासार्णैरस्त्रमीरितम् ।
मूर्धनेत्रास्यकण्ठेषु हृन्नाभ्यन्धूरुषु क्रमात् ॥ ७ ॥
जानुजङ्घापदद्वन्द्वे रुद्रभिन्नाक्षरैर्न्यसेत् ।
पञ्चभिश्च पुनः षड्भिर्द्वाभ्यामष्टभिरक्षरैः ॥ ८ ॥
चतुर्वर्णैः षडर्णैश्च करणैः करणैः पुनः ।
चतुर्भिः षड्भिरक्षिभ्यां वर्णभेदोऽयमीरितः ॥ ९ ॥

मन्त्रमुद्धरति मायेति । माया शक्तिबीजम् । तनुरूपेति स्वरूपम् । वर्म हुं । महामनुरित्यनेन कामनाविशेषे तत्तद्बोजान्तत्वमुक्तम् । यदाहुः—

हुमन्तः स्तम्भने मन्त्रः क्रोमाकृष्टौ समापने ।
वषडन्तः संवनने नमोऽन्तो विषनाशने ॥
ग्रहचौररिपुध्वंसे हुं क्रोमन्तो विधीयते ।
शक्त्यन्तश्चाऽखिलेष्टाप्त्यै क्षौमन्तो मारणे भवेत् ॥
फडन्तो भूतसंहारे मन्त्रोऽयं कल्पपादपः ॥ इति ।

ईश्वरकल्पे तु प्रस्फुरद्वयबन्धद्वयवर्जितः एकचत्वारिंशदक्षर उद्धृतः। मन्त्रस्थहलो बीजानि । स्वराः शक्तयः । हुं बीजं ह्रों शक्तिरिति पद्मपादाचार्याः । मन्त्रवित्तमैरित्युत्तरत्र सम्बध्यते । तेनाऽङ्गमन्त्रेषु एकादशभागेष्वपि प्रत्येकं प्रणवमायाबीजयोगः सूचितः। पद्मपादाचार्यसम्मतेः । तावद्भिर्दशभिः । वसुवर्णैरष्टार्णैः । मासार्णैर्द्वादशभिः । क्वचिदन्त्यार्णैरिति पाठः । तदा अवशिष्टाक्षरैरित्यर्थः । रुद्रभिन्नेति एकादशधा भिन्नैः । तमेव भेदमाह । पञ्चाभिरिति । करणैः चतुर्भिः ॥ १-९ ॥

अब मैं सर्वश्रेष्ठ अघोरास्त्र मन्त्र को विधिपूर्वक कहता हूँ जिसके स्मरण मात्र से मनुष्यों के सारे उपद्रव नष्ट हो जाते हैं ॥ १ ॥

अब **अघोरास्त्र मन्त्र का उद्धार** कहते हैं—माया (ह्रीँ) इसके पश्चात् दो स्फुर शब्द, इसके बाद दो प्रस्फुर शब्द, इसके बाद 'घोरघोरतर' शब्द, इसके बाद 'तनुरूप' शब्द, पुनः दो बार चट चट शब्द, उसके बाद प्रचट शब्द दो बार, पुनः कह शब्द दो बार, तत्पश्चात् वम शब्द दो बार, उसके बाद बन्ध शब्द दो बार, इसके बाद घातय शब्द दो बार, तदन्तर हुं फट्—यह इक्यावन अक्षरों का अघोर मन्त्र का उद्धार कहा गया ।

**विमर्श**—इसका स्वरूप इस प्रकार है—'ह्रीँ स्फुर स्फुर प्रस्फुर प्रस्फुर घोरघोरतर तनुरूप चट चट प्रचट प्रचट कह कह वम वम बन्ध बन्ध घातय घातय हुं फट्'—यह ५१ अक्षरों का अघोरास्त्र नामक महामन्त्र है ॥ २-४ ॥

इस महामन्त्र के अघोर ऋषि हैं, त्रिष्टुप् छन्द है, मन्त्रवेत्ताओं ने इसके देवता अघोर रुद्र को कहा है ॥ ५ ॥

पाँच अक्षरों से हृदय न्यास, ६ अक्षरों से शिरः न्यास, दश से शिखा, और उतने ही अक्षरों से कवच, ८ वर्णों से नेत्र तथा वारह अक्षरों से अस्त्र न्यास करना चाहिए । इसके पश्चात् १. शिर, २. नेत्र, ३. मुख, ४. कण्ठ, ५. हृदय, ६. नाभि, ७. लिङ्ग, ८. ऊरू, ९. दो जानु, १०. दो जङ्घा, तथा ११. दोनों पैर—इन ११ स्थानों में इस मन्त्र का ११ भाग कर न्यास करना चाहिए, वे भाग क्रमशः पाँच, छः दो, आठ चार छः, चार चार चार, छः और दो वर्णों के क्रम से समझना चाहिए ॥ ६-९ ॥

अघोरमन्त्रस्य ध्यानम्

**सजलघनसमाभं भीमदंष्ट्रं त्रिनेत्रं**
**भुजगधरमघोरं रक्तवस्त्राङ्गरागम् ।**
**परशुडमरुखड्गान् खेटकं बाणचापौ**
**त्रिशिखिनरकपाले बिभ्रतं भावयामि ॥ १० ॥**

ध्यानमाह सजलेति । दक्षैर्भुजैः परशुखड्गबाणशूलानि वामैरन्यान्येवमायुधध्यानम् ॥ १० ॥

अब **अघोर मन्त्र का ध्यान** कहते हैं—जलयुक्त बादल के समान जिनके शरीर की कान्ति हैं, जिनकी दंष्ट्रा अत्यन्त भयानक हैं जो तीन नेत्रों से युक्त तथा साँपों को धारण करने वाले हैं—ऐसे रक्त वस्त्र एवं रक्त अङ्गराग से भूषित परशु डमरू, खड्ग, खेटक, बाण, चाप, त्रिशूल तथा नर कपाल को धारण करने वाले अघोर का मैं ध्यान करता हूँ ॥ १० ॥

**अभिचारे ग्रहध्वंसे कृष्णवर्णो भवेद्विभुः ।**
**वश्ये कुसुम्भसङ्काशो मुक्तौ चन्द्रसमप्रभः ॥ ११ ॥**

**ग्रहध्वंसे ग्रहवैकृते । यदाहुः—'कृष्णोऽभिचारग्रहवैकृते च' इति । अभिचार इत्याद्युपलक्षणम् । तेन कामनाविशेषे ध्यानविशेषा अपि ज्ञेयाः । यदाहुः—**

**सहस्राब्धिरवं हस्तैर्धनुः पञ्चशतैरपि ।**
**सन्धायाकृष्य च शरान् विमुञ्चान्तमनारतम् ॥**
**धावन्तं रिपुसेनायां वमद्विद्युद्घनोपमम् ।**
**ज्वलत्पिङ्गोर्ध्वकेशं च गजचर्मावगुण्ठितम् ॥**
**ध्यायेन्नाशाय सैन्यानामरातीनां महास्वनम् ।**
**त्रिपादहस्तनयनं नीलाञ्जनचयोपमम् ॥**
**शूलासिशूचीहस्तं च घोरदंष्ट्राट्टहासिनम् ।**
**घोरापस्मृतिनाशाय ग्रहशान्त्यै विचिन्तयेत् ॥**
**धावन्तं वैरिणं पश्चादत्युग्रं सधनुःशरम् ।**
**ध्यायेदुच्चाटनायाऽरेः स तु देशान्तरं व्रजेत् ॥**
**खड्गं खेटं तथा घण्टां वेतालं शूलमेव च ।**
**कपालं चापि बिभ्राणं पिङ्गोर्ध्वकचभीषणम् ॥**
**भूतप्रेतादिनाशाय ध्यायेद्धीमाट्टहासिनम् ।**
**सीताब्जशीतांशुपुटमिन्दुकान्तेन्दुवर्चसम् ॥**
**आशाम्बरं व्याघ्रनखप्रमुखैर्बालभूषणैः ।**
**अलङ्कृताङ्गं द्विभुजं त्रिवर्षार्धकरूपिणम् ॥**
**कम्राङ्गं सुमुखं सौम्यं नीलकुञ्चितकुन्तलम् ।**
**स्मरन्नेवमघोरं यः स मृत्युविजयी भवेत् ॥**
**तप्तजाम्बूनदनिभं शूलखड्गवराभयम् ।**
**रक्तारविन्दवसतिं स्मरन्नुच्चैः श्रियं लभेत् ॥ इति ॥ ११ ॥**

ये अघोर प्रभु, मारण तथा ग्रहों के विनाश काल में कृष्ण वर्ण और वश्यकार्य में कुसुम्भ के सदृश तथा मुक्ति कार्य में चन्द्रमा के समान रूप धारण करते हैं ॥ ११ ॥

**लक्षमेकं जपेन्मन्त्रं घृतसिक्तैस्तिलैः शुभैः ।**
**तद्दशांशं प्रजुहुयान्मन्त्री मन्त्रस्य सिद्धये ॥ १२ ॥**

**शुभैरित्यनेनाऽवकरं दूरीकृत्य प्रक्षाल्य शोषितैरित्युक्तम् ॥ १२ ॥**

अब **पुरश्चरण** कहते हैं—साधक इस मन्त्र का एक लाख जप करे, पश्चात् उसका दशांश घृतसिक्त तिल से होम करे, जिससे साधक को मन्त्र सिद्ध हो जाता है ॥ १२ ॥

**शैवे संपूजयेत्पीठे षट्कोणान्तस्थपङ्कजे ।**
**अङ्गपूजां केसरेषु कृत्वा पत्रेषु तत्परम् ॥ १३ ॥**
**परशुं डमरुं खड्गं खेटं बाणं च कार्मुकम् ।**
**शूलं कपालं प्रयजेदष्टास्त्राण्यस्य देशिकः ॥ १४ ॥**
**दलाग्रेषु ततः पूज्या ब्राह्म्याद्याः प्रोक्तलक्षणाः ।**
**लोकेशान् पूजयेत्पश्चादायुधैः स्वैः समन्वितान् ॥ १५ ॥**

**सम्पूजयेद्देवमिति शेषः । षट्कोणेति । अष्टदलं पद्मं कृत्वा तदुपरि षट्कोणं विधाय चतुरस्त्रं चतुर्द्वारं कुर्यात् । प्रोक्तलक्षणाः षष्ठपटलोक्तस्वरूपाः ॥ १३-१५॥**

अब **यन्त्र निर्माण विधि** कहते हैं—शैवपीठ पर प्रथम अष्टदल कमल बनावे । उस पर षट्कोण, उसके बाद चार द्वारों वाला चतुरस्त्र निर्माण करे । इस प्रकार षट्कोण के मध्य में स्थित अष्टदल कमल पर साधक देवाधिदेव अघोर की पूजा करे ॥ १३ ॥

केशरों में अङ्गपूजा करे उसके बाद पत्रों पर परशु, डमरु, खड्ग, खेटक, बाण, धनुष, शूल और कपाल इन आठ अस्त्रों की पूजा करे । इसके बाद दल के अग्रभाग में पूर्वोक्त ब्राह्मी आदि (द्र. ६.१७-१९) देवियों की पूजा करे । इसके बाद वज्रादि अस्त्र धारण किये हुए इन्द्रादि दिक्पालों की पूजा करे ॥ १३-१५ ॥

**इति पूजादिभिः सिद्धे मन्त्रेणाऽनेन साधकः ।**
**इष्टान् प्रयोगान् कुर्वीत सिध्यन्ते नात्र संशयः॥ १६ ॥**
**क्रमात् सर्पिरपामार्गतिलसर्षपपायसैः ।**
**साज्यैः सहस्त्रं प्रत्येकं यामिन्यां जुहुयात् सुधीः ॥ १७ ॥**
**होमोऽयं नाशयेत् सद्यो भूतकृत्याद्युपद्रवान् ।**
**सितकिंशुकनिर्गुण्डीहेमापामार्गसम्भवैः ॥ १८ ॥**
**समिद्वरैः कृतो होमः पूर्ववद्भूतशान्तिदः ।**
**अपामार्गारग्वधयोः पञ्चगव्यसमुक्षिताः ॥ १९ ॥**
**समिधो जुहुयात् कृष्णपञ्चम्यां निशि संयतः ।**
**पृथक् सहस्त्रहोमेन भूतानां निग्रहो भवेत् ॥ २० ॥**
**क्रमात् सर्पिरपामार्गपञ्चगव्यहविर्घृतैः ।**
**हुत्वा सहस्त्रं प्रत्येकं पात्रे सम्पातयेत् सुधीः ।**
**सम्पातसर्पिषा साध्यं भोजयेद् भूतशान्तये ॥ २१ ॥**

**अपामार्गेति अपामार्गसमिधः । साज्यैरिति । षष्ठं द्रव्यमाज्यमित्यर्थः । हेम धत्तूरः । पूर्ववदिति । यामिन्यां प्रत्येकं सहस्रम् । पञ्चगव्यहविरिति । पञ्चगव्यसिद्ध-पायसमित्यर्थः । तदुक्तं क्रियाकालगुणोत्तरे तन्त्रे—**

**पञ्चगव्योद्भवं शुद्धं चरुं तद्वत् घृतं नवम् । इति ।**

**हुत्वा निशीति ज्ञेयम् ॥ १६-२१ ॥**

इस प्रकार पूजा जपादि के द्वारा मन्त्र सिद्ध हो जाने के पश्चात् साधक अपना अभिलषित काम्य प्रयोग करे । ऐसा करने से उसके मनोरथों की सिद्धि होगी इसमें संशय नहीं ॥ १६ ॥

घी, अपामार्ग, तिल, सफेद सर्षप, पायस इनमें घी मिला कर एक एक के क्रम से रात्रि काल में बुद्धिमान् साधक एक एक सहस्र होम करे ॥ १७ ॥

इस प्रकार से किया गया होम तत्क्षण भूत एवं कृत्यादि उपद्रवों को नष्ट करता हैं, सित किंशुक, निर्गुण्डी, धतूरा, अपामार्ग की लकड़ी से इस मन्त्र द्वारा किया गया होम पूर्ववत् भूत बाधा को शान्त करता है । अपामार्ग एवं आरग्वध की समिधा जो पञ्चगव्य में प्रक्षालित की गई हो उससे कृष्णपक्ष की पञ्चमी तिथि की रात्रि में साधक संयमपूर्वक पृथक् पृथक् एक एक हजार होम करे तो भूतों का निग्रह हो जाता है ॥ १८-२० ॥

क्रमशः घी, अपामार्ग और पञ्चगव्य में पकाये गये पायस—इनमें घी मिला कर एक एक द्रव्य से पृथक् पृथक् सहस्र संख्या में होम करे और आहुति शेष घृत किसी पात्र में छोड़ता जाय, फिर उस संस्रव को भूत बाधा की शान्ति के लिये साध्य को पिलावे तो भूत बाधा शान्त हो जाती है ॥ २१ ॥

**मध्ये शक्तिं ससाध्यां स्वरगणसहितां केसरेष्वष्टवर्गान्**
**पत्रान्तर्मन्त्रवर्णान् लिखतु गुणमितानग्रदेशेषु तद्वत् ।**
**वर्मास्त्रोल्लासिकोणे दहनपुरयुगे कल्पिते भूपुरस्थे**
**यन्त्रेऽस्मिन् प्राग्विधानात् कृतकलशविधिः सर्वदुःखापहारी ॥२२॥**

**यन्त्रमाह—मध्य इति । साध्येति । साधकादीनामुपलक्षणम् । अथवा साध्यते यत्तत् साध्यं तत्सहितम् । तेनाऽमुकस्याऽमुकं वशं कुरु कुरु । अयमर्थः साध्यशब्दसंगृहीतो भवति । अष्टदलं पद्मं कृत्वा तत्कर्णिकायां साध्यसाधककर्म-सहितं शक्तिबीजं स्वरावीतमालिखेत् ।**

**तदुक्तम्— हृल्लेखास्थितसाध्याक्षरविलसत्कर्णिकं कलावीतम् । इति ।**

**अष्टवर्गानिति । कचटतपयशलान् । गुणमितान् त्रिशः । मन्त्रवर्णान् स्फुराद्यान् चटचटान्तान् । अग्रदेशेषु पत्राग्रेषु । तद्वदिति त्रिशः । मन्त्रवर्णान् प्रचटाद्यान् घातयान्तान् । तद्बाह्ये परस्परव्यतिभिन्नं त्रिकोणद्वयं कृत्वा तत्कोणेषु वर्मास्त्रे लिखेत् । प्राग्विधानादिति षष्ठोक्तरीत्या । तदुक्तम्—**

मन्त्राक्षरत्रयोद्यद्दलमध्यदलाग्रकं च तद्बाह्ये ।
वह्निपुटास्त्रिसमाश्रितकवचास्त्रम् ॥ इति ॥

केचित्तु वर्मास्त्रोल्लासिकोणे दहनपुरयुगे मध्ये शक्तिमिति विप्रकृष्टान्वयेनऽष्टदल कर्णिकायां षट्कोणमाहुः । तदसम्बद्धम् । लिखिताचार्यवचनविरोधात् ॥ २२ ॥

अब **मन्त्र लिखने की विधि** कहते हैं—अष्टदल कमल बनाकर उसकी कर्णिका में साध्य साधक, तथा कर्म के सहित शक्ति बीज लिख कर षोडश स्वरों से उन्हें आवृत करे, केशरों पर क वर्ग च वर्ग टवर्ग तवर्ग पवर्ग यवर्ग शवर्ग तथा ल इन आठ वर्गों को लिखे, अष्ट पत्र के मध्य में मन्त्र के स्फुर स्फुर से ले कर चट चट शब्द पर्यन्त २४ अक्षरों को तीन तीन अक्षर के क्रम से लिखे । इसके बाद पत्र के अग्रभाग में मन्त्र के शेष प्रचट प्रचट से लेकर घातय घातय पर्यन्त चौबीस अक्षरों को पुनः तीन तीन अक्षरों के क्रम से लिखें । पश्चात् उस अष्टदल कमल के चारों ओर परस्पर व्यतिभिन्न षट्कोण बना कर 'हुं फट्' लिखे । तदनन्तर उस पर भूपुर निर्माण करे । पुनः इस यन्त्र को पूर्ववत् (६. ९२-१०० के अनुसार) कलश पर स्थापित कर पूजादि करे तो यह सभी प्रकार के दु:खों को हरण करता है ॥ २२ ॥

यन्त्रान्तरकथनम्

खट्कोणे शक्तिरन्तः स्फुरयुगलवृता प्रस्फुरद्वन्द्वकोणे
शिष्टैर्मन्त्रस्य वर्णैः रसकरणचतुःषट्चतुर्वेदवेदैः।
षड्भिः क्लृप्ताष्टपत्रं दहनपुरयुगेनावृतं वर्मफड्भ्यां
राजत्कोणेन वीतं धरणिपुरयुगं यन्त्रमाघोरमेतत् ॥ २३ ॥
क्षुद्रचौरग्रहव्यालभूतापस्मारनाशनम् ।
यन्त्रमेतत् समाख्यातं सर्वसम्पत्प्रदायकम् ॥ २४ ॥

यन्त्रान्तरमाह षडिति । एकाक्षरक्रमेण प्रस्फुरद्वन्द्वकोणे षट्कोणे अन्तर्मध्ये स्फुरयुगलवृता यथावत् साध्यसाधककर्मसहिता शक्तिर्लेख्या । शिष्टैरिति । घोराद्यैर्घातयान्तैः । दहनपुरयुगेनावृतमिति । बाह्ये । सर्वसिद्धिप्रदायकमित्यनेनैतदुक्तं भवति । यदाहुः— अथ शत्रुजयं वाञ्छन् घातयप्रपुटं रिपोः ।
नाम कृत्वा चिताभूमौ नियुतं प्रजपेन्मनुम् ॥
लवणोषणधूमाग्निसूरणोन्मत्तवारिभिः ।
सिक्तैः कारस्करफलैर्जुहुयादयुतं सुधीः ॥
उच्चाटे प्रस्फुरपुटं मोहने कहसंयुतम् ।
मंस्तम्भने चटपुटं वियोगे प्रचटेन तु ॥
वमेत्युन्मादने भूयो बन्धयुग्मेन बन्धने ॥ इति ॥

अथ चतुस्त्रिंशदक्षराघोरस्य यन्त्रमुच्यते—

अथो सप्तपङ्क्त्यारयुक्तं सरोजं ततः कर्णिकामध्यतारस्य मध्ये ।
... ... ... ... त्रयीसार संभिन्नसाध्याह्वयं स्यात् ॥

मनुं द्वन्द्वशः पत्रमध्येषु लिप्या वृतं यन्त्रराजं समाबध्य सूत्रैः ।
करे वा गले मस्तके वाथ कट्यां वहन्यः समग्रश्रियो भाजनं स्यात् ॥

तथैवाणिमाद्यैरलं विस्तरेण । इति ।

सप्तपङ्क्त्यारयुतं सप्तदशदलम् । मन्त्रः प्रथमपटले मदुक्तोऽनुसन्धेयः । द्विषड्व- अक्षरद्भिः (?) षडक्षरैर्वर्मास्त्रद्विठान्तैरङ्गम् । अस्याऽन्यत् सर्वं पूर्वमन्त्रवत् ज्ञेयम् । एकचत्वारिंशदक्षरस्य तु—

वेदषड्वेददिङ्नागषड्वर्णैः शक्तिपूर्वकैः ।
हुं फडन्तैः षडङ्गं स्यात् अन्यत् पूर्ववदीरितम् ॥ इति ॥ २३-२४ ॥

अब **अघोर मन्त्र का अन्य मन्त्र** कहते हैं—षट्कोण के प्रत्येक कोणों पर प्रस्फुर शब्द के एक एक अक्षर को क्रमशः दो बार लिखें, पुनः उसके भीतर स्फुर से संपुटित साध्य साधन कर्म तथा साधक के सहित शक्ति मन्त्र (ह्रीँ) लिखें। पुनः उसके चारों ओर बनाये गये अष्टदल कमल पर शिष्ट मन्त्र वर्ण अर्थात् घोर से लेकर घातय पर्यन्त ३८ अक्षरों को छः, चार, चार, छः, चार, चार, छः और छः वर्णों के क्रम से आठ भागों में प्रविभक्त कर प्रत्येक पत्रों पर लिखें, उस अष्टदल कमल को चारों ओर षट्कोण से आवृत कर उसके प्रत्येक कोणों पर हुं फट् लिख कर आवृत करे । उसके षट्कोण के चारों ओर दो भूपुर बना दे तो अघोर यन्त्र बन जाता है ॥ २३ ॥

यह अघोर यन्त्र क्षुद्र रोग, चोर, ग्रह, व्याल, भूत तथा अपस्मारजन्य बाधाओं को दूर करता है, और सब प्रकार की संपत्ति से परिपूर्ण करता है ॥२४॥

पाशुपतास्त्रमन्त्रः

**तारो वान्तो धरासंस्थो वामनेत्रेन्दुभूषितः।**
**पार्श्वो वकः कर्णयुतो वर्मास्त्रान्तः षडक्षरः॥ २५ ॥**
**मनुः पाशुपतास्त्राख्यो ग्रहक्षुद्रनिवारणः।**
**षड्भिर्वर्णैः षडङ्गानि हुं फडन्तैः सजातिभिः ॥ २६ ॥**

पाशुपतास्त्रमाह—तार इति । तारः प्रणवः । वान्तः शः धरा लः तत्संस्थः तेन श्ल । वामनेत्रम् ई इन्दुः बिन्दुः तेन श्लीं । पार्श्वः पः वकः शः कर्णयुत उकारयुतः तेन शु । ब्रह्मा ऋषिः गायत्री छन्दः । श्रीं बीजं हुं शक्तिः । ग्रहेत्यादि विनियोगोक्तिः । षड्भिर्वर्णैर्मन्त्रस्थैः । हुं फडन्तैरिति । प्रत्येकम् । हृदयाय नम इत्यादि जातिसहितैः ॥ २५-२६ ॥

अब **पाशुपतास्त्र मन्त्र का उद्धार** कहते हैं—तारः (प्रणवः), वान्त (शः), वामनेत्र (ईकार), इन्दु भूषित (अनुस्वार युक्त), धरा (ल=श्लीं), पार्श्व (पकार),

वक: (शकार), कर्णयुत: (उकार से युक्त=शु), वर्मास्त्रान्त (हुं फट्)—यह पाशुपतास्त्र का उद्धार कहा गया ॥ २५ ॥

**विमर्श**—इस प्रकार 'ॐ श्लीँ पशुः हुं फट्' यह ६ अक्षर का मन्त्र है ॥ २५ ॥

पाशुपताख्य नामक यह मन्त्र ग्रह बाधा तथा क्षुद्र रोगों का निवारण करता है । इस प्रकार हुं फट् अन्त वाले इस छः अक्षर के मन्त्र से प्रत्येक अक्षर का षडङ्गन्यास करना चाहिए ॥ २६ ॥

ध्यानम् पुरश्चरणादिकथनम्

**मध्याह्नार्कसमप्रभं शशिधरं भीमाट्टहासोज्ज्वलं**
**त्र्यक्षं पन्नगभूषणं शिखिशिखाश्मश्रूस्फुरन्मूर्धजम्।**
**हस्ताब्जैस्त्रिशिखं समुद्गरमसिं शक्तिं दधानं विभुं**
**दंष्ट्राभीमचतुर्मुखं पशुपतिं दिव्यास्त्ररूपं स्मरेत्॥ २७ ॥**

आयुधध्यानं तु दक्षाद्यूर्ध्वयोराद्ये तदधस्थयोरन्त्ये ॥ २७ ॥

अब **पाशुपतास्त्र मन्त्र का ध्यान का प्रकार** कहते हैं—जो मध्याह्नकालीन सूर्य के समान कान्ति से युक्त हैं, चन्द्रमा को धारण किये हुये, जिनका भयङ्कर, अट्टहास अत्यन्त उज्ज्वल है, जिनके तीन नेत्र हैं तथा जिनके शरीर में सर्पो का आभूषण सुशोभित हो रहा है जिनके ललाटस्थ अग्नि की शिखा से श्मश्रु तथा केश देदीप्यमान हो रहे हैं जो अपने कर कमलों में त्रिशूल, मुद्गर, तलवार, तथा शक्ति धारण किये हुये हैं ऐसे दंष्ट्रा से भयानक चार मुख वाले दिव्य स्वरूपधारी सर्वव्यापक पशुपति का स्मरण करना चाहिए ॥ २७ ॥

**वर्णलक्षं जपेन्मन्त्रं जुहुयात् तद्दशांशतः।**
**गव्येन सर्पिषा मन्त्री संस्कृते हव्यवाहने ॥ २८ ॥**
**शैवे पीठे यजेद्देवं प्रागङ्गैरष्टमातृभिः ।**
**इन्द्रादिभिर्लोकपालैर्वज्राद्यैरायुधैस्ततः ॥ २९ ॥**
**अनेन मन्त्रितं तोयं ग्रस्तस्य वदने क्षिपेत् ।**
**सद्यस्तं मुञ्चति क्रन्दन् ग्रहो मन्त्रप्रभावतः ॥ ३० ॥**
**अमुना मन्त्रितान् बाणान् विसृजेद् युधि भूपतिः।**
**जयेत् क्षणेन निखिलान् शत्रून् पार्थ इवापरः॥ ३१ ॥**

वर्णलक्षं षड्लक्षम् । मुञ्चतीत्यत्र नृसिंहबीजादित्वम् । जपेदित्यत्र दुर्गाबीजादित्वमित्यादि ज्ञेयम् ॥ २८-३१ ॥

**पुरश्चरण**—उपर्युक्त मन्त्र का छः लाख जप करना चाहिए और उसका दशांश, गौ के घी से संस्कृत अग्नि में होम करना चाहिए ॥ २८ ॥

पूर्वोक्त शैव पीठ पर पशुपति का अर्चन करना चाहिए। इसके बाद अङ्गों की, पुनः अष्टमातृकाओं की और तत्पश्चात् वज्रादि आयुधों के सहित इन्द्रादि लोकपालों की पूजा करनी चाहिए ॥ २९ ॥

इस मन्त्र से अभिमन्त्रित जल द्वारा ग्रहग्रस्त व्यक्ति के मुख पर यदि छींटा दिया जाए तो ग्रह चिल्लाता हुआ पुरुष को छोड़कर भागता है, ऐसा है इस मन्त्र का प्रभाव है ॥ ३० ॥

राजा इस मन्त्र से अभिमन्त्रित वाण को युद्ध स्थल में छोड़े तो वह अपर पार्थ के समान समस्त शत्रुओं पर विजय प्राप्त करता है ॥ ३१ ॥

क्षेत्रपालमन्त्रः

**वर्णान्त्यमौबिन्दुयुक्तं क्षेत्रपालाय हृन्मनुः।**
**ताराद्यो वसुवर्णोऽयं क्षेत्रपालस्य कीर्त्तितः॥ ३२ ॥**

**क्षेत्रपालमन्त्रमाह वर्णेति । वर्णान्त्यः क्षः । औ स्वरूपम् । हृन्नमःपदम् । वसुवर्णोऽयमिति । वसुवर्णत्वमनूद्य ताराद्यत्वं विधीयत इति ज्ञेयम् । ब्रह्मा ऋषिः गायत्री छन्दः । क्षौं बीजं आयेति शक्तिः । क्वचिदेकाक्षर एवोद्धृतः ।**

**तदुक्तं प्रयोगसारे—**

**औबिन्दुसंयुतं बीजं वर्णान्त्यं सर्वसिद्धिदम् । इति ।**

**अत्र विशेषः प्रयोगसारे—**

**भेदा एकोनपञ्चाशत् क्षेत्रपालस्य कीर्त्तिताः ।**
**मातृकाबीजभेदेन संभिन्ना नामभेदतः ॥**
**अजरश्चापकुम्भश्च इन्द्रसू (स्तु) तिस्ततः परः ।**
**ईडाचारश्चोल्कसंज्ञ ऊष्माद ऋषिसूदनः ॥**
**ऋमुक्तो लृप्तकेशश्च लृपकश्चैकदंष्ट्रकः ।**
**ऐरावतश्चौघबन्धुरौषधिघ्न (धीश)स्तथैव च ॥**
**अञ्जनश्चाऽस्त्रबाहु(वार)श्च कवलः खरुखानलः ।**
**गोमुखश्चैव घण्टादो ङणारश्चण्डचारणः ॥**
**छटाटोपो जटालाख्यो भङ्गारोऽथ ञङ्गश्चरः ।**
**टङ्कपाणिस्तथा चान्यष्ठाणबन्धुश्च डामरः ॥**
**ढक्कारवो णकर्णश्च तडिद्देहस्थिरस्तथा ।**
**दन्तुरो धनदश्चाऽथ नतिक्रान्तः प्रचण्डकः ॥**
**फट्कारो बीरसन्ध(ङ्घ)श्च भृङ्गाख्यो मेघभासुरः।**
**युगान्तो रौरवश्चाऽथ लम्बोष्ठो वसवस्तथा ॥**
**शुकनन्दः षडालाख्यः सुनामा हंध्र(म्रु)कस्तथा ।**
**एते भेदाः समाख्याता मातृकाक्षरयोनिजाः ॥**
**नाम यद्यस्य वर्णानां यो वर्णो मातृकान्तरे ।**
**दृश्यते प्रथमं तत्र तत्रायं क्षेत्रपालकः ॥**

**तत्र तत्र विशिष्टात्प्राभेदैरेतैर्व्यवस्थितः ।
ततो विशिष्टो यष्टव्यः क्षेत्रपालस्तु सर्वतः ॥
क्षेत्रपालमसम्पूज्य यः कर्म कुरुते क्वचित् ।
तस्य कर्मफलं हन्ति क्षेत्रपालो न संशयः ॥ इति ॥ ३२ ॥**

अब **क्षेत्रपाल का मन्त्र** कहते हैं—वर्ण का अन्त्य (क्ष) उस पर औ की मात्रा तथा अनुस्वार उसके बाद 'क्षेत्रपालाय नमः' यह पद, पुनः मन्त्र के आदि में प्रणव यह क्षेत्रपाल मन्त्र का उद्धार कहा गया ।

**विमर्श**—इस प्रकार ॐ क्षौँ क्षेत्रपालाय नमः' यह प्रणव को छोड़कर आठ अक्षर का मन्त्र कहा गया ॥ ३२ ॥

**षड्दीर्घभाजा बीजेन षडङ्गान्यस्य योजयेत् ।
ऋषिर्ब्रह्मा भवेदस्य गायत्रं छन्द ईरितम् ।
क्षेत्रपालो देवता पालयेति शक्तिरीरिता ॥ ३३ ॥**

**क्षेत्रपालध्यानम्**

**नीलाञ्जनाद्रिनिभमूर्ध्वपिशङ्गकेशं
वृत्तोग्रलोचनमुपात्तगदाकपालम् ।
आशाम्बरं भुजगभूषणमुग्रदंष्ट्रं
क्षेत्रेशमद्भुततनुं प्रणमामि देवम् ॥ ३४ ॥**

**बीजेनेति । मन्त्रद्वितीयेन ॥ ३३ ॥**

**नीलेति । नीलः अत एवाऽञ्जनाद्रिनिभः तम् । उपात्ते गृहीते हस्ताभ्यामिति शेषः । गदाकपाले । दक्षे गदा वामे कपालमित्यायुधध्यानम् । आशाम्बरं नग्नम् । 'कपालिनं गदापाणिम्' इति नारायणीये । 'करधृतोग्रगदाकपालम्' इति प्रयोगसारे । क्वचित् जटाकलापमिति पाठः ॥ ३४-३५ ॥**

षड्दीर्घ (आ ई ऊ ऐ औ अः) युक्त बीज (क्षकार) से युक्त षडङ्गन्यास करना चाहिए । क्षा क्षीँ क्षूँ, क्षैं, क्षौं, क्षः इनसे यथाक्रम षडङ्गन्यास करना चाहिए । इस मन्त्र के ब्रह्मा ऋषि हैं । गायत्री छन्द है । क्षेत्रपाल देवता हैं और 'पालय' यह शक्ति है ॥ ३३ ॥

**विमर्श**—यहाँ मूल में पालयेति के स्थान पर 'च लायेति' ठीक नहीं है । ३२ श्लोक की टीका में भी चिन्त्य आयेति है ।

अब **क्षेत्रपाल का ध्यान** कहते हैं—जो काले पहाड़ के सदृश हैं, जिनकी पीली पीली जटाएं ऊपर की ओर खड़ी हैं, जिनके गोल नेत्र अत्यन्त उग्र हैं, जिनके हाथ में गदा तथा कपाल है, जो सर्वथा वस्त्रहीन हैं और सर्पों का आभूषण धारण किये हुये हैं जिनके दाँत अत्यन्त भयानक हैं ऐसे अद्भुत शरीरधारी क्षेत्रपाल देवता को मैं प्रणाम करता हूँ ॥ ३४ ॥

पुरश्चरणकथनम्

लक्षमेकं जपेन्मन्त्रं जुहुयात्तद्दशांशतः।
चरुणा घृतसिक्तेन ततः क्षेत्रेशमर्चयेत् ॥ ३५ ॥
धर्मादिकल्पिते पीठे पूर्वमङ्गानि पूजयेत् ।
अनलाख्यमग्निकेशं करालं तदनन्तरम् ॥ ३६ ॥
घण्टारवं महाकोपं पिशिताशयसंज्ञकम् ।
पिङ्गलाक्षमूर्ध्वकेशं पत्रेषु परितो यजेत् ॥ ३७ ॥
प्रधानमूर्त्तिप्रतिमान्नानालङ्कारबन्धुरान् ।
लोकपालांस्तदस्त्राणि यथापूर्वं प्रपूजयेत् ॥ ३८ ॥

धर्मादिकल्पित इति चतुर्थोक्तप्रकारेण । न तु शक्तिपीठपूजा । महाकोपमिति महाक्रोधमिति ज्ञेयम् । प्रयोगसारनारायणीययोः तथोक्तेः । प्रधानमूर्त्तीत्यनलादीनां ध्यानम् ॥ ३५-३८ ॥

**पुरश्चरण**—उक्त क्षेत्रपाल मन्त्र का एक लाख जप करे, उसका दशांश घृत परिप्लुत पायस से होम करे । पश्चात् क्षेत्रपाल की पूजा करे ॥ ३५ ॥

पुनः धर्मादिकल्पित शिव पीठ पर सर्वप्रथम अङ्गों का अर्चन करे । उसके पाद पत्र के चारों दिशाओं एवं चारों कोणो में पूर्वादि क्रम से अनल, अग्निकेश, कराल, घण्टारव, महाकोप, पिशिताशय, पिङ्गलाक्ष तथा ऊर्ध्वकेश की पूजा करे ॥ ३६-३७ ॥

ये सभी प्रधानमूर्त्ति (क्षेत्रपाल) के समान शरीर वाले हैं और प्रधानमूर्त्ति के समान नाना अलङ्कारों से विभूषित हैं । इसके बाद लोकपालों की तथा उनके अस्त्रों की पूजा करे ॥ ३८ ॥

क्षेत्रपालबलिमन्त्रः

तस्मै सपरिवाराय बलिमेतेन निर्हरेत् ।
पूर्वमेहिद्वयं पश्चाद्विदुषि स्यात् पुरुद्वयम्॥ ३९ ॥
भञ्जयद्वितयं भूयो नर्त्तयद्वितयं पुनः ।
ततो विघ्नपदद्वन्द्वं महाभैरव तत्परम् ॥ ४० ॥
क्षेत्रपाल बलिं गृहणद्वयं पावकसुन्दरी ।
बलिमन्त्रोऽयमाख्यातः सर्वकामफलप्रदः ॥ ४१ ॥

सपरिवारयेत्यङ्गादिसहिताय । सर्वकामफलप्रद इति सिद्धः सन् । सिद्धिश्च सहस्रवारजपादित्यपेक्षितार्थद्योतनिकाकारः ॥ ३९-४१ ॥

**क्षेत्रपालबलिमन्त्र**—तदनन्तर परिवार सहित उन क्षेत्रपाल को 'एहि एहि विदुषि पुरु पुरु भञ्जय भञ्जय नर्त्तय नर्त्तय विघ्न विघ्न महाभैरव क्षेत्रपाल बलिं गृह्ण

गृह्ण' इस मन्त्र से बलि प्रदान करे, यह क्षेत्रपाल को बलि देने का मन्त्र है । इस मन्त्र द्वारा बलि देने से संपूर्ण कामनाओं का फल प्राप्त होता है ॥ ३९-४१ ॥

**सोपदंशं बृहत् पिण्डं कृत्वा रात्रिषु साधकः ।**
**स्मृत्वा यथोक्तं क्षेत्रेशं तस्य हस्ते बलिं हरेत् ॥ ४२ ॥**
**बलिनाऽनेन सन्तुष्टः क्षेत्रपालः प्रयच्छति ।**
**कान्तिं मेधां बलारोग्यतेजःपुष्टियशः श्रियः ॥ ४३ ॥**

उपदंशं व्यञ्जनम् । रात्रिषु । प्रहरादूर्ध्वम् । यथोक्तं पूर्वोक्तध्यानम् । नीलसारमेयारूढम् । हस्ते इति वामहस्तगतकपाले इत्यर्थः । तदुक्तं नारायणीये—

सिद्धेनाऽनेन मन्त्रेण तत्कपाले बलिं हरेत् ।
वामदोष्ण्यष्टदिक्स्थानामन्येषां चानलादिभिः ॥ इति ॥

प्रयोगसारेऽपि— अथवा प्राङ्गणे ध्यात्वा क्षेत्रेशं प्रोक्तलक्षणम् ।
शितिश्वानसमारूढं तत्कपाले बलिं हरेत् ॥ इति ॥

तत्र प्रयोगः । रात्रौ प्रहरादूर्ध्वं प्राङ्गणे गोचर्ममात्रं विलिप्य रक्तगन्धपुष्पाक्षतादीन् तत्र संस्थाप्य कराङ्गन्यासं कृत्वा मूलं दशधा जप्त्वा पीठं संपूज्य तत्र क्षेत्रपालमावाह्य उपचारान् कृत्वा सावरणमभ्यर्च्य विजनो भूत्वा बलिमन्त्रेण वामहस्तेन तत्कपाले त्रिर्बलिमुदकं च दत्त्वा अनलाय स्वाहेत्यादि मूर्त्तिभ्योऽङ्गेभ्यश्च सकृद्दत्वा हस्तं प्रक्षाल्य स्वयं देवः सन्नष्टोत्तरशतं मूलमावर्त्तयेदिति ॥ ४२-४३ ॥

व्यञ्जन युक्त भोजन का एक बहुत बड़ा पिण्ड बनाकर साधक एक प्रहर रात्रि के पश्चात् पूर्वोक्त रीति से नीलसारमेयारूढ भगवान् क्षेत्रपाल का ध्यान करते हुये उनके वामहस्तस्थित कपाल में उस पिण्ड को समर्पित करने की भावना करते हुये पिण्ड किसी स्थान में गिरा देवें ॥ ४२ ॥

इस प्रकार की बलि से सन्तुष्ट हुये क्षेत्रपाल साधक को कान्ति, मेधा, बल, आरोग्य, तेज, पुष्टि, यश और महाश्री प्रदान करते हैं ॥ ४३ ॥

आपदुद्धरणमन्त्रः

**उद्धरेद् वटुकं ङेऽन्तं आपदुद्धारणं तथा ।**
**कुरुद्वयं पुनर्ङेऽन्तं वटुकं तं समुद्धरेत् ॥ ४४ ॥**
**एकविंशत्यक्षरात्मा शक्तिरुद्धो महामनुः ।**
**अभीष्टफलसंसिध्यै कीर्त्तितः सुरपादपः ॥ ४५ ॥**

ऋष्यादिकथनम् । मूर्त्तिन्यासादि

**बृहदारण्यक ऋषिश्छन्दोऽनुष्टुबुदाहृतम् ।**
**आपदुद्धारणो देवो भैरवो देवता बुधैः ॥ ४६ ॥**

आपदुद्धरणमन्त्रमाह—उद्धरेदिति । वटुकं ङेऽन्तं वटुकाय । तथेति ङेऽन्तम् ।

**तेन आपदुद्धारणाय । शक्तिरुद्धः शक्तिबीजपुटितः । सुरपादपः साधकानां वाञ्छित-प्रदत्वात्कल्पतरुरित्यर्थः । भैरव ऋषिः गायत्री छन्दः । वं बीजं माया शक्तिः । वेष्टनीस्थोंऽशः क्वचिदधिकः ॥ ४४-४६ ॥**

अब **आपदुद्धारक वटुक के मन्त्र का उद्धार** कहते हैं—

चतुर्थ्यन्त वटुक शब्द (वटुकाय) इसके बाद पुनः चतुर्थ्यन्त आपदुद्धारण शब्द (आपदुद्धारणाय) तदनन्तर कुरु शब्द दो बार (कुरु कुरु) पुनः चतुर्थ्यन्त वटुक शब्द (वटुकाय) पुनः उसे शक्ति मन्त्र से संपुटित करे । इस प्रकार ह्रीँ वटुकाय आपदुद्धारणाय कुरु कुरु वटुकाय ह्रीँ) इक्कीस अक्षरों का वटुक मन्त्र उद्धृत किया गया । यह मनुष्यों की कामना पूर्ण करने के लिये कल्पवृक्ष के समान कहा गया है ॥ ४४-४५ ॥

इस मन्त्र के बृहदारण्यक ऋषि हैं तथा अनुष्टुप् छन्द कहा गया है । बुद्धिमानों ने समस्त आपत्तियों का उद्धार करने वाले श्री वटुक भैरव को इसका देवता कहा है ॥ ४६ ॥

**अङ्गुलीदेहवक्त्रेषु मूर्त्तीर्न्यस्येद्यथा पुरा ।**
**सद्यादिपञ्चह्रस्वाढ्य शक्तिबीजपुरः सरम् ॥ ४७ ॥**
**वकारं पञ्चह्रस्वाढ्यमीशानादिषु योजयेत् ।**
**षड्दीर्घयुक्तया शक्त्या वकारेण च तद्वता ॥ ४८ ॥**
**अङ्गानि जातियुक्तानि प्रणवाद्यानि कल्पयेत् ।**
**तस्य ध्यानं त्रिधा प्रोक्तं सात्त्विकादिविभेदतः ॥ ४९ ॥**

**अङ्गुलीति । अङ्गुष्ठाद्यङ्गुलीषु । देहेति । शिरोवदनहृद्गुह्यपादेषु । वक्त्रेष्विति । ऊर्ध्वप्राग्दक्षिणोदीच्यपश्चिमेषु । यथा पुरेति । ईशानाद्यानां देहे वक्त्रेषु च न्यासे तत्तदङ्गुलीभिर्न्यास इत्युक्तम् । सद्यादय ओकाराद्याः क्लीबवर्जिताः । ईशानादिष्विति । आदिशब्देन तत्पुरुषाघोरवामसद्याः । ह्रों वों ईशानाय नमः अङ्गुष्ठे इत्यादिप्रयोगः । तद्वता षड्दीर्घयुक्तेनेत्यर्थः । ॐ ह्रां वां हृदयाय नम इत्यादि प्रयोगः ॥ ४७-४९ ॥**

इसके बाद पाँचों अङ्गुष्ठादि अङ्गुलियों में शिर, मुख, हृदय, गुह्य एवं पादादि शरीर में तथा ऊर्ध्व, पूर्व, दक्षिण, उत्तर एवं पश्चिम के मुखों में पूर्ववत् मूर्त्तिन्यास सद्य आदि पाँच ह्रस्व (ओ ए ऊ इ अ) से युक्त व बीज मन्त्र से जिसके आदि में शक्ति बीज लगा हो न्यास करे ॥ ४७-४८ ॥

**विमर्श**—प्रयोग विधि यथा—अङ्गुष्ठादि अङ्गुलियों में 'ह्रीँ वों ईशानाय नमः, अङ्गुष्ठे—इसी प्रकार तत्पुरुष, अघोर, वामदेव तथा सद्योजात पद का सन्निवेश कर तत्तद् अङ्गुलियों में न्यास करे । देह में मूर्त्तिन्यास का प्रकार यथा—ह्रोँ वों ईशानाय नमः इति शिरसि, इसी प्रकार तत्तन्मूर्त्तियों का नाम सन्निविष्ट कर

पाँचों शिर इत्यादि शरीरावयवों में न्यास करे । इसी प्रकार मुखादि में यथा—ह्रौं वों ईशानाय नमः इति ऊर्ध्वमुखे... इत्यादि ।

इन न्यासों को करने के पश्चात् छः दीर्घ वर्णों (आ ई ऊ ऐ औ अः) से युक्त बीज तथा व बीज द्वारा हृदयादि न्यास करे, आदि में प्रणव लगावे ॥ ४८-४९ ॥

**विमर्श**—यथा 'ॐ ह्रां, वाँ हृदयाय नमः', 'ॐ ह्रीँ वीँ शिरसे स्वाहा' इत्यादि । इन वटुक भैरव का ध्यान सात्त्विक राजस तथा तामस भेद से तीन प्रकार का कहा गया है ॥ ४७-४९ ॥

वटुकभैरवस्यसात्त्विकध्यानम्

**वन्दे बालं स्फटिकसदृशं कुन्तलोल्लासिवक्त्रं**
**दिव्याकल्पैर्नवमणिमयैः किङ्किणीनूपुराद्यैः ।**
**दीप्ताकारं विशदवसनं सुप्रसन्नं त्रिनेत्रं**
**हस्ताब्जाभ्यां वटुकमनिशं शूलदण्डो दधानम् ॥ ५० ॥**
**सात्त्विकं ध्यानमाख्यातमपमृत्युनिवारणम् ।**
**आयुरारोग्यजननमपर्वफलप्रदम् ॥ ५१ ॥**

सात्त्विकध्याने शूलदण्डौ वामदक्षाभ्याम् । तदुक्तं विश्वसारोद्धारे—

वामहस्ते त्रिशूलं च सूक्ष्मदण्डं तु दक्षिणे । इति ॥ ५०-५१ ॥

अब **वटुक भैरव का सात्त्विक ध्यान** कहते हैं—स्फटिकमणि के सदृश स्वच्छ आकार वाले वटुक की मैं वन्दना करता हूँ, जिनका मुख कमल कुण्डल से देदीप्यमान हैं, जो नवीन मणिनिर्मित किङ्किणी और नूपुर आदि आभूषणों से भूषित हैं, जिनका आकार अत्यन्त तेजोमय हैं, जो दिव्य वसन धारण किये हुये तीन नेत्रों एवं प्रसन्न मुद्रा से युक्त हैं, जिन्होंने अपने दो हस्त कमलों में शूल और दण्ड धारण किया है ॥ ५० ॥

यह ऊपर कहा गया सात्त्विक ध्यान अपमृत्यु का निवारण करता है । आयु, आरोग्य तो प्रदान करता ही है, साथ में अपवर्ग का फल भी प्राप्त करता है ॥ ५१ ॥

वटुकभैरवस्यराजसध्यानम्

**उद्यद्भास्करसन्निभं त्रिनयनं रक्ताङ्गरागस्रजं**
**स्मेरास्यं वरदं कपालमभयं शूलं दधानं करैः ।**
**नीलग्रीवमुदार भूषणशतं शीतांशुचूडोज्ज्वलं**
**बन्धूकारुणवाससं भयहरं देवं सदा भावये ॥ ५२ ॥**

राजसध्याने वामयोराद्ये दक्षयोरन्त्ये । तदुक्तं विश्वसारोद्धारे—

दक्षे शूलाभयं वामे कपालं वरदं तथा । इति ॥ ५२ ॥

अब **राजस ध्यान** कहते हैं—उदीयमान सूर्य के समान जिनका तेजोमय शरीर हैं, जिनके तीन नेत्र हैं, जो रक्त वर्ण की माला एवं रक्त अङ्गराग से युक्त हैं, जो ईषत्स्मित युक्त है । जिन्होंने अपने हाथों में वरद कपाल, अभय, तथा त्रिशूल धारण किया है, जो नीलग्रीवा से युक्त, उदार स्वभाव वाले, सैकड़ों आभूषणों एवं शिर:स्थित चन्द्रमा की किरणों से उज्ज्वल हैं ऐसे बन्धूक के समान रक्त वस्त्र धारण करने वाले भयहारी बटुक देव का मैं सदा ध्यान करता हूँ ॥५२॥

**बटुकभैरवस्यतामसध्यानम्**

**ध्यायेन्नीलाद्रिकान्तं शशिशकलधरं मुण्डमालं महेशं**
**दिग्वस्त्रं पिङ्गकेशं डमरुमथ सृणिं खड्गपाशाभयानि ।**
**नागं घण्टां कपालं करसरसिरुहैर्बिभ्रतं भीमदंष्ट्रं**
**सर्पाकल्पं त्रिनेत्रं मणिमयविलसत् किङ्किणीनूपुराढ्यम् ॥ ५३॥**

**पुरश्चरणादिकथनम्**

**राजसं ध्यानमाख्यातं धर्मकामार्थसिद्धिदम् ।**
**तामसं शत्रुशमनं कृत्याभूतग्रहापहम् ॥ ५४ ॥**

**तामसध्याने तु दक्षाद्यूर्ध्वयोराद्ये तदधस्थयोर्द्वितीये तदधस्थयोरुपान्त्ये तदधस्थयोरन्त्ये । अत्र ध्यानानन्तरं डमरुकमुद्रां दर्शयेत् । तल्लक्षणं तु—**

**मुष्टिं सुशिथिलां बध्वा ईषदुच्छ्रितमध्यमाम् ।**
**दक्षिणादूर्ध्वमुन्नम्य कर्णदिशे प्रचालयेत् ।**
**एषा मुद्रा डमरुका सर्वविघ्नविनाशिनी ॥ इति ॥ ५३-५४ ॥**

अब **तामस ध्यान** कहते हैं—नीले पहाड़ के समान कान्ति वाले, चन्द्रकला से सुशोभित, गले में मुण्डमाला धारण किये हुये, नंगे, पीली पीली जटाओं से युक्त, डमरु, अंकुश, खड्ग, पाश, अभय, सर्प, घण्टा, तथा कपाल को कर कमलों में धारण किये उग्र दंष्ट्रा, से युक्त सर्वाभरण से विभूषित मणिमय किंकिणी तथा नूपुर से भूषित वटुक का ध्यान करना चाहिए, सात्त्विक ध्यान का फल ऊपर कहा जा चुका हैं (द्र, २०-५१) ॥ ५३ ॥

**फल एवं पुरश्चरण**—राजस ध्यान धर्म, अर्थ तथा काम को सिद्ध करने वाला है और तामस ध्यान, कृत्या, भूत तथा ग्रह बाधा को दूर करने वाला कहा गया है ॥ ५४ ॥

**वर्णलक्षं जपेन्मन्त्रं हविष्याशी जितेन्द्रियः।**
**तद्दशांशं प्रजुहुयात्तिलैर्मधुरसंयुतैः ॥ ५५ ॥**

**वर्णलक्षं एकविंशतिलक्षम् ॥ ५५ ॥**

इस वटुक भैरव मन्त्र का हविष्यान्न भोजन करते हुये ब्रह्मचर्य एवं जितेन्द्रिय

रहकर २१ लाख जप करे और पय, मधु तथा शर्करा युक्त हव्य पदार्थों से उसका दशांश होम करे ॥ ५५ ॥

**धर्माधर्मादिभिः क्लृप्ते पीठे पङ्कजशोभिते ।**
**षट्कोणान्तस्त्रिकोणस्थव्योमपङ्कजसंयुते ॥ ५६ ॥**
**वटुकं पूजयेद्देवं मूर्त्तिं मूलेन कल्पयेत् ।**
**मूलादिसद्योजातेन देवमावाहयेत्ततः॥ ५७ ॥**
**वामदेवेन मन्त्रेण स्थापयेत्परमेश्वरम् ।**
**मूलमन्त्रेण कर्त्तव्यं सान्निध्यं तदनन्तरम् ॥ ५८ ॥**
**अघोरेण सुधीः कुर्यात् सन्निरोधमनन्तरम् ।**
**पुरुषाख्येन मनुना योनिमुद्रां प्रदर्शयेत् ॥ ५९ ॥**
**देवाय वन्दनं कुर्यादीशानेन समाहितः ।**
**एतत्सर्वं विधातव्यं तत्तन्मुद्राभिरादरात् ॥ ६० ॥**

क्लृप्ते पीठे इति । चतुर्थोक्तप्रकारेण । नत्वत्र पीठशक्तयः । कीदृशे पीठे । षट्कोणान्तस्त्रिकोणस्थव्योमपङ्कजसंयुते । पुनः कीदृशे । पङ्कजशोभिते । तेन मातृकापद्मं कृत्वा तदुपरि त्रिकोणं तदुपरि षट्कोणं तदुपरि अष्टदलं पद्मं तदुपरि चतुरस्रं चतुर्द्वारमिति पूजायन्त्रम् । तदुक्तं विश्वसारोद्धारे—

चतुरस्रासने पद्ममष्टपत्रं सकर्णिकम् ।
तस्य मध्ये च षट्कोणं मण्डलं तु विधीयते ॥
तन्मध्ये च त्रिकोणं च तन्मध्ये व्योमपङ्कजम् ।

मध्ये वटुकमावाह्य । इति । व्योमपङ्कजन्तु मातृपटलोक्तवर्णाब्जम् । मूलादिसद्योजातेनेति । एवं पञ्चसु सम्बध्यते । तत्तन्मुद्राभिरिति । मुद्रास्त्रयोविंशे वक्ष्यन्ते । ललाटस्थोऽञ्जलिर्वन्दनमुद्रा ॥ ५६-६० ॥

**बटुक भैरव यन्त्रनिर्माण**—साधक अष्टदल कमल उसके भीतर षट्कोण उसके भीतर त्रिकोण उसके भीतर अष्ट मातृकामय कमल निर्माण करे । इन सभी के चारों ओर (पूर्व के अष्टदल कमल के बाहर) चतुरस्र भूपुर का निर्माण करे । इस प्रकार निर्मित यन्त्र में धर्माधर्म युक्त पीठ पर वटुक का इस प्रकार पूजन करे। मूल मन्त्र से मूर्त्ति की कल्पना कर 'सद्योजातं प्रपद्यामि' मन्त्र से उसमें वटुक देव का आवाहन करे ॥ ५६-५७ ॥

वामदेव मन्त्र से उसमें परमेश्वर को स्थापित करे । इसके बाद मूल मन्त्र पढ़ कर मूर्त्ति में सान्निध्य स्थापित करे ॥ ५८ ॥

इसके बाद बुद्धिमान् साधक अघोर मन्त्र से सन्निरोध करे । तदनन्तर तत्पुरुष मन्त्र से योनि मुद्रा प्रदर्शित करे ॥ ५९ ॥

पुन: एकाग्रचित्त से ईशान मन्त्र द्वारा वटुक देवता को नमस्कार समर्पित करे । यह सब साधक को श्रद्धापूर्वक तत्तन्मुद्राओं को प्रदर्शित करते हुये करना चाहिए ॥ ६० ॥

**ईशानादीन् यजेद्देवान् न्यासमार्गेण देशिकः।**
**सकलीकरणं कृत्वा यजेन्मूर्त्तीर्यथा पुरा ॥ ६१ ॥**
**व्योमपद्मदलेष्वर्चेदसिताङ्गादिभैरवान् ।**
**आसिताङ्ग रुरुं चण्डं क्रोधमुन्मत्तभैरवम् ॥ ६२ ॥**
**कपालिनं भीषणाख्यं संहारं च क्रमादमून् ।**
**षट्कोणेषु षडङ्गानि क्रमेणाऽभ्यर्चयेत् सुधीः ॥ ६३ ॥**

न्यासमार्गेणेति । देवदेहे तत्तदङ्गुलीभिर्मूर्धादिषु पञ्चवक्त्रेष्वपि नत्वङ्गुलीषु । तदुक्तं नारायणीये—यथात्मनि तथा देवे न्यासः कार्यः करं विना । इति ।

ह्रीं वों ईशानाय नम इत्यादि पूजयेत् । तत्र देवदेहे प्रथमं विन्यस्य पश्चात् पूजनमिति ज्ञेयम् । सकलीकरणं कृत्वा यजेद्देवमिति शेषः । मूर्त्तीर्यथा पुरा यजेदिति अनुषज्यते । यथा पुरेत्यनेनावरणपूजायां पूर्वदक्षिणसौम्यपश्चिमे ईशे च मूर्त्ति-पूजेत्युक्तम् । विश्वसारोद्धारे तु विशेषः—'इन्द्राग्नियमसोमाप्सु पञ्च ब्रह्मणः अर्चयेत्' इति । अइउऋऌएओअं एतद्बीजपूर्वानित्युक्तम् ।

प्रयोगस्तु—अं असिताङ्गभैरवाय नम इत्यादि ।

भैरवपदं सर्वेषु योज्यम् । पुनर्भैरवोद्देशो मातृनिवृत्त्यर्थः । क्रमात् सुधीरित्यने-नाग्नेयादि पूजनमित्युक्तम् ॥ ६१-६३ ॥

इसके बाद न्यास क्रम के अनुसार देशिक साधक सकलीकरण कर ईशानादि मूर्त्तियों की पूर्ववत् पूजा करे ।

**विमर्श**—यथा ह्रीँ वों ईशानाय नमः, ह्रीँ वें तत्पुरुषाय नमः इत्यादि ॥ ६१ ॥

अष्टमातृकायुक्त पद्म पर असिताङ्ग आदि आठ भैरवों की पूजा करे । असिताङ्ग, रुरु, चण्ड, क्रोध, उन्मत्त भैरव, कपाली, भीषण और संहार ये उन आठ भैरवों के नाम हैं । तदनन्तर सुधी साधक षट्कोण में क्रमशः षडङ्गों की पूजा करे ॥ ६३ ॥

**पूर्वादीशानपर्यन्तं तद्बहिः पूजयेदिमान् ।**
**डाकिनीपुत्रकान् पूर्वं राकिणीपुत्रकांस्ततः ॥ ६४ ॥**
**लाकिनीपुत्रकान् पश्चात्काकिनीपुत्रकांस्ततः ।**
**शाकिनीपुत्रकान् भूयो हाकिनीपुत्रकान् पुनः ॥ ६५ ॥**
**मालिनीपुत्रकान् पश्चाद्देवीपुत्रांस्ततः परम् ।**
**अथोमारुद्रमातृणां पुत्रान् दक्षिणतो यजेत् ॥ ६६ ॥**

ऊर्ध्वमुख्याः सुतानूर्ध्वमधोमुख्याः सुतानधः।
इति संपूजयेन्मन्त्री पुत्रवर्गांस्त्रयोदश ॥ ६७ ॥
तद्बहिः पद्मपत्रेषु लोकेशवटुकान् यजेत् ।
ब्रह्माणीपुत्रकं पूर्वे माहेशीपुत्रमैश्वरे ॥ ६८ ॥
वैष्णवी पुत्रकं सौम्ये कौमारीपुत्रमानिले ।
इन्द्राणीपुत्रकं भूयः पूजयेत्पश्चिमे ततः ॥ ६९ ॥
महालक्ष्मीसुतं पश्चाद्रक्षोदिशि समर्चयेत् ।
वाराही पुत्रकं याम्ये चामुण्डासुतमानले ॥ ७० ॥

तद्बहिरिति । षट्कोणबाह्ये । अष्टपत्रान्तः पूर्वादीशानपर्यन्तमिमान् वक्ष्यमाणान् पूजयेदिति सम्बन्धः ॥ ६४-७० ॥

इसके बाद षट्कोण से बाहर अष्टकमल के भीतर पूर्व से ईशान पर्यन्त डाकिन्यादि पुत्रों की इस प्रकार पूजा करे । पूर्व में डाकिनीपुत्र, आग्नेय में राकिणीपुत्र, दक्षिण में लाकिनीपुत्र, नैर्ऋत्य में काकिनीपुत्र, पश्चिम में शाकिनी पुत्र वायव्य में हाकिनी पुत्र उत्तर में मालिनी पुत्र इसके बाद ईशान में देवीपुत्रों का पूजन करे । इस प्रकार आठ दिशाओं में आठ पुत्रों की पूजा कर दक्षिण दिशा में उमा पुत्र, रुद्रपुत्र तथा मातृका पुत्रों की पूजा करे । इस प्रकार कुल ११ पुत्रों की पूजा हुई ॥ ६४-६६ ॥

तदनन्तर ऊपर ऊर्ध्वमुखी के पुत्रों की, पश्चात् अधः अधोमुखी के पुत्रों की पूजा करे । इस प्रकार साधक तेरह पुत्र वर्गों की पूजा करे ॥ ६७ ॥

उसके बाद अष्टदल पद्म पर साधक को लोकेश्वर रूप वटुकों की पूजा इस प्रकार करना चाहिए—पूर्व पत्र में ब्रह्माणीपुत्र, ईशानकोण में माहेशी पुत्र, उत्तर में वैष्णवीपुत्र, आग्नेयकोण में कौमारीपुत्र, इसके बाद पश्चिम में इन्द्राग्नि पुत्र, नैर्ऋत्य में लक्ष्मीपुत्र, दक्षिण में वाराही पुत्र और वायव्य में चामुण्डा पुत्रों की पूजा करे ॥ ६८-७० ॥

वटुकान् दशदिक्ष्वर्चेद्धेनुकं त्रिपुरान्तकम्।
वेतालं वह्निजिह्वाख्यं कालान्ताख्यं करालकम्॥ ७१ ॥
एकपादं भीमदंष्ट्रमचलं हाटकेश्वरम् ।
दिग्विदिक्ष्वन्तरालेषु श्रीकण्ठादीन् यजेत् पुनः ॥ ७२ ॥
क्रोधीश्वरादिभृग्वन्तांस्तद्वद्बाह्ये समर्चयेत्।
ततस्त्रीन्नकुलीशाद्यान् दक्षिणे पूजयेत् सुधीः ॥ ७३ ॥

दिग्विदिक्ष्विति । दिशश्चतस्रः विदिशश्चतस्रस्तदन्तरालान्यष्टौ एवं षोडश । पुनस्तद्वदिति । दिग्विदिक्ष्वन्तरालेषु । तत्र दिशोऽष्टौ विदिशोऽष्टौ तदन्तरालानि षोडशेति द्वात्रिंशत् स्थानानि ज्ञेयानि ॥ ७१-७३ ॥

दश दिशाओं में १. धेनुक, २. त्रिपुरान्तक, ३. वेताल, ४. वह्निजिह्व, ५. कालान्त, ६. करालक, ७. एकपाद, ८. भीमदंष्ट्र, ९. अचल, एवं १०. हाटकेश्वर—इन दश वटुकों की पूजा करे । पश्चात् चारों दिशाओं में चारों विदिशाओं में तथा उन दोनों के आठ अन्तरालों में इस प्रकार १६ स्थानों में श्रीकण्ठादि (द्र. २.२९-३१) १६ देवताओं का पूजन करे । पुनः आठ दिशाओं में और आठ विदिशाओं में उन दोनों के षोडश अन्तरालों में कुल ३२ स्थानों में क्रोधीश्वर से भृगुपर्यन्त (द्र, २.३१-३५) पूजा करे । उसके दक्षिण में विद्वान् साधक नकुलीश (द्र. २.३५) आदि तीन की पूजा करे ॥ ७१-७३ ॥

**दिव्यान्तरिक्षभूमिष्ठान् योगीशान् शक्तिसंयुतान् ।**
**योगिनीभिः सहाऽभ्यर्चेदीशाग्निनिर्ऋतिस्थितान् ॥ ७४ ॥**
**इति संपूजयेद्देवं वटुकं प्रोक्तवर्त्मना ।**
**धर्मार्थकाममोक्षाणां पतिर्भवति मानवः ॥ ७५ ॥**

**शक्तिसंयुतानिति सामान्येन विशेषणमात्रम् । ताः शक्तयः का इत्यपेक्षायां योगिनीभिः सहेति पदम् । तदुक्तं विश्वसारोद्धारे—**

**दिव्यान्तरिक्षभूमिष्ठान्योगीशान् पूजयेत्ततः ।**
**ईशाग्नेयाञ्च नैर्ऋत्यां योगिनीभिः समन्वितान् ॥ इति ॥ ७४-७५ ॥**

इसके बाद स्वर्ग लोक, अन्तरिक्ष लोक तथा भूलोक स्थित योगेश्वरों की उनकी योगीश्वरी आदि शक्तियों के साथ पूजा करे । इस प्रकार ईशान कोण, अग्निकोण तथा नैर्ऋत्यकोण में निवास करने वाले योगेश्वरों की उनकी योगिनी शक्तियों के साथ पूजा करनी चाहिए । इस प्रकार कही गई विधि से जो साधक वटुक देवता की पूजा करता है वह धर्म, अर्थ, काम तथा मोक्ष का अधिकारी हो जाता है ॥ ७४-७५ ॥

**विघ्नं दुर्गां समाराध्य बलिं दत्त्वा विधानतः ।**
**काम्यानि साधयेन्मन्त्री यथोक्तां सिद्धिमाप्नुयात् ॥ ७६ ॥**

**काम्यमात्रे परिभाषामाह विघ्नमिति ॥ ७६ ॥**

अन्त में काम्यकर्म के विघ्न (गणेश) और दुर्गा की पूजा कर विधानपूर्वक, उन्हें बलि प्रदान करे । साधक ऐसा कर अपनी कामनाओं में यथोक्त सिद्धि प्राप्त करता है ॥ ७६ ॥

**शाल्यन्नं पललं सर्पिर्लाजाचूर्णानि शर्करा ।**
**गुडमिक्षुरसापूपैर्मध्वक्तैः परिमिश्रितैः ॥ ७७ ॥**
**कृत्वा कवलमाराध्य देवं प्रागुक्तवर्त्मना ।**
**रक्तचन्दनपुष्पाद्यैर्निशि तस्मै बलिं हरेत् ॥ ७८ ॥**

ततः सिध्यन्ति कार्याणि बलिनाऽनेन मन्त्रिणः ।
जुहुयात् सर्पिषा मन्त्री यथोक्तां सिद्धिमाप्नुयात् ॥ ७९ ॥
वश्याय जुहुयाद्दक्षु शकलैर्वशयेज्जनान् ।
जुहुयात् पुत्रलाभाय प्रफुल्लैः कैरवैः सुधीः ॥ ८० ॥
धनधान्यादिसम्पत्यै जुहुयात्तिलतण्डुलैः ।
बिल्वप्रसूनैर्जुहुयान्महतीं विन्दति श्रियम् ॥ ८१ ॥
लोणैर्मधुरसंमिश्रैर्वशयेद्वनिताजनान् ।
वृष्टिकामेन होतव्यं वेतसानां समिद्वरैः ॥ ८२ ॥
अन्नेन जुहुयान्नित्यं धनधान्यादिसम्पदे ।
वश्याय जुहुयान्मन्त्री मधुना दिवसत्रयम् ॥ ८३ ॥

तदेव बलिविधानमाह शाल्यन्नमिति । पललं मांसम् । एकीकृतं पिण्डरूपं कवलं ग्रासम् । रक्तचन्दनपुष्पाद्यैर्निशि देवमाराध्य प्रागुक्तवर्त्मना निशि बलिं हरेदिति सम्बन्धः । आद्यशब्देन धूपदीपनैवेद्यानि । प्रागुक्तेत्यनेन क्षेत्रपालोक्तबलिमन्त्रे क्षेत्रपालशब्दे वटुकेति पदं दत्त्वा देवहस्त इत्युक्तम् । यथोक्तामिति । स्वमनसि स्थिताम् ॥ ७७-८३ ॥

इनके **बलि विधान की प्रक्रिया** कहते हैं—चावल, मांस, घी, लावा एवं सत्तू, शर्करा, गुड़ इक्षुरस, अपूप इनमें मधु डालकर इनका एकीकरण करे और उसका ग्रास बनावे । फिर ऊपर कही गई (द्र. २०. ३९-४१) विधि के अनुसार केवल क्षेत्रपाल के स्थान पर वटुकपद का सन्निवेश कर, रात्रि में रक्तचन्दन तथा पुष्पादि से अर्चा कर बलि प्रदान करे ॥ ७७-७८ ॥

इस प्रकार की बलि देने से मन्त्रज्ञ के समस्त कार्य सिद्ध होते हैं, घी से होम करे तो भी उक्त प्रकार की सिद्धि प्राप्त हो जाती है । वशीकरण प्रयोग में उक्त ग्रासों से होम करे तो वशीकरण सिद्ध हो जाता है, पुत्र लाभ के लिये फूले हुये कैरव के पुष्पों का हवन करे ॥ ७९-८० ॥

धन-धान्यादि सम्पत्तियों की प्राप्ति के लिए तिल एवं चावल से होम करना चाहिए । बिल्व के फूलों से हवन से महती श्री की प्राप्ति होती है ॥ ८१ ॥

त्रिमधुर (आज्य, दूध, मधु) मिश्रित नमक से होम करे तो स्त्रियों को वश में करता है । वृष्टि चाहने वालों को बेंत की समिधा से होम करना चाहिए ॥८२॥

धन धान्यादि संपत्ति की प्राप्ति के लिये अन्न का होम करना चाहिए वशीकरण प्रयोग में मन्त्रज्ञ साधक मधु से मात्र तीन दिन तक होम करे ॥ ८३ ॥

रोगोक्तौषधहोमेन रोगा नश्यन्ति तत्क्षणात् ।
कृत्याद्रोहे ग्रहद्रोहे भूतापस्मारसम्भवे ॥ ८४ ॥

**व्याघ्राजिने समासीनो जुहुयादयुतं तिलैः।**
**भूतादयः पलायन्ते नेक्षन्ते तां दिशं भयात् ॥ ८५ ॥**

**रोगोक्तेति—वैद्यकशास्त्रे यस्मिन् रोगे यदौषधमुक्तं तस्य होमादित्यर्थः ॥८४-८५॥**

वैद्यकशास्त्र में जिस जिस रोग के लिये जिन जिन औषधियों का विधान है, उन उन औषधियों का इस मन्त्र से होम करे तो वे वे रोग तत्क्षण नष्ट हो जाते हैं । कृत्यादि अभिचार में, शत्रुद्रोह में, भूत बाधा तथा अपस्मार जैसे रोगों में बाघाम्बर पर बैठ कर इस मन्त्र से दस हजार १०००० तिलों का होम करे तो समस्त भूतादि भाग जाते हैं और भयग्रस्त हुए वे उस दिशा की ओर फिर कभी नहीं देखते ॥ ८४-८५ ॥

**कृष्णाष्टमीं समारभ्य यावत् स्यात्तच्चतुर्दशी ।**
**तिलैस्तण्डुलसंमिश्रैर्मधुरत्रयलोलितैः ॥ ८६ ॥**
**त्रिसहस्त्रं प्रतिदिनं जुहुयात् संस्कृतेऽनले ।**
**वटुकेश्वरमभ्यर्च्य भक्ष्यभोज्यफलान्वितम् ॥ ८७ ॥**
**नित्यं निवेद्य नैवेद्यं मध्यरात्रे बलिं हरेत् ।**
**एवं जपित्वा प्रयतः सहस्त्राण्येकविंशति ॥ ८८ ॥**
**समाप्तिदिवसे रात्रावजं हत्वा बलिं हरेत् ।**
**ततः कारयिता राजा तोषयेत्साधकं धनैः ॥ ८९ ॥**
**विधिनाऽनेन सन्तुष्टो वटुकेशः प्रयच्छति ।**
**तेजो बलं यशः पुत्रान् कान्तिं लक्ष्मीमरोगताम्॥ ९० ॥**
**नश्यन्ति शत्रवः सर्वे वर्धन्ते बन्धुबान्धवाः ।**
**अवग्रहो न जायेत विषये तस्य भूपतेः ॥ ९१ ॥**
**जुहुयात् केवलैर्लोणैरयुतं स्तम्भनेच्छया ।**
**निगडादिविमोक्षाय प्रयोगोऽयमुदाहृतः ॥ ९२ ॥**

**कृष्णेत्यादि भूपतेरित्यन्तमेकः प्रयोगः । अवग्रहो वृष्ट्यभावः । विषये देशे ॥ ८६-९२ ॥**

कृष्णपक्ष की अष्टमी से कृष्णपक्ष की चतुर्दशी पर्यन्त त्रिमधुर युक्त तण्डुल मिश्रित तिलों का इस मन्त्र से प्रतिदिन सुसंस्कृत अग्नि में तीन सहस्त्र होम करे और भक्ष्य-भोज्य तथा फलादिकों का वटुकेश्वर को नैवेद्य अर्पण कर मध्य रात्रि में प्रतिदिन बलि देवे । पश्चात् नियमित रूप से २१ हजार वटुक मन्त्र का जप करे और समाप्ति के दिन रात्रि में बकरे की बलि देवे । तदनन्तर बलिदान कराने वाला राजा जिससे बलिदान करावे उसे धनादि देकर संतुष्ट करे तो इस विधि से प्रसन्न हुये वटुकेश्वर तेज, बल, यश, पुत्र, कान्ति, लक्ष्मी तथा नीरोगता प्रदान करते हैं ॥ ८६-९० ॥

उस राजा के समस्त शत्रुओं का नाश हो जाता है, भाई-बन्धु बढ़ते हैं। बहुत कहने से क्या लाभ ? उस राजा के राज्य में कभी अनावृष्टि का भय नहीं होता है ॥ ९१ ॥

स्तम्भन प्रयोग में केवल नमक का इस मन्त्र से दस हजार होम करे। कारागार की मुक्ति के लिये भी इस प्रकार का प्रयोग करना चाहिए ॥ ९२ ॥

**वचाचूर्णपलं जप्तं गव्येनाज्येन लोलितम् ।**
**विभज्य भक्षयेद् बन्ध्या मण्डलात् पुत्रकाङ्क्षिणी ॥ ९३ ॥**
**विनीतं पुत्रमाप्नोति मेधारोग्यबलान्वितम् ।**
**आदावन्ते प्रयोगस्य वटुकाय बलिं हरेत् ॥ ९४ ॥**

विभज्येति किञ्चिन्न्यूनसप्तसप्तगुञ्जामितम् । मण्डलमेकोनपञ्चाशद्दिनानि । विश्वसारोद्धारे तु विशेषः—

वचाचूर्णपलं देवि कुडवं पलसंयुतम् ।
पद्मपत्रे विनिक्षिप्य स्थापयेद्देवसन्निधौ ॥
सिद्धान् संपूज्य विधिवज्जपेत् स्पृष्ट्वा तदौषधम् ।
मन्त्रं सहस्रमावर्त्य सिद्धानभ्यर्च्य बुद्धिमान् ॥
ध्यात्वा देवीमृतुस्नातां प्राशयेत्तन्महौषधम् ॥ इति ॥ ९३-९४ ॥

गो घृत से मिले हुये एक पल वचा चूर्ण को इस मन्त्र से अभिमन्त्रित करे। पश्चात् प्रतिदिन ७ रत्ती से कुछ कम मात्रा में उस चूर्ण का वन्ध्या स्त्री पुत्र की कामना करती हुई भक्षण करे तो वह ४९ दिन (=मण्डलम्) के भीतर गर्भवती हो जाती है, और बुद्धिमान्, नीरोग, बलवान् तथा विनीत पुत्र को जन्म देती हैं। इस प्रयोग के आरम्भ में तथा अन्त में वटुकेश्वर के लिये बलिदान अवश्य करे ॥ ९३-९४॥

**द्विविधो बलिराख्यातो राजसः सात्त्विको बुधैः ।**
**राजसो मांसरक्ताढ्यः पलत्रयसमन्वितः ॥ ९५ ॥**
**मुद्गपायससंयुक्तो मधुरत्रयलोलितः ।**
**सात्त्विको मांसरहितः शेषमन्यत् पुरोक्तवत् ॥ ९६ ॥**
**ब्राह्मणो नियतः शुद्धः सात्त्विकं बलिमाहरेत् ।**
**साधयेन्मनुनाऽनेन भस्म सर्वार्थसिद्धिदम् ॥ ९७ ॥**

राजसो मांसरक्ताढ्य इति । तत्र किं मांसमित्यपेक्षायां पलत्रयसमन्वित इति । तत्र पलत्रयं भूचरखेचरजलचरजम् । तदुक्तं विश्वसारोद्धारे—

मेषकुक्कुटयोर्मांसं शाल्यन्नं घृतसंयुतम् ।
लाजाचूर्णमपूपं च गुडमिक्षुरसान्वितम् ।
मधुमत्स्यकपित्थादि बलिद्रव्यं समीरितम् ॥ इति ।

मरीचैर्जीरकैश्चैव गुडखण्डैस्तथैव च ।
शालितन्दुलसम्भक्तगोक्षीरेण समन्वितम् ।
सैन्धवं दग्धमीनेन पलत्रयसमन्वितम् ॥ इति ॥

तथाऽन्यत्रापि— पलत्रयं माषचूर्णं दधि क्षीरं घृतं तथा ।
गुडौदनेन संयुक्तं मिश्रीकृत्य विचक्षणः ॥ इति ॥

केचित् फलत्रयमिति पाठमपठन् । तच्चिन्त्यम् ॥ ९५-९७ ॥

बुद्धिमानों ने सात्त्विक तथा राजस भेद से दो प्रकार की बलि कही है । तीन पल अर्थात् भूचर, खेचर और जलचर जन्तुओं के मांस एवं रक्त मिश्रित अन्नादि की बलि **राजस बलि** हैं ॥ ९५ ॥

मूँग की बलि जो पायस तथा त्रिमधुर मिश्रित हो **सात्त्विक बलि** है इसमें मांस का प्रयोग नहीं होता और शेष पहले जैसा कह आये हैं वैसा ही (द्र. २०. ३९-४१) बलि प्रदान करे । केवल क्षेत्रपाल के स्थान में वटुक पद का सन्निवेश करे ॥ ९६ ॥

ब्राह्मण वटुक के प्रयोग में नियमतः सात्त्विक बलि देवे । इस मन्त्र से सिद्ध किया हुआ भस्म संपूर्ण प्रयोजनों की सिद्धि करता है ॥ ९७ ॥

**उशीरं चन्दनं कुष्ठं घनसारं सकुङ्कुमम् ।**
**श्वेतार्कमूलं वाराहीं लक्ष्मीं क्षीरमहीरुहाम् ॥ ९८ ॥**
**त्वचो बिल्वतरोर्मूलं शोषयित्वा सुचूर्णयेत् ।**
**चूर्णं व्योम्नि गृहीतेन गोमयेन विमिश्रितम् ॥ ९९ ॥**
**कृत्वा पिण्डानि संशोष्य संस्कृते हव्यवाहने ।**
**मूलेन दग्ध्वा तद्भस्म शुद्धपात्रे विनिःक्षिपेत्॥ १०० ॥**
**केतकीमालतीपुष्पैर्वासयेद् भस्मशोधितम् ।**
**अयुतं प्रजपेन्मन्त्रं स्पृष्ट्वा भस्म सुपूजितम् ॥ १०१ ॥**
**एतदादाय दिनशः प्रातः पुण्ड्रं करोति यः ।**
**तस्य रोगाः प्रणश्यन्ति कृत्याद्रोहमहाग्रहाः ॥ १०२ ॥**
**रिपुचौरमृगादिभ्यो भयमस्य न जायते ।**
**वर्धन्ते सम्पदः सर्वाः पूज्यते सकलैर्जनैः ॥ १०३ ॥**
**राजा वश्यो भवेत्तस्य सामात्यः सपरिच्छदः ।**
**अभिषेकं प्रकुर्वीत राज्ञो विजयकाङ्क्षिणः ॥ १०४ ॥**

भस्मसाधनमेवाह—उशीरमित्यादि । घनसारः कर्पूरः ।
वाराही शूकरी काछी मागधी गृष्टि कारिका ।
इति कैयटदेवनिघण्टौ वाराहीनाम्नी औषधी प्रसिद्धा ।
शमी लक्ष्मीः शिवा शीता माङ्गल्या केशहृत्फला ॥

इति कैयटदेवनिघण्टौ लक्ष्मीशब्देन शमी उक्ता । व्योम्नि गृहीतेनेति भूतला स्पृष्टेन । पुण्ड्रं त्रिपुण्ड्रन्तिर्यक्‌तिलकः । मृगो व्याघ्रः ।

अभिषेकं प्रकुर्वीतेति । सप्तभिः पञ्चभिर्वाऽहोभिरित्यर्थः । 'सप्ताहं वापि पञ्चाहम्' इत्युक्तेः । तत्र पूर्वमेव सप्तमं पञ्चमं वा शुभदिनमालोच्य प्रथमारम्भः कार्यः ॥ ९८-१०४ ॥

अब **भस्म की प्रक्रिया का वर्णन** करते हैं—उशीर, चन्दन, कुष्ठ, कपूर, कुंकुम, सफेद मन्दार की जड़, वाराही, लक्ष्मी, (शमी) दुधार वृक्षों का त्वक् और बिल्व की जड़—इन्हें सुखा कर चूर्ण कर लेवे । इसके बाद गाय का गोबर जो पृथ्वी पर न पड़े अर्थात् जो ऊपर ऊपर ग्रहण किया गया हो, उसी में उस चूर्ण को मिला देवे । तदनन्तर उसका पिण्ड बना कर घाम में सुखा लेवे । फिर शुद्ध की गई अग्नि में उन्हें डाल कर मूलमन्त्र पढ़ते हुये भस्म कर डाले । पश्चात् उसे शङ्ख पात्र में रखकर केतकी तथा मालती के पुष्पों से सुवासित करे । इस प्रकार के उस भस्म को हाथ से स्पर्श कर दस हजार मन्त्र का जप करे । पुनः सिद्ध किये गये उस भस्म से जो प्रातःकाल प्रतिदिन त्रिपुण्ड करता है उसके रोग तो शान्त हो ही जाते हैं, कृत्याद्रोह, महाग्रह की बाधा एवं शत्रु, चोर तथा व्याघ्रादि जन्तुओं का भय उसे नहीं होता । उस पुरुष की सारी संपत्ति की अभिवृद्धि होती है और वह सारे लोकों से नित्य पूजा जाता है ॥ ९८-१०३ ॥

अमात्य तथा परिकरों सहित राजा उसके वश में हो जाते हैं । इस मन्त्र से सात या पाँच दिन तक विजय की अपेक्षा रखने वाले राजा का इस प्रकार अभिषेक करना चाहिए ॥ १०४ ॥

**पूर्वोक्तमण्डपे क्लृप्ते वितानध्वजशोभिते ।**
**सर्वतोभद्रमालिख्य कर्णिकां तस्य पूरयेत् ॥ १०५ ॥**
**अष्टद्रोणप्रमाणेन शालिभिः शोधितैः शुभैः ।**
**तदर्धांस्तण्डुलांस्तस्मिन् न्यस्य दूर्वाक्षतान्वितान् ॥ १०६ ॥**
**हेमादिविहितं कुम्भं नवरत्नसमन्वितम् ।**
**संस्थाप्य विमलैस्तोयैरापूर्याऽस्मिन्विनिःक्षिपेत् ॥ १०७ ॥**
**क्षीरद्रुमप्रबालानि लक्ष्मीं दूर्वां सहां पुनः ।**
**कर्पूरं चन्दनं बिल्वमुशीरं कुङ्कुमं पुनः ॥ १०८ ॥**
**कङ्कोलमगुरुं जातिं मल्लिकां चम्पकोत्पलैः ।**
**गोमेदं दाडिमं पश्चात्पट्टयुग्मेन वेष्टयेत् ॥ १०९ ॥**

अभिषेकप्रकारमाह—पूर्वोक्तेति । तृतीयोक्ते इत्यर्थः । अष्टद्रोणेति । अर्द्धखारी । तदर्द्धमिति । खारीचतुर्थांशः । नवरत्नानि षष्ठोक्तानि । प्रबालानि पल्लवाः । सहा सहदेवी । गोमेदं पत्रजम्—

'गोमेदकं पीतमणौ कक्कोले पत्रजेऽपि च' इति विश्वः ॥ १०५-१०९ ॥

पूर्व में कही गई विधि के अनुसार वितान एवं ध्वज से शोभित मण्डप में सर्वतोभद्रमण्डल का निर्माण करे (द्र, ३. १९-२६, ३. १०३-१२७)। उसकी कर्णिका को आठ द्रोण प्रमाण के शुद्ध किये हुये चावलों से परिपूर्ण करे। इसके बाद उस पर बने अष्टदल कमल पर उसका आधा चावल रखकर, दूर्वाक्षत से युक्त हेमादि (रजत, ताम्र या मिट्टी) विरचित नवरत्न युक्त कलश स्थापित करे। उसे विशुद्ध जल से परिपूर्ण करे। पुनः उसमें क्षीरीवृक्षों के पत्ते, शमी, दूर्वा, सहदेवी, कर्पूर, चन्दन, विल्व, उशीर, कुंकुम, कंकोल, अगुरु, जाति, मल्लिका, चम्पक, कमल, गोमेद, दाडिम आदि डालकर उस कलश को दो वस्त्रों से लपेटकर अच्छी तरह बाँध देवे ॥ १०५-१०९ ॥

**तस्मिन्नावाह्य वटुकं राजसं सम्प्रपूजयेत्।**
**बहिरष्टसु कुम्भेषु भैरवानष्ट पूजयेत् ॥ ११० ॥**
**त्रयोदशसु कुम्भेषु त्रयोदश गणान् यजेत्।**
**बाह्य दशसु कुम्भेषु लोकेशानर्चयेत् सुधीः ॥ १११ ॥**
**तद्बहिर्द्व्याष्टकुम्भेषु श्रीकण्ठादीन् सुरेश्वरान्।**
**पञ्चत्रिंशद्घटेष्वर्चेत् कादिवर्णेश्वरान् क्रमात् ॥ ११२ ॥**
**इति गन्धादिभिः सम्यक् पञ्चावरणमर्चयेत्।**
**अयुतं प्रजपेत्स्पृष्ट्वा तान् घटान् देशिकोत्तमः ॥ ११३ ॥**

**राजसमिति राजसध्यानोक्तमूर्त्तिम्। लोकेशान् लोकेशवटुकान्। क्रमादित्यनेन परितो द्वात्रिंशत् दक्षिणे त्रीनित्युक्तम्। स्पृष्ट्वेत्युभयत्र। कूर्चादिना ॥ ११०-११३ ॥**

उसमें राजस ध्यान में कहे गये वटुक की मूर्त्ति का आवाहन कर पूजा करे। उसके बाहर आठों कुम्भों पर आठों भैरवों का पूजन करे। इसके बाद तेरह कुम्भों में तेरह गणों (२०. ६४-६७) का पूजन करे। उसके बाद के दश कुम्भों पर विद्वान् साधक लोकेश्वरों का पूजन करे ॥ ११०-१११ ॥

उसके बाद के १६ कुम्भों पर श्रीकण्ठादि १६ स्वर देवताओं का पूजन करें, इसके बाद ३५ कलशों पर ३५ कादि से लेकर हकार पर्यन्त व्यञ्जन देवताओं का क्रमशः एक एक कर पूजन करे। इस प्रकार ऊपर कहे गये पञ्चावरणों की गन्धादि द्वारा पूजा करे। तदनन्तर कुशादि से उन घटों का स्पर्श कर देशिकोत्तम साधक इस मन्त्र का दश हजार जप करे ॥ ११२-११३ ॥

**पायसैः सर्पिषा शुद्धैस्तिलैर्दशशतं पृथक्।**
**जुहुयात्तान् घटान् स्पृष्ट्वा प्रत्यहं बलिमाहरेत्॥ ११४ ॥**
**राजसोक्तप्रकारेण रात्रौ देशिकसत्तमः।**
**सुदिने शोभने लग्ने वाचयित्वा द्विजन्मभिः॥ ११५ ॥**
**स्वस्तिमङ्गलवाक्यानि विशुद्धैर्वेदपारगैः।**

नदत्सु पञ्चवाद्येषु प्रणम्य वटुकेश्वरम् ॥ ११६ ॥
जितेन्द्रियं शुद्धकायं राजानं ब्राह्मणप्रियम्।
आस्तिकं सत्यवचनमभिषिञ्चेत् प्रसन्नधीः ॥ ११७ ॥
अभिषिक्तो नरपतिः प्रणिपत्य गुरुं परम्।
भूयसीं दक्षिणां दद्यात् प्रसीदति तथा गुरुः ॥ ११८ ॥
राजाऽभिषिक्तो भवति साक्षाद् भूमिपुरन्दरः।
परान् विजयते भूपान् स्तूयते सकलैर्जनैः ॥ ११९ ॥

पृथगिति । प्रत्येकम् । तेन सहस्रत्रयं होमः, प्रत्यहं सप्ताहं पञ्चाहं वा ॥ ११०-११९ ॥

खीर, घृत, तथा शुद्ध तिलों से पृथक् पृथक् कर एक सहस्र के क्रम से होम करे, इस प्रकार प्रतिदिन तीन सहस्र होम, उन घड़ों का स्पर्श करते हुये करे और नित्य राजस विधि के अनुसार विद्वान् साधक रात्रि में बलिदान देता रहे। (द्र. २०. ३९-४१) ॥ ११४-११५ ॥

इसके बाद किसी अच्छे दिन शुभ लग्न में वेदपारगामी ब्राह्मणों से स्वस्तिवाचन कराकर एवं आशीर्वाद प्राप्त कर पाँच प्रकार के बाजे बजवाते हुये वटुकेश्वर को प्रणाम कर जितेन्द्रिय, बाह्य एवं आभ्यन्तर शौच युक्त, ब्राह्मण्य, आस्तिक और सत्यवादी राजा का प्रसन्नतापूर्वक अभिषेक करे ॥ ११५-११७ ॥

इस प्रकार अभिषेक से युक्त राजा अपने गुरु तथा अन्य श्रेष्ठ जनों को प्रणाम कर गुरु को भूयसी दक्षिणा समर्पित करे, जिससे वे संतुष्ट हो जावें। इस प्रकार वह अभिषिक्त राजा इस पृथ्वी पर साक्षात् इन्द्र के तुल्य हो जाता है। वह अन्य सभी राजाओं को युद्ध में परास्त करता है, तथा समस्त जन उसकी स्तुति करते हैं ॥ ११८-११९ ॥

कृताभिषेकः षण्मासं प्रतिमासं महीपतिः।
चतुरम्भोधिवलयां शास्ति सर्वां वसुन्धराम् ॥ १२० ॥

अस्यैवावृत्त्या फलविशेषमाह कृतेति । षण्मासं प्रतिमासमिति षडावृत्तयः ॥ १२० ॥

उपर्युक्त विधि से अभिषिक्त राजा प्रत्येक मास में छः मास पर्यन्त निरन्तर अपना छः बार अभिषेक करावे तो वह चतुःसमुद्र पर्यन्त समस्त पृथ्वी का अकेले शासन करता है ॥ १२० ॥

गजाश्वादिशान्तिविधिः

गजाश्वशान्तिविधये तेषां शालासु साधकः।
कुण्डं कृत्वा विधानेन होमं कुर्याद्यथाविधि ॥ १२१ ॥

पायसाज्यतिलैर्विद्वानयुतत्रितयावधि ।
ब्राह्मणान् भोजयेन्नित्यं भक्ष्यभोज्यफलादिभिः॥ १२२ ॥

गजेति । प्राक्प्रोक्तविधिना कुम्भान् स्थापयित्वा गन्धानुलेपैः पुष्पाद्यैरभ्यर्च्य विधानेन कुण्डं कृत्वा यथाविधि होमं कुर्यादिति सम्बन्धः। तत्र विधानेनेति त्रिकोणम्। यथाविधीति । वटुकमग्नावभ्यर्च्य वटुकं च तत्र पूजयित्वेत्यर्थः ॥ १२१-१२२॥

साधक गजशान्ति और अश्वशान्ति की विधि में गजशाला अथवा अश्वशाला में विधि-विधान से कुण्ड निर्माण कराकर यथाविधि इस मन्त्र से होम करे ।

**विमर्श**—यहाँ यथाविधि का तात्पर्य है—त्रिकोण कुण्ड में सुसंस्कृत अग्नि में श्री वटुकेश्वर का आवाहन एवं पूजन पूर्वक होम करना चाहिए ॥ १२१ ॥

उक्त होम खीर, घृत तथा तिलों के द्वारा तीस हजार की संख्या में होना चाहिए और नित्य भक्ष्य, भोज्य तथा फलादि द्वारा ब्राह्मणों को भोजन कराना चाहिए ॥ १२२ ॥

प्राक्प्रोक्तविधिना कुम्भान् स्थापयित्वाऽत्र देशिकः।
अभ्यर्च्य गन्धपुष्पाद्यैस्तज्जलैः प्रोक्षयेद्गजान्॥ १२३ ॥
अश्वशालामनेनैव वर्धन्ते ते दिने दिने ।
युद्धेषु महती शक्तिर्जायते पूर्वतोऽधिका ॥ १२४ ॥
सर्वरोगाः प्रणश्यन्ति कृत्याद्रोहाः परैः कृताः।
अस्मात्परतरा रक्षा नास्ति तेषां महीतले ॥ १२५ ॥

राजसबलिदानविधिः

अभिषिच्य महीपालं परेषां विजयोद्यतम् ।
उक्तेन विधिना मन्त्री यामिन्यां बलिमाहरेत्॥ १२६ ॥

प्राक्प्रोक्तविधिना । चतुर्थोक्तविधिना । कुम्भानिति पञ्च । अत्र । पञ्चसु कुम्भेषु । अभ्यर्च्येति । मध्ये वटुकम् ईशानं चतुर्ष्वन्या मूर्त्तीरिति शेषः । उक्तञ्च—

पञ्चात्मानं पदं कृत्वा स्वालिप्ते शुद्धभूतले ।
कोष्ठेषु स्थापयेत् सृष्ट्या कलशान् पञ्च शोभनान् ॥
धूपादिवासितान् भूयो जलैरापूरयेत् पृथक् ।
माणिक्यं मौक्तिकं वज्रं नीलं मरकतं तथा ॥
प्रोक्तानि पञ्च रत्नानि निक्षिप्य तेषु पञ्चसु ।
तत्र देवं च मूर्त्तीश्च समभ्यर्च्य यथाविधि ॥ इति ॥

अन्यत्र तु—सुवर्णं रजतं मुक्ता राजावर्त्तं प्रवालकम् ।

रत्नपञ्चकमाख्यातम् । इति । गजान् अश्वान् शालाञ्च गजाश्वशालां प्रोक्षयेदिति सम्बन्धः । ते गजा अश्वाः । शक्तिर्जायत इति । तेषामित्यनुषज्यते ।

रोगाः प्रणश्यन्तीत्यत्रापि । अभिषिच्येति हरेदित्यन्तं पूर्वोक्ताभिषेकबल्योरनुवादः ॥ १२३-१२६ ॥

तदनन्तर पूर्वोक्त विधि से (२०. १०५-१०९) आचार्य (पञ्च) कलश-स्थापन करा कर गन्धपुष्पादि द्वारा तत्तद्देवताओं की पूजा कर (द्र. २०. ११०-११६) उन कलशों के जल से गजों को अभिषिक्त करे । इसी प्रकार अश्वशाला में अश्वों की शान्ति करावे तो वे नित्य निरन्तर दिन प्रतिदिन बढ़ते रहते हैं और युद्धों में पूर्वपिक्षया अधिकाधिक सुसम्पन्न एवं शक्तिमान् हो जाते हैं ॥ १२३-१२४ ॥

ऐसा अनुष्ठान कराने वाले राजा के भी सारे रोग शान्त हो जाते हैं । उस पर दूसरों के द्वारा किया गया मारणादि अभिचार शान्त हो जाता है । बहुत क्या ? इससे बढ़कर रक्षा के लिये अन्य कोई उपाय नहीं हैं ॥ १२५ ॥

शत्रुओं के विजय के लिये उद्यत राजा को इसी प्रकार अभिषिक्त कर आचार्य रात्रि में वटुकेश्वर के निमित्त इसी प्रकार बलिदान करे ॥ १२६ ॥

**अन्यूनाङ्गमजं हत्वा राजसं प्रागुदाहृतम् ।**
**बलिप्रदानसमये रिपूणां सर्वसैन्यकम् ॥ १२७ ॥**
**निवेदयेद् बलित्वेन वटुकाय विशिष्टधीः ।**
**विदर्भयेच्छत्रुनाम्ना बलिमन्त्रं तथा सुधीः ॥ १२८ ॥**

**बलिदानमन्त्रः**

**शत्रुपक्षस्य रुधिरं पिशितं च दिने दिने ।**
**भक्षय स्वगणैः सार्द्धं सारमेयसमन्वितः ॥ १२९ ॥**
**बलिमन्त्रोऽयमाख्यातः सर्वेषां विजयप्रदः ।**
**अनेन बलिना हृष्टो वटुकः परसैन्यकम् ॥ १३० ॥**
**सर्वं गणेभ्यो विभजेदामिषं क्रुब्धमानसः ।**
**एवं कृते परबलं क्षीयते नाऽत्र संशयः ।**
**विजयश्रियमेतेन राजा प्राप्नोत्ययत्नतः ॥ १३१ ॥**

**तत्रैव विशेषमाह । अन्यूनेत्यादिना ॥ १२७-१३१ ॥**

जैसा कि पहले कहा जा चुका है—राजा को राजस बलि देनी चाहिए । अतः (न्यूनाङ्ग तथा अधिका) बकरे की बलि न देकर सुलक्षण सर्वाङ्गवयव संयुक्त बकरे की बलि देवे । उसी के साथ साथ शत्रु के समस्त सैन्यों की भी बलि वटुकेश्वर देव को समर्पित करे तथा शत्रु के नाम के साथ बलि मन्त्र को विदर्भित करे । (द्र. २३. १३८) ।

**विमर्श**—दो दो मन्त्राक्षरों के बीच शत्रुनाम के एक एक अक्षर को लिखे—इसे विदर्भ कहते हैं ॥ १२७-१२८ ॥

अब **बलिदान की विधि** कहते हैं—संकल्प में

'शत्रुपक्षस्य रुधिरं पिशितं च दिने दिने
भक्षय स्वगणैः सार्द्धं सारमेयसमन्वितः'

यह बलिदान का मन्त्र है । इससे सब पर विजय प्राप्त होती है । इस प्रकार की बलिदान की विधि से वटुकेश्वर प्रसन्न होकर शत्रु सेना पर क्रोधित होकर अपने गणों के भोजन के रूप में उन्हें विभक्त कर देते हैं । शत्रु सेना निरन्तर क्षीण हो जाती है, इसमें संशय नहीं । ऐसा करने वाला राजा बिना यत्न के विजयश्री लाभ करता है ॥ १२९-१३१ ॥

आपदुद्धरणं यन्त्रम्

**श्रीमायास्मरकूटमत्र विलिखेन्मध्ये दलेष्वष्टसु**
**द्विःप्रोक्तं वटुकायशब्दमपरान् मन्त्रस्य वर्णान् बहिः।**
**अष्टद्वन्द्वदलेषु तद्बहिरतस्तत्संख्यपत्रेष्वथ**
**द्वात्रिंशद्दलकादिसान्तसहितं यन्त्रं लिखेद् भूपुरे॥ १३२ ॥**
**आपदुद्धरणं यन्त्रमपमृत्युभयापहम् ।**
**सर्वसम्पत्प्रदं नित्यं सर्व सौभाग्यदायकम् ॥ १३३ ॥**
**रक्षाकरं ग्रहार्त्तानां राज्ञां विजयवर्धनम् ।**
**आपदुद्धरणादस्मादापदुद्धरणक्षमः ॥ १३४ ॥**
**तन्त्रेषु नास्ति मन्त्रोऽन्य इत्याहुर्मन्त्रवेदिनः ।**

यन्त्रमाह श्रीमायेति । श्री श्रीबीजम् । माया शक्तिबीजम् । स्मरः कामबीजं क्लीं । कूटं क्ष्रीं । मध्ये कर्णिकायाः । तदुक्तं विश्वसारोद्धारे—

तत्रादौ कर्णिकामध्ये लक्ष्मीबीजं न्यसेद् बुधः ।
मायाबीजं ततो न्यस्य कामबीजं ततः परम् ॥
कूटाक्षरं ततः पश्चादग्निमायासमन्वितम् ।
चतुर्बीजसमायुक्तं कर्णिकामन्त्रमुद्धरेत् ॥ इति ॥

एतेन केषाञ्चन स्मररूपमेव कूटं लिखेदिति व्याख्यानं निरस्तम् । अष्टदलेषु बटुकाय इत्येकाक्षरक्रमेण लिखनीयम् । मन्त्रस्य वर्णानिति । आपदित्यादि-मायान्तान् । प्रथमषोडशदले । तद्बहिः प्रथमषोडशदलाद्बहिः । तत्संख्यपत्रेषु षोडशसु । तदुपरि द्वितीयषोडशदले षोडशस्वरान् लिखेत् ॥ १३२-१३४ ॥

अब **बटुकेश्वर यन्त्र का प्रकार** कहते हैं—सर्वप्रथम अष्टदल कमल निर्माण करे । पुनः उसके ऊपर षोडश दल कमल निर्माण करे । पुनः उसके भी ऊपर षोडश दल का तीसरा वृत्त निर्माण करे । पुनः उसके ऊपर ३२ दलों का

एक वृत्त और बनावे । उसके बाद चतुरस्र कोण युक्त भूपुर निर्माण करे । भीतर के अष्टदल कमल की कर्णिका के मध्य में श्री बीज (श्रीँ) मायाबीज (ह्रीँ) स्मर बीज (क्लीँ) कूट (क्षीँ) लिखे । इसके बाद अष्टदल कमल पर बटुकाय इस शब्द के एक एक अक्षर को क्रमश: दो बार लिखे । फिर प्रथम षोडश दल पर आपद् से लेकर मायान्त मन्त्रवर्णों के १६ अक्षरों को लिखे । पुन: इसके ऊपर वाले षोडश दल में षोडश स्वरों को लिखे । पुन: इसके ऊपर निर्मित ३२ दल वाले कमल पर क से आरम्भ कर स पर्यन्त ३२ व्यञ्जन अक्षरों के एक एक अक्षर लिखे । तदुपरान्त उसे चारों ओर चतुरस्र भूपुर से घेर देवे ॥ १३२ ॥

यह आपदुद्धारक नामक यन्त्र अपमृत्यु के भय को दूर करता है, सभी प्रकार की संपत्तियों को प्रदान करता हैं तथा सभी प्रकार का सौभाग्य भी देता है ॥ १३३ ॥

यह यन्त्र ग्रह ग्रहीतों की रक्षा करता है एवं राजाओं को विजयश्री प्रदान करता है । तन्त्रशास्त्र के ग्रन्थों में आपत्तियों से उद्धार. करने में समर्थ इस आपदुद्धरण यन्त्र से बढ़कर अन्य कोई यन्त्र नहीं हैं—तन्त्र शास्त्र के मर्मज्ञों का ऐसा कहना है ॥ १३४-१३५ ॥

**चण्डेश्वरमन्त्रोद्धारः**

**अर्घीशो वह्निशिखरो लान्तस्थो दान्त ईरितः ॥ १३५ ॥**
**फडन्तश्चण्डमन्त्रोऽयं त्रिवर्णात्मा समीरितः ।**
**अस्य त्रिको मुनिः प्रोक्तश्छन्दोऽनुष्टुबुदाहृतम् ॥ १३६ ॥**
**चण्डेशो देवता प्रोक्ता कुर्यादङ्गविधिं पुनः ।**
**हृदयं दीप्त फट् प्रोक्तं ज्वल फट् शिर ईरितम् ॥ १३७ ॥**
**शिखा ज्वालामालिनी फट् ज्ञेया फट् कवचं मतम् ।**
**हन फट् नेत्रमाख्यातं सर्वज्वालिनि फट् परम् ।**
**विन्यस्यैवं षडङ्गानि ततो देवं विचिन्तयेत् ॥ १३८ ॥**

**चण्डमन्त्रमाह—अर्घीश इति । अर्घीश ऊः। दान्तो धः लान्तस्थो वह्निशिखरः तेन र्ध्व । ऊकारो बीजं फट् शक्तिः । त्रिक इति ऋषिनाम ॥ १३५-१३८ ॥**

अब **चण्डमन्त्र का उद्धार** कहते हैं—अर्घीश (ऊः), वह्नि शिखा (रेफ है ऊपर में जिसके) लान्त (व), उसमें मिला हुआ दान्त (ध), इसके बाद फट्—यह चण्ड मन्त्र का उद्धार कहा गया ।

इस प्रकार 'ऊर्ध्व फट्' यह तीन वर्ण का चण्ड मन्त्र है । इसके त्रिक ऋषि हैं, अनुष्टुप छन्द है और चण्डीश्वर देवता हैं ॥ १३५ ॥

इस मन्त्र का अङ्गन्यास इस प्रकार करना चाहिए—'दीप्त फट्' से हृदय का, ज्वल फट् से शिर का न्यास करना चाहिए ॥ १३७ ॥

'ज्वालामालिनी फट्' से शिखा, 'फट्' से कवच का, 'हन फट्' से नेत्र का, तदनन्तर सर्वज्वालिनी फट् से अस्त्रन्यास करना चाहिए । इस प्रकार षडङ्गन्यास के अनन्तर **चण्डेश्वर देव का ध्यान** इस प्रकार करे ॥ १३८ ॥

चण्डेश्वरध्यानम्

**चण्डेश्वरं रक्ततनुं त्रिनेत्रं**
**रक्तांशुकाढ्यं हृदि भावयामि ।**
**टङ्कं त्रिशूलं स्फटिकाक्षमालां**
**कमण्डलुं बिभ्रतमिन्दुचूडम् ॥ १३९ ॥**

**ध्यानमाह—चण्डेश्वरमिति । टङ्कं परशुम् । तदुक्तं नारायणीये—**

**शूली परशुकमण्डल्वक्षमाली त्रिलोचनः । इति ।**

**वामोर्ध्वात् वामाधःपर्यन्तमायुधध्यानम् ॥ १३९ ॥**

रक्तवर्ण के शरीर वाले तीन नेत्रों से युक्त रक्तवर्ण का वस्त्र धारण किये हुये चण्डेश्वर का मैं अपने हृदय में ध्यान करता हूँ, जो अपने हाथ में फरसा, त्रिशूल, अक्षमाला और कमण्डलु धारण किये हुये हैं, एवं जिनके मस्तक में चन्द्रकला विराजमान है ॥ १३९ ॥

पुरश्चरणमाह

**वर्णलक्षं जपेन्मन्त्रं होमं कुर्याद्दशांशतः ।**
**मधुरत्रयसंयुक्तैर्विशुद्धैस्तिलतण्डुलैः ॥ १४० ॥**
**पञ्चाक्षरोदिते पीठे चण्डेशं साधु पूजयेत् ।**
**मूर्त्तौ बीजेन क्लृप्तायां तत् कूर्मो बिन्दुसंयुतः ॥ १४१ ॥**
**चण्डेश्वराय हृद् बीजपूर्वः पूजामनुर्मतः ।**
**अङ्गैर्मातृभिराशेषैर्वज्राद्यैरायुधैर्यजेत् ॥ १४२ ॥**

**तदिति बीजम् । कूर्मः चकारः ॥ १४०-१४१ ॥**

**पूजामन्त्रमाह—चण्डेति । चण्डेश्वराय स्वरूपम् । हृन्नमः । बीजपूर्वः स्वस्य बीजपूर्व इत्यर्थः । आचार्यैश्च गायत्रीं जपेदित्युक्तम् । यदाहुः—**

**चण्ड चण्डायेत्युक्त्वा प्राग्वदेतद्विद्महे पदम् ।**
**चण्डेश्वराय च प्रोक्त्वा धीमहीति पदं वदेत् ॥**
**तन्नश्चण्ड इति प्रोक्त्वा ब्रूयाद् भूयः प्रचोदयात् ।**
**एषा तु चण्डगायत्री जपात् सान्निध्यकारिणी ॥ इति ॥ १४२ ॥**

वर्णलक्ष (तीन लाख) इस मन्त्र का जप करे, पुनः उसका दशांश पय, मधु एवं घृत इन तीन मधुर पदार्थों से मिश्रित शुद्ध किये गये तिल युक्त तण्डुलों से होम करे ॥ १४० ॥

पञ्चाक्षर में कहे गये पीठ पर (द्र. १८.१५-१९) चण्डेश्वर की अच्छी तरह पूजा करे । बीज मन्त्र से मूर्त्ति का संकल्प कर 'चं चण्डेश्वराय नमः' से पहले बीज (ऊर्ध्व फट्) लगा कर पूजा करे । इस प्रकार 'ऊर्ध्वफट् चं चण्डेश्वराय नमः' यह उनकी पूजा का मन्त्र है । उसके बाद अङ्गो की, फिर मातृकाओं की, तदनन्तर लोकपालों (?) की और फिर उनके वज्रादि आयुधों की पूजा करे ॥ १४१-१४२ ॥

**चतुरावरणं प्रोक्तं चण्डेशस्य समर्चने ।**
**इति सिद्धे मनौ मन्त्री धनवान् जायतेऽचिरात्॥ १४३ ॥**

चण्डेश्वर के अर्चन में चार आवरणों द्वारा पूजा का विधान है । इस प्रकार साधक जब चण्ड मन्त्र सिद्ध कर लेता है तो वह शीघ्र ही धनवान् हो जाता है ॥ १४३ ॥

**तर्पयेन्मनुनाऽनेन नित्यमष्टोत्तरं शतम् ।**
**श्रियमाप्नोति महतीं पुत्रमित्रसमन्वितः ॥ १४४ ॥**

**श्रियमाप्नोतीति । श्रीबीजादित्वम् ॥ १४४ ॥**

जो साधक इस मन्त्र से नित्य १०८ बार तर्पण करता है वह पुत्र एवं मित्र से समन्वित हो महती श्री प्राप्त करता है ॥ १४४ ॥

**प्रियङ्गुकुसुमैः फुल्लैस्तत्काष्ठज्वलितेऽनले ।**
**जुहुयादयुतं मन्त्री पुरः क्षोभो प्रजायते ॥ १४५ ॥**

**मन्त्रीत्यनेन दुर्गाबीजादित्वं सूचितम् ॥ १४५ ॥**

फूले हुये प्रियङ्गु के पुष्पों से एवं प्रियङ्गु काष्ठ से जलती हुई अग्नि में मन्त्रज्ञ साधक दस हजार आहुति प्रदान करे तो सारा का सारा नगर क्षुब्ध हो जाता है ॥ १४५ ॥

**साध्यवृक्षत्वचो लोणं पिष्ट्वा पिष्टसमन्वितम् ।**
**पुत्तलीं रुचिरां कृत्वा प्रतिष्ठाप्य समीरणम् ॥ १४६ ॥**
**छित्त्वा छित्त्वा प्रजुहुयादष्टोत्तरशतं निशि ।**
**सप्ताहमेवं कुर्वीत साध्यो दासो भवेत् स्वयम्॥ १४७ ॥**

**साध्यवृक्षेति । साधस्य यन्नक्षत्रं तन्नक्षत्रवृक्षत्वचः । तान् द्वाविंशे वक्ष्यति । पिष्टं तण्डुलपिष्टम् । तदुक्तमाचार्यैः—**

**साध्यर्क्षाङ्घ्रिपचर्मणां सुमसृणां पिष्टैश्च लोणैः समं**
**कृत्वा पुत्तलिकां प्रतिष्ठितचलां जप्त्वा च रात्रौ हुनेत् ॥ इति ।**

**पुत्तलीम् । षणवत्यङ्गुलाम् । समीरणं प्राणं प्रतिष्ठाप्येति त्रयोविंशप्रकारेण ।**

छित्त्वा छित्त्वाति । द्वाविंशे वक्ष्यमाणरीत्या । साध्य इति । लिङ्गमविवक्षितम् । पुरुषं स्त्रियमपि वशयेत् । तदुक्तम्—

सप्ताहं पुरुषोऽङ्गना यदि चिरं वश्यस्त्ववश्यं भवे-
दस्मिन् जन्मनि नात्र चोद्यविषयो देहान्तरे संशयः ॥ इति ॥

अथ च साध्यमिति सामान्यत उक्तेर्द्विजादिः । तत्र विशेषो नारायणीये—
प्रज्वाल्याऽग्निमपामार्गैरेवं वश्यो भवेद् द्विजः ।
दीप्ते वह्नौ चिताकाष्ठैः प्रतिकृत्या तथा हुनेत् ।
राजा वशीभवेदेवं वश्यः स्याद्वैश्यशूद्रयोः ॥ इति ।

दासो भवेदत्र कामादित्वं ज्ञेयम् ॥ १४६-१४७ ॥

साध्यनक्षत्र के वृक्ष की छाल (द्र. २३. १६०-१६३) और नमक पीस कर चावल के पिसान में मिला देवे । तदनन्तर उसकी अत्यन्त सुन्दर पुतली बनावे और उसमें शत्रु की प्राण प्रतिष्ठा करवावे ॥ १४६ ॥

रात्रिकाल में २२ पटल में कही गई विधि के अनुसार उस पुतली के अङ्ग को काट काट कर १०८ बार होम करे । यह क्रिया सात दिन तक निरन्तर करे तो साध्य स्वयं दास हो जाता है ॥ १४७ ॥

**शैवमन्त्रेषु निष्णातश्चण्डेश्वरमनुं भजेत् ।**
**सर्वान् कामानवाप्नोति परत्रेह च नन्दति ॥ १४८ ॥**

शैवमन्त्रेष्वित्यनेनैतदुक्तं भवति । यावान् चण्डेश्वचरजपस्तावान् शैवषडक्षर मन्त्रजपः । यदाहुः—त्र्यक्षरस्य जपो यावत्तावज्जप्यः षडक्षरः ।
ऐहिकामुष्मिकीं सिद्धिं तथा हि लभते नरः ॥ इति ॥

सर्वान् कामानिति ।

सतिलैस्तन्दुलैर्हेमकाष्ठाग्नौ जुहुयादरेः ।
उन्मादाय पयोहोमस्तच्छान्तिः खादिरानले ॥ इति ।
यद्यद्वर्णैः प्रसूनैस्तु मन्त्री सप्तदिनं हुनेत् ।
लभेत्तद्रूपबासोऽयमृणहा कामदो मनुः ॥

इत्यादि ज्ञेयम् ॥ १४८ ॥

शिवमन्त्र से दीक्षित पुरुष चण्डेश्वर मन्त्र का जप करे । इसका तात्पर्य यह है कि जितनी संख्या में चण्डेश्वर मन्त्र का जप करे उतनी ही संख्या में शैव षड्क्षर का भी जप करे तो साधक अपनी समस्त कामनायें पूर्ण कर लेता है और इस लोक तथा परलोक में सुखी रहता है ॥ १४८ ॥

शिवःस्तुतिः

**धरापोऽग्निमरुद्व्योममखेशेन्द्वर्कमूर्त्तये ।**
**सर्वभूतान्तरस्थाय शङ्कराय नमो नमः ॥ १४९ ॥**

**धरेत्यादि शैवमन्त्रान्ते शिवस्तुतिः । धरेति श्लोकेनाऽष्टमूर्तित्वमुक्तम् । मखेशो यजमानः ॥ १४९ ॥**

अब शैव मन्त्रों के प्रतिपादनोपरान्त **श्री शिव की स्तुति** प्रारम्भ करते हैं-

१. पृथ्वी, २. जल, ३. अग्नि, ४. वायु, ५. आकाश, ६. यजमान, ७. सूर्य और ८. चन्द्ररूप से अष्टमूर्त्ति रूप धारण कर समस्त प्राणियों के अन्तःस्थित भगवान् शंकर को हम बारम्बार नमस्कार करते हैं ॥ १४९ ॥

**श्रुत्यन्तकृतवासाय श्रुतये श्रुतिजन्मने ।**
**अतीन्द्रियाय महसे शाश्वताय नमो नमः ॥ १५० ॥**

**श्रुत्यन्तेति । उपनिषत्प्रतिपाद्यत्वात्तत्र कृतावासायेत्युपचारतः प्रयोगः । श्रुतये श्रुतिरूपाय । श्रुतीनां जन्म यस्मात् । तेनाऽनादिवेदप्रवक्त्रे । अतीन्द्रियायेति । 'यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह' इति श्रुतेः ॥ १५० ॥**

श्रुतियों के सिद्धान्तभूत उपनिषत् में निवास करने वाले, श्रुति का स्वरूप धारण करने वाले तथा श्रुतियों के जन्मदाता, इन्द्रियों से अगोचर, अनिर्वचनीय तेजःस्वरूप सदाशिव को हमारा बारम्बार नमस्कार है ॥ १५० ॥

**स्थूलसूक्ष्मविभागाभ्यामनिर्देश्याय शम्भवे ।**
**भवाय भवसम्भूतदुःखहन्त्रे नमोऽस्तु ते ॥ १५१ ॥**

**भवाय भवनाम्ने । भवो जन्म तद्दुःखहन्त्रे ॥ १५१ ॥**

स्थूल एवं सूक्ष्म दोनों प्रकार के विभागों से अनिद्र्देश्य भव नाम वाले, किन्तु भवसंभूत क्लेश के विनाशकर्त्ता शम्भु को हमारा नमस्कार है ॥ १५१ ॥

**तर्कमार्गातिदूराय तपसां फलदायिने ।**
**चतुर्वर्गवदान्याय सर्वज्ञाय नमो नमः ॥ १५२ ॥**

**तर्कः दुस्तर्कः । चतुर्वर्गप्रदात्रे ॥ १५२ ॥**

तर्क मार्ग से सर्वथा अगम्य, तपस्या का फल प्रदान करने वाले तथा धर्म, अर्थ, काम एवं मोक्ष रूप चारों पुरुषार्थों के फल देने वाले सर्वज्ञ सदाशिव को हमारा नमस्कार हैं ॥ १५२ ॥

**आदिमध्यान्तशून्याय निरस्ताशेषभीतये ।**
**योगिध्येयाय महते निर्गुणाय नमो नमः ॥ १५३ ॥**
**विश्वात्मनेऽविचिन्त्याय विलसच्चन्द्रमौलिने ।**
**कन्दर्पदर्पकालाय कालहन्त्रे नमो नमः ॥ १५४ ॥**

**आदिः सर्गः मध्यः पालनं अन्तः संहारः तत्र शून्याय । फलानुपगमात् । अविचिन्त्याय । इयत्ताभावात् । कालायाऽन्तकाय ॥ १५३-१५४ ॥**

आदि, मध्य एवं अन्त से रहित, समस्त भीतियों को विनष्ट करने वाले योगिजनों के एक मात्र ध्येय, महान् एवं निर्गुण रूप सदाशिव को बारम्बार नमस्कार है ॥ १५३ ॥

समस्त विश्व के आत्मास्वरूप, इयत्ता से रहित, चन्द्रकला को मस्तक में धारण करने वाले, कन्दर्प के दर्प के लिये कालस्वरूप एवं अन्तकान्तक सदाशिव को बारम्बार नमस्कार है ॥ १५४ ॥

**विषाशनाय विहरद् वृषस्कन्धमुपेयुषे ।**
**सरिद्दामसमाबद्धकपर्दाय नमो नमः ॥ १५५ ॥**
**शुद्धाय शुद्धभावाय शुद्धानामन्तरात्मने ।**
**पुरान्तकाय पूर्णाय पुण्यनाम्ने नमो नमः ॥ १५६ ॥**
**भक्ताय निजभक्तानां भुक्तिमुक्तिप्रदायिने ।**
**विवाससे विवासाय विश्वेशाय नमो नमः ॥ १५७ ॥**

**सरिद् गङ्गा सैव दाम तेन प्रबद्धः कपर्दो जटाजूटो येन तस्मै । 'कपर्दोऽस्य जटाजूटः' इति कोषः ॥ १५५-१५७ ॥**

कालकूट जैसे महाविष को क्षणभर में पान करने वाले, धर्मरूप बैल के कन्धे पर सवार होकर सर्वत्र विचरण करने वाले, गङ्गा रूपी रस्सी से अपने जटाजूट को बाँधने वाले सदाशिव को हमारा बारम्बार नमस्कार है ॥ १५५ ॥

विकार रहित होने से सर्वथा शुद्ध, शुद्धभाव वाले, शुद्धों के अन्तरात्मा स्वरूप, त्रिपुर के विनाशकर्त्ता, पुण्यात्मा एवं पुण्य नाम वाले सदाशिव को हमारा बारम्बार नमस्कार है ॥ १५६ ॥

अपने भक्तों की स्वयं भक्ति करने वाले, भोग और मोक्ष प्रदान करने वाले, वस्त्रहीन, अनिकेत, विश्वेश्वर को हमारा बारम्बार नमस्कार है ॥ १५७ ॥

**त्रिमूर्त्तिमूलभूताय त्रिनेत्राय नमो नमः ।**
**त्रिधाम्नां धामरूपाय जन्मघ्नाय नमो नमः ॥ १५८ ॥**
**देवासुरशिरोरत्नकिरणारुणिताङ्घ्रये ।**
**कान्ताय निजकान्तायै दत्तार्धाय नमो नमः ॥ १५९ ॥**
**स्तोत्रेणाऽनेन पूजायां प्रीणयेज्जगतः पतिम्।**
**भुक्तिमुक्तिप्रदं भक्त्या सर्वज्ञं परमेश्वरम् ॥ १६० ॥**

**॥ इति श्रीलक्ष्मणदेशिकेन्द्रविरचिते शारदातिलके विंशः पटलः समाप्तः ॥ २० ॥**

त्रिमूर्तेः ब्रह्मविष्णुरुद्रमूर्तेः । त्रिधाम्नामिति सूर्याग्निचन्द्रमसाम् ॥१५८-१६०॥

॥ इति श्रीराघवभट्टविरचित-शारदातिलकटीकायां सत्सम्प्रदायकृतव्याख्यायां पदार्थादर्शाभिख्यायां विंशः पटलः ॥ २० ॥



ब्रह्मा, विष्णु तथा रुद्र रूप तीन मूर्तियों के मूल कारण स्वरूप, त्रिनेत्र, सदाशिव को हमारा बारम्बार नमस्कार है । सूर्य, चन्द्रमा एवं अग्निस्वरूप तीनों तेजों के धाम स्वरूप, प्राणियों के जन्म के चक्कर को नष्ट करने वाले सदाशिव को हमारा बारम्बार नमस्कार है ॥ १५८ ॥

देवता एवं असुरों के मुकुटों में लगी हुई मणियों की किरणों से अरुणवर्ण के चरणों से युक्त, सर्वथा मनोहर तथा अपनी प्रियतमा को अर्धाङ्ग समर्पित करने वाले सदाशिव को हमारा बारम्बार नमस्कार है ॥ १५९ ॥

साधक को भोग एवं मोक्ष प्रदान करने वाले, सर्वज्ञ, जगत्पति परमेश्वर को पूजा काल में इस स्तोत्र से अवश्य प्रसन्न करना चाहिए ॥ १६० ॥

**॥ इस प्रकार शारदातिलक के बीसवें पटल की डॉ० सुधाकर मालवीय कृत हिन्दी व्याख्या पूर्ण हुई ॥ २० ॥**



# अथैकविंशः पटलः

## अथ गायत्रीप्रकरणम्

अथो वक्ष्यामि गायत्रीं तत्त्वरूपां त्रयीमयीम् ।
यया प्रकाश्यते ब्रह्म सच्चिदानन्दलक्षणम् ॥ १ ॥

एवं तान्त्रिकान् पञ्चदेवतामन्त्रानुक्त्वा कतिचिद्गायत्र्यादिवैदिकान्मन्त्रान्वक्तुमुपक्रमते अथो इति । तत्त्वरूपां चतुर्विंशतिवर्णानां चतुर्विंशतितत्त्वात्मत्वात्तद्रूपता । तान्यक्षरन्यासे वक्ष्यन्ते । अनेन गायत्र्यक्षरैः सार्द्धं तत्त्वन्यासोऽपि सूचितः । त्रयीमयीमित्यनेन एतया सम्यग्यथाविधि पठितया त्रयीपाठफलप्राप्तिरुक्ता । यया गायत्र्या सच्चिदानन्दलक्षणं ब्रह्म प्रकाश्यते । ततः प्रणवस्य तत्प्रतिपादकत्वमन्त्ये वक्ष्यति । व्याहृत्यादीनां तत्प्रतिपादकत्वमाहुराचार्याः—

भूःपदाद्या व्याहृतयो भूशब्दस्तदिं(ः सति)वर्त्तते ।
तत्पदं सदिति प्रोक्तं तन्मात्रत्वाच्च भूरतः ॥
भूतत्वात् कारणत्वाच्च भुवः शब्दस्य सङ्गतिः ।
सर्वस्वीकरणात् स्वात्मतया च स्वरितीरितम् ॥
महत्त्वाच्च महस्त्वाच्च महःशब्दस्य सङ्गतिः ।
तदेव सर्वजनता तस्मात् तु व्याहृतिर्जनः ॥
तपोज्ञानतया चैव तथा तापतया स्मृतम् ।
सत्यं परत्वादात्मत्वादनन्तज्ञानतः स्मृतम् ॥
प्रणवस्य व्याहृतीनामतः सम्बन्ध उच्यते ।
अकारो भूरुकारस्तु भुवो मार्णः स्वरीरितः ॥
बिन्दुर्महस्तथा नादो जनः शक्तिस्तपः स्मृतम् ।
शान्तिः सत्यमिति प्रोक्तं यत्तत्परतरं पदम् ॥
अत्रापि तत्पदं पूर्वं प्रोक्तं तदनुवर्ण्यते ।
प्रणवस्य व्याहृतीनां गायत्र्यैक्यमथोच्यते ॥
तद्द्वितीयैकवचनमनेनाऽखिलवस्तुनः ।
सृष्ट्यादिकारणं तेजोरूपमादित्यमण्डले ॥
अभिध्येयं परानन्दं परं ब्रह्माऽभिधीयते ।
यत्तत्सवितुरित्युक्तं षष्ठ्येकवचनात्मकम् ॥
धातोरिह विनिष्पन्नं प्राणिप्रसववाचकात् ।
सर्वासां प्राणिजातीनामिति प्रसवितुः सदा ॥
वरेण्यं वरणीयत्वात् सेवनीयतया तथा ।

भजनीयतया सर्वैः प्रार्थनीयतया स्मृतम् ॥
पूर्वस्याऽष्टाक्षरस्यैवं व्याहृतिर्भूरितीरिता ।
पापस्य भर्जनाद्भर्गो भक्तस्निग्धतया तथा ॥
देवस्य वृष्टिदानादिगुणयुक्तस्य नित्यशः ।
प्रभूतेन प्रकाशेन दीप्यमानस्य वै तथा ॥
ध्यै चिन्तायामतो धातोर्निष्पन्नं धीमहीत्यदः।
निगमाद्येन दिव्येन विद्यारूपेण चक्षुषा ॥
दृश्यो हिरण्मयो देव आदित्यो नित्यसंस्थितः ।
हीनतारहितं तेजो यस्य स्यात् स हिरण्मयः ॥
यः सूक्ष्मः सोऽहमित्येवं चिन्तयामः सदैव तु ।
द्वितीयाष्टाक्षरस्यैवं व्याहृतिर्भुव ईरिता ॥
धियो बुद्धीर्मनोरस्य छान्दसत्वाद् य ईरितः ।
कृतश्च लिङ्गव्यत्यासः सूत्रात् सुप्तिङुपग्रहात् ॥
यत्तत्तेजो निरुपमं सर्ववेद(देव)मयात्मकम् ।
भजतां पापनाशस्य हेतुभूतमिहोच्यते ॥
न इति प्रोक्त आदेशः षष्ठ्या बहिवति चास्मदः ।
तस्मादस्माकमित्यर्थः प्रार्थनायां प्रचोदयात् ॥
तृतीयाष्टाक्षरस्यापि व्याहृतिः स्वरितीरिता ।
एवं दशपदान्यस्यास्त्रयश्चाऽष्टाक्षराः स्मृताः ॥
षडक्षराश्च चत्वारः स्युश्चतुर्विंशदक्षराः ।
इत्थंभूतं यदेतस्य देवस्य सवितुर्विभोः ॥
वरेण्यं भजतां पापविनाशनकरं परम् ।
भर्गोऽस्माभिरभिध्यातं धियस्तन्नः प्रचोदयात् ॥
उक्तैवमत्र गायत्री पुनस्तच्छिर उच्यते ।
आपो ज्योती रस इति सोमाग्न्योस्तेज उच्यते ॥
तदात्मकं जगत् सर्वं रसस्तेजोद्वयं स्मृतम् ।
अमृतं तदनाशित्वाद् बहुत्वाद् ब्रह्म गद्यते ॥
यदानन्दात्मकं ब्रह्म सत्यज्ञानादिलक्षणम् ।
तद् भूर्भुवःस्वरित्युक्तं सोऽहमित्यो(त्थ)मुदाहृतम् ॥
एतत्तु वेदसारस्य शिरस्त्वाच्छिर ईरितम् । इति ॥ १ ॥

—प्रपञ्चसारतन्त्रे ३०. ७-३१

ग्रन्थकार ने यहाँ तक तान्त्रिक मन्त्रों का व्याख्यान किया है । अब **वैदिक मन्त्रों के व्याख्यान** का उपक्रम प्रारम्भ करते हैं—अब मैं चौबीस तत्त्वात्मक वेदस्वरूपिणी गायत्री के विषय में कहता हूँ, जिससे सच्चिदानन्द रूप ब्रह्म प्रकाशित होते हैं ॥ १ ॥

**प्रणवाद्या व्याहृतयः सप्त स्युस्तत्पदादिका ।**
**चतुर्विंशत्यक्षरात्मा गायत्री शिरसाऽन्विता ॥ २ ॥**

सर्ववेदोद्धृतः सारो मन्त्रोऽयं समुदाहृतः।
ब्रह्मा देव्यादिगायत्री परमात्मा समीरिताः॥ ३ ॥
ऋष्याद्याः प्रणवस्यैते मुनिभिः परिकीर्त्तिताः।
जमदग्निभरद्वाजभृगुगौतमकश्यपान् ॥ ४ ॥
विश्वामित्रवसिष्ठाख्यौ व्याहृतीनामृषीन्विदुः।
गायत्र्युष्णिगथाऽनुष्टुब्बृहती पङ्क्तयः पुनः॥ ५ ॥
त्रिष्टुब्जगत्यौ च्छन्दांसि कथितानि मनीषिभिः।
सप्तार्चिरनिलः सूर्यो वाक्पतिर्वरुणो वृषः॥ ६ ॥
विश्वेदेवाः क्रमादासां देवताः परिकीर्त्तिताः।
गायत्र्या मुनिराख्यातो विश्वामित्रो महाद्युतिः॥ ७ ॥
गायत्री छन्द इत्युक्तं देवता सविता स्मृता।
शिरसाऽस्य मुनिर्ब्रह्मा छन्दो देव्यादिका स्मृता ॥ ८ ॥
गायत्री परमात्माऽस्य देवता कथिता बुधैः।

**प्रणवाद्या इति प्रतिव्याहृति सम्बध्यते । तत्पदादिकेत्यस्याऽग्रिमेण सम्बन्धः । शिरसेति । ॐ आपो ज्योती रसोऽमृतं ब्रह्म भूर्भुवः स्वरोमिति । मुनिभिः परिकीर्त्तिता ऋष्याद्याः प्रणवस्य समीरिता इति सम्बन्धः । अस्याः कल्पोऽहं बीजादिप्रोक्तम्— रे इत्येतत् तु बीजं स्याद्यवर्णं शक्तिरुच्यते ।**
**णित्येतत्कीलकं प्रोक्तं गायत्र्यास्त्रिपदात्मनः ॥ इति ॥**

**कल्पान्तरे—यं तु बीजं स्यादी शक्तिर्णं च कीलकम् । इति ॥ २-८ ॥**

**शिखा गायत्री**—प्रणव से युक्त (प्रत्येक महाव्याहृति के आदि में प्रणव लगाकर) सात व्याहृतियाँ हैं । 'तत्पद' से लेकर 'प्रचोदयात्' पर्यन्त चौबीस अक्षर की गायत्री होती हैं और 'ॐ आपो ज्योती रसोऽमृतं भूर्भुवः स्वरोम्' यह शिखा गायत्री है ॥ २ ॥

यह गायत्री मन्त्र संपूर्ण वेदों को मथकर सार रूप में निकाला गया है । प्रणव के ब्रह्मा ऋषि हैं, देवियों में आदि देवी गायत्री छन्द है तथा परमात्मा इसके देवता हैं। मुनियों के द्वारा कहे गये प्रणव के ऋषि आदि हमने यहाँ कहा ॥३-४॥

अब **महाव्याहृतियों के ऋषि** आदि कहते हैं—इन सात महाव्याहृतियों के क्रमशः जमदग्नि, भरद्वाज, भृगु, गौतम, कश्यप, विश्वामित्र तथा वशिष्ठ ऋषि हैं । मनीषियों ने गायत्री, उष्णिक्, अनुष्टुप्, बृहती, पंक्ति, त्रिष्टुप् और जगती इनका छन्द कहा है और अग्नि, वायु, सूर्य, बृहस्पति, वरुण, धर्म तथा विश्वेदेव—इन सात को इनका देवता कहा गया है । इसके बाद गायत्री के ऋष्यादि कहते हैं । इस गायत्री मन्त्र के महान् तेजस्वी विश्वामित्र ऋषि हैं, गायत्री छन्द है तथा सविता इनके देवता हैं ॥ ४-८ ॥

अब **शिरसा गायत्री के ऋष्यादि** कहते हैं—शिरसा गायत्री के ब्रह्मा ऋषि हैं, आदि देवी (त्रिपदा) गायत्री छन्द हैं और परमात्मा इसके देवता हैं ऐसा बुद्धिमानों ने कहा है ॥ ८-९ ॥

अक्षरन्यासः

**व्याहृतीः सप्त भूराद्या हृन्मुखांसोरुयुग्मके ॥ ९ ॥**
**जठरे न्यस्य मन्त्रज्ञो गायत्र्यार्णांस्तनौ न्यसेत् ।**
**पत्सन्धिषु ध्वजे नाभौ हृत्कण्ठभुजसन्धिषु ॥ १० ॥**
**आस्यनासाकपोलाक्षिकर्णभ्रूमस्तके पुनः ।**
**पाश्चात्योत्तरयाम्यप्रागूर्ध्ववक्त्रेषु साधकः ॥ ११ ॥**

मन्त्रज्ञो न्यसेदित्यनेन प्रणवं विन्यस्य सप्तव्याहृतीर्विन्यस्तव्या इत्युक्तं भवति ।

यदाहुः—अं नमो ब्रह्मणे नाभौ हृदये उं च विष्णवे ।
मं शिवाय नमो मूर्ध्नि तत्तद्रूपं स्मरन् न्यसेत् ॥ इति ॥

पत्सन्धिष्विति । पादद्वयसन्धिचतुष्के अक्षरचतुष्कम् । तदुक्तम्—'पदद्वयसन्धिचतुष्के' इति । अयं न्यासः अङ्गुलिमारभ्य कर्त्तव्यः । अत्र यद्यपि सन्धिशब्दग्रहणमस्ति तथापि तदवध्यङ्ग एव न्यासो विधेय इति ज्ञेयम् । एवं भुजद्वयसन्धिचतुष्के अक्षरचतुष्कम् । न्यासादिष्वेकैकमक्षरम् । णियेत्यस्य पृथग्भावेन चतुर्विंशत्यक्षरात्मकत्वम् । साधक इत्यनेन प्रत्यक्षरमादौ प्रणवः अन्ते च नमःशब्द इत्युक्तम् । कल्पान्तरे तु—

वर्णन्यासमथो वक्ष्ये आर्षं छन्दश्च दैवतम् ।
तत्त्वशक्ती वर्णमुद्रे स्मृत्वा वर्णान् क्रमान् न्यसेत् ॥
मित्रोक्ताग्न्यचलाह्लादि पीतो वक्राङ्गुली करौ ।
सम्मुखं मोहपापघ्नं चरणाङ्गुष्ठयोस्तु तत् ॥
मधुच्छन्दो निवाद्यम्बु प्रभा श्यामोऽब्जकोशवत् ।
समुखौ सम्पुटं चोपपापघ्नं गुल्फयोस्तु सं ॥
गर्गमध्यार्कतेजोजा कपिलो विततं करौ ।
प्रसारितोत्तानशाखौ पापघ्नं जङ्घयोस्तु विं ॥
उपमन्युः प्रतिष्ठा च विद्युद्वायुश्च विश्वभृत् ।
विस्तीर्णं संहतोत्तानतर्जनीमुक्तहस्तकम् ॥
इन्द्रनीलनिभं रोगग्रहघ्नं जानुनोस्तु तुं ।
कश्यपः सुप्रतिष्ठा च यमः खं च विलासिनी ॥
वह्न्याभं सम्मुखासक्तपाण्योर्युक्तकनिष्ठयोः ।
अन्यत्र विरलाङ्गुल्योरङ्गुष्ठद्वययोगतः ॥
द्विमुखं भ्रूणहत्याघ्नमूर्वोर्वं विन्यसेत् सुधीः ।
भृगुर्देवी जलं गन्धः प्रभाच्छः पूर्वरूपयोः ॥
त्रिमुखं तर्जनीयोगाद् गुह्येऽगम्याघहृत् तु रें ।
अत्र्युष्णिग्वाप्रसो लीला विद्युत्तद्वच्चतुर्मुखम् ॥

मध्यायोगादभक्ष्याघहरं वृषणयोस्तु णिं ।
विष्वनुष्टुब्विरूपाक्षनामाच्छः पञ्चवक्त्रकम् ॥
अनामायोगतो हत्याहरं कट्यां तु यं तथा ।
हारीतो बृहतीन्द्रस्त्वक् कान्ति(कीर्त्ति)र्नीलस्तथा तयोः ॥
तिर्यग्युक्ताग्राङ्गुलिकयोः कनिष्ठा मोक्षणे सति ।
षण्मुखं नरहत्याघ्नं नाभौ भं याज्ञवल्क्यकः ॥
पङ्क्तिर्विद्याधरः शब्दो दुर्गा रक्तमधोमुखम् ।
वक्राग्रावाकृतकरं जठरे गों गवां हितम् ॥
कविस्त्रिष्टुब्रविर्वागौं रक्तरुग्व्यापकाञ्जलिः ।
उत्तानौ पूर्ववद्धस्तौ स्त्र्यघनुत् स्तनयोश्च दें ॥
अङ्गिरा जगती शर्वो हस्तौ विद्याच्छरुक्त्वधः ।
मुक्ताग्राङ्गुष्ठकौ मुष्टी शकटं हृदि वं गुरोः ॥
स्यं ज(य?)मो जगती त्वष्टोपस्थेशाः काञ्चनछविः ।
यमपाशं बद्धमुष्ट्योरुत्ताना वामतर्जनी ॥
वक्राग्रा न्युब्जया युक्ताऽन्यया कण्ठे मनोऽघहृत् ।
आपस्तम्बः शक्वरी च पायुराप्यायिनी वसुः ॥
शुभ्रो मिथः सन्धिलीनाङ्गुलिकौ समुखौ करौ ।
दीर्घाङ्गुष्ठौ ग्रथितकं धीं मुखे पितृ(नृप)पापनुत् ॥
संवर्त्तोऽर्त्तिर्मरुत्पादौ विमला पद्मरागभः ।
सन्धिनोर्ध्वाङ्गुलिर्वामस्तादृशोऽधोमुखः परः ॥
सुसम्मुखोन्मुखं तालुमध्ये मं पूर्वपापहम् ।
कात्यायनस्त्रिवृत् सोमः श्रोत्रं माच्छं विषापहम् ॥
उत्तानोन्नतकोटी द्वौ लम्बं हिं नासिकानतम् ।
असितोत्यङ्गिरा त्वग्धिरण्या पाण्डु परिग्रहात् ॥
अन्योन्यसंहतोत्तानौ मुष्टिकं नेत्रयोस्तु धिं ।
व्यासो धृतिः सुराश्चक्षुः सूक्ष्मा रक्तश्च सम्मुखौ ॥
युक्तानामाकनिष्ठौ संयुक्तवक्राग्रशेषकौ ।
मत्स्यप्राणिवधाघघ्नं भ्रूमध्ये यों न्यसेद् द्विजः ॥
पराशरो धृतिर्दस्त्रो जिह्वा योनिश्च रुक्मरुक ।
कूर्मः पृष्ठे समाक्रान्तो दक्षिणेन त्वधोमुखः ॥
यों ललाटेऽखिलाघघ्नं शङ्कुः कृतिः प्रजापतिः ।
प्राणं जया वलाकाभः कक्षाभ्यां साश्रयौ करौ ॥
वामोर्ध्वमध्यो वाराहः पूर्वास्ये नं सुखार्थदम् ।
शङ्खप्रकृतिदेवा हृत् पद्मा नीलः श्रुतिश्रितौ ॥
प्रसारिताङ्गुली सिंहो दक्षास्ये प्रं शिवप्रदम् ।
दक्षाकृती शिवाऽहं मा हरित् पूर्वोदितौ करौ ॥
कुञ्चिताग्रौ महाक्रान्तमुत्तरे चों हरिप्रदम् ।
गौतमाकृतिकाच्छाद्या मुद्गरः किञ्चिदूर्ध्वयोः ॥
करयोर्वामहस्तस्य तर्जनीदक्षमुष्टिना ।

गृहीता ब्रह्मसौख्यस्य प्रदं दं पश्चिमानने ॥
शातातपः कृतिर्विष्णुर्गुणो भद्रेशरूपधृक् ।
दक्षिणोऽधोमुखो मूर्ध्नि पल्लवः के यवर्गि यात् ॥
इति ॥ ९-११ ॥

अब **अक्षरन्यास** कहते हैं—हृदय, मुख, दोनों कन्धे, दोनों ऊरू तथा जठर में सप्त व्याहृतियों से न्यास करे । पुनः गायत्री के अक्षरों से शरीर के तत्तदवयवों में इस प्रकार न्यास करे । पैर की चार सन्धियों में चार अक्षर, लिङ्ग नाभि, हृदय और कण्ठ में एक एक अक्षर, पुनः हाथ की चार सन्धियों में चार अक्षर, तदनन्तर मुख, नासिका, कपोल, आँख, कान, भ्रू तथा मस्तक में एक एक अक्षर का न्यास करे । तदनन्तर पश्चिम, उत्तर, दक्षिण, पूर्व तथा ऊर्ध्व के मुखों में एक एक अक्षर के क्रम से ५ अक्षर । इस प्रकार में २४ अक्षरों का न्यास २४ स्थानों में करे । न्यास काल में अक्षर के आदि में प्रणव तथा अन्त में नमः शब्द का प्रयोग करना चाहिए । यद्यपि मन्त्र में २३ अक्षर ही हैं तथापि 'ण्यम्' यहाँ पर णि यम् को अलग अलग कर देने से २४ अक्षर पूर्ण हो जाते हैं ॥ ९-११ ॥

गायत्रीपदन्यासः

**पदानि दश विन्यस्येदेषु स्थानेषु मन्त्रवित् ।**
**शिरोभ्रूमध्यहृद्वक्त्रे कण्ठहृन्नाभिगुह्यके ।**
**जानुनोः पादयोर्युग्मे तच्छिरः शिरसि न्यसेत् ॥ १२ ॥**

**पदन्यासमाह पदानीति । एषु वक्ष्यमाणेषु । पदानि तु—एकत्र्यग्निद्व्यग्नि वह्निद्व्येकैकाध्यक्षरैः क्रमात् । कल्पान्तरे शिरःपदन्यासोऽप्युक्तः—**

**ॐ आपस्तनयोर्ज्योतिर्नसि नेत्रे रसो मुखे ।**
**अमृतं शिरसि ब्रह्म शिखायां भूर्भुवः स्वरोम् ॥ इति ॥ १२ ॥**

इसके बाद मन्त्रवेत्ता साधक गायत्री को वक्ष्यमाण दश पदो में प्रविभक्त कर शिर, भ्रूमध्य, हृदय, मुख, कण्ठ, हृदय, नाभि, गुह्य, दोनों जानु, दोनों पैर— इस प्रकार कुल दश स्थानों में न्यास करे । दस पद विभाग, इस प्रकार हैं—१. तत्, २. सवितः, ३. वरेण्यम्, ४. भर्गो, ५. देवस्य, ६. धीमहि, ७. धियो, ८. यो, ९. नः, १०. प्रचोदयात् । इसके अनन्तर 'तच्छिरः' से शिर में न्यास करना चाहिए ॥ १२ ॥

गायत्री षडङ्गम्

**ब्रह्मणे हृदयं प्रोक्तं विष्णवे शिर ईरितम् ।**
**शिखा रुद्राय कवचमीश्वराय समीरितम् ॥ १३ ॥**
**नेत्रं सदाशिवायोक्तमस्त्रं सर्वात्मने स्मृतम् ।**
**षडङ्गान्येवमुक्तानि यथास्थानं प्रविन्यसेत् ॥ १४ ॥**

षडङ्गमाह ब्रह्मण इति । अस्त्रं सर्वात्मने स्मृतमित्यात्मनेपदोद्धारो ग्रन्थकृतः सर्वत्राऽभिप्रेतः । ब्रह्मात्मने हृदयाय नम इत्यादि प्रयोगः । साम्प्रदायिकास्तु ॐ भूर्भुवः स्वस्तत्सवितुर्ब्रह्मात्मने हृत् । वरेण्यं विष्णात्मने शिरः । भर्गो देवस्य रुद्रात्मने शिखां । धीमहि ईश्वरात्मने कवचम् । धियो यो नः सदाशिवात्मने नेत्रम् । प्रचोदयात् सर्वात्मने अस्त्रमिति षडङ्गक्लृप्तिं वदन्ति । कल्पान्तरे तु—

ब्रह्मा विष्णुः क्रमाद्रुद्र ईश्वरश्च सदाशिवः ।
सर्वात्मतेजसोन्तस्य व्याहृत्यादिषडङ्गके ॥ इति ।

आदिशब्देन व्याहृतित्रयं पदत्रयं च । ॐ भूर्ब्रह्मतेजस इत्यादि प्रयोगः ॥ १३-१४ ॥

अब इसके बाद **षडङ्गन्यास** कहते हैं—ब्रह्मणे नमः से हृदय में, विष्णवे नमः से शिर में, रुद्राय नमः से शिखा में, ईश्वराय नमः से कवच में, सदाशिवाय नमः से नेत्र में एवं सर्वात्मने नमः से व्यापक अस्त्रन्यास करना चाहिए । इस प्रकार हमने षडङ्गन्यास कहा । इस प्रकार तत्तन्मन्त्रों से यथास्थान न्यास करना चाहिए ॥ १३-१४ ॥

ध्यानम्

**मुक्ताविद्रुमहेमनील धवलच्छायैर्मुखैस्त्रीक्षणै-**
**र्युक्तामिन्दु निबद्धरत्नमुकुटां तत्त्वात्मवर्णात्मिकाम् ।**
**सावित्रीं वरदाभयाङ्कुशकशाः शुभ्रं कपालं गुणं**
**शङ्खं चक्रमथाऽरविन्दयुगलं हस्तैर्वहन्तीं भजे॥ १५ ॥**

ध्यानमाह मुक्तेति । कशा अश्वादेस्ताडनीरज्जुः । शुभ्रमिति कपालविशेषणम् । गुणः पाशः । आयुधध्यानं तु । दक्षाद्यूर्ध्वयोरन्त्ये तदधस्तनयोश्चक्रशङ्खौ । तदधस्थयोः पाशकपाले । तदधस्थयोः कशाङ्कुशौ । तदधस्तनयोरभयवरौ । अत्र ध्यानानन्तरं वरादिमुद्रा प्रदर्शयेत् । यदाहुः—

वराभयाब्जपक्षीन्द्रशक्तिमुद्राः प्रदर्शयेत् ॥ इति ।

त्रिसन्ध्यं ध्यानम् । यथा—

हंसारूढां शिताब्जे त्वरुणमणिलसद्भूषणां भालनेत्रां
वेदाख्या(स्या)मक्षमालां स्रुवमथ कमलं दण्डमप्यादधानाम् ।
ध्यायेद्दोर्भिश्चतुर्भिस्त्रिभुवनजननीं पूर्वसन्ध्यादिवन्द्यां
गायत्रीमृक्सवित्रीमभिनववयसं मण्डले चण्डरश्मेः ॥

विश्वमातः सुराभ्यर्च्ये पुण्ये गायत्रि वैधसि ।
आवाहयाम्युपास्त्यर्थं एह्योनोघ्नि पुनीहि माम् ॥
वृषेन्द्रवाहना देवी ज्वलत्त्रिशिखधारिणी ।
श्वेताम्बरधरा श्वेतनागाभरणभूषणा ॥
श्वेतस्त्रगक्षमालालङ्कृता रक्ता च शङ्करा ।
जटाधारा धरा धात्री धरेन्द्राङ्गभवा भवा ॥
मातर्भवानि विश्वेशि आहूतैहि पुनीहि माम् ।

सन्ध्या सायन्तनी कृष्णा विष्णुदेवा सरस्वती ॥
खगगा कृष्णवक्त्रा तु शङ्खचक्रधरा परा ।
कृष्णास्त्रग्भूषणैर्युक्ता सर्वज्ञानमयी वरा ॥
वीणाक्षमालिकाचारुहस्ता स्मितवरानना ।
मातर्वाग्देवते स्तुत्ये आहूतैहि पुनीहि माम् ॥ इति ॥ १५ ॥

अब **गायत्री के ध्यान का प्रकार** कहते हैं—जिनका स्त्रियोचित मनोहर मुखमण्डल मोती, विद्रुम, स्वर्णनील तथा धवल कान्ति से सुशोभित हैं, जिनके मुकुट में चन्द्र कला निबद्ध है जो चौबीस तत्त्वात्मक चौबीस वर्णों वाली हैं, और अपने हाथों में १. वर, २. अभय, ३. अंकुश, ४. कशा (=चाबुक), ५. शुभ्र कपाल, ६. अक्षसूत्र, ७. शङ्ख, ८. चक्र तथा ९.१०. कमल के जोड़े धारण की हुई हैं, ऐसी सावित्री की मैं सेवा करता हूँ ॥ १५ ॥

**प्राणायामान् पुरा कृत्वा गायत्रीं सन्ध्ययोर्जपेत् ।**
**सप्तव्याहृतिसंयुक्तां गायत्रीं शिरसाऽन्विताम् ॥ १६ ॥**
**त्रिरुच्चरन् धिया प्राणान् धारयेद्यतमानसः।**
**प्राणायामोऽयमाख्यातः समस्तदुरितापहः॥ १७ ॥**

प्राणायामानिति बहुवचनं कपिञ्जलाधिकरणन्यायेन त्रित्वे पर्यवस्यति । तत्स्वरूपमेवाह । सप्तेति । धिया त्रिरुच्चरन्निति सम्बन्धः ॥ १६-१७ ॥

गायत्री जप करने के पहले प्राणायाम करे, पश्चात् दोनों सन्ध्या में गायत्री जप करे । आदि में सप्त व्याहृतियों से एवं अन्त में आपोज्योती रसोऽमृतम्, ॐ भूर्भुवः स्वरोम्' इस शिरसा से युक्त गायत्री का मन से तीन बार उच्चारण करते हुये स्थिर चित्त हो प्राणवायु को क्रमशः बाहर से खींचे, पुनः उसे रोके तथा पुनः उसे छोड़े—इस प्रकार की क्रिया को प्राणायाम कहते हैं, यह समस्त पाप तापों का विनाशक है ॥ १७ ॥

**व्याहृतित्रयसंयुक्तां गायत्रीं दीक्षितो जपेत् ।**
**तत्त्वलक्षं विधानेन भिक्षाशी विजितेन्द्रियः ॥ १८ ॥**

व्याहृतीति । व्याहृतित्रयमाद्यम् । मोक्षार्थी तु 'परोरजसे सावदोम्' इति चतुर्थपादसहितां जपेदिति ज्ञेयम् । अस्य विमलः ऋषिः गायत्री छन्दः परमात्मा देवतेति । तत्त्वलक्षमिति । चतुर्विंशतिलक्षम् । विधानेनेति पुरश्चरणोक्तेन ॥ १८ ॥

अब **गायत्री पुरश्चरण की विधि** कहते हैं—दीक्षा लेने के पश्चात् साधक तीन व्याहृति से संयुक्त गायत्री मन्त्र का २४ लाख पुरश्चरणोक्त विधि से जप करे, ब्रह्मचारी रहे, इन्द्रियों को संयम में रखे और भिक्षान्न भोजन करे ॥ १८ ॥

**क्षीरौदनतिलान् दूर्वाक्षीरद्रुमसमिद्वरान् ।**
**पृथक् सहस्रत्रितयं जुहुयान्मन्त्रसिद्धये ॥ १९ ॥**

**क्षीरौदनेति । क्षीरमोदनस्तिला दूर्वा इति द्रव्यचतुष्टयम् । क्षीरद्रुमा अश्वत्थोदुम्बरप्लक्षवटाः ॥ १९ ॥**

मन्त्र की सिद्धि के लिये साधक क्षीर, ओदन, तिल, दूर्वा, क्षीरीवृक्षों की समिधा (अश्वत्थ, उदुम्बर, प्लक्ष वट) से पृथक् पृथक् तीन तीन सहस्र होम करे ॥ १९ ॥

**विधाय मण्डलं विद्वान् त्रिकोणोज्ज्वलकर्णिकम् ।**
**सौरं पीठं यजेत्तत्र दीप्तादिनवशक्तिभिः ॥ २० ॥**
**मूलमन्त्रेण क्लृप्तायां मूर्त्तौ देवीं प्रपूजयेत् ।**

**मण्डलमिति । सर्वतोभद्रम् । त्रिकोणोज्ज्वलकर्णिकम् । तत्कर्णिकायां त्रिगुणितं यन्त्रं लिखेदित्यर्थः । त्रिकोणशब्दस्य त्रिगुणितोपलक्षकत्वात् ।**

**तदुक्तमाचार्यैः— अथ त्रिगुणिते प्रोक्ते विचित्रे मण्डलोत्तमे । इति ।**

**तत्र पूर्वोक्ते । दीप्तादीति । चतुर्दशपटलोक्ताः ॥ २०-२१ ॥**

सर्वतोभद्रमण्डल निर्माण कर उसकी कर्णिका में त्रिगुणित यन्त्र (द्र. ९.५१) रूप सौरपीठ (द्र. १४.३९-४२) पर दीप्तादि नव शक्तियों के साथ मूल मन्त्र के कल्पित मूर्त्ति में गायत्री का आवाहन कर पूजन करे ।

**विमर्श**—त्रिकोण के आग्नेय, वरुण और ईशान कोणों में क्रमशः ब्रह्मा, विष्णु तथा रुद्र का पूजन करे । पुनः ऐन्द्र, नैर्ऋत्य एवं वायव्य भाग में गायत्री, सावित्री और सरस्वती रूप शक्तियों की पूजा करे । यहाँ तक प्रथमावरण की पूजा कही गई । इस श्लोक में यद्यपि ब्रह्मादि की पूजा प्रथम है तदनन्तर शक्तियों की पूजा कही गई हैं, तथापि आचार्य परम्परा से शक्ति की पूजा प्रथम करके तदनन्तर ब्रह्मादि की पूजा करनी चाहिए ॥ २०-२१ ॥

**कोणेषु त्रिषु सम्पूज्या ब्रह्माद्याः शक्तयो बहिः ॥ २१ ॥**
**आदित्याद्यास्ततः पूज्या ऊषादिसहिताः क्रमात् ।**
**ततः षडङ्गानभ्यर्चेत् केसरेषु यथाविधि ॥ २२ ॥**

**कोणेष्विति । आग्निवरुणेशानेषु । ब्रह्माद्या ब्रह्मविष्णवीशाः । शक्तयो गायत्रीसावित्रीसरस्वत्याख्याः । कोणेषु त्रिष्वित्येव । ऐन्द्रनैर्ऋत्यवायव्यभागेष्वित्यर्थः। एभिः प्रथमावरणम् । अत्र यद्यपि ब्रह्माद्या इत्युक्तं तथापि शक्तिपूजा पूर्वं ज्ञेया । 'त्रिशक्तिमूर्त्तीः प्रथमं समर्च्य' इत्याचार्योक्तेः । अन्यत्रापि—**

**गायत्रीं शतमखजे निशाचरोत्थे सावित्रीं पवनगते सरस्वतीं च ।**
**ब्रह्माणं हुतभुजि वारुणे च विष्णुं षष्ठेऽस्रे समभिजयेत्तथेशमैशे ॥ इति ॥**

**अन्यत्रापि— रक्ता रक्ताकल्पा चतुर्मुखी कुण्डिकाक्षमालेऽब्जे ।**
**दधती प्राक्कोणस्था गायत्री तादृशोऽग्निगो ब्रह्मा ॥**
**अरिदरगदाब्जहस्ता किरीटकेयूरसंभिन्ना ।**

निशिचरकोणसमुत्था सावित्री वरुणगस्तथा विष्णुः ॥
टङ्काक्षाभयवरदान् दधती च त्रीक्षणेन्दुकलितजटा ।
वाणी वायव्यस्था विशदाकल्पा तथेश्वरस्त्वैशे ॥ इति ।

**कल्पान्तरे तु—** षट्कोणास्त्रिषु सावित्र्यै प्राग् गायत्र्यै च नैर्ऋते ।
वायुकोणे सरस्वत्यै आग्नेये ब्रह्मणे नमः ।
पश्चिमे विष्णवेऽथैशे रुद्राय प्रथमावृतिः ॥ इति ॥

तत्र आदित्याद्याश्चतुर्दशपटलोक्ताः । उषादयश्च तत्पटलोक्तप्रकारेणैवात्र पूज्याः । एतेन द्वितीयावरणम् । तत इति तृतीयावरणम् । यथाविधीति । चतुर्थ-पटलोक्तरीत्या ॥ २१-२२ ॥

तदनन्तर उषासहित आदित्यादि (द्र. १४. ४४-४५) देवताओं की पूजा **द्वितीय आवरण में** होती है । इसके बाद (**तृतीयावरण में**) केशरों में यथोक्त रीति से षडङ्ग की पूजा करे (द्र. ४. ३४-३७) ॥ २१-२२ ॥

**प्रह्लादिनीं प्रभां पश्चान्नित्यां विश्वम्भरां पुनः ।**
**विलासिनीप्रभावत्यौ जयां शान्तिं यजेत् पुनः ॥ २३ ॥**
**कान्तिं दुर्गासरस्वत्यौ विश्वरूपां ततः परम् ।**
**विशालसंज्ञितामीशां व्यापिनीं विमलां यजेत् ॥ २४ ॥**
**तमोऽपहारिणीं सूक्ष्मां विश्वयोनिं जयावहाम् ।**
**पद्मालयां परां शोभां पद्मरूपां ततोऽर्चयेत् ॥ २५ ॥**

प्रह्लादिनीमिति । आसां ध्यानमुक्तमन्यत्र—

कुन्देन्दुधवलाकारा मणिमुक्ताद्यलङ्कृताः ।
गुणाङ्कुशद्वयाम्भोजकराः प्रह्लादिनीमुखाः ॥ इति ॥

अभिरष्टाभिरष्टाभिरावरणत्रयम् । अतएव दशभिरावरणैरिति वक्ष्यति ॥ २३-२५ ॥

इसके बाद **चतुर्थ आवरण** में प्रह्लादिनी प्रभा, नित्या, विश्वम्भरा, विलासिनी, प्रभावती, जया और शान्ति की पूजा करे । **पञ्चम आवरण में** कान्ति, दुर्गा, सरस्वती, विश्वरूपा, विशाला, ईशा व्यापिनी और विमला की पूजा करे । **षष्ठ आवरण में** तमोऽपहारिणी, सूक्ष्मा, विश्वयोनि, जयावहा, पद्मालया, पराशोभा और पद्मरूपा की पूजा करे ॥ २३-२५ ॥

**ब्रह्माद्याः सारुणा बाह्य पूजयेत् प्रोक्तलक्षणाः ।**
**ततोऽर्चयेद् ग्रहान् बाह्ये शक्रादीनायुधैः सह ॥ २६ ॥**
**इत्थमावरणैर्देवीं दशभिः परिपूजयेत् ।**
**धर्मार्थकाममोक्षाणां भोक्ता स्याद् द्विजसत्तमः ॥ २७ ॥**
**तत्त्वसंख्यासहस्राणि मन्त्रविज्जुहुयात्तिलैः ।**
**सर्वपापविनिर्मुक्तो दीर्घमायुः स विन्दति ॥ २८ ॥**

**ब्राह्म्याद्याः सारुणा इति अरुणान्ताः। महालक्ष्मीस्थाने अरुणः पूज्य इत्यर्थः। पद्मपादाचार्यास्तु अरुणपूजामधिकामाहुः । प्रोक्तलक्षणा इति । षष्ठपटलोक्तध्यानाः । आभिः सप्तमम् । ग्रहानिति । सूर्यमन्त्रोक्तान् । एभिरष्टमम् । कल्पान्तरे तु—अष्टमी ग्रहैरादित्यपरिषदान्तैस्तैः । इति । इन्द्राद्यैर्नवमम् । तदायुधैर्दशमम् ॥ २६-२८ ॥**

इसके बाद **सप्तम आवरण में** ब्राह्मी से लेकर अरुणा (द्र. ६, १७-१८) अर्थात् महालक्ष्मी के स्थान में अरुणा की पूजा करे । इसके बाद **अष्टम आवरण में** ग्रहों की और **नवम आवरण में** इन्द्रादि लोकपालों की तथा **दशम आवरण में** उनके वज्रादि आयुधों की पूजा करे ॥ २६ ॥

इस प्रकार दश आवरणों में भगवती गायत्री की पूजा करे, ऐसा करने वाला द्विज, धर्म, अर्थ काम तथा मोक्ष के फल का भागी होता है ॥ २७ ॥

गायत्री मन्त्रवेत्ता चौबीस हजार की संख्या में तिलों द्वारा होम करे, तो वह सारे पापों से छूट जाता है और दीर्घ आयु प्राप्त करता है ॥ २८ ॥

**आयुषे साज्यहविषा केवलेनाऽथ सर्पिषा ।**
**दूर्वात्रिकैस्तिलैर्मन्त्री जुहुयात् त्रिसहस्रकम् ॥ २९ ॥**
**अरुणाब्जैस्त्रिमध्वक्तैर्जुहुयादयुतं ततः ।**
**महालक्ष्मीर्भवेत्तस्य षण्मासान्नाऽत्र संशयः ॥ ३० ॥**
**ब्रह्मश्रिये प्रजुहुयात् प्रसूनैर्ब्रह्मवृक्षजैः ।**
**बहुना किमिहोक्तेन यथावत् साधुसाधिता ।**
**द्विजन्मनामियं विद्या सिद्धा कामदुघा मता ॥ ३१ ॥**

**आयुष इति । साज्यहविषेत्येकम् । केवलेनेति । पायसेन । सर्पिषेति च सम्बन्धः । त्रिसहस्रमिति । पञ्चानामपि संख्या । तदुक्तम्—**

**आयुष्कामो जुहुयात् पायसहविराज्यकेवलाज्यैश्च ।**
**दूर्वाभिः सतिलाभिः सर्वैस्त्रिसहस्रसंख्यकं मन्त्री ॥ इति ॥**

**तन्त्रान्तरस्थं धारणयन्त्रमुच्यते—**

**शक्तेर्बाह्यकृशानुकोणविलसद्भूरादिसत्कर्णिकं**
**वस्वब्जं स्वरयुग्मकेसरदलैर्वर्गैस्त्रिवर्णैर्मनोः ।**
**गायत्र्याः कथितं महःप्रभृतिभिर्यन्त्रं तु दिक्ष्वङ्कितं**
**चूडामन्त्रतुरीयवेष्टितमिदं क्ष्माकोणताराङ्कितम् ॥ इति ॥**

**रामवल्लभे तु द्वादशगुणितं तन्त्रं गायत्रीयन्त्रत्वेनोक्तम् ॥ २९-३१ ॥**

आयु की कामना से आज्य युक्त हविष्य से अथवा केवल घी से होम करे, अथवा दूर्वा और तिल इन पाँचों को मिलाकर तीन सहस्र होम करे ॥ २९ ॥

इसके बाद त्रिमधुर मिश्रित लाल कमल से दस हजार होम करे, तो साधक को छः महीने के भीतर महालक्ष्मी प्राप्त हो जाती है इसमें संशय नहीं ॥ ३० ॥

ब्रह्मवर्चस्व प्राप्ति के लिये पलाश वृक्ष के पुष्पों का होम करना चाहिए । इस विषय में हम अधिक क्या कहें—अच्छी प्रकार से सिद्ध की गई गायत्री महाविद्या द्विजातियों के लिये कामधेनु है ॥ ३१ ॥

**आग्नेयमभिधास्यामि मन्त्रं सर्वार्थसाधकम् ।**
**मारीचः काश्यपः प्रोक्तो मुनिरस्य महामनोः ॥ ३२ ॥**
**त्रिष्टुप् छन्दो देवताऽत्र जातवेदोऽग्निरीरितः ।**

**षडङ्गन्यासः**

**नवभिः सप्तभिः षड्भिः सप्तभिः पुनरष्टभिः ॥ ३३ ॥**
**सप्तभिर्मूलमन्त्रार्णैः षडङ्गविधिरीरितः ।**

**त्रिष्टुप्मन्त्रमाह आग्नेयमिति । स मन्त्रो यथा—**

**ॐ जातवेदसे सुनवाम सोममरातीयतो नि दहाति वेदः ।**
**स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः इति ।**

**अयं मन्त्र ऋग्वेदे प्रसिद्धः तेनात्र नोक्तः। हल्लेखासंपुटो जप्तव्यः । मारीचः। काश्यप इति विशेषणं विधेयम् । हलंशो बीजं स्वरांशः शक्तिः ॥ ३२-३४ ॥**

अब सभी कामनाओं के साधक **आग्नेय मन्त्र का विधान** करते हैं—इस महामन्त्र के मरीचि पुत्र कश्यप ऋषि कहे गये हैं । इस 'आग्नेय' मन्त्र का छन्द त्रिष्टुप है जातवेद अग्नि देवता हैं ॥ ३२-३३ ॥

अब इसका **अङ्गन्यास** कहते हैं—यह ४४ अक्षरों का मन्त्र है । अतः नव अक्षर से हृदय में, सात से शिर में, छः से शिखा में, सात से कवच में, आठ से नेत्र में तथा सात अक्षरों से अस्त्रन्यास करे । यहाँ तक मूलमन्त्र का षडङ्गन्यास कहा गया ॥ ३३-३४ ॥

**विमर्श**—अब सम्पूर्ण प्रयोजनों को सिद्ध करने वाला त्रिष्टुपछन्दस्क आग्नेय मन्त्र कहते हैं—आग्नेयमिति—

ॐ जातवेदसे सुनवाम सोममरातीयतो नि दहाति वेदः ।
स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः ।

ऋग्वेद का यह प्रसिद्ध मन्त्र है, इसलिये यहाँ मूल में नहीं कहा है जिसे टीका में राघवभट्ट ने उद्धृत किया है ।

इसका **अर्थ** इस प्रकार है—हम जगत् के समस्त प्राणियों के जानने वाले अग्नि देव के लिये इस सोम का अभिषव करते हैं । वे अग्निदेव हमारे विरुद्ध आचरण करने वाले शत्रुओं के धन का नाश करें और संसार के सारे दुःखों से इस प्रकार हमें पार कर दें, जिस प्रकार नाव ग्राहादि से युक्त दुस्तर नदी से पार करती हैं । इतना ही नही वे हमारे सभी पापों को भी नष्ट कर दें ।

वर्णन्यासः

अङ्गुष्ठगुल्फजङ्घासु जानुनोरुरुयुग्मके ॥ ३४ ॥
कट्यन्धुनाभिषु हृदि स्तनयोः पार्श्वयोर्द्वयोः ।
पृष्ठतः स्कन्धयोर्मध्ये बाहुमूलोपबाहुषु ॥ ३५ ॥
प्रकूर्पर प्रकोष्ठेषु मणिबन्धतलेषु च ।
मुखनासाक्षिकर्णेषु मस्तमस्तिष्कमूर्धसु ॥ ३६ ॥
क्रमेण विन्यसेद् वर्णान्मन्त्री मन्त्रसमुद्भवान् ।

पदन्यासः

शिखाललाटनयनकर्णौष्ठरसनास्वथ ॥ ३७ ॥
सकण्ठबाहुहृत्कुक्षिकटिगुह्योरुजानुषु ।
जङ्घयोः पादयोर्न्यस्येत्पदान्यस्य मनोः सुधीः ॥ ३८ ॥

पदन्यासमाह शिखेति । शिखा मूर्धा । गुह्यं लिङ्गम् । अत्र पदन्यासे नयनयोः पदद्वयं कर्णद्वये पदद्वयं अन्यत्रैकैकं पदम् । तदुक्तमीशानशिवेन—

स्मृतमिह तु पदानां कं ललाटाक्षिकर्णं
त्वधररसनकण्ठं बाहुहृत्राभिदेशाः ।
कटिरपि मदनोरू जानुजङ्घाघ्रयोऽमी
श्रवणनयनयोर्द्वे स्थानमेकैकमन्यत् ॥ इति ।

पदान्यष्टादश । तानि यथा—

शराब्धिद्वीष्वेकवह्निद्व्येकैकद्विद्विपावकैः ।
द्व्यग्निद्व्यग्निद्विद्विवर्णैरष्टादश पदानि हि ॥ इति ॥ ३७-३८ ॥

अब **मन्त्राक्षरों का न्यास** कहते हैं—दोनों पैर के अंगूठे, दोनों गुल्फ, दोनों जङ्घा, दोनों जानु, दोनों ऊरू, कटि, लिङ्ग, नाभि, दोनों स्तन, दोनों पार्श्व, दोनों पृष्ठ, दोनों कन्धे, गले, दोनों बाहुमूल, दो उपबाहु (बाहुमूल एवं कूर्पर का मध्य) दोनों प्रकूर्पर, दोनों प्रकोष्ठ, दोनों मणिबन्ध, दोनों हाथ के तलवे, मुख, दोनों नासिका, दोनों आँख, दोनों कान, ललाट, मस्तिष्क, मूर्धा—इन ४४ स्थानों में मन्त्र के अक्षरों द्वारा न्यास करे, (जहाँ दो स्थान हैं वहाँ दो दो अक्षरों के न्यास करना चाहिए) ॥ ३४-३७ ॥

अब **पदन्यास** कहते हैं—इसके पश्चात् १. शिखा, २. ललाट, ३. नेत्र, ४. कर्ण, ५. ओष्ठ, ६. जीभ, ७. कण्ठ, ८. बाहु, ९. हृदय, १०. कुक्षि, ११. कटि, १२. गुह्य, १३. ऊरू, १४. जानु, १५. जङ्घा और १६. पैर—इन १६ स्थानों में तथा दो कान, दो नेत्र के दो और अङ्कों को बढ़ा देने से इस प्रकार कुल १८ स्थानों में इस मन्त्र के १८ पदों से न्यास करना चाहिए ।

**विमर्श**—मन्त्र में १८ पदों का विभाग इस प्रकार जानना चाहिए—जातवेदसे । सुनवाम । सोमम् । अरातीयतः । नि । दहाति । वेदः । सा । नः ।

पर्षद । अति । दुर्गाणि । विश्वा । नावाऽइव । सिन्धुम् । दुरिता । अति । अग्निः ॥ ३४-३८ ॥

ध्यानम्

**विद्युद्दामसमप्रभां मृगपतिस्कन्धस्थितां भीषणां**
**कन्याभिः करवाल खेटविलसद्धस्ताभिरासेविताम् ।**
**हस्तैश्चक्रदरासिखेटविशिखं चापं गुणं तर्जनीं**
**बिभ्राणामनलात्मिकां शशिधरां दुर्गां त्रिनेत्रां स्मरेत् ॥ ३९ ॥**

**विद्युदिति । दरः शङ्खः । गुणस्त्रिशूलम् । 'इष्वासाख्यत्रिशूलान्' इत्याचार्योक्तेः। आयुधध्यानं तु । दक्षाद्यूर्ध्वयोराद्ये । तदधस्थयोरग्रिमे । तदधस्थयोश्चापविशिखौ । तदधस्थयोः शूलतर्जन्यौ । तदुक्तम्—**

**हेमाचलतटे रम्ये कल्पवृक्षोपशोभिते ।**
**दिव्योद्यानं चिन्तयेच्च विशालं हेमभूतलम् ॥ १ ॥**
**कृशानुरूपवप्रेण करालेन समावृतम् ।**
**तन्मध्ये चिन्तयेद् दिव्यं विचित्रमणिमण्डपम् ॥ २ ॥**
**तस्मिन् सिंहासनेऽम्भोजकर्णिकायां विचिन्तयेत् ।**
**दंष्ट्राकरालाट्टहासं कृष्णवर्णं भयानकम् ॥ ३ ॥**
**अतितीव्रमुखं सिंहं वमदग्निशिखोज्ज्वलम् ।**
**तस्योपरिष्ठात्तां देवीं चिन्तयेज्जातरूपिणीम् ॥ ४ ॥**
**तडित्कोटिनिभां देवीं कोटिबालार्कसन्निभाम् ।**
**चक्रासिबाणशूलाख्यान् दधतीं दक्षिणैर्भुजैः ॥ ५ ॥**
**शङ्खं चक्रधनुर्बाणतर्जनीर्वामबाहुभिः ।**
**चन्द्रखण्डसमायुक्तामतिभीमत्रिलोचनाम् ॥ ६ ॥**
**ऊर्ध्वोज्वलत्केशपाशामशेषाहरणोन्मुखीम् ।**
**अङ्गाद्यावृतिसंयुक्तामस्त्रशस्त्रपरीवृताम् ।**
**इन्द्रादिलोकपालैश्च सेवितां विन्ध्यवासिनीम् ॥ ७ ॥ इति ॥३९॥**

**अङ्गुष्ठेति । पादाङ्गुष्ठद्वयम् । स्कन्धयोरिति भिन्नम् । मध्य इति । कन्धरायाम् । उपबाहुष्विति । बाहुमूलप्रकूर्परमध्यभागः । मस्तं ललाटकेशसन्धिः । मस्तिष्कं तदूर्ध्वदेशः । मूर्धा ब्रह्मरन्ध्रम् । वर्णानिति । चतुश्चत्वारिंशत् । परिषदित्यस्य पृथक् पाठात् । अत्राङ्गुष्ठादिस्थानद्वये वर्णद्वयन्यासः ॥ ३४-३७ ॥**

अब इस **मन्त्र का ध्यान** कहते हैं—जिनके शरीर की कान्ति चमकती हुई बिजली के समान है, जो सिंह के कन्धे पर सवार होने के कारण अत्यन्त भीषण हैं, हाथों में करवाल (तलवार) एवं खेटक (ढाल) धारण करने वाली कन्यायें जिनकी सेवा करती हैं जो अपने हाथों में चक्र, शङ्ख, असि, खेट, (ढाल), विशिखा (बाण), चाप (धनुष), पाश और तर्जनी मुद्रा धारण की हुई हैं ऐसी अनलात्मिका (अग्निस्वरूपा) चन्द्रकलाधारिणी त्रिनेत्रा दुर्गा का स्मरण करना चाहिए ॥ ३९ ॥

पुरश्चरणादिकथनम्

**मन्त्रवर्णसहस्राणि जपेन्मन्त्रं विशालधीः।**
**तदन्ते तिलसिद्धार्थचित्रमूलैः समिद्वरैः॥ ४० ॥**
**क्षीरद्रुमाणामाज्येन हविषाऽन्नैर्घृतान्वितैः।**
**चतुश्चत्वारिंशदाढ्यं चतुःशतसमन्वितम् ॥ ४१ ॥**
**चतुःसहस्रं जुहुयादर्चिते हव्यवाहने ।**

**विशालधीरित्यनेन दीक्षाप्रकारेणाऽयं मन्त्रो ग्राह्य इत्युक्तम् । तदुक्तमाचार्यैः—**

**दीक्षा प्रवर्त्यते पूर्वं यथावद्देशिकोत्तमैः ।**
**ततोऽस्त्रक्लृप्तिः सम्प्रोक्ता स्यात् प्रयोगविधिस्ततः ॥ इति ।**

**अन्यत्रापि—अस्त्राणि दीक्षितस्यैव कथयेत् स तु साधयेत् । इति ।**

**चित्रमूलैश्चित्रकमूलैः । हविषा पायसेन । घृतान्वितैर्घृतसिक्तैः ।**

**तिलराज्यनलक्षीरवृक्षेध्महविराज्यकैः ।**
**सर्पिःसिक्तैः क्रमाद्धोमः साधयेत् समुदायतः ॥**

**इति । आचार्योक्तिः । तेन नव द्रव्याणि । तेनैकैकद्रव्येण चतुःशतीचतुर्नवतिराहुतयः ॥ ४०-४२ ॥**

विशाल बुद्धि वाला साधक ४४ हजार इस मन्त्र का जप करे । जप के पश्चात् तिल, श्वेत सर्षप, चित्रकमूल एवं क्षीरीवृक्षों की समिधा, घृत एवं घृत युक्त पायस द्वारा चार हजार चार सौ चौवालीस की संख्या में पूजी गई अग्नि में होम करे ॥ ४०-४१ ॥

**विमर्श**—यहाँ नव द्रव्य कहे गये हैं अतः एक एक द्रव्य द्वारा ४९० आहुतियाँ प्रदान करनी चाहिए ॥ ४०-४१ ॥

**मण्डले सर्वतोभद्रे षट्कोणाङ्कितकर्णिके ॥ ४२ ॥**
**विधिना वक्ष्यमाणेन पीठं देव्याः प्रपूजयेत् ।**
**जयाख्यां विजयां भद्रां भद्रकालीमनन्तरम् ॥ ४३ ॥**
**सुमुखीं दुर्मुखीसंज्ञां पश्चाद् व्याघ्रमुखीं पुनः।**
**अथ सिंहमुखीं दुर्गां नव शक्तीः प्रपूजयेत् ॥ ४४ ॥**

**मण्डल इति । तृतीयोक्ते । षट्कोणाङ्कितेति । तत्पद्मकर्णिकायां षड्गुणितं यन्त्रं लिखेदित्यर्थः । षट्कोणशब्देन षड्गुणितस्योपलक्षितत्वात् । तदुक्तमाचार्यैः—**

**दीक्षकाख्याक्षराण्यादौ शक्त्यावेष्ट्य ततो बहिः ।**
**यन्त्रं षड्गुणितं कृत्वा दुर्वर्णलसितास्त्रकम् ॥**
**बहिरष्टदलं पद्मम् । इत्यादिना ॥**

**शक्तीः प्रपूजयेदिति । आसां ध्यानमुक्तमन्यत्र—**

ज्वलज्ज्वलनसङ्काशाः सर्पा(र्वा)लङ्कारशोभिताः ।
शूलं कुठारडमरुदहनान् करपङ्कजैः ।
दधत्यश्चिन्तनीयाः स्युर्जयाद्या नव शक्तयः ॥ इति ॥४२-४४॥

इसके बाद सर्वतोभद्रमण्डल पर बनाये गये षट्कोण में निर्मित कमल की कर्णिका में षट्गुणित यन्त्र (द्र. ९.५२) रूप देवी की पीठ पर आगे कही जाने वाली विधि के अनुसार जया, विजया, भद्रा, भद्रकाली, सुमुखी, दुर्मुखी, व्याघ्रमुखी, सिंहमुखी और दुर्गा इन नव शक्तियों की पूजा करे ॥ ४२-४४ ॥

**आसनं सिंहमन्त्रेण दद्यादुक्तेन देशिकः ।**
**मूर्त्तिं सङ्कल्प्य मूलेन तस्यामावाह्य पूजयेत् ॥ ४५ ॥**
**षडङ्गानि यथापूर्वं केसरेष्वर्चयेत् सुधीः ।**
**अग्न्यादिपादाष्टकोत्पन्ना मूर्त्तयोऽर्च्या बहिः पुनः ॥ ४६ ॥**

उक्तेनेति । एकादशेऽग्न्यादीत्यनेन मूर्त्तीनां तदादित्वमुक्तं पूजायां न्यासे च । तच्चाग्न्यादिपादाष्टकमग्रे वक्ष्यति ॥ ४५-४६ ॥

**जातवेदाः सप्तजिह्वो हव्यवाहनसंज्ञकः ।**
**अश्वोदरजसंज्ञोऽन्यः पुनर्वैश्वानराह्वयः ॥ ४७ ॥**
**कौमारतेजाः स्याद्विश्वमुखो देवमुखः स्मृतः ।**

मूर्त्तयोऽर्च्या इति उक्तम् । ताः का इत्यपेक्षायामाह जातवेदा इति । मूर्त्तीनां पुनरुक्तिरन्यमूर्त्तिनिवृत्त्यर्था । आसां ध्यानमुक्तमन्यत्र—

तडित्कोटिसमप्रख्याः सर्वभूषणभूषिताः ।
शूलं शरं कार्मुकं च कपालं स्वैर्महाभुजैः ॥
दधत्यो रक्तवसनाः क्रूरेक्षणभयानकाः ।
ज्वलज्ज्वलनवक्त्राः स्युर्जातवेदादिमूर्त्तयः ॥ इति ॥४७-४८॥

पूर्व में कहे गये (द्र. ११. ९) सिंह मन्त्र से आसन प्रदान करे । मूल मन्त्र से मूर्त्ति की कल्पना कर उसी में देवी का आवाहन कर पूजा करे ॥ ४५ ॥

केशरों पर पूर्वोक्त विधि से षडङ्ग की पूजा करे, आगे कहे जाने वाले (द्र. २१. ६४-६७) अग्नि आदि आठ पादों से उत्पन्न अग्नि मूर्त्तियों की यन्त्र में बाहर पूजा करनी चाहिए ।

**विमर्श**—यद्यपि ये आठ अग्नि की मूर्त्तियाँ १४ वें पटल में भी कही गई हैं । (द्र. १४. १०५-१०६) किन्तु उस पटल में कही गई अन्य मूर्त्तियों का यहाँ ग्रहण न हो इसलिये उनका नाम पुनः कहते हैं ॥ ४६ ॥

जातवेदाः, सप्तजिह्व, हव्यवाहन, अश्वोदरज, वैश्वानर, कौमारतेजा, विश्वमुख, और देवमुख ये आठ अग्नि की मूर्त्तियाँ हैं ॥ ४७-४८ ॥

ततो भूसलिलाग्नीरानात्मेनऽन्तान्नमोऽन्वितान् ॥ ४८ ॥
चतुर्दिक्षु समभ्यर्चेत्कोणेष्वेतत्कलाः पुनः ।

आत्मनेऽन्तानिति । भ्वा(भूतत्त्वा)त्मने नम इत्यादि । एषां ध्यानं स्वस्वस्थल प्रोक्तमनुसन्धेयम् । जलस्य वक्ष्यमाणं वरुणध्यानं ज्ञेयम् । एतत्कला निवृत्तिप्रतिष्ठा-विद्याशान्तिरूपाः । आसां ध्यानं प्रासादमन्त्रोक्तमनुसन्धेयम् ॥ ४८-४९ ॥

इसके बाद चारों दिशाओं में भू, सलिल, अग्नि तथा वायु मण्डल का 'आत्मने नमः' का प्रयोग करते हुये पूजन करें । यथा—पूर्वे भूतत्त्वात्मने नमः, दक्षिणस्याम् सलिलतत्त्वात्मने नमः इत्यादि । चारों कोणों में इनकी प्रत्येक की (निवृत्ति, प्रतिष्ठा, विद्या और शान्ति रूप) कलाओं की पूजा करे ॥ ४८-४९ ॥

पूर्वादिदिक्षु सम्पूज्या जार्णाद्या वर्णशक्तयः ॥ ४९ ॥
जाग्रता तपनी वेदगर्भा दहनरूपिणी ।
सेन्दुखण्डा शुम्भहन्त्री नभश्चारिण्यनन्तरम् ॥ ५० ॥
वागीश्वरी मदवहा सोमरूपा मनोजवा ।
मरुद्वेगा रात्रिसंज्ञा तीव्रकोपा यशोवती ॥ ५१ ॥
तोयात्मिका पुनर्नित्या दयावत्यपि हारिणी ।
तिरस्क्रिया वेदमाता तत्परा दमनप्रिया ॥ ५२ ॥
समाराध्या नन्दिनी च परा रिपुविमर्दिनी ।
षष्ठी च दण्डिनी तिग्मा दुर्गा गायत्र्यनन्तरम् ॥ ५३ ॥
निरवद्या विशालाक्षी श्वासोद्वाहा च नादिनी ।
वेदना वह्निगर्भाख्या सिंहवाहाहवया तथा ॥ ५४ ॥
धुर्या दुर्विषहा पश्चात् रिरंसा तापहारिणी ।
त्यक्तदोषा निःसपत्ना चत्वारिंशच्चतुर्युताः ॥ ५५ ॥

पूर्वादिदिक्ष्विति । एकैकस्यां दिशि एकादशैकादश शक्तीः पूजयेत् । तदुक्तम्—मन्त्रविधानविच्च दिशि दिश्येकादशैकादश ॥ इति ।

जार्णाद्या इति । जाप्रभृतिमन्त्राक्षराद्याः । तत्परेति । दमनप्रियाविशेषणम् । परेति कलानाम । षष्ठीत्यपि नाम ॥ ४९-५७ ॥

पुनः पूर्वादि दिशाओं में 'जा' प्रभृति मन्त्राद्याक्षरों से जाग्रता आदि वर्णशक्तियों की पूजा करे । उनके नाम इस प्रकार है—जाग्रता, तपनी, वेदगर्भा, दहनरूपिणी, सेन्दुखण्डा, शुम्भहन्त्री, नभश्चारिणी, वागीश्वरी, मदवहा, सोमरूपा (१०), मनोजवा, मरुद्वेगा, रात्रि, तीव्रकोपा, यशोवती, तोयात्मिका, नित्या, दयावती, हारिणी, तिरस्क्रिया (२०), वेदमाता, तत्परादमनप्रिया, समाराध्या, नन्दिनी, परा, रिपुविमर्दिनी, षष्ठी, दण्डिनी, तिग्मा दुर्गा (३०), गायत्री, निरवद्या, विशालाक्षी, श्वासोद्वाहा, नादिनी, वेदना, वह्निगर्भा, सिंहवाहा, धुर्या,

दुर्विषहा (४०), रिरंसा, तापहारिणी, त्यक्तदोषा तथा नि:सपत्ना—ये ४४ वर्णशक्तियाँ हैं । इनका आरम्भ जकार वर्ण से है ।

**विमर्श**—तत्परा नाम नहीं है किन्तु दमनप्रिया का विशेषण है । कुल ५१ वर्ण हैं परन्तु इनमें क वर्ग च और छ: इन सात अक्षरों की गणना नहीं है । अत: ४४ वर्ण में से ११-११ के क्रम से चारों दिशाओं में वर्णशक्तियों की पूजा होती है ॥ ५०-५५ ॥

**लोकपालांस्ततोऽभ्यर्चेद् वज्राद्यायुधसंयुतान् ।**
**इत्थं जपादिभि: सिद्धे मन्त्रेऽस्मिन्साधकोत्तम:॥ ५६ ॥**
**आग्नेयास्त्राधिकारी स्यात्तद्विधानमुदीर्यते।**
**आग्नेयास्त्रमिति प्रोक्तं विलोमपठितो मनु: ॥ ५७ ॥**

इसके पश्चात् वज्रादि आयुधों से युक्त इन्द्रादि लोकपालो की पूजा करे। इस प्रकार ४४ हजार संख्या में जपादि द्वारा मन्त्र के सिद्ध हो जाने पर उत्तम साधक आग्नेयास्त्र का अधिकारी होता है ।

अब **आग्नेयास्त्र का विधान** कहता हूँ—विलोम पद्धति से इस मन्त्र को पढ़ने से वह आग्नेयास्त्र कहा जाता है ॥ ५६-५७ ॥

**पूर्वोक्ता एव ऋष्याद्या मन्त्रस्याऽस्य प्रकीर्त्तिता: ।**
**प्रतिलोमक्रमादस्य षडङ्गानि प्रकल्पयेत् ॥ ५८ ॥**

**प्रतिलोमेति । संख्याया: प्रातिलोम्यम् । वर्णप्रतिलोम्यम् । वर्णप्रातिलोम्यस्योक्तत्वात् । प्रकल्पयेदिति । पूर्वोक्तसंख्याक्षरै: सम्प्रदायात् तारमायादुर्गाद्यै: जातवेदसे मां रक्ष रक्षाग्नयेऽस्त्राय फडन्तै: । तदुक्तम्—**

**शिलाहि लोकाङ्गसंख्यैर्धातुनन्दप्रसंख्यकै: ।**
**विलोमभूतैस्तारादि बीजत्रयशिरोगतै: ॥**
**आद्यं पदं मां रक्षाऽग्नयेऽस्त्राय फट्युतै: ।**
**जातियुक्तै: षडङ्गानि दहनास्त्रस्य कल्पयेत् ॥ इति ॥५७-५८॥**

इस आग्नेयास्त्र मन्त्र के भी ऋषि, छन्द और देवता पूर्वोक्त हैं । (द्र. २१. ३२-३३) इसका षडङ्गन्यास प्रतिलोम क्रम से ही करना चाहिए ॥ ५८ ॥

**वर्णन्यासपदन्यासौ विदध्यात् प्रतिलोमत: ।**
**ध्यानभेदान् विजानीयाद्गुर्वादेशान्न चाऽन्यथा ॥ ५९ ॥**

**ध्यानभेदानिति । तत्राग्नेयास्त्रदेवताध्यानं यथा—**

**मध्ये तालवनस्याऽग्निर्वप्राढ्ये वह्निभूतले ।**
**महतस्तालवृक्षस्य मूलाभ्यासविराजिते ॥**
**सिंहस्कन्धाग्निकोणे वा चलच्चरणसंस्थिताम् ।**

तडित्कोटिसमप्रख्यां कल्पान्तदहनोज्ज्वलाम् ॥
अकृत्रिमोग्रदंष्ट्रास्यां घण्टामालास्फुरत्कटिम् ।
शूलभोगीन्द्रडमरुविद्युद्वह्नीन् ज्वलत्प्रभान् ॥
दधानां करदण्डैः स्वैर्भूषामदबलाकुलैः ।
भूषितां भूषणैरुग्रैः फणीन्द्रपरिकल्पितैः ॥
अग्न्यादिवर्णमयीं देवीं संविद्रूपां विचिन्तयेत् ॥ इति ॥ ५९ ॥

वर्णन्यास तथा पदन्यास भी प्रतिलोम क्रम से करे । इनके ध्यान की भी विधि गुरु परम्परा से जाननी चाहिए, अन्यथा नहीं ॥ ५८-५९ ॥

**पूर्ववज्जपक्लृप्तिः स्याज्जुहुयात् पूर्वसंख्यया ।**
**पञ्चगव्यसुपक्वेन चरुणा तस्य सिद्धये ॥ ६० ॥**

**पूर्ववदिति । पूर्वोक्तसंख्यया । विशेषस्तन्त्रान्तरे—**

मौनी व्रतपरो मन्त्री शुद्धाचारो जितेन्द्रियः ।
पूर्वोक्तासनमध्यस्थः प्राङ्मुखः स्वस्तिकासनः ।
आग्नेयास्त्रं जपेद्विद्वान् सिद्ध्यर्थं पूर्वसंख्यया ॥ इति ॥

**तस्य सिद्धय इति । उभयासिद्धत्वे प्रयोगानर्हत्वात् । तदुक्तम्—**

यो हि सम्यगसाध्यैतत् क्रियाः कर्त्तुमभीप्सति ।
दिव्यास्त्रदेवतास्तं वै नाशयन्त्येव दारुणाः ॥
तस्मात् सर्वप्रयत्नेन षष्ठकालादिभिर्व्रतैः ।
देहं विशोध्य शस्त्राणि साधयित्वा चरेत् क्रियाः ॥ इति ॥

**अन्यत्रापि—प्रतिलोमानुलोमान्तां विद्यां संसाध्य देशिकः ।**
**प्रयोगमारभेदेषामस्त्राणामुक्तमार्गतः ॥ इति ॥ ६० ॥**

इस आग्नेयास्त्र मन्त्र का जप तथा होम पूर्वोक्त विधि से करना चाहिए । (द्र. २१. ४०-४१) मन्त्र सिद्धि के लिये पञ्चगव्य में पकाये गये चरु का होम आवश्यक है ॥ ६० ॥

**अर्चनं पूर्ववत् कुर्याच्छक्तेस्तु प्रतिलोमतः ।**
**सर्वत्र देशिकः कुर्याद् गायत्र्या द्विगुणां जपम् ॥ ६१ ॥**

**अर्चनमिति । तत्र विशेषस्तन्त्रान्तरे—**

पीठे पूर्वोदिते देवीमावाह्योक्तेन वर्त्मना ।
प्रवरैर्गन्धकुसुमैः साङ्गां मूलेन पूजयेत् ॥
अङ्गान्यग्न्यादिकोणेषु वह्निमूर्त्तीर्दिशास्वपि ।
दुर्गा नारायणी चैव दुर्मना शमनप्रिया ॥
नित्यानन्दोत्कराचैव सुवेशा जागरप्रिया ।
पदशक्तीरिमाश्चाष्टौ तृतीयावरणेऽर्चयेत् ।
मन्त्रार्णशक्तीस्तद्बाह्ये लोकपालांश्च पूजयेत् ॥ इति ॥

**सर्वत्रेति । प्रयोगेषु गायत्र्या द्विगुणं जपम् । प्रयोगोक्तजपाद् द्विगुणं जपं कुर्यादित्यर्थः ॥ ६१ ॥**

शक्तियों का प्रतिलोम रूप से पूर्ववत् अर्चन करे (द्र. २१. ४१-५५)। इसके प्रयोग में गायत्री का दूना जप करना चाहिए अर्थात् जितना इस मन्त्र का जप हो उससे दूना गायत्री का जप करना चाहिए ॥ ६१ ॥

**क्रूरकर्माणि कुर्वीत प्रतिलोमविधानतः ।**
**शान्तिकं पौष्टिकं कर्म कर्तव्यमनुलोमतः ॥ ६२ ॥**

**प्रतिलोमविधानतः । आग्नेयास्त्रेण । अनुलोमत इति जातवेदसे इत्यनेन ॥६२॥**

क्रूर कर्म में प्रतिलोम विधान से पुरश्चरण करें, जैसा कि आग्नेयास्त्र में कहा गया है (२१. ५७-६०) और प्रतिलोम क्रम से ही जपादि कार्य करना चाहिए तथा शान्तिक एवं पौष्टिक कर्म में अनुलोम ॐ जातवेद से इत्यादि रूप से जपादि करना चाहिए ॥ ६२ ॥

**प्रयोगकाले प्रजपेदष्टौ पादान् विलोमतः ।**
**शोधितो जायते पश्चान्मन्त्रोऽयं विधिनाऽमुना ॥ ६३ ॥**

**प्रजपेदिति पृथक् पृथक् । शोधित इति । तदुक्तम्—**

**मनोः स्थिरादिदोषाणां सर्वेषामुपशान्तये ।**
**अभिचारकृतानां च मनुपादाष्टकं जपेत् ॥ इति ॥ ६३ ॥**

मन्त्र के प्रारम्भ में आग्नेय मन्त्र के विलोम भूत आठ पादों का (द्र. २१. ६४-६८) जप करे । इस विधि से जप करने के पश्चात् ही यह मन्त्र सिद्ध होता है ॥ ६३ ॥

**अग्न्याद्यः पञ्चाक्षरः पादी ज्ञेयो ज्ञानेन्द्रियात्मकः ।**
**धुमाद्योऽन्यः पञ्चवर्णः स्मृतः कर्मेन्द्रियात्मकः ॥ ६४ ॥**

**ज्ञानेन्द्रियात्मक इति । घ्राणरसनचक्षुः श्रोत्रत्वग्रूपाणि ज्ञानेन्द्रियाणि । तदात्मकत्वं वर्णक्रमेण । एवमग्रेऽपि । कर्मेति-वाक्पाणिपादपायूपस्थानि ॥ ६४ ॥**

अब आग्नेयास्त्र के विलोमभूत आठों पादों को कहते हैं—

आग्नेय मन्त्र के अन्त के विलोम 'अग्न्यादि पाँच अक्षर (घ्राण, रसना, श्रोत्रा, चक्षुः, त्वक्, ज्ञानेन्द्रियात्मक हैं । 'सिन्धुम' के अन्त में रहने वाले धुम से पाँच अक्षर कर्मेन्द्रियात्मक (वाग्, पाणि, पाद, पायु, उपस्थ) है । यहाँ तक दो पाद कहे गये ॥ ६४ ॥

**श्वाद्यस्तृतीयः पञ्चार्णः पञ्चभूतमयः स्मृतः ।**
**त्याद्यः सप्ताक्षरः पादश्चतुर्थो धातुरूपकः ॥ ६५ ॥**

**पञ्च भूतानि । पृथिव्यप्तेजोवाय्वाकाशानि । धात्विति । त्वगसृङ्मांसमेदोऽस्थिमज्जाशुक्राणि ॥ ६५ ॥**

विश्वा के अन्त में धुम से पाँच अक्षर पञ्चभूतमय (पृथ्वी जल तेज वायु आकाश) हैं, यह तृतीय पाद हुआ । अति के अन्त के ति से सात अक्षर धातुमय (त्वक् असृक् मांस मेद अस्थि मज्जा शुक्र) हैं यहाँ तक चतुर्थ पाद कहा गया ॥ ६५ ॥

**दःपूर्वः पञ्चमः पाद ऊर्मिरूपः षडक्षरः ।**
**तोवर्णादिः षडर्णोऽन्यः षाट्कौशिकमयो मतः ॥ ६६ ॥**
**सोपूर्वः पञ्चवर्णोऽन्यः शब्दादिमय ईरितः ।**
**सेवर्णाद्योऽष्टमो ज्ञेयः पञ्चार्णो वचनादिकः ॥ ६७ ॥**

**ऊर्मीति । बुभुक्षापिपासाशोकमोहजरामृत्युरूपाः । षाट्कौशिकेति । स्नाय्वस्थिमज्जात्वङ्मांसान्त्राणि । शब्दादीति । शब्दस्पर्शरूपरसगन्धाः । वचनेति । वचनादानगतिविसर्गानन्दाः ॥ ६६-६७ ॥**

वेदः के अन्तिम द अक्षर से ले कर ६ अक्षर बुभुक्षा, पिपासा, शोक, मोह, जरा एवं मृत्यु) ६ ऊर्मि स्वरूप हैं । यहाँ तक पञ्चम पाद कहा गया ।'अरातीयवः के अन्तिम अक्षर 'त' से ६ अक्षर षट्कोश स्वरूप (स्नायु, अस्थि, मज्जा, त्वक्, मांस, आन्त्र) हैं यहाँ तक षष्ठ पाद कहा गया। इसके बाद सोभम् के स अक्षर से पाँच अक्षर पर्यन्त शब्दादि विषय (शब्द, स्पर्श, रूप, रस एवं गन्ध) हैं यहाँ तक सात पाद हुआ । पुनः 'जातवेदसे' के 'से' से लेकर 'जा' पर्यन्त पाँच वर्ण वचनादि (वचन आदान, गति, विसर्ग, आनन्द) स्वरूप हैं यहाँ तक आठ पाद हुआ ॥ ६६-६७ ॥

**एवं तत्त्वसमायोगात् पादक्लृप्तिरुदीरिता ।**
**तत्तत्पदाक्षरोत्पन्नास्तावत्यो वह्निदेवताः ॥ ६८ ॥**

**एवं तत्त्वसमायोगादित्यनेन एतदक्षरैस्तत्त्वन्यासः सूचितः ॥ ६८ ॥**

इस प्रकार तत्त्वों से युक्त होने वाले इस मन्त्र के आठों पादों का वर्णन किया गया है । मन्त्र के इन्हीं आठ पादों से आठ वह्निदेवता उत्पन्न हुये हैं जैसा कि पूर्व में (द्र. २१. ४६-४८) कहा गया है ॥ ६८ ॥

**प्रधानमूर्त्तिप्रतिमाः स्वस्ववर्णोदितप्रभाः ।**
**प्रज्वलत्केशवदना भीमदंष्ट्रा भयानकाः ॥ ६९ ॥**
**देवताईन्द्रियोत्पन्ना ऊर्ध्वदृष्टय ईरिताः ।**
**देवता भूतपादोत्थास्तिर्यग्वक्त्राः प्रकीर्त्तिताः ॥ ७० ॥**
**धातुरूपाक्षरोद्भूता उभयाननशोभिताः ।**
**ऊर्मिजा ऊर्ध्ववदना कोशोत्थास्तिर्यगाननाः ॥ ७१ ॥**

**एताः सर्वाः स्मृताः क्लीबा इन्द्रियार्थोद्भवाः स्त्रियः।**
**अधस्तिर्यङ्मुखोपेता ईरिता वर्णदेवताः ॥ ७२ ॥**
**अभिमुख्यः स्मृताः सौम्ये पराङ्मुख्योऽन्यकर्मणि ।**
**आभ्योऽसंख्याः समुत्पन्ना देवता ज्वलिताननाः ॥ ७३ ॥**

**इन्द्रियोत्पन्ना इति । आद्यपदद्वयोत्थाः । इन्द्रियार्थोद्भवाः स्त्रियः अधस्तिर्यङ्मुखोपेता इति सम्बन्धः । इन्द्रियार्थोद्भवा इति । अन्त्यपादद्वयोत्थाः । सर्वासामुपसंहारः । ईरिता वर्णदेवता इति ॥ ६९-७३ ॥**

ये अग्नि की सभी मूर्त्तियाँ प्रधान मूर्त्ति के समान शरीर वाली हैं और अपने अपने नामों के वर्णों के अनुसार कान्ति युक्ता हैं । सभी के केश एवं मुख जाज्वल्यमान हैं सभी के दाँत भयानक होने के कारण भय उत्पन्न करते हैं ॥६९॥

इन्द्रियों से उत्पन्न देवता (अर्थात् प्रथम एवं द्वितीय पादों से उत्पन्न) ऊर्ध्व दृष्टि वाले हैं। पञ्चमहाभूत रूप (तृतीय पाद से उत्पन्न) से उत्पन्न देवता तिर्यग् (तिरछे) मुख वाले हैं ॥ ७० ॥

धातुरूप चतुर्थपाद से उत्पन्न देवता ऊपर नीचे की ओर दो दो मुख वाले हैं । ऊर्मिरूप पञ्चम पाद से उत्पन्न देवता ऊर्ध्वमुख वाले हैं, षाट्कोशिक रूप षष्ठ पाद से उत्पन्न देवता तिर्यक् (तिरछे) मुख वाले हैं ॥ ७१ ॥

ये सभी देवता क्लीव (नपुंसक) स्वभाव वाले हैं । केवल आद्य के दो पादों वाले शब्दस्पर्शादि विषयों से और वचन आदि से उत्पन्न देवता स्त्री स्वरूप हैं और उनका मुख नीचे तथा तिरछे हैं । वर्णों के देवता तो पूर्व में (द्र. २१. ५०-५५) कह ही आये हैं ॥ ७२ ॥

ये देवता सौम्य कार्य में अभिमुख रहते हैं । परन्तु अन्य कर्म में ये देवता पराङ्मुख रहते हैं । इन देवताओं से प्रज्वलित मुख वाले अगणित देवता उत्पन्न हुये हैं ॥ ७३ ॥

**याभिर्मन्त्री दहेच्छत्रो राज्यं सगिरिकाननम् ।**
**अस्त्रं मनुष्यनक्षत्रेष्वारभेत विचक्षणः ॥ ७४ ॥**
**आसुरेषु प्रयुञ्जीत देवतारासु संहरेत् ।**
**पूर्वोत्तरत्रयं पश्चाद्भरण्यार्द्राऽथ रोहिणी ।**
**इमानि मानुषाण्याहुर्नक्षत्राणि मनीषिणः ॥ ७५ ॥**
**ज्येष्ठा शतभिषा मूलधनिष्ठाश्लेषकृत्तिकाः।**
**चित्रामघाविशाखाः स्युस्तारा राक्षसदेवताः ॥ ७६ ॥**
**अश्विनी रेवती पुष्यः स्वाती हस्ता पुनर्वसुः।**
**अनुराधामृगशिरः श्रवणा देवतारकाः ॥ ७७ ॥**

**उपक्रमेत नन्दासु रिक्तास्वस्त्रं विसर्जयेत्।**
**भद्रास्वाहरणं कुर्याज्जयास्वत्यन्तमुत्तमम् ॥ ७८ ॥**
**उपक्रमो भौमवारे शनिवारे विसर्जनम् ।**
**प्रतिसंहरणं वारे गुरोः शुक्रस्य वा भवेत् ॥ ७९ ॥**

**नन्दास्विति । प्रतिपत्षष्ठ्येकादशीषु । रिक्तास्विति । चतुर्थीनवमीचतुर्दशीषु । भद्रास्विति । द्वितीयासप्तमीद्वादशीषु । जयास्विति । तृतीयाष्टमी त्रयोदशीषु । अत्यन्तमुत्तममाहरणमित्यनुषज्यते—**

**'भद्राषु संग्रहं कुर्याज्जयासु तु विशेषतः' इत्युक्तेः ॥ ७४-७९ ॥**

मन्त्रज्ञ इन देवताओं को सिद्ध कर वन पर्वत सहित एवं छत्र युक्त राज्य नष्ट कर सकता है । बुद्धिमान् साधक आगे कहे जाने वाले मनुष्य नक्षत्र में आग्नेयास्त्र का प्रारम्भ करे ॥ ७४ ॥

आगे कहे जाने वाले आसुर नक्षत्रों में इसका प्रयोग करे तथा देवता नक्षत्रों में इसकी समाप्ति करे ।

**विमर्श**—यहाँ प्रारम्भ प्रयोग तथा उपसंहार यह तीन क्रिया कही गई है, सामग्री संपादन पूर्वक संकल्प का नाम प्रारम्भ है और आहुति आदि का दान प्रयोग है तथा फल प्राप्त हो जाने पर विर्सजन उपसंहार है । तीनों पूर्वा, तीनों उत्तरा एवं भरणी, आर्द्रा तथा रोहिणी ये ९ मनुष्य नक्षत्र हैं ऐसा मनीषियों ने कहा है ॥ ७५ ॥

ज्येष्ठा, शतभिषा, मूल, धनिष्ठा, आश्लेषा, कृत्तिका, चित्रा, मघा, विशाखा ये ९ आसुर नक्षत्र हैं, क्योंकि इनके देवता राक्षस हैं ॥ ७६ ॥

अश्विनी, रेवती पुष्य, स्वाती, हस्त, पुनर्वसु, अनुराधा, मृगशिरा और श्रवण—ये ९ दैविक नक्षत्र हैं इनके देवगण देवता हैं ॥ ७७ ॥

इस आग्नेयास्त्र मन्त्र का उपक्रम नन्दा (= प्रतिपद् षष्ठी एवं एकादशी) तिथियों में करे । चतुर्थी, नवमी तथा चतुर्दशी इन रिक्ता तिथियों में विसर्जन करे, भद्रा (= द्वितीया, सप्तमी, द्वादशी) में आहरण करे । किन्तु जया (= तृतीया, अष्टमी और त्रयोदशी) तिथि में आहरण अत्यन्त श्रेष्ठ कहा गया है ॥ ७८ ॥

भौमवार के दिन आग्नेयास्त्र का आरम्भ, शनिवार के दिन विसर्जन और गुरुवार अथवा शुक्रवार को उपसंहार करे ॥ ७९ ॥

**स्थिरेषु राशिष्वारम्भश्चरेषु स्याद्विसर्जनम् ।**
**अस्त्रसंहरणं कुर्यादुभयेषु विचक्षणः ॥ ८० ॥**

**स्थिरेष्विति । वृषसिंहवृश्चिककुम्भेषु । चरेष्विति । मेषकर्कटतुलामकरेषु । उभयेष्विति । द्विस्वभावेषु । मिथुनकन्याधनुर्मीनेषु ॥ ८० ॥**

इसी प्रकार स्थिर राशि (= वृष, सिंह, वृश्चिक एवं कुम्भ) में आग्नेयास्त्र का आरम्भ करे । चर राशि (= मेष, कर्कट, तुला, मकर) में विसर्जन करें और द्विः स्वभाव मिथुन, कन्या, धन एवं मीन में भी आग्नेयास्त्र का संहरण किया जा सकता है ॥ ८० ॥

**कृष्णपक्षेऽनलेनाऽस्त्रं विसृजेच्छशिना पुनः ।**
**शुक्लपक्षे क्रमादस्त्रं पुनरात्मनि संहरेत् ॥ ८१ ॥**

**अनलेन तु दक्षिणनासापुटसञ्चारन्मरुता । साम्प्रदायिकास्त्वेवं मन्यन्ते । अत्राऽनलशब्देनाऽग्निमण्डलम् । रमिति बीजम् । कृत्तिकादिनक्षत्रमप्युच्यते । तद्वच्छशिशब्देन चन्द्रमण्डलं चन्द्रबीजं सौम्यास्तिथयश्चोच्यन्ते । तेनायमर्थः- अग्निमण्डलं स्वबीजसंयुक्तं ध्यात्वा नक्षत्रप्रधानमेव विसर्जनकर्म कुर्यात् ॥ ८१ ॥**

कृष्णपक्ष में जब कृत्तिका नक्षत्र हो तब अस्त्र मन्त्र का प्रारम्भ करे और शुक्ल पक्ष में जब सौम्य नक्षत्र हो तो उसका प्रयोग करे । पुनः जब अग्निमण्डल का कृत्तिकादि नक्षत्र आवे तब विसर्जन करे ॥ ८१ ॥

**भानुना मोक्षसंहारौ कुर्यात्पक्षद्वये सुधीः ।**
**पश्चिमाभिमुखो भूत्वा कर्म सर्वत्र साधयेत् ॥ ८२ ॥**

**भानुनेति । आत्मनो भास्कररूपध्यानेन । एवमात्मनो भास्कररूपं विचिन्त्य पूर्वोक्तप्रकारेण पक्षद्वये मोक्षसंहारौ सुधीः कुर्यादित्यनुवादः । आत्मनो भास्कर-रूपत्वध्यानमात्रं विशेषः । तदुक्तमाचार्यैः—**

**नक्षत्रात्मा हुताशः स्यात्तिथ्यात्मेन्दुरुदाहृतः ।**
**ताभ्यां करोति दिनकृद्विसर्गादानकर्मणी ॥ इति ॥**

**सर्वत्रेति । आरम्भे प्रयोगे उपसंहारे च । सामग्रीसम्पादनपूर्वकं कर्मसङ्कल्प आरम्भः । हुतक्रियाऽस्त्रविमोचनम् । दृष्टफलानन्तरमुद्वासनं संहृतिः । अन्यत्र कालनियमं विना प्रारम्भोऽप्युक्तः—**

**परचक्रभयादौ च तीव्ररूपे महाभये ।**
**न कालनियमो गम्यः प्रयोगाणां कदाचन ॥ इति ॥ ८२ ॥**

अपनी आत्मा में भास्कर के रूप का ध्यान कर, अथवा आत्मा को स्वयं भास्कर रूप समझ कर दोनों पक्षों में अस्त्र मन्त्र का प्रारम्भ तथा उपसंहार करे । अस्त्रकर्म की सिद्धि के लिए आरम्भ, प्रयोग और उपसंहार में भी पश्चिमाभिमुख हो कर करनी चाहिए ॥ ८२ ॥

**नक्षत्रवृक्षशकलान् साध्याख्याकर्मसंयुतान् ।**
**तत्तन्मन्त्राक्षरोपेतान् मन्त्री मन्त्रार्णसंख्यया ॥ ८३ ॥**
**जुहुयादेधिते वह्नौ मारयेद् रिपुमात्मनः ।**
**कृष्णाष्टमीं समारभ्य यावत् कृष्णचतुर्दशी ॥ ८४ ॥**

नक्षत्रवृक्षा द्वाविंशे वक्ष्यमाणाः । शकलानिति । प्रादेशमितान् । साध्याख्या-कर्मसंयुतान् तत्तन्मन्त्राक्षरोपेतानि । अनेन क्रमेण—

'अन्ते नाम्नो भवेन्मन्त्रः पल्लवो मारणे मतः' इति पल्लव उक्तः ॥८३-८४॥

धत्तूरविषवृक्षाक्षभूरुहोत्थान् समिद्वरान् ।
राजीतैलेन संलिप्तान् पृथक् सप्तसहस्रकम् ॥ ८५ ॥
जुहुयात् संयतो भूत्वा रिपुर्यमपुरं व्रजेत् ।
सप्तरात्रं प्रजुहुयात् सिद्धार्थस्नेहलोलितैः ॥ ८६ ॥

विषवृक्षः कारस्करः, अक्षो बिभीतकः, सिद्धार्थस्नेहं सर्षपतैलम् ॥८५-८६॥

साध्य के नक्षत्र (द्र. २२,१६०-१६३) वृक्ष की प्रादेश मात्र समिधा तथा साध्य के नाम एवं कर्म के साथ मन्त्र के एक एक अक्षरों के साथ पृथक् पृथक् जोड़कर जितनी मन्त्राक्षरों की संख्या हो उतनी संख्या में जाज्वल्यमान अग्नि में होम करे तो साधक अपने शत्रु को मार डालता है । कृष्णाष्टमी से आरम्भ कर कृष्ण पक्ष की चतुर्दशीपर्यन्त धूत्तूर, कुचिला, विभीतक वृक्षों की समिधाओं में राई के तेल को पोत कर सात हजार की संख्या में इस मन्त्र द्वारा ब्रह्मचर्य, एकाहार सत्यभाषण आदि संयम रखते हुये होम करे, तो शत्रु यमपुर चला जाता है ॥ ८३-८६ ॥

आर्द्रवस्त्रो विष्टिकालो मरीचैर्मनुनाऽमुना ।
निगृह्यते ज्वरेणाऽरिः प्रलयाग्निसमेन सः ॥ ८७ ॥
तालपत्रे समालिख्य शत्रुनाम यथाविधि ।
आग्नेयास्त्रेण संवेष्ट्य कुण्डमध्ये निधापयेत् ॥ ८८ ॥
जुहुयान्मरिचैः क्रुद्धो ज्वराक्रान्तः स जायते ।
तदादाय क्षिपेत्तोये शीतले स वशो भवेत् ॥ ८९ ॥

विष्टिकाल इति विष्टौ करणे । विषारिघातादि च तत्र सिध्येदित्युक्तेः ।

यथाविधीति—कर्मसहितम् । संवेष्ट्येतिपरितो लेखनम् । धत्तूररसेनेति परम-गुरवः ॥ ८७-८९ ॥

सफेद सरसों के तेल में भिगोई हुई मरीचों से आर्द्रवस्त्र हो, विष्टि नामक करण में इस मन्त्र द्वारा सात रात पर्यन्त होम करे, तो शत्रु के ऊपर प्रलयाग्नि के समान घनघोर ज्वर चढ़ जाता है ॥ ८७ ॥

ताड़ के पत्ते पर शत्रु का नाम तथा उसका कर्म लिख कर आग्नेयास्त्र मन्त्र से उसे संवेष्टित करे, फिर उसे कुण्ड के मध्य में रख देवें और स्वयं क्रुद्ध हो मरीच से उस पर होम करे तो शत्रु ज्वराक्रान्त हो जाता है, पुनः उसे निकाल कर शीतल जल में रख दे तो शत्रु वश में हो जाता है ॥ ८८-८९ ॥

पिष्ट्वाऽपामार्गबीजानि मरीचं मधुसंयुतम् ।
अत्युष्णे लवणे तोये निःक्षिप्य क्वाथयेत्ततः ॥ ९० ॥
ऋक्षवृक्षप्रतिकृतेर्हृदये वदने नसि ।
किञ्चितकिञ्चितक्षिपेत्तोयं दर्व्या कारस्करोत्थया ॥ ९१ ॥
आग्नेयमुच्चरन्मन्त्री सोऽचिराज्ज्वरितो भवेत् ।
क्वथितेऽम्भसि तां क्षिप्त्वा हन्याच्छत्रुमयत्नतः ॥ ९२ ॥

**कारस्करेति । कुचिला ॥ ९०-९२ ॥**

अपामार्ग के बीजों को पीस कर उसमें मात्रानुसार मधुसंयुक्त मरीच पीस कर मिला देवे । पश्चात् समुद्र के अत्यन्त गर्म जल में उसे डालकर उसका क्वाथ बनावे—फिर कुचिला की दर्वी द्वारा उस क्वाथ को शत्रु के वृक्ष की लकड़ी से बनाई गई प्रतिमा के हृदय, मुख, नासिका में इस मन्त्र को पढ़ते हुये थोड़ा थोड़ा उडेलता रहे तो साध्य शीघ्र ही ज्वराक्रान्त हो जाता है अथवा उस जलते हुये क्वाथ में उस प्रतिमा को डाल देवे तो शत्रु बिना यत्न किये ही मारा जा सकता है ॥ ९०-९२ ॥

तीक्ष्णस्नेहेन संलिप्तां शत्रुप्रतिकृतिं निशि ।
तापयेदेधिते वहनौ प्रतिलोममनुं जपन् ॥ ९३ ॥
ज्वरेण बाध्यते सद्यो होमादस्य मृतिर्भवेत् ।

**तीक्ष्णस्नेहेन सर्षपतैलेन । प्रतिलोममित्याग्नेयमस्त्रम् । होमादित्यर्थात् प्रतिकृतेः। अस्येति रिपोः ॥ ९३-९४ ॥**

सर्षप के तेल से पोती हुई शत्रु की प्रतिकृति रात के समय जलती हुई अग्नि में तपावे और प्रतिलोम रूप से अस्त्र मन्त्र का जप करता रहे, तो शत्रु शीघ्र ही ज्वर से पीडित हो जाता है और पुतली का होम करे तो शत्रु मर भी जाता है ॥ ९३-९४ ॥

सामुद्रे सलिले हिङ्गुविषजीरकलोलिते ॥ ९४ ॥
क्वथिते पुत्तलिं साध्यनक्षत्रतरुनिर्मिताम् ।
अधोवक्त्रयां विनिक्षिप्य यष्ट्या विषतरूत्थया॥ ९५ ॥
तच्छिरस्ताडनं कुर्वन् जपेदस्त्रं विलोमतः ।
सप्ताहान्मरणं याति शत्रुर्ज्वरविमोहितः॥ ९६ ॥

**सामुद्रे सलिले । लवणोदके । विलोमत इति । जातभेदोऽभिप्रायेण । तेनाग्नेयास्त्रमित्यर्थः ॥ ९४-९६ ॥**

साध्य के नक्षत्र के वृक्ष (२२,१६०-१६३) की लकड़ी की बनी हुई प्रतिमा को अधोमुख कर ऊपर कहे गये क्वाथ में छोड़ देवे । पुनः विषवृक्ष

(कुचिला) की छड़ी से उस पुतली के शिर पर इस मन्त्र को विलोम रूप से पढ़ते हुए ताड़न करे तो शत्रु ज्वर से मूर्च्छित हो एक सप्ताह के भीतर मृत्यु को प्राप्त करता है ॥ ९५-९६ ॥

**आदित्यरथनागेन्द्रग्रस्ताङ्घ्रिं तद्विषाहतम् ।**
**नग्नं तैलेन लिप्ताङ्गं दग्धं भानुमरीचिभिः ॥ ९७ ॥**
**अधोमुखं निजरिपुं ध्यात्वा क्वथितवारिणा ।**
**तर्पयेद्भानुमालोक्य शत्रुर्मृत्युप्रियो भवेत् ॥ ९८ ॥**

नागेन्द्रः सर्पः । तर्पयेदिति दुर्गाम् ॥ ९७-९८ ॥

अब ध्यान द्वारा शत्रु के मारण की प्रक्रिया कहते हैं—आदित्य के रथ के नीचे पड़े हुये, अथवा पैर में साँप से ग्रस्त, अथवा साँप के विष से मरे हुये, अथवा तेल से लिप्ताङ्ग नंगे, अथवा सूर्य की किरणों से जले हुये, अधोमुख, अपने शत्रु का ध्यान कर सूर्य की ओर देखते हुये गर्म जल से दुर्गा का तर्पण करे तो शत्रु मृत्यु का प्रिय पात्र बन जाता है ॥ ९७-९८ ॥

**बिभ्रतीं मुशलं शूलं ध्यायन् कालघनप्रभाम् ।**
**कार्पासबीजैर्निम्बस्य पत्रैर्मेषीघृतप्लुतैः ॥ ९९ ॥**
**हुत्वा विद्वेषयेच्छत्रूनस्त्रेणाऽनेन देशिकः ।**
**बिभ्राणां तर्जनीं शूलं ध्यात्वा दुर्गां भयङ्करीम् ॥ १०० ॥**
**महिषीघृतसंसिक्तैः पल्लवैर्विषवृक्षजैः ।**
**हुत्वा रिपोः क्षणात् सेनामुच्चाटयति मन्त्रवित् ॥ १०१ ॥**

तर्जनीमिति । तर्जनीमुद्राम् । तल्लक्षणमुक्तं दुर्गापटले ॥ ९९-१०१ ॥

काले बादल के समान कान्ति वाली, मुशल तथा शूल धारण किये हुये महाकाली का ध्यान कर, कार्पास बीज एवं निम्ब पत्रों को भेंड़ी के घृत में डुबो कर इस अस्त्र मन्त्र से होम करे तो शत्रुओं में आपस में ही फूट हो जाती है । शूल एवं तर्जनी मुद्रा धारण करने वाली भयङ्कर रूपवाली दुर्गा का ध्यान कर भैंस के घृत में डुबोई गई विषवृक्ष (कुचिला) की पत्तियों से होम करे तो शत्रु सेना में तत्क्षण उच्चाटन हो जाता है ॥ ९९-१०० ॥

**ध्यात्वा देवीं पुरा प्रोक्तां चतुर्भिर्मरिचान्वितैः ।**
**अजारुधिरसंसिक्तैर्जुहुयाद्दिवसत्रयम् ॥ १०२ ॥**
**रिपोरुच्चाटनं कुर्यात् सेनाया नाऽत्र संशयः ।**
**अग्निशूलकरां दुर्गां ज्वलन्तीं प्रलयाग्निवत् ॥ १०३ ॥**
**ध्यात्वा सर्षपतैलाक्तैर्बीजैर्धत्तूरसम्भवैः ।**
**हुत्वा विमोहयेच्छत्रून् मरिचैर्वा ससर्षपैः ॥ १०४ ॥**

सर्षपतैलाक्तैरित्युत्तरत्राप्यन्वेति ॥ १०२-१०४ ॥

पहले (२१. ९९-१००) कहे गये दुर्गा के स्वरूप का ध्यान कर बकरे के रक्त से संसिक्त चार चार मरीचों से युक्त हवि द्वारा तीन दिन तक निरन्तर होम करे तो शत्रु सेना में तत्क्षण उच्चाटन हो जाता है, इसमें संशय नहीं । अपने हाथों में अग्नि और त्रिशूल धारण की हुई प्रलयकालीन अग्नि के समान जाज्वल्यमान दुर्गा का ध्यान कर सरसों के तेल में डुबाये गये धतूर के बीजों का अस्त्र मन्त्र से होम करे, अथवा सरसों के सहित मरीच से होम करे तो शत्रु मूर्च्छित हो जाता है ॥ १०२-१०४ ॥

**कालाञ्जननिभां दुर्गां शूलखड्गधरां स्मरन् ।**
**नक्षत्रवृक्षसम्भूतैर्व्रणकृत्स्नेहसंयुतैः ॥ १०५ ॥**
**समिद्वरैः प्रजुहुयाद्धन्यान्मासेन वैरिणम् ।**
**सिंहाधिरूढां धावन्तीं धावमानं रिपुं प्रति ॥ १०६ ॥**
**शरान् कार्मुकनिर्मुक्तान् वह्निज्वालामुखाकुलान्**
**मुञ्चन्तीं संस्मरन् दुर्गां तर्पयेदुष्णवारिणा ।**
**भानुबिम्बं समालोक्य रिपोरुच्चाटनं भवेत् ॥ १०७ ॥**

व्रणकृद्भल्लातः ॥ १०५-१०७ ॥

काले अञ्जन के समान रूप वाली हाथों में शूल तथा खड्ग धारण किये हुये दुर्गा का समरण कर साध्य के नक्षत्र (द्र. २२. १६०-१६३) वृक्ष की समिधा का जो भल्लातक के तेल में डुबोई गई हो, इस मन्त्र से होम करे तो साधक एक महीने के भीतर ही अपने शत्रु का विनाश कर देता है । भागते हुये शत्रु के पीछे-पीछे सिंहाधिरूढ़ हो दौड़ती हुई और उस पर अग्नि के समान देदीप्यमान धनुष से मुक्त बाणों द्वारा प्रहार करती हुई श्रीदुर्गा का ध्यान कर गर्म गर्म जल से सूर्य बिम्ब की ओर दृष्टि रख कर इस मन्त्र द्वारा उनका तर्पण करे तो शत्रु का उच्चाटन हो जाता है ॥ १०५-१०७ ॥

**अतिदुर्गामयोमुष्टिगदाहस्तां विचिन्तयेत् ।**
**विद्युद्दामसमानाभां महिषीघृतसंप्लुतैः ॥ १०८ ॥**
**पुलाकैर्जुहुयान्निम्बबिभीतकसमिद्वरैः ।**
**कोद्रवैरथ शत्रोश्च सेनायाः स्तम्भनं भवेत् ॥ १०९ ॥**
**आत्तपाशाङ्कुशां रक्तां गाणिदुर्गामनु स्मरेत् ।**
**लोणैः समधुरैः साध्यवृक्षकाष्ठैधितेऽनले ॥ ११० ॥**
**जुहुयान्निशि सप्ताहान्मन्त्रविद्वशयेन् नृपान् ।**
**पाशाङ्कुशधरां रक्तां विश्वदुर्गां विचिन्तयेत् ॥ १११ ॥**

फलिनीकुसुमैः फुल्लैश्चन्दनाम्भः समुक्षितैः ।
जुहुयान्निशि यो मन्त्री तस्य विश्वं वशं भवेत् ॥ ११२ ॥
शरच्चन्द्रनिभां देवीं विगलत्परमामृताम् ।
पाशाङ्कुशधरां ध्यायन् सिन्धुदुर्गां समिद्वरैः ॥ ११३ ॥
वैतसैर्मधुरासिक्तैर्जुहुयात् वृष्टिसिद्धये ।
कपालं त्रिशिखं पाशमङ्कुशं बिभ्रतीं करैः ॥ ११४ ॥
जवाकुसुमसङ्काशामग्निदुर्गां विचिन्तयन् ।
हुत्वा लवणपुत्तल्या मधुरत्रययुक्तया ॥ ११५ ॥
आकर्षेद्वाञ्छितान् साध्यान्मन्त्रविन्नाऽत्र संशयः ।
अतिदुर्गेयमत्याद्या षदन्ता त्रिष्टुबीरिता ॥ ११६ ॥
दुर्वर्णान्ताऽथ गाण्याद्या गाणिदुर्गा समीरिता ।
विश्वाद्याण्यक्षरान्ता सा विश्वदुर्गा समीरिता ॥ ११७ ॥
सिन्ध्वाद्या सा वकारान्ता सिन्धुदुर्गा निगद्यते ।
त्यन्तामग्न्यादिकामेनामग्निदुर्गां विदुर्बुधाः ॥ ११८ ॥

अतिदुर्गादयः पञ्च जातवेदोमन्त्रभेदा एव वक्ष्यमाणाः । पुलाकैस्तुच्छधान्यैः । अतीति । अतिदुर्गाणि विश्वा इत्यारभ्य परिषदन्ता सर्वा ऋक् । एवमग्रेऽपि । गूढार्थदीपिकाकारस्तु । आतिषदिति । त्रिवर्णं मन्त्रं वदन् बभ्रामैव ॥१०८-११८॥

वज्र के समान मुष्टि ताने हुये एक हाथ में गदा लिये हुये बिजली के समान चमकती हुई **अतिदुर्गा** (द्र. २१. ११६) का ध्यान कर उस मन्त्र से भैंस के घी में डुबोए गए हल्के हल्के तुच्छ धान्यों का निम्ब एवं वहेडा की वृक्ष की समिधा से जलती हुई अग्नि में होम करे अथवा भैंस के घी में डुबोये गये कोदों से होम करे तो शत्रु का स्तम्भन हो जाता है ॥ १०८-१०९ ॥

पाश और अंकुश हाथों में लिये हुये रक्तवर्ण वाली गाणिदुर्गा (द्र. २१. ११७) का स्मरण कर उस मन्त्र से मधुरत्रय संयुक्त लवण द्वारा शत्रु के नक्षत्र वृक्ष की समिधा से जलती हुई अग्नि में रात्रि के समय होम करे तो सात दिन के भीतर राजाओं को अपने वश में कर लेता है ॥ ११०-१११ ॥

पाश, अंकुश धारण करने वाली रक्त वर्ण की विश्वदुर्गा (द्र. २१. ११७) का ध्यान कर चन्दन के जल से धोई गई फूलों फलिनी (प्रियङ्गु) के पुष्पों से रात्रि काल में **विश्वदुर्गा** के मन्त्र से होम करे तो सारा विश्व उसके वश में हो जाता है ॥ १११-११२ ॥

शरत्पूर्णिमा के समान परमामृतरस का क्षरण करती हुई पाश एवं अंकुश धारण करने वाली **सिन्धुदुर्गा** का ध्यान कर त्रिमधुर से संसिक्त वेंत की समिधा से जलती हुई अग्नि में इस मन्त्र से होम करे तो वृष्टि की सिद्धि होती है ॥ ११३ ॥

हाथों में कपाल, त्रिशूल, पाश और अंकुश धारण किये हुये । गुल दुपहरिया पुष्प के समान रक्त शरीर वाली **अग्नि दुर्गा** का समरण करते हुये मधुरत्रय से संयुक्त नमक की बनी हुई पुतली का इस मन्त्र से होम करे तो साध्य को अपने अनुकूल बना कर जैसा चाहे वैसा अभीष्ट सिद्ध कर लेता है इसमें संशय नहीं । अब ऊपर कहे गये (द्र. २१. १०८-११५ पर्यन्त) अतिदुर्गा, गाणिदुर्गा, विश्वदुर्गा, सिन्धुदुर्गा, अग्निदुर्गा, के पाँच मन्त्रों का उद्धार कहते हैं— ये मन्त्र ॐ जातवेदसे इस मन्त्र के भेद हैं । अति दुर्गाणि विश्वा से आरम्भ कर परिषद् पर्यन्त सभी त्रिष्टुप् ऋक् अतिदुर्गा के मन्त्र हैं ॥ ११४-११६ ॥

दुर्गाणि के 'गाणि' से आरम्भ कर दुर् पर्यन्त सभी ऋक् गाणिदुर्गा के मन्त्र हैं । विश्वा से लेकर दुर्गाणि के णि पर्यन्त सभी ऋक् विश्वदुर्गा के मन्त्र हैं ॥ ११७ ॥

सिन्धु से प्रारम्भ कर नावेव पर्यन्त सभी ऋक् सिन्धुदुर्गा के मन्त्र हैं । अग्नि से लेकर दुरितात्य के त्यपर्यन्त सभी ऋक् अग्निदुर्गा के मन्त्र हैं ऐसा बुद्धिमानों का कहना है ॥ ११८ ॥

**अङ्गणे स्थण्डिलं कृत्वा सुगन्धिकुसुमादिभिः ।**
**देवीमभ्यर्चयेन्नित्यं प्रागुक्तेनैव वर्त्मना ॥ ११९ ॥**
**आहरेद्रात्रिषु बलिं चरुणा सर्वसिद्धिदम् ।**
**कृत्यारोगभयद्रोहभूतादीन्नाऽत्र संशयः ॥ १२० ॥**

आँगन में चौकोर वेदी बना कर सुगन्धित पुष्पादि से पूर्वोक्त विधि से नित्य देवी का समर्चन करे ॥ ११९ ॥

पुनः रात्रिकाल में चरु की बलि देवें, तो सारे मनोरथ पूर्ण हो जाते हैं । कृत्या, रोगबाधा, शत्रु आदि से भय, द्रोह और भूत बाधा आदि शान्त हो जाते हैं इसमें संशय नहीं ॥ १२० ॥

**यथावदग्निमाराध्य गन्धैः पुष्पैर्मनोरमैः ।**
**स्थित्वा तस्याऽग्रतो मन्त्री जपेन्मन्त्रमनन्यधीः ॥ १२१ ॥**
**जपोऽयं सर्वसिद्ध्यै स्यान्नाऽत्र कार्या विचारणा ।**
**लवणैर्मधुरासिक्तैर्जुहुयात् पश्चिमामुखः ॥ १२२ ॥**

**तस्येत्यग्नेः ॥ १२१ ॥**

गन्ध युक्त मनोहर पुष्पों द्वारा अग्नि की विधानतः पूजा कर उसके आगे खड़े हो एक चित्त से इस मन्त्र का जप करे तो यह जप सब प्रकार की सिद्धि कर देता है इसमें विचार की आवश्यकता नहीं है ॥ १२१-१२२ ॥

**मन्त्रार्णसंख्यया मन्त्री रिपुमात्मवशं नयेत् ।**
**शालीन्प्रक्षाल्य संशोष्य शुद्धान्कुर्वीत तण्डुलान् ॥ १२३ ॥**

जपित्वा पञ्चगव्येषु संस्कृते हव्यवाहने ।
चरुं पचेज्जपन्मन्त्रमवतार्य पुनः सुधीः ॥ १२४ ॥

त्रिमधुर मिश्रित लवण से पश्चिमाभिमुख हो मन्त्र के वर्णों की संख्या के अनुसार जप करने से साधक शत्रु को अपने वश में कर लेता है । चावल को धोकर धूप में सुखाकर विशुद्ध करे। पुनः जप कर शुद्ध सुसंस्कृत अग्नि में चरु निर्माण करे, फिर इस मन्त्र का जप करते हुये उस चरु को अग्नि से उतार लेवे ॥१२२-१२४॥

अर्चयित्वा विशदधीर्देवीमग्नौ यथा पुरा ।
जुहुयाच्चरुणाऽनेन साज्येनाऽष्टसहस्रकम् ॥ १२५ ॥
पात्रे सम्पातनं कुर्वन् साध्यं तत्प्राशयेत् सुधीः ।
शेषं तं निखनेद् वारिसम्पातं प्राङ्गणान्तरे ॥ १२६ ॥
कृत्या रोगा विनश्यन्ति सह भूतग्रहामयैः ।
परैरुत्पादिता कृत्या पुनस्तानेव भक्षयेत् ॥ १२७ ॥

फिर बुद्धिमान् साधक देवी की पूर्ववत् पूजा कर अग्नि में घी मिलाकर चरु का इस मन्त्र से आठ हजार होम करे और हुतशेष घृत किसी पात्र में डालता रहे, फिर उस संस्त्रव (हुतशेषघृत) को साध्य को पिला दे, कुछ शेष रखकर उसमें पानी मिला आँगन में गाड़ देवे तो भूत बाधा ग्रह बाधा के साथ ही कृत्या और रोग नष्ट हो जाते हैं । बहुत क्या कहें शत्रुओं के द्वारा प्रयुक्त की गई कृत्या उल्टे समस्त शत्रुगणों को ही खा जाती है ॥ १२५-१२७ ॥

व्रीहिभिर्हविषा क्षीरैः पयोवृक्षसमिद्वरैः ।
आज्यैर्मधुत्रयोपेतैरेतैर्दशशतं पृथक् ॥ १२८ ॥
जुहुयात् सम्पदां भूमिः साधको भवति ध्रुवम्।

व्रीहि हविष्य, दूध, क्षीरी वृक्षों की समिधा और आज्य इन्हें मधुरत्रय (पय आज्य मधु) से मिश्रित कर एक एक से पृथक् पृथक् एक एक हजार होम करे तो निश्चय ही साधक संपत्तियों का घर बन जाता है ॥ १२८-१२९ ॥

सिकताप्रयोगमाह

भास्करे मेषराशिस्थे मन्त्रज्ञोऽनुगुणे दिने ॥ १२९ ॥
नद्यां सागरगामिन्यां सततं पुष्कलाम्भसि ।
उद्धृत्यादाय सिकताः संशोष्य परिशोधयेत्॥ १३० ॥
न्यस्य ताः पञ्चगव्येषु संस्कृते हव्यवाहने ।
भर्जयेन्मनुना सिद्ध्यै दर्व्या ब्रह्मरुहोत्थया ॥ १३१ ॥

सिकताप्रयोगमाह भास्कर इति । सागरगामिन्यामिति साक्षात् । पञ्चगव्येष्विति । आलोडनपर्याप्तेषु ॥ १२९-१३१ ॥

मेष राशि के सूर्य होने पर जब दिन नक्षत्र और मुहूर्त्त उत्तम हो,उस समय साधक पर्याप्त जल युक्त सागर गामिनी नदी के भीतर घुस कर सिकता ले लेवे, पुन: उसे घाम में सुखा कर अच्छी तरह शुद्ध कर ले । फिर उसे पर्याप्त पञ्चगव्य में रखकर, सुसंस्कृत अग्नि में सिकता को सिद्ध करने के लिये इस मन्त्र को पढ़ते हुये पलाश वृक्ष की दर्वी से उसे खूब भून डाले ॥ १२९-१३१॥

**सिंहमेषधनुस्थेऽर्के कृष्णपक्षेऽष्टमीतिथौ ।**
**विशाखा कृत्तिकामूलहस्तौत्तर मघास्वथ ॥ १३२ ॥**
**रोहिण्यां श्रवणे वारौ मन्दवाक्पतिदैवतौ ।**
**विहायाऽन्येषु कुर्वीत सिकतास्थापनं सुधीः ॥ १३३ ॥**
**गृहग्रामादिराष्ट्राणां रक्षार्थं सिकताः शुभाः ।**

**गृहग्रामादीत्यादि शब्देन नगरम् ॥ १३२-१३४ ॥**

फिर, सिंह, मेष तथा धनुष् के सूर्य होने पर कृष्णपक्ष में अष्टमी तिथि को विशाखा, कृत्तिका, मूल, हस्त तीनों उत्तरा, मघा, रोहिणी, श्रवण नक्षत्र होने पर शनि और बृहस्पतिवार दो वारों को छोड़कर शेष अन्य दिनों में सिकता का स्थापन करे। इस प्रकार की सिद्ध सिकता गृह ग्राम तथा राष्ट्र की रक्षा के लिये कल्याणकारिणी होती है ॥ १३२-१३४ ॥

**प्रस्थाढकघटोन्माना मध्यादिष्ववटेष्विमाः ॥ १३४ ॥**
**नवसु प्रक्षिपेज्जप्तास्तेषु सम्पूजयेत् क्रमात् ।**
**मध्यादि देवीशस्त्राणि कपालान्तानि देशिकः ॥ १३५ ॥**
**चक्रं शङ्खमसिं खेटं बाणञ्चापं त्रिशूलकम् ।**
**कपालं स्वस्वमन्त्रेण सम्पूज्याऽन्ते बलिं हरेत् ॥ १३६ ॥**

**प्रस्थेति । गृहे प्रस्थमिताः, ग्रामे नगरे आढकमिताः । राष्ट्रे घटोन्मिताः । अशीतिगुञ्जः कर्षः । चतुर्गुणः पलम् । चतुष्पलः कुडवः । चतुःकुडवः प्रस्थः । प्रस्थचतुष्कमाढकः । आढकचतुष्कं द्रोणः । द्रोणचतुष्कं घटः । दशाङ्गुलाधिकं चतुर्विंशत्यङ्गुलं केचिदाहुः ॥ १३४-१३५ ॥**

**स्वस्वमन्त्रेणेति—सप्तदशोक्तेन अन्ते बलिमिति । देव्याःचक्राद्यस्त्राणां च ॥ १३५-१३६ ॥**

घर में प्रस्थ मात्रा, ग्राम, एवं नगर में आढ़क प्रमाण तथा राष्ट्र में घट प्रमाण सिकता का विधान है । मध्य में एक तथा उसके चारों दिशाओं में चार एवं चार कोनों में चार इस प्रकार कुल नव गड्ढा खोदकर उक्त प्रमाण, सिकता स्थापित करे । फिर मध्य के गड्ढे में चक्र, शङ्ख, असि, खेट, बाण, चाप, त्रिशूल और कपाल इन आठो देवी के शस्त्रों की समुदित रूप से तथा आठो दिशाओं के गड्ढे में एक एक के क्रम से तत्तन्मन्त्रों से पूजा करे और अन्त में बलि प्रदान करे । (शस्त्रों के पूजा का मन्त्र (द्र. १७. ४२-५०) ॥ १३४-१३६ ॥

**नक्षत्रग्रहराशीनां लोकेशानां बलिं हरेत् ।**
**विहिता यत्र रक्षेयं वर्धन्ते तत्र सम्पदः ॥ १३७ ॥**
**क्षुद्रग्रहमहारोगसौरभूतसरीसृपाः ।**
**अमुना विलयं यान्ति विधिना नाऽत्र संशयः ॥ १३८ ॥**

**नक्षत्रेत्यधिपतीनामप्युपलक्षकम् । एषां बलिमन्त्राः। अश्विनीदेवताभ्यो दिवानक्तञ्चारिभ्यः सर्वेभ्यो भूतेभ्यो नमः । एवं भरणीकृत्तिकापाददेवताभ्यः कृत्तिकापादत्रयदेवताभ्य इत्याद्यूह्यम् । ततस्तदधिपतिभ्यः अश्विन्यधिपत्यश्विदेवताभ्यः । एवं यमादिषूह्यम् । ततो राशिबलिः । अश्विनीभरणी-कृत्तिकापादे मेषदेवताभ्यस्तदधिपतिभ्यः । एवं वृषादिषूह्यम् । ततो ग्रहबलिः । अश्विनीभरणीकृत्तिकापादमेषराश्यधिपत्यङ्गारकदेवताभ्यः । एवमन्येषामप्यूह्यम् । लोकेशबलिर्वास्तौ मदुक्तोऽनुसन्धेयः । बलिं हरेदिति परितः ॥ १३७-१३८ ॥**

देवी के शस्त्रों की पूजा करने के अनन्तर नक्षत्र, नक्षत्र देवता, ग्रह राशियों एवं राशि के अधिपतियों एवं लोकेशों को बलि प्रदान करे । जहाँ इस प्रकार अपनी रक्षा के लिये प्रयत्न किये जाते हैं वहाँ संपत्तियों की अभिवृद्धि होती है ॥ १३७ ॥

क्षुद्ररोग, ग्रहबाधा, महारोग, अन्तरिक्ष लोक, भूतलोक के समस्त उपद्रव तथा सर्पादि जन्य उपद्रव विधिपूर्वक इस मन्त्र के प्रयोग से नष्ट हो जाते हैं इसमें संशय नहीं ॥ १३८ ॥

**सिकतानां विशुद्धानां विकारकुडवं सुधीः ।**
**पञ्चगव्ययुते पात्रे ब्रह्मवृक्षेण निर्मिते ॥ १३९ ॥**
**निक्षिप्य विधिना यत्र स्थापयेत्तत्र सम्पदः ।**
**दिने दिने प्रवर्धन्ते कालवृद्ध्यादिभिः सह ॥ १४० ॥**
**महोत्पाता विनश्यन्ति कृत्याद्रोहमहाग्रहाः ।**

**विशुद्धानामिति । नद्यामित्याद्युक्तप्रकारेण । विकारकुडवं षोडशकुडवम् । प्रस्थं गोमूत्रादीनाम् ॥ १३९-१४१ ॥**

बुद्धिमान् साधक समुद्रगामिनी नदियों का विशुद्ध १६ कुडव सिकता लेकर पलाश वृक्ष निर्मित एक प्रस्थ पञ्चगव्य से पूर्ण पात्र में डाल देवे तदनन्तर पूर्वोक्त विधि से उसमें अपनी संपत्ति गाड़ देवे तो जैसे जैसे समय बीतता जायगा, वैसे वैसे उसकी संपत्ति भी बढ़ती जायगी ॥ १३९-१४० ॥

इस मन्त्र के प्रयोग से दिव्य, अन्तरिक्ष तथा भौतिक उत्पात नष्ट हो जाते हैं कृत्या, शत्रुद्रोह तथा महाग्रह जन्य बाधायें भी प्रणष्ट हो जाती हैं ॥ १४१ ॥

**चरुगव्याश्मनां कुर्यात् स्थापनं विधिनाऽमुना ॥ १४१ ॥**
**गोमूत्रं प्रस्थमानं स्याद् गोमयाम्भस्तदर्द्धकम् ।**

आज्यात् सप्तगुणं क्षीरं गोमूत्रात् त्रिगुणं दधि ॥ १४२ ॥
गोमूत्रेण समं सर्पिः सर्वं वा सममुच्यते ।
गावः स्युः कपिलाश्वेतहिमधूम्रारुणप्रभाः ।
अभावे गदिताः सर्वाः सर्वधा कपिलोद्भवम् ॥ १४३ ॥

विधिनेति । पूर्वोक्तस्थापनप्रकारेण । चर्वश्मनोः । गव्ये तु विशेषो नारायणीये— गव्येषु शालीन् यवमुद्गमाषगोधूमबिल्वास्थितिलाब्जबीजम् ।
पद्मच्छदस्थं विनिधाय पात्रे क्षुद्रा निखन्याद्भुवि नागयोगे ॥

नागयोगमाहात्म्यः—

सार्पे मुहूर्ते सर्पर्क्षकरणे सर्पसंज्ञिते ।
संयोगो नागयोगोऽयमथवा करणर्क्षयोः ॥ इति ॥
पृथक् शिरः पञ्च सरोजपत्रं
निश्छिद्रमेकीकृतबद्धनालम् ।
गव्ये प्रपूर्णे निखनेददूनां (नत्र)
स्मृत्या तदा क्षुद्रविनाशि गेहे ॥ इति ॥

तत्स्थापननक्षत्रादिकमपि तत्रैव—

पूषा पुष्यपुनर्वसू बसुहरी चित्रा शशी (तथा) रोहिणी
तारास्तास्तिथयोंऽशुमत्फणियमा दिक्पञ्चदश्यो हरिः ।
वारास्त्विन्दुसुतेन्दुशुक्रगुरवो युग्मं कुलीरो धनुः
कुम्भान्त्यावपि राशयो निगदिता गव्यप्रयोगाय ते ॥ इति ॥

सर्वं वेति । वाशब्देनान्यत् प्रकारद्वयमुपक्षिप्तम् । योजने तत्तन्मन्त्रेण योजनमित्यपि ज्ञेयम् । तदुक्तम्—

मूत्रं प्रस्थं गोमयं स्यात्पलार्द्धं क्षीरं प्रस्थं दध्यपि क्षीरतोऽर्द्धम् ।
आज्यं दध्नोऽप्यर्द्धमेवं प्रमाणं स्वीयैर्मन्त्रैर्योजयेत् पञ्चगव्यम् ॥
मूत्रं द्विभागं शकृदेकभागं पयोऽष्टभागं दधि तत्समानम् ।
क्षीरार्द्धकं वा चतुरंशमाज्यम् ॥ इति । मन्त्रास्त्वाचार्यैरुक्ताः । तद्यथा—

तारभवाभिरथगर्भिः क्रमेण संयोजयेच्च गव्यानि । आत्माष्टाक्षरमन्त्रैरथवा योज्यानि पञ्चभिः पञ्च ॥ इति ॥ १४१-१४३ ॥

इसी विधि से चरु गव्य तथा पत्थर का भी राष्ट्र शान्ति के लिये स्थापन करना चाहिए ॥ १४१ ॥

अब **पञ्चगव्य का प्रमाण तथा प्रकार** कहते हैं—गोमूत्र की मात्रा एक प्रस्थ, गोबर और गोमूत्र की मात्रा उसकी आधी होनी चाहिए घी का सातगुना दूध तथा गोमूत्र से तिगुनी दही की मात्रा होनी चाहिए ॥ १४२ ॥

गोमूत्र के बराबर घृत होना चाहिए, अथवा सभी की मात्रा समान होनी चाहिए । इसमें कपिला गौ का गोमूत्र, श्वेत गौ का गोमय तथा दूध धूम्रवर्णा गौ

का दही तथा लाल वर्ण की गौ का घृत होना चाहिए। इनके अभाव में कपिला गौ का ही सर्वांशतया पञ्चगव्य का उपयोग करे ॥ १४३ ॥

**एकोनपञ्चाशत्कोष्ठे फलके ब्रह्मशाखिनः ।**
**विहाय कोणकोष्ठानि शक्त्याद्यं जातवेदसम् ॥ १४४ ॥**
**लिखित्वा मध्यकोष्ठादि पूजयेत्तत्र देवताम् ।**
**कृत्वा होमं ससम्पातं निखनेत्तद्यथा पुरा ।**
**दद्याद् बलिं यथा पूर्वमस्य पूर्वोदितं फलम् ॥ १४५ ॥**

**एकोनपञ्चाशदिति । पूर्वापरायतदक्षिणोत्तरायताष्टाष्ट रेखाक्रमेण । तत्र मध्यकोष्ठे शक्तिबीजं लिखित्वा पूर्वाद्यावृत्तित्रयेण जातवेदोमन्त्रं लिखेत् । तत्र तृतीयावृत्तौ । बाह्ये कोणचतुष्टयपरित्यागः ॥ १४४-१४५ ॥**

पूर्व से पश्चिम तथा दक्षिण से उत्तर परस्पर एक दूसरी को काटती हुई आठ आठ रेखा खीचे, इस प्रकार ४९ कोष्ठकों को निर्माण हो जायगा उसमें चारों कोनों के ४ कोष्ठों को छोड़ देवे इस प्रकार शेष ४५ कोष्ठकों में मध्य के कोष्ठ में शक्ति बीज (ह्रीँ) लिखे पुनः पूर्व दिशा से प्रारम्भ कर 'जातवेदसे' मन्त्र के ४४ अक्षरों को लिखे। पुनः मध्य कोष्ठ से आरम्भ कर जाग्रता तपनी से प्रारम्भ कर निःसपत्ना पर्यन्त ४४ देवताओं (द्र. २१. ५०-५५) का पूजन करे। फिर होम कर इसके हुतशेष संपात संस्राव को पूर्ववत् गाड़ देवे, फिर पूर्ववत् बलि देवें तो इसका फल पूर्ववत् (२१. १३८) होता है ॥ १४४-१४५ ॥

आग्नेयास्त्रयन्त्रमाह

**मध्ये मायामष्टकोष्ठेषु पादा-**
**नष्टौ कृत्वा मातृकार्णैः प्रवीतम् ।**
**भूविम्बस्थं सर्वभूतामयघ्नं**
**रक्षायुःश्रीकीर्त्तिदं यन्त्रमेतत् ॥ १४६ ॥**

**यन्त्रमाह—मध्य इति । पूर्वापरायता दक्षिणोत्तरायताश्चतस्रो रेखाः कुर्यात् । तदा नवकोष्ठं भवति । मध्य इति । मध्यकोष्ठे ॥ १४६ ॥**

आग्नेयास्त्रयन्त्रम्

| | | |
|---|---|---|
| | | |
| | ह्रीँ | |
| | | |

पूर्व से पश्चिम तथा दक्षिण से उत्तर चार रेखायें परस्पर एक दूसरे को काटती हुई खींचना चाहिए। इस प्रकार कुल नव कोष्ठकों का निर्माण होगा। मध्य में माया (ह्रीँ) बीज लिखें। फिर आठ कोणों में अग्नि मन्त्र के आठ पादों (द्र. २१. ६४-६८) को लिखें। तत्पश्चात् मातृका वर्णों को लिख कर उसे घेर देवे, तदनन्तर उसके चारों ओर

भूपुर बनावे तो यह यन्त्र सभी प्रकार के रोगों को नष्ट तो करता ही हैं रक्षा, आयु, श्री तथा कीर्त्ति भी प्रदान करता है ॥ १४६ ॥

**आग्नेयास्त्रस्य ज्ञानानि विसर्गादानकर्मणी ।**
**यः पुमान् गुरुणा शिष्टस्तस्याऽधीनं जगत्त्रयम् ॥ १४७ ॥**

**॥ इति श्रीलक्ष्मणदेशिकेन्द्रविरचिते शारदातिलके**
**एकविंशः पटलः समाप्तः ॥ २१ ॥**



विसर्गादानकर्मणीति । विसर्गः संहारः । आदानं प्रयोगानन्तरं पुनर्मन्त्रस्वाकारः । यदाहुः—

विधिवन्मारणं कृत्वा सिद्धमन्त्रेण मन्त्रवित् ।
कर्मान्ते देवतापूजां सविशेषं प्रकल्पयेत् ॥
शक्त्या सन्तर्प्य विप्रांश्च मन्त्रमूर्त्तिं विसृज्य च ।
समुद्रगायां नद्यां तु कण्ठमात्रे जले स्थितः ॥
अहोरात्रं जपेन्मन्त्रमष्टाधिकसहस्रकम् ।

शुद्धं मनुं तं स्वीकुर्यात् । इति ॥ १४७ ॥

**॥ इति श्रीराघवभट्टविरचित-शारदातिलकटीकायां सत्सम्प्रदायकृतव्याख्यायां पदार्थादर्शाभिख्यायामेकविंशः पटलः ॥ २१ ॥**



इस आग्नेयास्त्र का ज्ञान, संहार तथा प्रयोग पूर्वक सिद्धि कर उसको ग्रहण करने की प्रक्रिया को जो गुरु द्वारा जान लेता है उसके वश में सारी त्रिलोकी हो जाती है ॥ १४७ ॥

**॥ इस प्रकार शारदातिलक के इक्कीसवें पटल की डॉ० सुधाकर मालवीय कृत हिन्दी व्याख्या पूर्ण हुई ॥ २१ ॥**



# अथ द्वाविंश पटलः

## अथ दिनास्त्रकृत्यास्त्रप्रकरणम्

**अथो दिनास्त्रं कृत्यास्त्रं वक्ष्ये शत्रुविमर्दनम्।**
**अतिदुर्गामनुं प्राहुर्दिनास्त्रं मन्त्रवित्तमाः ॥ १ ॥**

अथो इति । अतिदुर्गामनुः पूर्वोक्तः ॥ १ ॥

अब इसके बाद शत्रुओं के विनाश करने वाले दिनास्त्र और कृत्यास्त्र के विषय में कहता हूँ । मन्त्रज्ञों ने अति दुर्गा मन्त्र को (द्र. २१. ११६) ही दिनास्त्र कहा है ॥ १ ॥

दिनास्त्रमन्त्रः

**प्रतिलोममिमं मन्त्रं कृत्यास्त्रं परिचक्ष्यते ।**
**दिनास्त्रस्य षडङ्गादीन् प्रतिलोमोदितान् विदुः ॥ २ ॥**

इममतिदुर्गामनुम् । षडङ्गादीनित्यादिशब्देनाऽक्षरपदन्यासावुभयत्र । अनुलोमोदितान् जातवेदसे इत्यत्रोक्तान् । जातवेदसे ह्राङाद्यन्तैरिति सम्प्रदायात् ।

तदुक्तम्— मनोराद्यपदेनैव षट्पदानि च पूर्ववत् ।
ह्राङाद्यन्तेन तानि स्युरतिदुर्गामनोरपि ॥ इति ॥

आचार्या अपि—अनुलोमजपेऽङ्गानामपि पाठोऽनुलोमकः । इति । पद्मपादाचार्यैर्व्याख्यातम् अपिशब्दात् पदाक्षरयोरपीति । प्रतिलोमोदितानित्याग्नेयास्त्रोक्तान् ।

तदुक्तम्— शैलाहिलोकाङ्गमुनिरससंख्याक्षरैः क्रमात् ।
मनोरन्तविलोमस्य षडङ्गान्यपि कल्पयेत् ॥ इति ॥

आचार्याश्च— प्रतिलोमानि तानि स्युः प्रतिलोमविधौ तथा । इति ।

अत्रापि तथेति पूर्ववत् पद्मपादाचार्यैर्व्याख्यातम् । अनयोर्ध्यानं यथा—

उद्यानमध्ये पूर्वोक्तसिंहस्कन्धोपरिस्थिताम् ।
कालमेघनिभामुग्रां सर्पभूषणभूषिताम् ॥
शूलं खड्गं कुठारं च खर्पखेटकतर्जनीः ।
दधानां दक्षिणान्यैः स्वैः करदण्डैरितस्ततः ।
अतिदुर्गामनोर्मूर्त्तिं धावमानां विचिन्तयेत् ॥ इति ॥

वरदारिदराभीति पाणिपद्मैर्विराजिताम् ।
तामन्तप्रतिलोमाख्यां सिंहस्थां चिन्तयेत् समाम् ॥ इति ।

पुरश्चरणं तु जातवेदोमन्त्रपुरश्चरणेनैव ज्ञेयम् ॥ २ ॥

इसी मन्त्र को प्रतिलोम कर देने पर कृत्यास्त्र हो जाता है । दिनास्त्र मन्त्र के षडङ्गन्यास, अक्षर न्यास तथा पदन्यास, आग्नेयास्त्र मन्त्र में कही गयी (द्र. २१. ५७,५८) प्रतिलोम पद्धति से करना चाहिए ॥ २ ॥

कृत्यास्त्रमन्त्रः

**भानुविम्बगतं शत्रुमधोवक्त्रं विषाहतम् ।**
**मूलादुत्थितया ग्रस्तं कुण्डल्या भावयेत् सुधीः ॥ ३ ॥**

विषाहतमिति । भानुरथगत-सर्पविषैराहतमित्यर्थः ॥ ३ ॥

दिनास्त्रमन्त्रप्रयोगः

**मूलाधारे क्षिपेत्सद्यः प्रस्फुरत्कालपावके ।**
**दिनत्रयात् ज्वराक्रान्तो रिपुः प्राणान् विमुञ्चति ॥ ४ ॥**

मूलाधारे गुदमेढ्रान्तरालदेशे । प्रस्फुरत्कालपावक इति ध्यानम् ॥ ४ ॥

साधक सूर्य रथ के पहिये के नीचे आ जाने वाले तथा उनके रथ स्थित सर्प के विष से ग्रस्त, अधोमुख शत्रु को मूलाधार से उठी हुई कुण्डलिनी द्वारा जाज्वल्यमान कालाग्निरूप मूलाधार में प्रक्षिप्त कर उसका ध्यान करते हुये, दिनास्त्र का जप करे तो शत्रु तीन दिन तक ज्वर से आक्रान्त हो, अपना प्राणत्याग कर देता है ॥ ३-४ ॥

**दिनास्त्रेण प्रविद्धाङ्गं स्वाधिष्ठानगतं रिपुम् ।**
**पञ्चवायुसमिद्धेन वह्निना दग्धविग्रहम् ॥ ५ ॥**
**ध्यायन्मनुं जपेत् सद्यः स भवेद्यमवल्लभः ।**

स्वाधिष्ठानं लिङ्गोपरिदेशः ॥ ५-६ ॥

दिनास्त्र मन्त्र से आहत शत्रु स्वाधिष्ठान में प्राप्त होकर पञ्चवायु से प्रदीप्त अग्नि से जल रहा है, इस रूप में ध्यान कर इस मन्त्र (दिनास्त्र) का जप करे तो शत्रु यमराज का प्रिय हो जाता है ॥ ५-६ ॥

**मणिपूरगतं शत्रुमग्निना दीप्तविग्रहम् ॥ ६ ॥**
**ध्यायन् दिनास्त्रं प्रजपेत् स मृत्युवशतां व्रजेत् ।**

मणिपूरकं नाभिस्थानम् ॥ ६-७ ॥

मणिपूर चक्र में प्राप्त हुआ शत्रु अग्नि की ज्वाला में जल रहा है इस रूप में ध्यान कर दिनास्त्र का जप करे तो शत्रु मृत्यु के वश में हो जाता है ॥ ६-७॥

**अनाहताहितः शत्रुर्निर्दग्धो मन्त्रवह्निना ॥ ७ ॥**
**पाशेन बद्ध्वा शीघ्रेण नीयते यमकिङ्करैः ।**

**अनाहतं हृदयम् ॥ ७-८ ॥**

अहितकारी हमारा शत्रु अनाहत चक्र में प्राप्त होकर दिनास्त्र मन्त्र की अग्नि में पड़कर भस्म हो रहा है, इस प्रकार ध्यान करते हुये मन्त्र का जप करे, तो यमराज के दूत उसे पाशों में बाँध कर शीघ्र ही यमपुरी ले जाते हैं ॥ ७-८ ॥

**विशुद्धस्थानगो वैरी दिनबाणेन पीडितः ॥ ८ ॥**
**अधोमुखः स्मृतस्तूर्णं निरायुः स्याद्दिनत्रयात् ।**

**विशुद्धिः कण्ठः ॥ ८-९ ॥**

विशुद्ध चक्र में प्राप्त शत्रु दिनास्त्र से पीड़ित हो कर अपना मुख नीचे किये हुये हैं इस रूप में ध्यान कर जप करे तो तीन दिन के भीतर ही वह गतायु हो जाता है ॥ ८-९ ॥

**आज्ञायां निहितं शत्रुं दहेत् ज्ञानाग्निना धिया ॥ ९ ॥**
**पुत्रमित्रकलत्रादीन् हित्वा मृत्युमुपाश्रयेत् ।**
**नाभिमात्रोदके स्थित्वा ध्यायन् विम्बे दिनेशितुः ॥ १० ॥**

**दिनबाणेन दिनास्त्रेण । आज्ञा भ्रूमध्यम् । मन्त्रमिति ॥ ९-१० ॥**

आज्ञाचक्र में प्राप्त हुआ शत्रु ज्ञानाग्नि से जल रहा है इस प्रकार बुद्धि में ध्यान करते हुये दिनास्त्र मन्त्र का जप करे तो शत्रु अपने पुत्र, मित्र, तथा कलत्र आदि यहीं छोड़कर मृत्यु के आश्रय में चला जाता है ॥ ९-१० ॥

**विमर्श**—यहाँ तक षट्चक्रों के द्वारा शत्रु मारण का प्रयोग कहा गया है । उन षट्चक्रों का स्थान इस प्रकार हैं—मूलाधार, गुदा और मेढ्र के अन्तराल में, स्वाधिष्ठान लिङ्ग के ऊपरी भाग में, मणिपूर नाभिस्थान में, अनाहत हृदयप्रदेश में, विशुद्ध कण्ठप्रदेश में, आज्ञा भ्रूमध्य में स्थित जानना चाहिए ॥ ९-१० ॥

**वैरिणं दग्धसर्वाङ्गं मन्त्रमष्टोत्तरं शतम् ।**
**जपेत् सप्तदिनादर्वाग्यमलोकं स गच्छति ॥ ११ ॥**

**जपेदित्यनेन सम्बध्यते ॥ ११ ॥**

नाभिमात्र जल में स्थित होकर सूर्य, विम्ब में पड़कर सर्वांग रूप से जलते हुये शत्रु का ध्यान कर एक सौ आठ बार जप करे तो शत्रु सात दिन के भीतर ही यमपुर चला जाता है ॥ ११ ॥

**व्यारवारं समारभ्य सप्ताहं प्रजपेन्मनुम् ।**
**सूर्योदयं समारभ्य यावदस्तमयो भवेत् ॥ १२ ॥**

**सन्निपातज्वराविष्टो यमग्रस्तो भवेदरिः।**

**आरो भौमः । प्रजपेदिति ॥ १२-१३ ॥**

भौमवार के दिन सूर्योदय से आरम्भ कर सूर्यास्त पर्यन्त एक सप्ताह पर्यन्त प्रतिदिन इस मन्त्र का जप करे तो शत्रु सन्निपात ज्वर से ग्रस्त हो जाता है और यमराज का ग्रास हो जाता है ॥ १२-१३ ॥

**स्थित्वा दुर्गालये मन्त्री त्रिरात्रं वर्जिताशनः॥ १३ ॥**
**दिनबाणेन विद्धाङ्गं वैरिणं प्रविचिन्तयेत्।**
**जप्नेन्मनुमिमं शत्रुर्ज्वरितो मरणं व्रजेत् ॥ १४ ॥**

**पूर्ववदरिं ध्यायन् ॥ १३-१४ ॥**

मन्त्रज्ञ दुर्गा के मन्दिर में रह कर तीन दिन पर्यन्त निराहार रह कर दिनास्त्र से विद्ध हुये शत्रु का ध्यान करे और इस मन्त्र का जप करें तो शत्रु ज्वर ग्रस्त हो मरण को प्राप्त हो जाता है ॥ १३-१४ ॥

**स्पृष्ट्वा(स्मृत्वा) दुर्गां जपेन्मन्त्रमनश्नंस्त्रिदिनं स्मरन् ।**
**शूलप्रोतं निजरिपुं दिनास्त्रेण प्रदीपितम् ॥ १५ ॥**
**ज्वरेण महताऽऽविष्टो जायतेऽसौ यमातिथिः।**
**रविमण्डलगं शत्रुं दष्टं तद्रथपन्नगैः ॥ १६ ॥**
**विषाग्निदग्धसर्वाङ्गं ध्यायन्नुष्णेन वारिणा।**
**तर्पयेद्दिनबाणेन स्यादसौ यमवल्लभः॥ १७ ॥**
**रविविम्बादागतया ज्वालया ग्रस्तविग्रहम्।**
**रिपुं ध्यात्वा जपेन्मन्त्रं स क्रीडति यमान्तिके ॥ १८ ॥**

**विषाग्नीति । विषं तद्रथपन्नगसम्भूतमेव ॥ १५-१८ ॥**

दुर्गा की मूर्त्ति का स्पर्श कर तीन दिन पर्यन्त बिना खाये पीये अस्त्र मन्त्र का जप करे और शूली पर चढाये गये शत्रु को दिनास्त्र से जलते हुये ध्यान करे तो शत्रु महान् ज्वर से पीड़ित हो यमराज का अतिथि बन जाता है ॥ १५-१६ ॥

सूर्यमण्डल में प्राप्त हुये शत्रु का सूर्य रथ स्थित पन्नगों से दष्ट होकर विष से सर्वाङ्ग में दग्ध होते हुये ध्यान कर गर्म गर्म जल से दिनास्त्र मन्त्र पढ़ते हुये अतिदुर्गा का तर्पण करे तो शत्रु यमराज का प्रिय हो जाता है ॥ १६-१७ ॥

यदि साधक सूर्यमण्डल से निकलती हुई आग की लपटों में जलते हुये शत्रु का ध्यान कर इस मन्त्र का जप करे तो वह शत्रु यमराज की पुरी में जा कर खेलता है ॥ १८ ॥

**ग्रहयुक्तार्कविम्बस्थं विद्धं मन्त्रमयैः शरैः।**

प्रतिबध्य निजं शत्रुं जपेदयुतमस्त्रवित् ॥ १९ ॥
रिपुं नयति शीघ्रेण यमदूतो यमालयम् ।

ग्रहयुक्तो राहुग्रस्तः । प्रतिबध्य ध्यात्वेत्यर्थः ॥ १९-२० ॥

राहुग्रस्त सूर्यबिम्ब के भीतर पड़ कर दिनास्त्र के मन्त्रमय बाणों से बँधे हुये शत्रु का ध्यान कर साधक यदि दश हजार दिनास्त्र मन्त्र का जप करे तो यमराज के दूत शीघ्रातिशीघ्र उस शत्रु को यमराज के घर पहुँचा देते हैं ॥ १९-२० ॥

प्रलयानलसङ्काशां कालरात्रिमिवाऽपराम् ॥ २० ॥
शूलपाशधरां घोरां सिंहस्कन्धनिषेदुषीम् ।
सवितुर्मण्डलान्तःस्थां रक्तनेत्रत्रयोद्गतैः ॥ २१ ॥
विस्फुलिङ्गैर्निर्दहन्तीं रिपुमाकुलविग्रहम् ।
स्पष्टदंष्ट्राधरां नृत्यद्भृकुटीभीषणाननाम् ॥ २२ ॥
तर्जयन्तीं निजं शत्रुं तर्जन्या भीमरूपया ।
दंष्ट्रामयूखजालेन द्योतयन्तीं दिगन्त(म्ब)रम् ॥ २३ ॥
शूलेन वैरिणो वक्षो दारयन्तीं भयङ्करीम् ।
जपेद्दिनत्रयं मन्त्री मारयेद्रिपुमात्मनः ॥ २४ ॥
अस्त्रमन्त्रकृतन्यासः प्रलयाग्निसमप्रभाम् ।
रक्तवस्त्रधरां क्रुद्धां रक्तनेत्रत्रयान्विताम् ॥ २५ ॥
सिंहाधिरूढां धावन्तीं धावमानं रिपुं प्रति ।
खड्गेन तच्छिरश्छित्वा क्षणाद्व्योमस्थलीं गताम् ॥ २६ ॥
ध्यात्वा दुर्गां जपेन्मन्त्रं त्रिदिनं वर्जिताशनः ।
अनेनैव विधानेन रिपुर्मृत्युप्रियो भवेत् ॥ २७ ॥

प्रलयानलेत्यादि भयङ्करीमित्यन्तस्य ध्यात्वेति शेषः ॥ २०-२७ ॥

प्रलयाग्नि के समान भयङ्कर, कालरात्रि के समान दुःसह, शूल एवं पाश धारण किये हुए, घोर स्वरूपा सेना में शत्रुकपाल लेकर हाथ को ऊपर किये हुए, सिंह के कन्धे पर बैठी हुई, सवितृ मण्डल मध्यर्त्तिनी, अपने तीनों नेत्रों से क्रोधपूर्वक निकली हुई ज्वाला से शत्रु को मरणासन्न करती हुई, अट्टहास करने के कारण अपने भयानक दाँतों को प्रत्यक्ष दिखाती हुई, इतस्ततश्चलायमान, भृकुटी के कारण भयङ्कर मुख वाली, अपनी भयानक तर्जनी से शत्रुवर्ग को कम्पित करती हुई, दाँतों की कान्ति से सर्वत्र दिग् दिगन्तरों को प्रकाशित करती हुई और त्रिशूल से शत्रु का वक्षःस्थल चीरती हुई अतएव महाभयङ्कर स्वरूपा दुर्गा का ध्यान कर तीन दिन पर्यन्त इस दिनास्त्र मन्त्र का जप करे तो साधक अपने शत्रु को मार डालता है ॥ २०-२४ ॥

अस्त्र मन्त्र का न्यास कर साधक प्रलयाग्नि के समान भयङ्कर स्वरूप वाली, क्रोध से अपने तीनों नेत्रों को लाल लाल किये हुए रक्त वस्त्र से युक्त, सिंह पर सवार हो भागते हुये शत्रु का पीछा करती हुई, अपने तीखे खड्ग से शत्रु का शिर काट कर आकाश में खड़ी हैं इस प्रकार श्रीमहाकाली का ध्यान कर निराहार तीन दिन तक इस दिनास्त्र मन्त्र का इसी विधान से जप करे तो शत्रु मृत्यु का प्रिय पात्र हो जाता है ॥ २५-२७ ॥

**कर्माण्येतानि कुर्वीत दिवसे न तु रात्रिषु ।**
**पश्चिमामुखलिङ्गस्य सजीवं महिषं पुरः ॥ २८ ॥**
**निखा(धा)य तस्य शिरसि कुण्डं कृत्वा त्रिकोणकम् ।**
**तस्मिन् समेधिते वह्नौ यथावद्देशिकोत्तमः ॥ २९ ॥**
**सत्रिकोणान् समन्त्रार्णान् साध्यनामसमन्वितान् ।**
**अजारक्तेन संसिक्तान् कारस्करसमिद्वरान् ॥ ३० ॥**
**सहस्रं जुहुयाद्देवीं ध्यात्वा सवितृमण्डले ।**
**प्रलयाग्निसमां घोरां द्वात्रिंशद् भुजशोभिताम्॥ ३१ ॥**
**उद्यदायुधसन्दीप्तां नृत्यन्तीं सिंहमस्तके ।**
**महादंष्ट्रां महाभीमां ज्वलत्केशीं नदन्मुखीम् ॥ ३२ ॥**
**रक्तान्त्र(र्द्र)मांसवदनां घूर्णितोग्रत्रिलोचनाम् ।**
**अनेन विधिना शत्रुर्महाज्वरनिपीडितः॥ ३३ ॥**
**विमुञ्चति निजं देहं पुत्रमित्रादिभिः सह ।**

**पश्चिमामुखेति । शिवालयद्वारस्य पश्चिममुखता । केचित् स्थावरलिङ्गस्य पश्चिमामुखतामाहुः । एष एव साम्प्रदायिकः पक्षः । सत्रिकोणानिति । लिखित-त्रिकोणान् । समन्त्रार्णानिति । पल्लवरीत्या ॥ २८-३३ ॥**

ऊपर कहे गये मारण के ये समस्त प्रयोग दिन में करना चाहिए, रात में नहीं । जिस शिवमन्दिर का द्वार पश्चिम दिशा की ओर हो, ऐसे मन्दिर के सामने जीवित भैसा खड़ा कर उसके अग्रभाग में त्रिकोण कुण्ड निर्माण करे । फिर उस कुण्ड में अग्नि प्रज्वलित हो जाय तो जिसके पत्ते पर त्रिकोण मन्त्राक्षर एवं साध्य नाम लिखे गये हों ऐसे अजारक्त से संसिक्त कुचिले की समिधाओं से सवितृ मण्डल में निवास करने वाली, प्रलयाग्नि के समान भयङ्कर, घोर (शत्रुकपाल धारिणी), ३२ भुजाओं वाली, उद्यत शस्त्र से जाज्वल्यमान, सिंह के मस्तक पर नृत्य करती हुई, भयानक दाँतों वाली, महाभीमा, जाज्वल्यमान केशों वाली, अट्टहास युक्त मुखों वाली, मुख में रक्त तथा मांस धारण करने वाली, तीनों उग्र नेत्रों से शत्रु को घूरती हुई महादेवी का ध्यान कर इस मन्त्र का जप करे तो शत्रु महाज्वर से निपीडित हो अपने पुत्र मित्रादिकों के साथ अपना शरीर त्याग कर देता है ॥ २८-३४ ॥

ऊर्ध्वमुष्णाम्भसो मन्त्री लम्बयित्वा भुजङ्गमम्॥ ३४ ॥
भानुविम्बगतां दुर्गां सहस्रादित्यसन्निभाम्।
सहस्रपाणिचरणां सहस्राक्षिशिरोमुखीम् ॥ ३५ ॥
सहस्रनागबद्धाङ्गीं त्रासयन्तीं जगत्त्रयम् ।
ध्यायन्ननेन सर्पास्ये तर्पयेदुष्णवारिणा ॥ ३६ ॥
संयतः कालपाशेन वैरी मुञ्चेत् स्वजीवितम्।
मध्याह्नार्कयुतप्रख्यां नदन्तीं नरसिंहवत्॥ ३७ ॥
घोर सिंहसमासीनां महाभीषणदर्शनाम्।
शूलप्रोताहितां ध्यायन् जपन्मन्त्रमनन्यधीः॥ ३८ ॥
तर्पयेदुष्णतोयेन सर्पवक्त्रे दिनत्रयम् ।
यमस्य भवनं गच्छेदरातिर्नात्र संशयः॥ ३९ ॥

**भुजङ्गममिति । जीवन्तं कृष्णम् । अधोमुखम् । अनेनास्त्रमन्त्रेण । तर्पयेदिति । कारस्करदर्व्या । अनन्यधीरित्यनेन तयैव तर्पणमित्युक्तम् ॥ ३४-३९ ॥**

मन्त्रवेत्ता साधक गर्म जल के ऊपर जीते हुंये काले नाग को अधोमुख लटका कर, सहस्रों सूर्य के समान प्रकाश वाली, सहस्रों हाथ, सहस्रों पैर, सहस्रों आँख, सहस्रों शिर तथा सहस्रों मुख वाली, अपने शरीर में सहस्रों नागों को धारण करने वाली, तीनों लोकों को संत्रस्त करती हुई महादुर्गा का सूर्यमण्डल में ध्यान कर इस मन्त्र से पूर्वोक्त अधोमुख लटकते हुये साँप के मुख में गर्म गर्म जल की कुचिला की दर्वी से तर्पण करे तो शत्रु काल पाश में जकड़ा जा कर अपना प्राण त्याग कर देता है ॥ ३४-३७ ॥

मध्याह्नकालीन सूर्य के समान प्रकाश वाली, नृसिंह के समान भयङ्कर अट्टहास करती हुई, भयङ्कर सिंह के स्कन्ध पर आसीन, महाभयङ्कर प्रतीत होने वाली, अपने त्रिशूल में शत्रु को ओत प्रोत करती हुई भगवती दुर्गा का ध्यान कर साधक एकाग्रचित्त होकर इस मन्त्र का तीन दिन जप करे और उतने ही दिन तक साँप के मुख में गर्म जल का तर्पण करता रहे तो शत्रु यमपुरी में चला जाता है इसमें कोई संशय नहीं है ॥ ३७-३९ ॥

ऋक्षवृक्ष प्रतिकृतिं प्रतिष्ठितसमीरणाम् ।
उष्णोदके विनिक्षिप्य विषाढ्ये विधिना ततः॥ ४० ॥
अर्केन्द्वनलसङ्काशां खड्गखेटकधारिणीम् ।
नयनत्रयनिर्गच्छद्विस्फुलिङ्गशताकुलाम् ॥ ४१ ॥
सिंहस्थां सर्पभूषाढ्यां त्रैलोक्यभयदायिनीम्।
खड्गकृत्ताहितां ध्यायन् प्रजपेदयुतं मनुम् ॥ ४२ ॥

विधानेनाऽमुना शत्रुर्ग्रस्तो भवति मृत्युना ।

पुत्तलीप्रयोगः

प्रकल्प्या दुर्गायतने त्रिकोणं कुण्डमुत्तमम् ॥ ४३ ॥
तत्र संज्वलिते वह्नौ महिषीशकृता कृतीम् ।
पुत्तलीमजरक्ताक्तां प्रतिष्ठितसमीरणाम् ॥ ४४ ॥
छित्वा छित्वा प्रजुहुयादजरक्तान्वितां निशि ।
ध्यात्वा दुर्गां प्रनृत्यन्तीं महिषोरःस्थलान्तरे ॥ ४५ ॥
शूलेन महिषस्याऽङ्गं भिन्दन्तीं घोरदर्शनाम् ।
अट्टाहसैरजस्रोत्थैर्भीषितासुरसैनिकान् ॥ ४६ ॥
प्रलयानलसङ्काशां भ्रमन्नेत्रत्रयान्विताम् ।
सन्दष्टाधरसंभिन्नां दंष्ट्राभीममुखाम्बुजाम् ॥ ४७ ॥
खड्गखेटकयुक्ताभिः कन्यकाभिः समावृताम् ।
अनेन विधिना शत्रुः प्रयाति यमसन्निधिम् ॥ ४८ ॥
दिनास्त्रमेवं कथितं शत्रुनिग्रहकारकम् ।
कृत्यास्त्रदेशितान् कुर्यात् प्रयोगान् मन्त्रवित्तमः ॥ ४९ ॥

**विधिना मनुं प्रजपेदित्यन्वयः । विधिः पल्लवेन नामयोगः । खड्गेन कृत्तः छिन्नः आहितः शत्रुर्थयेति ॥ ४०-४९ ॥**

शत्रु के नक्षत्र वृक्ष की (द्र. २२, १६०-१६३) प्रतिमा बना कर उसमें शत्रु की प्राण प्रतिष्ठा करे । तदनन्तर विषमिश्रित गर्म जल में उसे इस मन्त्र को जपते हुये डुबो दे ॥ ४० ॥

पुनः सूर्य, चन्द्रमा तथा अग्नि के समान प्रकाशवाली, खड्ग एवं खेटक धारण किये क्रोध युक्त अपने नेत्रों से आग की सैकड़ों ज्वाला उगलती हुई, सिंह पर आरूढ़, सर्पों के भूषण से भूषित, त्रैलोक्य को भयभीत करती हुई तथा शत्रु का अपने तलवार से वध करती हुई श्री दुर्गा का ध्यान करते हुये इस मन्त्र का दश हजार जप करे तो इस विधान से शत्रु मृत्यु से ग्रस्त हो जाता है ॥४१-४३॥

दुर्गा के मन्दिर में त्रिकोण कुण्ड का निर्माण करे । उसमें स्थापित जलती हुई अग्नि में बकरे के रक्त से ओत प्रोत भैंसे का पुतला, जिसमें प्राण की प्रतिष्ठा की गई हों, बकरे का रक्त मिलाकर रात्रि के समय काट काटकर इस मन्त्र से होम करे और उस समय महिष की छाती पर नृत्य करती हुई, अपने त्रिशूल से महिषासुर के अङ्ग को छिन्न भिन्न करती हुई, महाभयानक स्वरूप धारण किये हुये, अट्टहास द्वारा असुर सैन्य समूहों को भय उत्पन्न करती हुई, प्रलयकालीन अग्नि के समान भयङ्कर, तीनों नेत्रों से इधर उधर देखती हुई, क्रोध से दाँतों को

पीसती एवं काटती हुई, भयानक दाँतों वाली तथा खड्ग एवं खेटक (=ढ़ाल) धारिणी कन्यकाओं से सेवित श्री अति दुर्गा का ध्यान भी करे तो इस विधि से शत्रु यमराज के पास पहुँच जाता है ॥ ४३-४८ ॥

शत्रुओं का दमन करने वाले इस दिनास्त्र के विषय में हमने इस प्रकार कहा । अब कृत्यास्त्र में आदिष्ट प्रयोगों को जिस प्रकार मन्त्रवेत्ता करे, उसे कहता हूँ ॥ ४९ ॥

कृत्यास्त्रमन्त्रप्रयोगः

**आधारादुद्गतां देवीं कुण्डलीं सर्प(र्व) रूपिणीम् ।**
**तां ब्रह्मरन्ध्रमार्गेण यातां व्योमस्थलीं ततः ॥ ५० ॥**
**मुखेन शत्रुमादाय निवृत्तां स्वगृहं प्रति ।**
**ज्वलत्कालानलोद्दीप्तां विचिन्त्य प्रजपेन्मनुम् ॥ ५१ ॥**
**सप्तभिर्वासरैः शत्रुर्मृत्युं प्राप्नोति मोहितः ।**
**अङ्गारवारे चित्यग्नौ सर्षपस्नेहलोलितम् ॥ ५२ ॥**
**सिद्धार्थकुडवं जप्तं जुहुयात्पक्षमात्रतः ।**
**कृत्यास्त्रज्वालया दग्धो रिपुर्यमपुरं व्रजेत् ॥ ५३ ॥**
**चतुर्दश्यामर्द्धरात्रे चितास्थीन्यस्त्रसाधकः ।**
**व्रणतैलविलिप्तानि चिताग्नौ जुहुयात्ततः ॥ ५४ ॥**
**अनेन विधिना शत्रुर्मृत्युमेष्यति कातरः ।**

**चित्यग्नाविति । कुण्डस्थापिते यथोक्तसंस्कारसंस्कृते । व्रणतैलं भल्लात-तैलम् ॥ ५०-५५ ॥**

आधार चक्र से सर्परूपिणी कुण्डलिनी देवी को ऊपर ब्रह्मरन्ध्रमार्ग से आकाश मण्डल की ओर जाती हुई, पुनः वहाँ से शत्रु को मुख में दबाकर अपने घर (आधार मार्ग) की ओर लौटती हुई, जलती हुई कालाग्नि के समान प्रकाशित रूप में ध्यान कर कृत्यास्त्र मन्त्र का जप करे (द्र. २१. १) तो शत्रु मूर्च्छित हो कर सात दिन के भीतर ही मर जाता है ॥ ५०-५२ ॥

भौमवार के दिन कुण्ड में स्थापित चिता की अग्नि को सुसंस्कृत कर उसमें (द्र. ५. १३-१९) सरसों के तेल में डुबोई गई कुडव परिमाण श्वेत सर्षप का एक पक्ष पर्यन्त होम करे तो शत्रु कृत्यास्त्र की ज्वाला से जल कर मर जाता है ॥ ५२-५३ ॥

कृत्यास्त्र को सिद्ध करने वाला चतुर्दशी के दिन आधी रात के समय चिता स्थान में स्थित हड्डियों को भल्लातक के तेल से विलिप्त कर चिताग्नि में इस मन्त्र से होम करे तो शत्रु अत्यन्त दीन होकर मर जाता है ॥ ५४-५५ ॥

तुषास्थिनिर्मितां शत्रोर्व्रणतैलपरिप्लुताम् ॥ ५५ ॥
प्रतिमां स्थापितप्राणां जुहुयान्निशि साधकः।
छित्वा छित्वाऽजरक्तेन सप्ताहान् म्रियते रिपुः ॥ ५६ ॥

तुषा धान्यस्य । अस्थीति मनुष्यास्थीनि ।

एतदुभयमेकीकृत्य प्रतिमां कुर्यात् ॥ ५५-५६ ॥

धान की भूसी को चितास्थित हड्डी में मिलाकर बनाई गई शत्रु की प्रतिमा को भिल्लातक के तेल में भिगो देवे, फिर उसमें शत्रु की प्राण प्रतिष्ठा कर रात्रि के समय उसे काटकर बकरे के खून में मिला कर इस मन्त्र से होम करे तो शत्रु एक सप्ताह के भीतर मर जाता है ॥ ५५-५६ ॥

श्मशानबालुकाः स्पृष्ट्वा साक्षता नियुतं जपेत् ।
विकिरेत्तास्तडागादौ कृत्यास्त्रक्वथितं जलम् ॥ ५७ ॥
तदीयं पीतमचिरान्निहन्ति सकलान् जनान् ।
कृष्णाङ्गारचतुर्दश्यां प्रजप्तैः प्रेतभस्मभिः ॥ ५८ ॥
महिषाज्येन लुलितास्तन्मन्त्राक्षरसंख्यया ।
निर्माय गुटिका एताः सम्यग्जप्तसमीरणाः ॥ ५९ ॥
चितिकाष्ठैधिते वह्नौ जुहुयाद्दृढमानसः ।
चतुर्दशीत्रयादर्वाक् शत्रुर्मृत्युवशो भवेत् ॥ ६० ॥

कृत्यास्त्रक्वथितमिति । तडागादौ सिकताप्रक्षेपेण ॥ ५७-६० ॥

श्मशान के बालू में अक्षत मिलाकर उसी का स्पर्श करते हुये जप करे, तदनन्तर उस बालुका को तडागादि में फेंक दे, पुनः सिकता प्रक्षिप्त उस जल को लेकर कृत्यास्त्र मन्त्र पढ़ते हुये, उसे गर्म कर क्वाथ बनावें । इस प्रकार का क्वाथ पीने वाले समस्त जनों को विनष्ट कर देता है ॥ ५७-५८ ॥

कृष्णपक्ष में अङ्गारक (=मङ्गलवार) चतुर्दशी के दिन इस मन्त्र से जप किये गये भस्म में भैंस का घृत मिलाकर मन्त्र के अक्षरों की संख्या के अनुसार जप कर उसकी बटी बना लेवे तदनन्तर उसमें शत्रु के नाम से प्राण प्रतिष्ठा करे ॥ ५८-५९ ॥

तदनन्तर चिता के काष्ठ से प्रज्वलित अग्नि में उसका दृढ़ता पूर्वक होम करे तो इस प्रकार प्रत्येक चतुर्दशी के होम करने से तीन चतुर्दशी के भीतर शत्रु मृत्यु के वश में हो जाता है ॥ ६० ॥

श्मशानभस्मसिद्धार्थान् पञ्चगव्ये विनिक्षिपेत्।
माहिषे संस्मरेद्देवीं कालाग्निसदृशप्रभाम् ॥ ६१ ॥

भर्जयेत् प्रजपन्मन्त्रं विषकाष्ठैधितानले।
दुर्गागारे प्रजुहुयादनेनाऽयुतमस्त्रवित् ॥ ६२ ॥
पुनरादाय तद्भस्म सेनायां वैरिणः क्षिपेत्।
सा सेना बहुधा भिन्ना ज्वररोगविमोहिता ॥ ६३ ॥
आयुधानि परित्यज्य युद्धकाले पलायते।
गेहग्रामादिषु क्षिप्तं कुर्यादुच्चाटनं क्षणात् ॥ ६४ ॥

**माहिषे पञ्चगव्ये प्रयोग उपचारात् ॥ ६१-६४ ॥**

श्मशान के भस्म में मिलाये गये श्वेत सर्षप को महिष के पञ्चगव्य में डुबो दे, पुनः उस महिष पञ्चगव्य युक्त श्वेत सर्षपों को कालाग्नि के सदृश जलती हुई देवी का ध्यान कर कृत्यास्त्र मन्त्र पढ़ते हुये अग्नि में भून कर सुखा देवे । तदनन्तर दुर्गा के मन्दिर में दस हजार संख्या में उसका होम करें ॥ ६१-६२ ॥

फिर उस भस्म को लेकर शत्रु की सेना में फेंक देवें तो वह सेना ज्वर रोग से पीड़ित हो कर बहुधा प्रणष्ट हो जाती है ॥ ६३ ॥

अथवा युद्धकाल में अपने समस्त आयुधों का परित्याग कर भाग जाती है और यदि वही भस्म घर या ग्रामादि में फेंक दिया जाय तो क्षण मात्र में उच्चाटन कर देता है ॥ ६४ ॥

सप्तवारेषु कुलिके दुर्गावेश्मसु शर्कराः।
सप्त माहेन्द्रदिग्वर्जं गृहीत्वा प्रजपेन्मनुम् ॥ ६५ ॥
महिषीपञ्चगव्येन भर्जयेत्ता यथा पुरा।
भूयो जपित्वा विकिरेद् गेहग्रामपुरेष्विमाः ॥ ६६ ॥
स देशो नश्यति क्षिप्रं दग्धो मन्त्रभवाग्निना।

**सप्तवारेष्विति । सप्तवाराणामपि कुलिका मया एकादशे उक्ताः । तत्र प्राचीवर्जं दुर्गालयाग्नेयादिसप्तस्थानशर्करासु एकैकां शर्करां क्रमात् प्रत्यहं रव्यादेः कुलिके गृहीत्वा सप्तमेऽहनि सर्वा एकीकृत्य स्पृष्ट्वा प्रजपेत् । यथा पुरेति । विषकाष्ठाग्नौ विषकाष्ठदर्व्या भर्जयेत् ॥ ६५-६७ ॥**

दशम मुहूर्त्त का नाम कुलिक होता है, सात वारों के एक एक दिन के क्रम से कुलिक मुहूर्त्त (दशम मुहूर्त्त) में दुर्गा मन्दिर के पूर्व दिशा को छोड़कर शेष सात दिशाओं से शर्करा एकत्र कर (एक एक दिन एक एक दिशा से) उसे हाथ में लेकर इस मन्त्र का जप करे, फिर उसे भैंस के घी में पूर्ववत् भूने, तदनन्तर पुनः उस भूनी गई शर्करा को हाथ में लेकर इस मन्त्र का जप करे । ऐसी शर्करा को जिस घर, गाँव अथवा नगर में फेंके तो वह देश शीघ्र ही उस मन्त्र की अग्नि से जल कर भस्म हो जाता है ॥ ६५-६७ ॥

ब्रह्मदण्डीं मर्कटिकां करक्रोशनिकां त्रयम् ॥ ६७ ॥
भौमवारस्य कुलिके गृहीत्वा प्रजपेन्मनुम् ।
चतुर्दश्यां रिपोर्गेहे निखनेत् प्रजपन्मनुम् ॥ ६८ ॥
सार्द्धं पुत्रकलत्राद्यैरुत्सादो जायते रिपोः ।
एकैकं वा खनेन्मन्त्री मण्डलात् तत्फलं भवेत् ॥ ६९ ॥

मर्कटी कपिकच्छूः । करक्रोशनिकां वज्रदण्डः । उत्सादः पुनरप्यागमनं यथा न भवति तथा उच्चाटनम् ॥ ६७-६९ ॥

ब्रह्मदण्डी, मर्कटी (कपिकच्छ) करक्रोशनिका (वज्रदण्ड) इन तीनों को भौमवार के दिन कुलिक मुहूर्त्त में लेकर इस मन्त्र का जप करें, और इसी मन्त्र का जप करते हुये चतुर्द्दशी के दिन शत्रु के घर में गाड़ देवें ॥ ६७-६८ ॥

तो शत्रु अपने पुत्र कलत्रादि के साथ विनष्ट हो जाता है, अथवा एक एक को ही मन्त्र का जप कर शत्रु के घर में गाड़ देवे तो (४९ दिन के भीतर) उस युक्त प्रकार का फल दिखाई पड़ता है ॥ ६९ ॥

### पुत्तलीप्रयोगः

षड्बिन्दुषट्कं पुत्तल्यां निखनेदोदनान्वितम् ।
स्पृष्ट्वा तां प्रजपेदस्त्रं कृष्णाष्टम्यां निशार्द्धतः ॥ ७० ॥
शत्रुनामसमायुक्तं श्मशाने निखनेदिमाम् ।
प्रणश्येत् स रिपुः शीघ्रं सकुटुम्बः सबान्धवः ॥ ७१ ॥

षड्बिन्दुषट्कमिति । षड्बिन्दुः कीटविशेषः । स च प्रथमजलपाते उत्पद्यते । तस्य पञ्चकुष्ठ इति नामान्तरम् । तस्य पञ्च बिन्दवः श्वेता भवन्ति । एकबिन्दुः भिन्नवर्णः । तदुक्तं नीतिनिर्णीतादौपनिषदोः—

पञ्चकुष्ठस्य कीटस्य पञ्च स्युः श्वेतबिन्दवः ।
भिन्नवर्णस्तथा चैकः सुस्निग्धश्चैव वर्णतः ।
भवेत् स जलदारम्भे षड्बिन्दुरिति कीर्त्तितः ॥ इति ।

पुत्तल्यामिति । तज्जन्मर्क्षवृक्षोद्भवायाम् । शत्रोर्नामसंयुक्तम् अस्त्रमस्त्रमन्त्रं प्रजपेदित्यन्वयः । तत्र योगः पल्लवरीत्या । क्वचित् समायुक्तामिति पाठः । तदा पुत्तलीविशेषणम् ॥ ७०-७१ ॥

षड्बिन्दु (नाम का कीटविशेष जो प्रथम वर्षा काल में उत्पन्न होता है उसे पञ्चकुष्ठ भी कहते हैं । उसके पर सफेद होते हैं एक भिन्न वर्ण का होता है) को भात में मिलाकर शत्रु की प्रतिमा में गाड़ देवें । पुनः कृष्ण पक्ष की अष्टमी की अधीरात में उसे स्पर्श कर कृत्या मन्त्र का जप करें ॥ ७० ॥

फिर उस प्रतिमा को शत्रु के नाम से युक्त इस कृत्या मन्त्र का जप करते हुये श्मशान में गाड़ देवे तो वह शत्रु सकुटुम्ब सबान्धव नष्ट हो जाता है ॥ ७१॥

कपालशकलान् मन्त्री कृत्यास्त्राक्षरसंख्यकान्।
स्पृष्ट्वा तान् प्रजपेदस्त्रं प्राणस्थापनपूर्वकम् ॥ ७२ ॥
कृष्णाङ्गारचतुर्दश्यां श्मशाने विषवृक्षजे।
जुहुयादजरक्ताक्तान् कृत्यास्त्रज्वालया ततः॥ ७३ ॥
रिपुर्यमपुरं गच्छेन्महाज्वरविमोहितः।

कपालशकलान् अजरक्ताक्तान् श्मशाने जुहुयादिति सम्बन्धः । संस्पृश्येति । तानेव । विषवृक्षज इति । विषकाष्ठैधिते अग्नाविति शेषः ॥ ७२-७४ ॥

मन्त्रज्ञ प्राण प्रतिष्ठा से युक्त बकरे के रक्त से संपृक्त कपाल खण्डों का स्पर्श कर इस कृत्या मन्त्र में जितने अक्षर हैं उतनी संख्या में जप करे फिर कृष्ण पक्ष में मङ्गल के दिन जब चतुर्दशी हो तो श्मशान में विषवृक्ष से जलती हुई अग्नि में बकरे के रक्त से मिश्रित कर इस कृत्या मन्त्र से हवन करे तो शत्रु महाज्वर से मूर्च्छित हो यमपुर चला जाता है ॥ ७२-७४ ॥

अजरक्तेन संपूर्णे कलशे निक्षिपेदहिम् ॥ ७४ ॥
कपालेन पिधायैनं छादयेद्रक्तवाससा।
पूजयेद्रक्तपुष्पाद्यैः स्पृष्ट्वा तमयुतं जपेत् ॥ ७५ ॥
भौमवारे निशामध्ये कारस्करसमेधिते।
श्मशानवह्नौ जुहुयाद् गच्छेद्यमपुरं रिपुः ॥ ७६ ॥

अहिमिति । जीवन्तं कृष्णम् । एनं घटम् । तं घटं शत्रुरूपम् ॥ ७४-७६ ॥

बकरे के रक्त से परिपूर्ण कलश में साँप को रख देवें । फिर उसे कपाल से बन्द कर रक्त वस्त्र से ढ़क देवे । तदनन्तर रक्त पुष्पादि से उस कलश की पूजा कर उसका स्पर्श करते हुये, दस हजार जप करे ॥ ७४-७५ ॥

मङ्गलवार के दिन आधी रात के समय कुचिले की लकड़ी से जलती हुई श्मशान की अग्नि में होम करे तो शत्रु यमपुर चला जाता है ॥ ७६ ॥

साध्यनक्षत्रवृक्षेण कृत्वा कुम्भं प्रपूरयेत्।
माहिषैः पञ्चगव्यैस्तं विडालं तत्र निक्षिपेत् ॥ ७७ ॥
जपपूजादिकं सर्वं यथापूर्वं समाचरेत्।
कारस्करभवे वह्नौ कृत्यास्त्रेण समेधिते ॥ ७८ ॥
अयुतं व्रणतैलेन हुत्वाऽन्ते तं घटं पुनः।
आमस्तकं समुद्धृत्य जपेन्मन्त्रमनन्यधीः।
जुहुयाद्विधिनाऽनेन त्रिदिनैर्म्रियते रिपुः॥ ७९ ॥
सुन्दरं महिषीवत्समेकरात्रमुपोषितम्।

पाययन् महिषीसर्पिः प्रस्थं मन्त्रेण मन्त्रितम् ॥ ८० ॥
कुशैरावद्धसर्वाङ्गं स्थापितप्राणमञ्जसा ।
कारस्करैधिते वह्नौ व्रणतैलेन मन्त्रवित् ॥ ८१ ॥
होमं कृत्वाऽयुतं वत्सं जुहुयाद्यतमानसः ।
एकेन दिवसेनाऽरिर्गच्छेद्यमपुरं प्रति ॥ ८२ ॥

विडालं कृष्णम् । जपपूजादिकमिति आदिशब्देन कपालेन पिधानं रक्त-वस्त्राच्छादनं च । कारस्करभवे कारस्करकाष्ठैधिते । वह्नौ श्मशानाग्नौ । व्रणतैलेन भल्लाततैलेन । अनन्यधीरित्यनेन पूर्वघटहोमेऽपि अयं होम इत्युक्तम् ॥ ७७-८२॥

साध्य के नक्षत्र वृक्ष से निर्मित कलश को माहिष के पञ्चगव्य से परिपूर्ण करे और उसमें कृष्ण वर्ण का जीवित विडाल डाल दें । उसकी जप पूजा भी पूर्ववत् कर देवें । तदनन्तर कुचिला की समिधा से जलती हुई श्मशान की अग्नि में भल्लातक के तेल से इस मन्त्र द्वारा दस हजार हवन करे । फिर घड़े को शिरो भाग से खोल कर एकाग्र चित्त हो कृत्यास्त्र का जप करे । पुनः उक्त विधान से हवन करे तो शत्रु तीन दिनों के भीतर मर जाता है ॥ ७७-७९ ॥

एक सुन्दर भैंस के बच्चे को जो एक रात तक कुछ भी न खाया हो, उसे इस मन्त्र से अभिमन्त्रित, एक प्रस्थ घी पिलावे । फिर प्राण-प्रतिष्ठा कर उसके सारे अङ्गों को कुशा से बाँध देवें । तदनन्तर मन्त्रवेत्ता भल्लातक के तेल से कुचिला की समिधा से जलती हुई श्मशानाग्नि में इस कृत्या मन्त्र द्वारा दस हजार होम करे । फिर उस बच्चे के मांस का भी उतनी संख्या में इस मन्त्र से होम करे तो शत्रु एक ही दिन में यमपुरी को प्राप्त हो जाता है ॥ ८०-८२ ॥

त्रिकोणकुण्डनिहिते वह्नौ मन्त्रेण दीपिते ।
आर्चिते गन्धपुष्पाद्यैरयुतं जुहुयात् क्रमात् ॥ ८३ ॥
राजिभल्लातकतिलतैलैः सप्तदिनं ततः ।
प्रसूतिसमयप्राप्तां महिषीं स्थापितानिलाम् ॥ ८४ ॥
पूजितां गन्धपुष्पाद्यैः स्पृशन् कूर्चेन तां जपेत् ।
मस्तकाद्योनिपर्यन्तं धिया वत्समनुस्मरन् ॥ ८५ ॥
आकृष्य हस्ते पतितं जुहुयादेधितेऽनले ।
एवं कृते समुत्पन्ना कृत्या दीप्ता हुताशनात् ॥ ८६ ॥
भक्षयेदचिराच्छत्रुमीश्वरेणाऽपि रक्षितम् ।
पुनरग्नौ विशत्येषा कर्तारमपि काङ्क्षिणी ॥ ८७ ॥
एवंविधानि कर्माणि यः कुर्यान्मन्त्रवित्तमः ।
स जपेदात्मरक्षार्थं मन्त्रान् मृत्युञ्जयादिकान् ॥ ८८ ॥

**क्रमादिति प्रत्येकमयुतहोमः । तैलशब्दः प्रत्येकमभिसम्बध्यते । स्थापितानिलां प्रतिष्ठितप्राणाम् । हस्ते पतितमिति । भुवमस्पृष्टम् । जुहुयादिति । शत्रुबुद्ध्या । कर्त्तारमपि काङ्क्षिणीत्युक्तेस्तद्रक्षामाह स जपेदिति ॥ ८३-८८ ॥**

त्रिकोण कुण्ड में स्थापित मन्त्र से प्रज्वलित तथा गन्ध पुष्पादि से अर्चित अग्नि में क्रमशः राई, भल्लातक के तेल और तिल के तेल से अलग अलग (प्रत्येक से) दश दश हजार की संख्या में प्रतिदिन के क्रम से सात दिन पर्यन्त होम करे । इसके बाद प्रसूतिकाल निकट है जिसकी ऐसी महिषी में प्राण प्रतिष्ठा कर गन्ध पुष्पादि से पूजित कर उसका कुशा से स्पर्श करते हुये कृत्या का जप करे और अपनी बुद्धि से मस्तक से योनि पर्यन्त भैंस के बच्चे को ध्यान कर उस बच्चे को गर्भ से खींच कर पृथ्वी पर गिरने के पहले हाथ में रोक कर प्रदीप्त अग्नि में हवन करे तो उस जलती हुई अग्नि से उत्पन्न हुई कृत्या शीघ्र ही शत्रु को खा जाती है चाहे उसकी रक्षा शंकर ही क्यों न करें । फिर वह प्रयोक्ता प्रयोक्ता को भी खाने के लिये आग में प्रवेश करती है ॥ ८३-८७ ॥

इसलिये इस प्रकार कृत्या का प्रयोग करने वाला साधक अपनी रक्षा के लिये मृत्युञ्जय आदि मन्त्रों का अवश्य जप करे ॥ ८८ ॥

**लवणमन्त्रः**

**अथो लवणमन्त्रस्य विधानमभिधीयते ।**
**ऋगाद्या कथिता पूर्वं लवणाम्भसिपूर्विका ॥ ८९ ॥**
**लवणाम्भसि तीक्ष्णोऽसि उग्रोऽसि हृदयं तव ।**
**लवणस्य पृथ्वी माता मन्त्रस्य वरुणः पिता ॥ ९० ॥**
**लवणे हूयमाने तु कुतो निद्रा कुतो रतिः ।**
**लवणं दहति पचति पाचयति लवणं छिन्दति भिन्दति ॥ ९१ ॥**
**अमुकस्य दह गात्राणि दह मांसं दह त्वचम् ।**
**दह त्वगस्थिमज्जानि अस्थिभ्यो मज्जिकां दह ॥ ९२ ॥**
**यदि वसति योजनशते नदीनां वा शतान्तरे ।**
**नगरे लोहप्राकारे कृष्णसर्पशतार्गले ॥ ९३ ॥**
**तं दग्ध्वा नय मे शीघ्रमग्रे लोणस्य तेजसा ।**
**तत्रैवं वशमायातु लवणमन्त्रपराक्रमः ॥ ९४ ॥**
**या ते रात्रिः शल्यविद्धस्य शूलाग्रारोपितस्य च ।**
**या ते रात्रिर्महारात्रिः सा ते रात्रिर्महानिशा ॥ ९५ ॥**
**लवणादि द्वितीयाऽन्या दहाद्या परिकीर्त्तिता ।**
**तं दग्ध्वाऽन्या चतुर्थी स्याद्यातेपूर्वाऽथ पञ्चमी ॥ ९६ ॥**

ऋष्यादिकथनम्

अङ्गिरा मुनिराख्यातश्छन्दोऽनुष्टुबुदाहृतम् ।
अग्नी रात्रिः पुनर्दुर्गा भद्रकाली च देवताः ॥ ९७ ॥

लवणमन्त्रविधानमाह अथो इति । लवणादिद्वितीयेत्यत्र आकारे परे एचोयवायाव इति आयिकृते यकारलोपे च छान्दसत्वात् सन्धिः कृतः । प्रातिपदिकमात्रस्य लवणशब्दस्य वा ग्रहणम् । तेन लवणे इत्याद्या द्वितीया । तदुक्तमाचार्यैः— 'द्वितीया लवणे' इति । अन्या तृतीया । एवमृक्पञ्चकं चिटिमन्त्रसहितमेका विद्या । प्रणवपाशादि त्र्यक्षरादित्वम् । वाग्विन्द्रामृतबीजादित्वं च सम्प्रदायात् ज्ञेयम् । पद्मपादाचार्योक्तो मन्त्रोद्धारो यथा—

पृथिवीमुदकं चोक्त्वा(लव)णाम्भसीति ततः परम् ।
तीक्ष्णोऽस्युग्रोऽसि हृदयं तवेति लवणस्य गीः ॥
पृथिवीति च माता लवणस्य वरुणः पिता ।
प्रथमेयं द्वितीयाया लवणे इत्युपक्रमः ॥
हूयमाने त्विति कुतो निद्रेति च कुतो रतिः ।
लवणं पचतीत्युक्त्वा तथा पाचयतीति च ॥
लवणं छिन्दतीत्युक्त्वा भिन्दतीति च भाष्यताम् ।
अमुकस्य दह गात्राणि दह मांसं दह त्वचम् ॥
दहेति च तृतीयाया भवेदृच उपक्रमः ।
त्वगस्थिमज्जानीत्यस्थिभ्योशब्दं मज्जिकां दह ॥
(क्वचित्पुस्तके त्वगसृङ्मांसमेदोऽस्थिभ्यो शब्दमिति पाठः ।)
ततो यदीति सम्भाष्य वसतीति पदं वदेत् ।
योजनेति शते वर्णान्नदीनां वा शतान्तरे ॥
तं दग्ध्वेति चतुर्थ्यादौ नय मे शीघ्रमित्यतः ।
अग्ने इत्येतदन्ते स्याल्लवणस्येति तेजसा ॥
नगरे लोहवर्णाः स्युः प्राकारे कृष्णवर्णकाः ।
सर्पेत्यन्ते कृतार्गेतिले अत्रैव वशाक्षराः ॥
माया त्विति स्याल्लवणमन्त्रवर्णाः पुरस्कृताः ।
या ते रात्रिः शल्यविद्धस्य शूलाग्रारोपितस्य च ॥
या ते रात्रिरिति प्रोक्त्वा महारात्रिरितीरयेत् ।
सा ते रात्रिर्महेत्युक्त्वा निशेत्येवं तु पञ्चमी ॥ इति ॥

टीकान्तरेऽपि— माता स्याल्लवणस्येतत् वरुणः स्यात्पिता तथा ।
द्वितीया लवणे प्रोक्ता । इति ।

तथा— प्रवदेदमुकस्याऽन्ते दह गात्राणि पञ्चकम् ।
दह मांसं दहेत्युक्त्वा त्वचमुक्त्वा समापयेत् ॥
तृतीयाऽथ दह प्रोक्त्वा त्वगिति प्रवदेदतः ।
स्थिमज्जानीत्यतोऽस्थिभ्यो मज्जिकां स्याद्दहेति च ॥ इति ॥

तथा— या ते रात्रिः स्वशूलान्ते भिन्नस्येत्यक्षरत्रयम् ।

शूलाग्रारोपितस्येति(स्यापि)चान्ते या ते इतीरयेत् ॥
रात्रिः स्याच्च महारात्रिर्या रात्रिरमुकं विना ।
इत्येवं पञ्चमी ऋक् स्यात् मन्त्रोऽयं प्रणवादिकः ॥ इति ॥

**तथाऽत्राऽऽचार्यैः छन्दः कथनावसरे उक्तम्—अङ्गिराः स्यादृषिश्छन्दोऽनुष्टुप्त्रिष्टुप् । इति ॥**

**मन्त्रमुक्तावलीमन्त्रदेवप्रकाशिकाकारादीनामिदमेव सम्मतम् । पद्मपादाचार्यैः बीजशक्ती उक्ते—ह्रीं बीजं शक्तिरीरिता क्रोमित्येव च बीजं स्यादिति । तैरेव एतत्समफलं मन्त्रान्तरमुक्तम्—**

**चिटीति शब्दं संवीप्स्य चित्कालिपदमीरयेत् ।
महाचित्कालिशब्दान्ते ह्रीं सवौषट् द्विठान्तिकः ॥
मन्त्रान्तरमिति ज्ञेयं मतं तुल्यफलं शिवे ॥ इति ॥ ८९-९७ ॥**

अब **लवण मन्त्र का विधान** कहता हूँ—इन मन्त्रों के ऋचा के पूर्व में लवणाम्भसि शब्द का प्रयोग किया जाता है । अब इसका उद्धार कहते हैं ॥ ८९॥

'लवणाम्भसि तीक्ष्णोऽसि उग्रोऽसि हृदयं तव ।
लवणस्य पृथिवी माता लवणस्य वरुणः पिता ॥
लवणे हूयमाने तु कुतो निद्रा कुतो रतिः ।
लवणं दहति पचति पाचयति लवणं छिन्दति भिन्दति ॥
अमुकस्य दह गात्राणि दह मांसं दह त्वचम् ।
दह त्वगस्थि मज्ञानि अस्थिभ्यो मज्ञिकां दह ॥
यदि वसति योजनशते नदीनां वा शतान्तरे ।
नगरे लोहप्राकारे कृष्णसर्पशतार्गले ॥
तं दग्ध्वा नय मे शीघ्रमग्रे लोणस्य तेजसा ।
तत्रैवं वशमायातु लवणमन्त्रपराक्रमः ॥
या ते रात्रिः शल्यविद्धस्य शूलाग्रारोपितस्य च ।
या ते रात्रिर्महारात्रिः सा ते रात्रिर्महानिशा ॥'

अब इस लवण मन्त्र का पाँच विभाग करते हुये ग्रन्थकार कहते हैं—'लवणाम्भसि' से आरम्भ कर वरुणः पिता पर्यन्त प्रथम ऋचा है, पुनः 'लवणे हूयमाने से दह त्वचम् तक दूसरी ऋचा है फिर दह त्वगस्थि से शतार्गले पर्यन्त तृतीय ऋचा है, फिर दं दग्ध्वा से लवणमन्त्रपराक्रमः चतुर्थी है और या ते रात्रिः से महानिशा पर्यन्त पञ्चमी ऋचा है ॥ ९६ ॥

इस लवण मन्त्र के ऋषि अङ्गिरा हैं अनुष्टुप् छन्द है । अग्नि, रात्रि, दुर्गा और भद्रकाली देवता हैं ॥ ९७ ॥

**षडङ्गन्यासादि**

**चिटिमन्त्राक्षरैः कुर्यात् षडङ्गानि समाहितः ।
पञ्चभिर्हृदयं प्रोक्तं त्रिभिर्वर्णैः शिरः स्मृतम् ॥ ९८ ॥**

पञ्चवर्णैः शिखा प्रोक्ता कवचं करणाक्षरैः ।
पञ्चभिर्नेत्रमुदितं युगलेनाऽस्त्रमीरितम् ॥ ९९ ॥

षडङ्गमाह—चिटीति । समाहित इत्यनेन पञ्चग्भिः पञ्चाङ्गं वा कुर्यादित्युक्तम् । यदाहुराचार्याः— ऋग्भिराभिस्तु पञ्चाङ्गं पञ्चभिर्वा समीरितम् ।
विद्याक्षरैः षडङ्गं वा प्रणवाद्यैर्निगद्यते ॥ इति ॥ ९८-९९ ॥

इस मन्त्र का न्यास 'चिटी' इत्यादि वक्ष्यमाण (द्र. २२, १००-१०१) मन्त्र के अक्षरों से करना चाहिए । ये वक्ष्यमाण चिटि मन्त्र २४ अक्षरों के हैं इनमें पाँच से हृदय, तीन से शिर, पाँच से शिखा, चार से कवच, पाँच से नेत्र तथा दो से अस्त्रन्यास करना चाहिए ॥ ९८-९९ ॥

चिटिमन्त्रः

तारः चिटिद्वयं पश्चाच्चण्डालि तदनन्तरम् ।
महत्पदाद्यां तां ब्रूयादमुकं मे ततः परम् ॥ १०० ॥
वशमानय ठद्वन्द्वं चिटिमन्त्र उदाहृतः ।
चतुर्विंशत्यक्षरात्मा सर्वकामफलप्रदः ॥ १०१ ॥

चिटिमन्त्रमुद्धरति तार इति । महत्पदाद्यां तामिति महाचाण्डालि । अत्र आन्महत इत्यनेनाऽऽत्वम् । क्वच्चित्तु महापदाद्यामिति पाठः । तदुक्तम्—

चाण्डालीति महेत्यक्त्वा चाण्डालीत्यभिमन्त्रयेत् । इति ॥ १००-१०१ ॥

अब **चिटि मन्त्र का उद्धार** कहते हैं—प्रथम तार (प्रणव) तदनन्तर दो चिटि शब्द (चिटि चिटि) इसके पश्चात् 'चण्डालि' तत्पश्चात् 'महा चण्डाले' शब्द तदनन्तर अमुकं मे वशमानय स्वाहा' यह २४ अक्षर का मन्त्र हैं और समस्त कामनाओं को पूर्ण करता है ॥ १००-१०१ ॥

विमर्श—मन्त्र का स्वरूप इस प्रकार है—

'ॐ चिटि चिटि चण्डालि महाचण्डाले अमुकं मे वशमानय स्वाहा (२४)।'

अग्निध्यानम्

नवकुङ्कुमसंभिन्नं त्रिनेत्रं रुचिराकल्पशतं भजामि वह्निम् ।
स्रुवशक्तिवराभयानि दोर्भिर्दधतं रक्तसरोरुहे निषण्णम् ॥१०२॥

यामवतीध्यानम्

कालाम्बुवाहद्युतिमिन्दुवक्त्रां
हारावलीशोभिपयोधराढ्याम् ।
कपालपाशाङ्कुशशूलहस्तां
नीलाम्बरां यामवतीं नमामि ॥ १०३ ॥

दुर्गाध्यानम्

कालाम्बुदाभामरिशङ्खशूल-
खड्गाढ्यहस्तां तरुणेन्दुचूडाम् ।
भीमां त्रिनेत्रां जितशत्रुवर्गां
देवीं स्मरेत् दुर्गतिभङ्गहस्ताम् ॥ १०४ ॥

भद्रकालीध्यानम्

टङ्कं कपालं डमरुं त्रिशूलं
सम्बिभ्रती चन्द्रकलावतंसा ।
पिङ्गोर्ध्वकेशी सितभीमदंष्ट्रां
भूयाद्विभूत्यै मम भद्रकाली ॥ १०५ ॥

**दक्षाद्यूर्ध्वयोराद्ये तदधस्तनयोरन्त्ये इत्यायुधध्यानम् अग्निध्याने । तदुत्तरं तु वामाधस्ताद्दक्षाधस्तनं यावत् । दुर्गाध्याने दक्षोर्ध्वाद्दक्षाधस्तनं यावदायुधध्यानम् । टङ्कः । परशुः । अन्त्ये दक्षाधस्ताद्दक्षोर्ध्वं यावत् ॥ १०२-१०५ ॥**

पूर्वोक्त लवणमन्त्र के अग्नि, रात्रि, दुर्गा और भद्रकाली देवता कहे गए हैं (द्र. २२. ९७) । अब क्रमशः उनका ध्यान कहते हैं—प्रथम **अग्नि का ध्यान**— नवकुंकुम के समान लालवर्ण वाले, त्रिनेत्र, नाना प्रकार के मनोहर वेश एवं आभूषणों से युक्त, हाथों में स्रुव, शक्ति, वर एवं अभय मुद्रा, धारण करने वाले रक्त वर्ण के कमलासन पर विराजमान अग्नि देव का मैं भजन करता हूँ ॥ १०२॥

अब **यामवती (रात्रि) का ध्यान** कहते हैं—काले काले बादलों के समान कान्ति युक्ता, चन्द्रमुखी, नील परिधान धारण किये हुये मनोहर हारों के धारण करने से शोभित स्तन वाली, हाथों में कपाल, पाश, अंकुश एवं शूल धारण किये हुये यामवती (निशा) भगवती को मैं नमस्कार करता हूँ ॥ १०३ ॥

अब **दुर्गा का ध्यान** कहते हैं—काले बादल के समान कान्ति से युक्त चक्र, शङ्ख, शूल तथा खड्ग हाथों में लिये, पूर्णिमा के चन्द्रमा को शिर में धारण किये, भीमा, त्रिनेत्र, शत्रुवर्गों, को जीतने वाली, स्वयं अपने हाथों से भक्तों की दुर्गति (अभाग्य) नष्ट करने वाली दुर्गा देवी का स्मरण करना चाहिए ॥ १०४ ॥

अब **महाकाली का ध्यान** कहते है—परशु, कपाल, डमरु, त्रिशूल को धारण करने वाला मुकुट में चन्द्रकला का आभूषण बाँधे, पिङ्गवर्ण के केशों को धारण करने वाली, श्वेत किन्तु महाभयानक दाँतों वाली भगवती भद्रकाली हमें ऐश्वर्य प्रदान करें ॥ १०५ ॥

पुरश्चरणादिकथनम्

ऋक्पञ्चकं जपेत्सम्यगयुतं तद्दशांशतः ।
हविषा घृतसिक्तेन जुहुयादर्चितेऽनले ॥ १०६ ॥

सम्यगयुतमिति । चिटिमन्त्रसहितमृक्पञ्चकम् अयुतं जपेदित्यर्थः ।

तदुक्तमाचार्यैः— अयुतं नियतो मन्त्री मन्त्रमृक्पञ्चकान्वितम् ।
प्रजपेत् त्रिसहस्रं वा सम्यगेनं समाहितः ॥ इति ॥

तन्त्रान्तरे तु विशेषः—गङ्गादिमुख्यसरितां तीरदेशे समाश्रिते ।
स्वयमेव समुद्भूते दुर्गानिलयने वशी ॥
त्रिसहस्रं जपेदेतदथवाऽयुतसंख्यया ।
पूर्वोक्तं चिटिमन्त्रं तु जपेत्तस्य चतुर्गुणम् ॥ इति ॥ १०६ ॥

साधक चिटि मन्त्र के सहित ऊपर कहे गये ५ ऋचाओं से युक्त लवण मन्त्र का दस हजार जप करे और घृत मिश्रित हवि से सुसंस्कृत एवं सुपूजित अग्नि में उसका दशांश होम करे ॥ १०६ ॥

एवं कृतपुरश्चर्यः प्रयोगे कुशलो भवेत् ।
अग्निर्यामवती ध्येयौ वश्याकर्षणकर्मणोः ॥ १०७ ॥
स्मरेद् दुर्गां भद्रकालीं मन्त्री मारणकर्मणि ।
जानुप्रमाणे सलिले स्थित्वा निशि जपेन्मनुम् ॥ १०८ ॥
अनेन वाञ्छितः साध्यः किङ्करो जायते क्षणात् ।
नाभिमात्रोदके स्थित्वा जपेन्मन्त्रमिमं सुधीः ॥ १०९ ॥
अष्टोत्तरसहस्रं यस्तस्य साध्यो वशो भवेत् ।
ऋक्पञ्चकं जपेत्सम्यक्कण्ठमात्राम्भसि स्थितः॥ ११०॥
सप्तभिर्दिवसैर्भूपान् वशयेद्विधिनाऽमुना ।
विलिख्य तालपत्रे तं साध्यनाम्ना विदर्भितम् ॥ १११ ॥
निःक्षिप्य क्षीरसंमिश्रे जले तत् क्वाथयेन्निशि ।
वश्यो भवति साध्योऽस्य नात्र कार्या विचारणा॥ ११२ ॥
तालपत्रे लिखित्वैवं भद्रकाली गृहे खनेत् ।
वश्याय सर्वजन्तूनां प्रयोगोऽयमुदाहृतः ॥ ११३ ॥

एवं कृतपुरश्चर्य इत्यनेन नित्यपूजापि सूचिता । तया विना तस्याऽसम्पादनात्।
सोक्ता रामकण्ठेन—

भीषणी बहुरूपा च तीक्ष्णदंष्ट्रा मदोत्कटा ।
मारणी मोहनी कान्ता कमण्डलुधरा अपि ॥
अभिचारकरी चेति लोणमन्त्रस्य शक्तयः ।
पाशाङ्कुशपुटा शक्तिः सर्वशक्तिपदंकरी ॥
लासनाय नमोऽन्तः स्यात्पीठमन्त्रो ध्रुवादिकः।
मूर्त्तावावाह्य गन्धाद्यैर्देवताः सम्प्रपूजयेत् ॥
अङ्गैरावरणं पूर्वं द्वितीयं वह्निमूर्त्तिभिः ।

तद्बहिः शूलहस्तादिशक्तिभिश्च समीरिता ॥
उत्कटाद्यैश्चतुर्थी तु पञ्चमावृतिरीरिता ।
लोकेशैर्लोणमन्त्रस्य विधानमिति कीर्त्तितम् ॥
शूलहस्ता विकेशी च दारुणा लवणप्रिया ।
वरा कराली चात्युग्रा तामस्यस्याऽष्टशक्तयः ॥
उत्कटो विकटाक्षश्च शूलहस्तो महाबलः ।
अग्निजिह्वः खड्गधरः कपाली तारणप्रियः ॥ इति ॥ १०७-११३ ॥

जो साधक उक्त प्रकार से इस मन्त्र का पुरश्चरण कर लेता है वही इसका अनुष्ठान सम्पन्न करने में समर्थ होता है । वश्य तथा आकर्षण कर्म में अग्नि एवं यामवती का ध्यान करना चाहिए ॥ १०७ ॥

मन्त्रज्ञ साधक मारण कर्म में दुर्गा और भद्रकाली का स्मरण करे और जानु प्रमाण जल में खड़े हो कर रात्रि के समय इस मन्त्र का जप करना चाहिए । ऐसा करने से जिस साध्य को चाहे उसे किंकर बना सकता है ॥ १०८-१०९ ॥

नाभिमात्र जल में स्थित हो कर बुद्धिमान् साधक इस मन्त्र का १००८ बार जप करे तो साध्य उसके वश में हो जाता है ॥ १०९-११० ॥

यदि साधक कण्ठ मात्र जल में स्थित होकर लवण मन्त्र के पाँचों ऋचाओं का जप करे तो इस विधि से सात दिन के भीतर ही राजा को अपने वश में कर लेता है ॥ ११०-१११ ॥

ताड़ पत्र पर साध्य के नाम के साथ इस मन्त्र को विदर्भित कर (द्र. २३. १३८) दूध मिश्रित जल में उस यन्त्र को डाल देवे और रात्रि के समय उसका क्वाथ बनावे तो साध्य वश में हो जाता है, इस विषय में विचार की आवश्यकता नहीं ॥ १११-११२ ॥

इस मन्त्र को ताड़पत्र पर लिख कर भद्रकाली के मन्दिर में गाड़ देवे । यह प्रयोग सभी प्राणियों को वश में करने के लिये कहा गया है ॥ ११३ ॥

**ताम्रपत्रे लिख्य मन्त्रं साध्यनामविदर्भितम् ।**
**तापयेत् खादिरे वह्नौ मासं वश्यो भवेन्नरः ॥ ११४ ॥**
**त्रिकोणं कुण्डमापाद्य सम्यक् शास्त्रोक्तलक्षणम् ।**
**तस्मिन् होमं प्रकुर्वीत संस्कृते हव्यवाहने ॥ ११५ ॥**
**प्रक्षाल्य गव्यदुग्धेन संशोष्य लवणं सुधीः ।**
**सुचूर्णितं प्रजुहुयात् सप्ताहाद्वशयेज्जनान् ॥ ११६ ॥**
**दधिमध्वाज्यसंसिक्तैः सैन्धवैर्जुहुयात्तथा ।**
**वशयेदखिलान्देवानचिरात् किमु पार्थिवान् ॥ ११७ ॥**

एवमिति साध्यनाम्ना विदर्भितमित्यर्थः ॥ ११४-११७ ॥

ताम्रपट्ट पर साध्य के नाम से विदर्भित (द्र. २३. १३८) इस मन्त्र को लिखे और खैर की समिधा से जलती हुई अग्नि में उसे तपावे तो एक महीने के भीतर ही मनुष्य वश में हो जाता है ॥ ११४ ॥

शास्त्रोक्त रीति से विधिवत् त्रिकोण कुण्ड का निर्माण करे । फिर उसमें अग्नि स्थापित कर उसे सुसंस्कृत करे । पश्चात् उसमें गाय के दूध से धोये गये, घाम में सुखा कर चूर्ण किये गये नमक का होम करे तो सात दिन के भीतर ही वह अभीष्ट साध्य को अपने वश में कर लेता है ॥ ११५-११६ ॥

दही, मधु तथा घृत से मिश्रित सेंधा नमक का होम करे तो संपूर्ण देवताओं को वश में कर लेता है, फिर राजाओं की तो बात ही क्या है? ॥ ११७ ॥

**विशुद्धं लवणप्रस्थं विभक्तं पञ्चधा पृथक् ।**
**एकैकया प्रजुहुयादृचा पञ्चाहमादरात् ॥ ११८ ॥**
**यस्य नाम्ना स वश्यः स्यादनेन विधिनाऽचिरात् ।**
**शुद्धं लवणमादाय जुहुयान्मधुरान्विताम् ॥ ११९ ॥**
**ऊनपञ्चाशदाहुत्या वशं नयति वाञ्छितम् ।**
**नित्यं शुद्धेन लोणेन हुत्वा शत्रून् वशं नयेत् ॥ १२० ॥**
**मधुरत्रय संयुक्तैर्लवणैः साधु चूर्णितैः ।**
**जुहुयाद्वशयेन्नारीर्नरान् नरपतीनपि ॥ १२१ ॥**

**विशुद्धमिति । प्रक्षालितं पूर्ववत् । लवणेति सैन्धवम् । एवमग्रेपि ॥ ११८-१२१ ॥**

पूर्वोक्त विधि से शुद्ध किये गये (द्र. २२. ११६) प्रस्थ परिमाण नमक का पाँच भाग करे, तदनन्तर एक एक भाग का क्रमशः पाँच दिनों में श्रद्धापूर्वक होम करे ॥ ११८ ॥

जिस साध्य के नाम की मन्त्र में योजना कर हवन करे तो वह इस विधि से शीघ्र ही वश में हो जाता है । पूर्वोक्त विधि से (२२. ११६) शुद्ध किये गये लवण के चूर्ण को त्रिमधुर, (दूध घृत एवं मधु) में मिश्रित कर ४९ आहुति प्रतिदिन, सुसंस्कृत अग्नि में देवे तो अभीष्ट को वश में कर लेता है—नित्य शुद्ध नमक का होम करने से शत्रु को भी वश में किया जा सकता है ॥ ११९-१२०॥

यदि अच्छी तरह विशुद्ध किये गये नमक के चूर्ण को त्रिमधुर से मिश्रित कर साधक इस मन्त्र से हवन करे तो वह स्त्री पुरुष तो क्या राजा को भी वश में कर लेता है ॥ १२१ ॥

**पञ्चपुत्तलीप्रयोगः**

**मन्त्रं कृष्णतृतीयादि प्रजपेद्यावदष्टमी ।**
**पुत्तलीः पञ्च कुर्वीत साङ्गोपाङ्गाः समाः शुभाः ॥ १२२ ॥**

एका साध्यद्रुमेण स्यादन्या पिष्टमयी मता ।
चक्रिहस्तमृदाऽन्या स्यादन्या सिक्थमयी स्मृता ॥ १२३ ॥
लवणं पोतसम्भूतं चूर्णितं परिशोधितम् ।
कुडवं प्रोक्षयेत् क्षीरदध्याज्यमधुभिः क्रमात् ॥ १२४ ॥
गुडाज्यमधुभिः सम्यङ्मिश्रितेनाऽमुना ततः ।
कुर्वीत पुत्तलीं सौम्यां सर्वावयवशोभिताम् ॥ १२५ ॥

प्रयोगान्तरमाह—मन्त्रमित्यादिना । यावदष्टमीति कृष्णा । कुर्वीतेत्यष्टम्याम् । साङ्गोपाङ्गा इति । अङ्गानि तु—

त्वक्हस्तहृत्पार्श्वकटी पत्स्कन्धौ कन्धराभुजौ ।
पृष्ठं तथोदरं तूरूजङ्घे इत्यङ्गसंग्रहः ॥
उपाङ्गानि भ्रूपुटौ च तारागण्डौ च नासिका ।
ओष्ठौ तु दशना जिह्वा चिवुकास्यं सनाभि च ॥
जघनं योनिगुह्ये च जानुनी मणिबन्धकौ ।
पार्ष्णीगुल्फौ तथाऽङ्गुल्यः करयोः पादयोस्तले ॥ इति ।

साध्यद्रुमेणेति । साध्यनक्षत्रवृक्षेण । साध्यनक्षत्रवृक्षानस्मिन्नेव वक्ष्यति । पिष्टमयीति । तण्डुलपिष्टमयी । चक्री कुलालः । सिक्थं मधूच्छिष्टम् । पोतसम्भूतमिति सामुद्रम् । अमुना लवणेन । सौम्यां सुन्दरीम् । पञ्चाऽपि द्वादशाङ्गुलाः ॥ १२२-१२५ ॥

साधक कृष्णपक्ष की तृतीया से आरम्भ कर कृष्णपक्ष की अष्टमी यावत् इस मन्त्र का जप करे । फिर उसी अष्टमी के दिन साङ्गोपाङ्ग मनोहर और द्वादशाङ्गुल एवं तुल्य प्रमाण की पाँच पुतली इस प्रकार निर्माण करे—एक पुतली साध्य के नक्षत्र वृक्ष की लकडी की, दूसरी चावल के पिसान की, तीसरी कुम्हार के चाक की मिट्टी की, चौथी मधूच्छिष्ट की, पाँचवीं शोधित तथा चूर्ण की गई सामुद्रिक नमक की बनावे । इन पुत्तलियों का प्रमाण कुडव मात्रा तथा द्वादशाङ्गुल कहा गया है । तदनन्तर उन पुत्तलियों को दूध, दही, घृत तथा मधु मिलाकर लेप करे, पुत्तलियाँ सुन्दर तथा सर्वावयव से शोभित होनी चाहिए ॥ १२२-१२५ ॥

प्राणमन्त्रकृतं यन्त्रमासां हृदि विनिःक्षिपेत् ।
आसु प्राणान् प्रतिष्ठाप्य पूजयेत् कुसुमादिभिः ॥१२६॥
पश्चात् कृष्णाष्टमीरात्रौ याममात्रे गते सति ।
विधाय मातृकान्यासं मन्त्रन्यासमनन्तरम् ॥ १२७ ॥
चिटिमन्त्रसमुद्भूतान् चतुर्विंशतिसंख्यकान् ।
ताराद्यान्विन्यसेद्वर्णान् स्थानेष्वेषु समाहितः ॥ १२८ ॥

यन्त्रमित्यग्रिमपटले वक्ष्यमाणम् । प्राणानित्यग्रिमपटले वक्ष्यमाणेन प्रकारेण ।

आचार्यास्तु—तस्यां तु स्थापयेत् प्राणान् गुर्वदिशविधानतः ॥ इति ।

अत्र साम्प्रदायिका विशेषमाहुः । पुत्तलिकाया हृदयं स्पृशन् प्राणा इह प्राणा जीव इह स्थित इति इन्द्रियाणि स्पृशन् सर्वेन्द्रियाणि वाङ्मनश्चक्षुःश्रोत्रघ्राणेति सर्वाङ्गं स्पृशन् प्राणा इहायान्तु सुखं चिरं तिष्ठन्तु इति शिरः स्पृशन् स्वाहेति जपेत्। मन्त्रन्यासमिति । पञ्चर्भिः पञ्चाङ्गमित्यर्थः ॥ १२६-१२८ ॥

इसके बाद उन पुत्तलियों के हृदय में (द्र. २३. ७१-७६) में कहे गये प्राण प्रतिष्ठा मन्त्र को रख देना चाहिए । इसके बाद प्राण प्रतिष्ठा कर पुष्पादि से उसकी पूजा करे । फिर कृष्णाष्टमी की रात्रि में जब एक प्रहर रात चली जाय तब मातृकान्यास करे । फिर उसके अनन्तर इस मन्त्र के पाँच ऋचाओं से पञ्चाङ्ग-न्यास करे । फिर चिटिमन्त्र के २४ अक्षरों का न्यास आदि में प्रणव उच्चारण करते हुये इन इन स्थानों में एकाग्रचित्त हो कर करे ॥ १२६-१२८ ॥

मूर्ध्नि भाले दृशोः श्रुत्योर्नासास्यचिबुकेष्वथ ।
कण्ठहृत्स्तनयुग्मेषु कुक्षौ नाभौ कटिद्वये ॥ १२९ ॥
मेढ्रे पाणौ प्रविन्यस्य शिष्टवर्णचतुष्टयम् ।
ऊरुद्वये जानुयुगे जङ्घायुग्मे पदद्वये ॥ १३० ॥
एवं विन्यस्तसर्वाङ्गो रक्तमाल्यानुलेपनः ।
रक्तवस्त्रधरः शुद्धः पुत्तलीं दारुणा कृताम् ॥ १३१ ॥
अधोमुखीं खनेत् कुण्डे पिष्टजामासनादधः ।
मृणमयीं प्रतिमां पाददेशे न्यस्येत्तथात्मनः ॥ १३२ ॥
मधूच्छिष्टमयीं व्योम्नि कुण्डस्योर्ध्वं प्रलम्बयेत् ।
लवणेन कृतां पश्चात् पुत्तलीं संस्पृशन् जपेत् ॥ १३३ ॥
ऋक्पञ्चकं यथान्यायमष्टोत्तरसहस्त्रकम् ।
संहृत्य चिटिमन्त्रार्णान् पुनस्तस्यास्तनौ न्यसेत्॥ १३४ ॥

अथवान्यमेवाह चिटोति । दारुणेति । साध्यनक्षत्रवृक्षकाष्ठेन कृतां कुण्डे खनेन्निखनेदित्यर्थः । तत्र द्व्यङ्गुलाधोनिखननं ज्ञेयम् । अधोमुखीमिति मारण-कर्मविषयम् । वशीकरणकर्मणि उत्तानेति ज्ञेयम् ।

यदाहुः— कुण्डान्तर्द्व्यङ्गुलाधो निखनतु तरुजां मूर्त्तिमुत्तानरूपाम् ॥ इति ।

आचार्याश्च—उत्तानां दारवीं कुण्डे खनेन् मन्त्राभिमन्त्रिताम् ॥ इति ॥१२९-१३१॥

तथा न्यसेदिति । अधोमुखीं न्यसेदित्यर्थः । विषयव्यवस्था तु पूर्वोक्तैव ज्ञेया। एतयोरपि द्व्यङ्गुलाधो निखननमेव । प्रलम्बयेदित्यधोमुखीमित्येव ।

यदाहुः— धूमेन स्पृश्यमानामुपरि मदनजां लम्बयेदूर्ध्वपादाम् । इति ।

आचार्याश्च—लम्बयेदम्बरे सिक्थमयीमूर्ध्वामधोमुखीम् । इति ॥१३२-१३३॥

**यथान्यायमिति । षडङ्गन्यासं स्वतनौ पुत्तल्यां च कृत्वा चिटिमन्त्रसहितम् ऋक्पञ्चकं जपेदित्यर्थः । तदुक्तम्—**

**अङ्गानि विन्यसेत् स्वाङ्गे तथा प्रतिकृतावपि इति ।**

**संहृत्येति विपरीतान् स्वाङ्गे प्रतिकृतावपि । तदुक्तम्—**

**न्यस्याऽङ्गान्यनुमप्यथ प्रतिकृतौ संहारयुक्त्या न्यसेत् ॥ इति ।**

**पुनरनन्तरमित्यनेनैतदुक्तम् । स्वदेहे न्यासं विधायात्मयागान्तं कृत्वा पश्चात् पुत्तल्यां न्यास इति । अतएव पश्चादासने देवतापूजा । तस्याः पुत्तलिकायाः ॥ १३४ ॥**

अब न्यासों के स्थान कहते हैं—१. मस्तक, २. भाल, ३.४. दोनों नेत्र, ५.६. दोनों कान, ७. नासिका, ८. मुख, ९.१०. चिबुक, ११. कण्ठ, १२. हृदय, १३.१४. दोनों स्तन, १५. कुक्षि, १६. नाभि, १७.१८. दोनों कटिभाग, १९. लिङ्ग एवं २०. प्राण—इन स्थानों में न्यास कर शेष चार अक्षरों से दोनों ऊरू, दोनों जानु, दोनों जङ्घा तथा दोनों पैर में न्यास करें ॥ १२९-१३० ॥

इस प्रकार सर्वांग में न्यास कर रक्तमाला एवं रक्त अनुलेपन तथा रक्त वस्त्र धारण कर, शुचितापूर्वक साध्यनक्षत्र वृक्ष के लकड़ी की बनाई गई पुतली को कुण्ड में नीचे मुख कर गाड़ देवें । फिर चावल के चूर्ण की पुतली को अपने आसन के नीचे, मृण्मयी प्रतिमा को पैर के नीचे, मधूच्छिष्ट की प्रतिमा को कुण्ड के ऊपर रस्सी में बाँध कर आकाश में लटका देवें, फिर नमक की बनी हुई प्रतिमा का स्पर्श करते हुये जप करें ॥ १३१-१३३ ॥

इसके बाद पुतली में तथा स्वाङ्ग में षडङ्गन्यास कर चिटि मन्त्र के सहित लवण मन्त्र का १००८ जप करे । इस श्लोक में यथान्याय शब्द का यही अर्थ है । पुनः जप करने के पश्चात् चिटिमन्त्र से विपरीत क्रम द्वारा स्वाङ्ग में तथा पुतली में न्यास करे, श्लोक में आये संहृत्य पद का यह तात्पर्य है । अब चिटिमन्त्र के २४ अक्षरों से २४ न्यास स्थानों को कहते हैं— ॥ १३४ ॥

**अङ्गुष्ठसन्धिप्रपदजानुजङ्घोरुपायुषु ।**
**लिङ्गदेशे पुनर्नाभौ जठरे हृदयाम्बुजे ॥ १३५ ॥**
**स्तनद्वये कन्धरायां चिबुके वदने पुनः ।**
**घ्राणयोः कर्णयोरक्ष्णो ललाटे मूर्ध्नि विन्यसेत् ॥ १३६ ॥**

**अङ्गुष्ठेति । ऊर्वन्तेषु षट्सु एकैकाक्षरन्यासः । अन्यत्र स्थानद्वये सर्वत्राऽक्षरद्वयम् । यदुक्तमाचार्यैः—**

**अधो गुह्यादभेदः स्यादूर्ध्वं भेदो द्विके सति । इति ॥ १३५-१३६ ॥**

अङ्गुष्ठ सन्धियाँ प्रपद, जानु, जङ्घा और ऊरू इन ६ स्थानों में एक एक अक्षर, पुनः ७. पायु, ८. लिङ्ग, ९. नाभि, १०. जठर, ११. हृदय, १२.१३. दो स्तन, १४. कन्धरा, १५. चिबुक, १६. मुख, १७. १८. दोनों घ्राण, १९.

२०. दोनों कान, २२. दोनों आंख, २३. ललाट तथा २४. मूर्धा—इन स्थानों में २४ चिटि मन्त्राक्षरों का न्यास करे ॥ १३५-१३६ ॥

अग्निमादाय सन्दीप्य साध्यनक्षत्रदारुभिः।
तस्मिन्नभ्यर्च्य मन्त्रोक्तां देवतां रूप्यपात्रके ॥ १३७ ॥
कुशीतराजिपुष्पादिभिर्दत्त्वाऽर्घ्यं प्रणमेत् सुधीः।
मन्त्रैरेतैः प्रयोगादावन्ते संयतमानसः ॥ १३८ ॥

अग्निमन्त्रः

त्वमाननममित्रघ्न निशाया हव्यवाहन ।
हविषा मन्त्रजप्तेन तृप्तो भव तया सह ॥ १३९ ॥
जातवेदो महादेव तप्तजाम्बूनदप्रभ ।
स्वाहापते विश्वभक्ष लवणं दह शत्रुहन् ॥ १४० ॥

यामवतीमन्त्रः

ॐ ईशे शर्वरि शर्वाणि ग्रस्तं मुक्तं त्वया जगत् ।
महादेवि नमस्तुभ्यं वरदे कामदा भव ॥ १४१ ॥
तमोमयि महादेवि महादेवस्य सुव्रते ।
त्रियामे पुरुषं हुत्या वशमानय देवि(व्यु) मे ॥ १४२ ॥

दुर्गामन्त्रः

ॐ दुर्गे स(दु) र्गादिरहिते दुर्गसंरोधनार्गले ।
चक्रशङ्खधरे देवि दुष्टशत्रु (सत्व) भयङ्करि ॥ १४३ ॥
नमस्ते दह शत्रून् मे वशमानय चण्डिके ।
शाकम्भरि महादेवि शरणं मे भवाऽनघे ॥ १४४ ॥

भद्रकालीमन्त्रः

ॐ भद्रकालि भवाभीष्टे भद्रसिद्धिप्रदायिनि ।
सपत्नान्मे हन हन दह शोषय तापय ॥ १४५ ॥
शूलासिशक्ति वज्राद्यैरुत्कृत्योत्कृत्य मारय।
महादेवि महाकालि रक्षाऽस्मानक्षतात्मिके ॥ १४६ ॥

तस्मिन्निति । तन्त्रान्तरोक्त आसन इत्यर्थः । अग्नौ देवतापूजा चतुर्थपटल एवोक्ता । तस्योक्तावत्र प्रयोजनाभावादग्रेऽर्घ्यदानमपि वक्ष्यति । यदाहुः—

कुण्डस्य पूर्वदिग्भागे चतुरस्रं समुन्नतम् ।
हस्तमात्रायतं लाक्षारक्तपादादिकं नवम् ॥
चित्राङ्गं रुचिराकारं कुण्डोत्सेधसमुन्नतम् ।

चतुरङ्गुलमानं वा अष्टाङ्गुलमथापि वा ॥
द्वादशाङ्गुलकं वापि कुण्डादुन्नतमासनम् ।
तस्मिन्सुविमलं वस्त्रं आस्तीर्यादौ सुशोभनम् ॥
सूक्ष्मं चतुर्गुणीकृत्य सप्तहस्तायतं नवम् ।
तस्योपरि परिस्तीर्य रक्तवस्त्रद्वयं पुनः ॥
विशालमतिसूक्ष्मं च पूर्ववद्गुणितं नवम् ॥ इति ॥

**तन्त्रान्तरोक्तप्रकारेणासनं परिकल्प्य तत्र पूर्वोक्तं पीठं परिपूज्य देवतामावाह्य पूर्ववत् सावरणं सम्पूज्य रक्तचन्दनादिना वक्ष्यमाणद्रव्ययुक्तेन शुद्धजलेन रूप्यं चषकमापूर्य तेनार्घ्यं दद्यात् । ततो वक्ष्यमाणमन्त्रैर्देवतामुपतिष्ठेत् ।**

**कुशीतं रक्तचन्दनम् । राजिः राजिका । प्रयोगादाविति । एतन्मन्त्रप्रयोगादावन्ते च । अत्र वशीकृतौ यद्यपि एते एव देवते तथापि नतिप्रकरण प्रसङ्गादितरयोरपि मन्त्रावुक्तौ । तत्प्रयोजनमग्रे मारणकर्मणि भविष्यति ॥ १३७-१४६ ॥**

पुनः अग्नि ले आ कर साध्य नक्षत्र के वृक्ष की लकड़ी से उसे प्रदीप्त करे, फिर उस अग्नि में मन्त्र के ४ देवताओं का आवाहन कर पूजन करे ॥ १३७ ॥

लाल चन्दन, राई का पुष्प तथा जल मिला कर उससे चषक पूर्ण करे और उन उन देवताओं के पूजन के आदि में तथा अन्त में एकाग्रचित्त हो अर्घ्य प्रदान कर विद्वान् साधक निम्न मन्त्र से उन्हें प्रणाम् करे ॥ १३८ ॥

प्रथम **अग्नि** के पूजन के आदि में तथा अन्त में उक्त रीति से अर्घ्य प्रदान का मन्त्र 'त्वमानन' से आरम्भ कर 'शत्रुहन्' पर्यन्त हैं । अर्थ इस प्रकार है—हे हव्यवाह, हे अमित्रघ्न अग्ने ! आप इस निशा के आनन हैं, इस दी गई हवि से तथा इस मन्त्र के जप के द्वारा आप निशा के सहित तृप्त होइए । आप सभी उत्पन्न प्राणियों को जानने वाले हैं, सब को ज्ञान देने वाले हैं, महादेव हैं, हे तप्त सुवर्ण की प्रभा वाले महादेव, हे स्वाहापते, हे विश्वभक्ष, आप इस लवण (शत्रु) को विनष्ट कीजिए ॥ १३९-१४० ॥

अब **यामवती** की पूजा के आदि में तथा अन्त में अर्घ्यदान का मन्त्र कहते हैं—यह ॐ ईशे से लेकर देविमे तक हैं । इसका अर्थ—हे ईशे, हे शर्वरि, हे शर्व की पट्टरानी, यह सारा जगत् आपसे ग्रस्त भी है और मुक्त भी । हे महादेवि, हे वरदे, आपको नमस्कार है आप मेरी कामना पूर्ण कीजिए । हे तमोमयि, हे महादेव की महादेवि, हे सुव्रते, हे त्रियामे, हे देवि ! आप इस होम से प्रसन्न होकर जिस पुरुष को मैं वश में करना चाहता हूँ, उसे मेरे वश में कीजिए ॥ १४१-१४२ ॥

अब **दुर्गा** की पूजा के आदि तथा अन्त में अर्घ्यदान का मन्त्र कहते हैं, यह मन्त्र दुर्गे से लेकर अनघे पर्यन्त है जिसका अर्थ इस प्रकार है—हे दुर्गे, हे अनादि मध्यान्तशीले, हे दुष्टों को रोकने के लिये अर्गला के समान, हे चक्र

शङ्खधरे, हे देवि ! दुष्ट प्राणियों के लिये भय उत्पन्न करने वाली, हे चण्डिके आपको नमस्कार है, आप मेरे शत्रुओं को जला दीजिए अथवा मेरे वश में कर दीजिए। हे शाकम्भरि, हे महादेवि आप मुझे शरण प्रदान कीजिए ॥ १४४ ॥

अब **भद्रकाली** के पूजा के आदि तथा अन्त में अर्घ्यदान का मन्त्र कहते हैं—यह मन्त्र भद्रकालि से लेकर अक्षतात्मिके पर्यन्त है, जिसका अर्थ इस प्रकार है—हे भद्राकालि, हे महादेव की प्रियतमे, हे कल्याण तथा सिद्धि प्रदान करने वाली ! आप हमारे शत्रु का वध कीजिए, वध कीजिए, उन्हें जलाइए, शोषण कीजिए, शोषण कीजिए, तपाइए, हमारे उन शत्रुओं को आप शूल, खड्ग, शक्ति, वज्रादि अपने अस्त्रों से इनके अङ्गों को काट काट कर वध कीजिए। हे महादेवि, हे महाकालि, हे अविनाशिनि आप मेरी रक्षा कीजिए ॥ १४५-१४६ ॥

**साध्यं संस्मृत्य निर्भिद्य पुत्तलीं सप्तधा ततः।**
**ऋक्पञ्चकं समुच्चार्य जुहुयादेधितेऽनले ॥ १४७ ॥**
**प्रथमो दक्षिणः पादस्तत्करस्तदनन्तरम्।**
**शिरस्तृतीयमाख्यातं वामहस्तं ततः परम् ॥ १४८ ॥**
**मध्यादूर्ध्वं पञ्चमः स्यादधोऽशः षष्ठ ईरितः।**
**सप्तमो वामपादः स्यादेवं भागक्रमः स्मृतः ॥ १४९ ॥**

**पुत्तलीमिति। लवणमयीम्। निर्भिद्येत्युक्तम्। तमेव भेदमाह प्रथम इति। आचार्यैः प्रकारान्तरमप्युक्तम्—**

**दक्षिणं चरणं पूर्वं दक्षार्द्धन्तु द्वितीयकम्।**
**दक्षहस्तं तृतीयं स्याद्गलादूर्ध्वं चतुर्थकम् ॥**
**पञ्चमं वामहस्तः स्यात् षष्ठं वामार्द्धमेव च।**
**सप्तमं वामपादः स्यादन्यापि स्याद्भुतक्रिया ॥ इति ॥ १४७-१४९ ॥**

इस प्रकार ऊपरोक्त चार देवताओं की पूजा तथा अर्घ्य दान के पश्चात् शत्रु का ध्यान कर पाँचो ऋचाओं का उच्चारण करते हुये पुत्तली को सात भागों में काट कर जलती हुई अग्नि में इस प्रकार होम करे ॥ १४७ ॥

पहले दाहिने पैर का होम करे, उसके बाद दूसरी बार में उसके हाथ का, तदनन्तर तीसरी बार में शिर का, फिर चौथी बार में बायें हाथ का, पाँचवीं बार में मध्य से ऊपरी भाग का, तदनन्तर छठी बार में नीचे के भाग का और सातवीं बार में बायें पैर का होम करे। इस प्रकार पुतली के सातों भागों के होम का प्रकार कहा गया ॥ १४८-१४९ ॥

**सप्तसप्तविभागो वा प्रोक्तेष्वेषु यथाविधि।**
**हुत्वैवमर्चयित्वाऽग्निं प्रणमेद्दण्डवत्ततः ॥ १५० ॥**
**यजमानो धनैर्धान्यैः प्रीणयेद् गुरुमात्मनः।**

अनेन विधिना मन्त्री वशयेदसुरान् सुरान् ॥ १५१ ॥
किं पुनर्मनुजान् भूपानमात्यान् नृप(वर) योषितः ।
मारणे पूर्वसप्रोक्तं पुत्तलीनां चतुष्टयम् ॥ १५२ ॥
निवेशयेद्यथापूर्वं साधकेन्द्रो विधानवित् ।
अपरां वक्ष्यमाणेन विधानेन प्रकल्पयेत् ॥ १५३ ॥

प्रोक्तेष्विति । सप्तावदानेषु प्रत्येकं सप्तसप्तविभागाः तेनैकोनपञ्चाशदाहुतयः। उक्तपुत्तलीषु सर्वत्रावदानक्रमोऽयमेव ज्ञेयः । अन्यत्र विशेषः—

सप्तसप्तविभागो वा क्रमादङ्गेषु सप्तसु ।
एकादशांशभिन्नैर्वा तदङ्गैः सप्तभिर्हुनेत् ॥ इति ॥

अन्यत्रापि—सप्तानामङ्गानामेकैकं सप्तमभागान्वा ।
रुद्रांशान्वा कृत्वा होतव्यं मन्त्रिवर्येण ॥ इति ॥

स्त्रीवशीकरणे वामपादादि ज्ञेयम् । 'योषितो वामपूर्वाम्' इत्युक्तेः । एवं स्त्रीमारणे दक्षपादाद्यवदानक्रमो ज्ञेयः । प्रणमेदिति । पूर्वोक्तमन्त्रैः । साधकेन्द्रो विधानविदित्यनेन पुत्तलीनां द्व्यङ्गुलाधःखननमुक्तम् ॥ १५०-१५३ ॥

अथवा इन सातों विभागों में प्रत्येक का सात सात भाग कर ४९ आहुति प्रदान करें और उक्त प्रकार से ही इन प्रविभागों की आहुति का क्रम भी १४८-१४९ श्लोकों में वर्णित विधि से करना चाहिए । हवन करने के पश्चात् अग्निदेव की पुनः अर्चना करे और प्रणाम करे ॥ १५० ॥

यजमान धन-धान्यादि द्वारा अपने गुरु को प्रसन्न करे । इस प्रकार के अनुष्ठान से मन्त्रज्ञ साधक देवता और असुरों को भी वश में कर सकता है, फिर मनुष्यों की, राजाओं की, मन्त्रियों की तथा रानियों की बात ही क्या? ॥ १५१-१५२ ॥

यहाँ तक उक्त मन्त्र से शत्रु के वश में करने की विधि बताई गई । अब **मारण के लिये प्रयोग** कहते हैं—मारणक्रिया में पूर्व में कही गई चार पुत्तलियों (सामुद्रिक नमक निर्मित पुतली के अतिरिक्त) का निर्माण करे और विधानवेत्ता साधक उन्हें पूर्व की भाँति (द्र. २२. १३१-१३२) यथा स्थान सन्निविष्ट करें । इसके बाद वक्ष्यमाण विधान से एक और पाँचवीं मूर्त्ति का निर्माण करे, उसकी प्रक्रिया इस प्रकार है ॥ १५२-१५३ ॥

वराहपारावतविट्तिलत्र्यूषणरामङ्गैः ।
व्रणकृन्निम्बसिद्धार्थसाध्यवामाङ्घ्रिरेणुभिः ॥ १५४ ॥
महिषीमूत्रसंपिष्टैः पूर्वोक्तलवणान्वितैः ।
विधाय पुत्तलीं सम्यक् प्राणस्थापनमाचरेत् ॥ १५५ ॥
जप पूजादिकं सर्वं कुर्यात् प्रागुक्तवर्त्मना ।
ततः पूर्वोदिते कुण्डे रात्रौ प्रज्वलितेऽनले ॥ १५६ ॥

दुर्गां वा भद्रकालीं वा समाराध्य यथाविधि।
धारयन्निशितं शस्त्रं सव्यहस्तेन साधकः॥ १५७ ॥
वामपादं समारभ्य दक्षिणाङ्घ्र्यवसानकम्।
छित्वा छित्वा प्रजुहुयान्निराहारो जितेन्द्रियः॥ १५८ ॥
कृष्णाष्टमीं समारभ्य यावत् कृष्णाचतुर्द्दशी।
अनेनैव विधानेन होमं कुर्याद्विचक्षणः॥ १५९ ॥
त्रिसप्ताहप्रयोगेने मारयेद्रिपुमात्मनः।

त्र्यूषणं शुण्ठी पिप्पलि मरीचानि । रामङ्गं हिङ्गुः । व्रणकृद्भल्लातः । निम्बं निम्बबीजम् । अत्र तिलभल्लातनिम्बबीजसिद्धार्थानां तैलं ग्राह्यम् ।

तदुक्तमाचार्यैः—सनिम्बतिलसिद्धार्थव्रणकृत्तैलसंयुतैः । इति ।

पूर्वोक्तलवणं सामुद्रम् । सम्यक् पुत्तलीं विधायेत्यनेन तन्त्रान्तरोक्तो विशेषः सूचितः—

आयामः पादयोस्तस्या आकट्याश्चतुरङ्गुलः ।
पादोनद्व्यङ्गुला कुक्षिस्तावदेवाऽङ्गुलोदरम् ।
अङ्गुलद्वयमावक्त्रात् कण्ठदेशस्य मानकम् ॥
शिरसो वक्त्रमानं स्यात् सार्द्धद्वयमिहाऽङ्गुलैः ।
द्वादशाङ्गुलयः सर्वाः साध्यपुत्तलिकाः स्मृताः ॥ इति ॥

तन्त्रान्तरे तु विशेषः—

पञ्चांशेन मुखं कृत्वा तदर्द्धेन गलं पुनः ।
शिष्टेन सर्वाण्यङ्गानि पुत्तलीनां प्रकल्पयेत् ॥
मारणे दारुरूपां तां द्वादशाङ्गुलसम्मिताम् ।
षणवत्यङ्गुलां वापि कुर्यान्मात्राङ्गुलैः क्रमात् ॥
होमार्थं कल्पितायास्तु तस्याः प्रोक्तो विधिस्त्वयम् ।
वश्याकर्षणयोः प्रोक्तां तां कुर्याद् द्वादशाङ्गुलैः ॥ इति ॥
यथाविधीति । पूर्वोक्तप्रकारेण । कुर्याद्धोममिति प्रत्यहम् ॥

त्रिसप्ताहेति । एभिरेव सप्तभिः । तेन मासत्रयेण प्रयोगसिद्धिः । मारणकर्मणि दक्षिणाविशेष उक्तस्तन्त्रान्तरे—

सस्वर्णां च समुक्तां गां शोणां दद्यात् सतर्णकाम् ।
दक्षिणां सप्तकर्षं तु दद्यान् मारणकर्मणि ॥ इति ॥

अन्यो विशेषः— श्मशाने निर्जने देशे विदध्यादाभिचारिकम् ।
यत्राऽभिचारहोमं तु करोति भुवि साधकः ॥
तत्राऽभितो भटै रक्षां कारयेदात्मसिद्धये ।
न चेदन्यः क्षितिपतिश्चारैर्ज्ञात्वा निहन्त्यमुम् ॥
स्वराष्ट्रसन्धौ कुर्वीत न कुर्वीत स्वमण्डले ।

**यदि कुर्यात्प्रमादेन मान्त्रिकोऽज्ञानमोहितः ।**
**तद्राष्ट्रं पीडयन्त्येव शनकैर्वैरिभूभृतः ॥ इति ॥**

**अन्योऽपि विशेषस्तन्त्रान्तरे—**

**तस्यां रात्र्यामुपोष्याऽथ परेऽहनि तु साधकः।**
**प्राणायामादिभिरपि गायत्रीजपहोमकैः ।**
**विमुक्तपातको भूत्वा स पुनर्विहरेद्वशी ॥ इति ॥१५४-१६०॥**

वाराह (=सूअर) पारावत (कबूतर) की विष्ठा, तिल, त्र्यूषण (सोंठ, पीपर और काली मिर्च) हिङ्गु, भल्लातक, निम्ब, श्वेतदूर्वा और साध के बायें पैर की मिट्टी इन सभी पदार्थों को भैंस के मूत्र में पीस कर पूर्वोक्त लक्षण लक्षित पुत्तली का निर्माण करें और उसमें प्राण प्रतिष्ठा करे ॥ १५४-१५५ ॥

कही हुई विधि के अनुसार पूर्ववत् जप पूजादि कार्य सम्पादन करे, फिर पूर्व में कही गई विधि के अनुसार निर्मित कुण्ड में रात्रि के समय जलती हुई अग्नि में, यथाविधि दुर्गा अथवा भद्रकाली की आराधना (पूजा) कर दाहिने हाथ से साधक तीक्ष्ण शस्त्र लेकर बायें पाद से लेकर दक्षिण पाद पर्यन्त सात खण्ड कर यथाविधि पूर्वोक्त प्रकार (द्र. २२,१४७-१५०) से ७ दिन तक एक एक अवयव का निराहार तथा जितेन्द्रिय रह कर होम करे ॥ १५६-१५८ ॥

यह क्रिया कृष्णाष्टमी से आरम्भ कर कृष्ण चतुर्दशीपर्यन्त (७ दिन) करे । इसी प्रकार तीन सप्ताह (तीन अष्टमी से तीन चतुर्दशी पर्यन्त) पर्यन्त अनुष्ठित करे तो साधक अपने शत्रु का नाश कर देता हैं ॥ १६० ॥

**कारस्करोऽथ धात्री स्यादुदुम्बरतरुः पुनः ॥ १६० ॥**
**जम्बुः खदिरकृष्णाख्यौ वंशपिप्पलसंज्ञिकौ।**
**नागरोहिणनामानौ पलाशप्लक्षसंज्ञकौ ॥ १६१ ॥**
**अम्बष्ठबिल्वार्जुनाख्या विकङ्कतमहीरुहः ।**
**वकुलः सरलः सर्जो वञ्जुलः पनसार्ककौ ॥ १६२ ॥**
**शमीकदम्बनिम्बाम्रमधूका ऋक्षशाखिनः ।**

**नक्षत्रवृक्षानाह कारस्कर इति । कारस्करः कुचिला । धात्री आमलकी । मृगशिरसस्तु श्वेतसार एव खदिरः । आर्द्रायास्तु कृष्णसारः खदिरः । नागो नागकेसरः । रोहिणो वटः । प्लक्षः पर्कटी । अम्बष्ठः आम्रातः । अर्जुनः ककुभः। विकङ्कतः स्रुचां वृक्षः । सर्जः शालः । वञ्जुलोऽशोकः । एषां सामान्यतः फलमुक्तम्—आयुष्कामः स्वर्क्षवृक्षं छेदयेन्न कदाचन । इति ॥ १६०-१६३ ॥**

अब २७ नक्षत्र के २७ वृक्षों का क्रमशः अश्विन्यादि नक्षत्र से निर्देश करते हैं—१. कारस्कर (कुचिला), २. आवला, ३. गूलर, ४. जामुन, ५. श्वेत खैर, ६. कृष्ण सार खदिर, ७. बॉस, ८. पीपल, ९. नागकेशर, १०. वट, ११.

पलाश, १२.पकड़ी, १३. आम्रातक, १४. बिल्व, १५. अर्जुन, १६. विकंकत, १७. बकुल, १८. सरल, १९. सर्ज (शाल), २०. वञ्जुल (अशोक), २१. पनस (कटहल), २२. अर्क (मन्दार), २३. शमी, २४. कदम्ब, २५. निम्ब, २६. आम, २७. महुआ—ये २७ नक्षत्रों के वृक्ष हैं ॥ १६०-१६३ ॥

**आत्मरक्षादिकं सर्वं कुर्यान्मन्त्री यथा पुरा ॥ १६३ ॥**
**अमुना मनुना सम्यगभीष्टफलसाधने ।**
**सदृशो नास्ति मन्त्रोऽन्यः सत्यमेतन् न चान्यथा ॥ १६४ ॥**

**॥ इति श्रीलक्ष्मणदेशिकेन्द्रविरचिते शारदातिलके द्वाविंशः पटलः समाप्तः ॥ २२ ॥**



**यथा पुरेति । आग्नेयास्त्रप्रोक्तमार्गेण । एतच्चात्मरक्षणं मारणकर्मण्येवेति ज्ञेयम् ॥ १६३-१६४ ॥**

**॥ इति श्रीराघवभट्टविरचित-शारदातिलकटीकायां सत्सम्प्रदायकृतव्याख्यायां पदार्थादर्शाभिख्यायां द्वाविंशः पटलः ॥ २२ ॥**



मन्त्रज्ञ यदि अपनी आयु चाहे तो अपने नक्षत्र के वृक्षों को न काटे । इस प्रकार अपनी रक्षा में सावधान रहे । अभीष्ट फल प्रदान करने के लिये इस मन्त्र के सदृश कोई अन्य मन्त्र नहीं है, यह बात सत्य हैं, कभी झूठी होने वाली नहीं ॥ १६३-१६४ ॥

**॥ इस प्रकार शारदातिलक के बाईसवें पटल की डॉ० सुधाकर मालवीय कृत हिन्दी व्याख्या पूर्ण हुई ॥ २२ ॥**



# अथ त्रयोविंशः पटलः

## अथ त्र्यम्बकप्रकरणम्

**अथ त्रैयम्बकं मन्त्रमभिधास्याम्यनुष्टुभम्।**
**यं भजन्तं नरं कालः स्वयं वीक्षितुमक्षमः॥ १ ॥**
**वशिष्ठोऽस्य मुनिः प्रोक्तश्छन्दोऽनुष्टुबुदाहृतम्।**
**देवताऽस्य समुद्दिष्टस्त्र्यम्बकः पार्वतीपतिः ॥ २ ॥**

**अथेति । मन्त्रो यथा—**

**त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम् ।**
**उर्वारुकमिव बन्धनान् मृत्योर्मुक्षीय मामृतात् । इति ।**

**मृत्युञ्जयपुटित इति केचित्। साम्प्रदायिकास्तु प्रणवप्रासादमृत्युञ्जयव्याहृतिभिः सम्पुटमिच्छन्ति । श्रीं बीजं मायाशक्तिः । तदुक्तम्—**

**श्रीदेव्यौ प्रणवौ बीजशक्ती योगः शिवार्चने । इति ॥ १-२ ॥**

अब मैं अनुष्टुप् छन्द वाले त्र्यम्बक मन्त्र को कहता हूँ, जिसके तप करने से साधक की ओर काल भी दृष्टि उठाकर कर नहीं देख सकता और की तो बात ही क्या है? 'त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम्। ऊर्वारुकमिव बन्धनान् मृत्योर्मुक्षीय मामृतात्' यह त्र्यम्बक मन्त्र का स्वरूप है ॥ १ ॥

इस मन्त्र के ऋषि वशिष्ठ हैं, अनुष्टुप् छन्द है और पार्वतीपति त्र्यम्बक इसके देवता हैं (श्रीबीज और माया शक्ति है ।) ॥ २ ॥

**विभक्तैर्मन्त्रवर्णैः स्यात् षडङ्गानां प्रकल्पना ।**
**हृदयं त्रिभिराख्यातं चतुर्भिः शिर ईरितम्॥ ३ ॥**
**शिखाऽष्टभिः समुद्दिष्टा नवभिः कवचं मतम्।**
**पञ्चभिर्नेत्रमाख्यातमस्त्रं त्रिभिरुदाहृतम्॥ ४ ॥**

**विभागमेवाह हृदयमिति । येषां मते प्रणवादि सम्पुटः तन्मते तदादिभिरेभिर्वर्णैः षडङ्गम् । तदुक्तम्—**

**प्रासादमृत्युञ्जयभूर्भुवः स्वस्तदङ्गमन्त्रैः क्रमशः समेतम् इति ।**

साम्प्रदायिकास्तु । प्रणवप्रासादमृत्युञ्जयव्याहृति मन्त्राक्षरनमो भगवते रुद्रायेत्युक्त्वा शूलपाणये स्वाहा हृत् । अमृतमूर्त्तये मां जीवय शिरः । चन्द्रशिरसे जटिले स्वाहा शिखा । त्रिपुरान्तकाय हां ह्रीं कवचम् । त्रिलोचनाय ऋग्यजुः-साममन्त्राय नेत्रम् । अग्नित्रयाय ज्वल ज्वल मां रक्ष अघोरास्त्राय अस्त्रम् इति षडङ्गमाहुः ॥ ३-४ ॥

इस मन्त्र को विभक्त कर षडङ्ग की कल्पना करनी चाहिए । तीन वर्ण से हृदय, चार अक्षर से शिर, आठ अक्षर से शिखा, नव वर्ण से कवच, पाँच वर्ण से नेत्र और तीन वर्ण से अस्त्र मन्त्र का न्यास करना चाहिए ॥ ३-४ ॥

**पूर्वपश्चिमयाम्येन्दुवक्त्रेषु तदनन्तरम् ।**
**उरोगलास्येषु पुनर्नाभिहृत्पृष्ठकुक्षिषु ॥ ५ ॥**
**लिङ्गपायूरुमूलान्तजानुयुग्मेषु तत्परम् ।**
**तद्वृत्तयुग्मे स्तनयोः पार्श्वयोः पादयोः पुनः ॥ ६ ॥**
**पाण्योर्नासिकयोः शीर्षे मन्त्रवर्णान् न्यसेत् क्रमात् ।**
**पदान्येकादश न्यस्येच्छिरोभ्रूयुगलाक्षिषु ॥ ७ ॥**
**वक्त्रे गण्डयुगे भूयो हृदये जठरे पुनः ।**
**गुह्योरुजानुपादेषु न्यासमेवं समाचरेत् ॥ ८ ॥**

वर्णन्यासमेवाह—पूर्वेति । उरःशब्देन हृदूर्ध्वभागो विस्तीर्ण इह गृह्यते । ऊरुमूलयोर्द्वौ । ऊर्वन्तयोर्द्वौ । तद्वृत्तयुग्मे जानूपरिस्थवृत्तयोः । सर्वस्थानद्वये वर्णद्वयन्यासः । साम्प्रदायिकाः प्रणवादिपुटितवर्णन्यासमाहुः । तन्त्रान्तरे स्थानान्तराण्युक्तानि—

चरणाग्रसन्धिगुह्याधारोदरहृदयकन्धरासु पुनः ।
बाह्वोः सन्ध्यग्रास्यौष्ठघ्राणसयदृक्श्रुतिभ्रूशीर्षेषु ॥ इति ॥

पदानीति । वह्न्यब्ध्यग्नीषुवेदद्वित्रिद्वित्र्येकत्रिवर्णकैः ॥ ५-८ ॥

इसके बाद १. पूर्व, २. पश्चिम, ३. दक्षिण और ४. उत्तर के मुखों में हृदय का विस्तीर्ण ऊपरी भाग है जिसे वक्षःस्थल कहते हैं उसमें ५. गला, ६. मुख, ७. नाभि, ८. हृदय, ९. पीठ, १०. कुक्षि, ११. लिङ्ग, १२. गुदा, १३. १४. दोनों ऊरू के मूल, १५.१६. दोनों जानुओं का अन्तःभाग १७.१८. दोनों जानु, १९.२०. जानु के ऊपर स्थित वृत्त में, २१.२२. दोनों स्तन, २३.२४. दोनों पार्श्व, २५.२६. दोनों पैर, २७.२८. दोनों हाथ, २९.३०. दोनों नासिका, ३१. (मूर्धा) और ३२. शीर्ष भाग में मन्त्र के ३२ अक्षरों से न्यास करे ।

**विमर्श**—ऊपर कुल ३२ स्थान का निर्देश किया गया है जिसमें दो ऊरू के मूल, दो ऊरू का अन्तः, दो जानु, दो जानुवृत्त दो स्तन, दो पार्श्व दो पैर, दो हाथ तथा दो नासिका इनमें क्रम प्राप्त दो दो वर्णों से शेष १४ स्थानों में एक एक वर्ण से न्यास करे ॥ ५-७ ॥

इसके बाद १. शिर, २. दोनों भ्रू, ३. दोनों नेत्र, ४. मुख, ५. दोनों गण्डस्थल, ६. हृदय, ७. पेट, ८. गुह्य, ९. दोनों ऊरू, १०. दोनों जानु तथा ११. दोनों पाद—इन एकादश स्थानों में इस मन्त्र के ग्यारह पदों से क्रमशः न्यास करें।

**विमर्श**—वे पद इस प्रकार हैं—१. त्र्यम्बकम्, २. यजामहे, ३. सुगन्धिम्, ४. पुष्टिवर्धनम्, ५. उर्वारूकम्, ६. इव, ७. बन्धनात्, ८. मृत्योर्, ९. मुक्षीय, १०. मा, ११. अमृतात् ॥ ७-८ ॥

मृत्युञ्जयध्यानम्

**हस्ताभ्यां कलशद्वयामृतरसैराप्लावयन्तं शिरो**
**द्वाभ्यां तौ दधतं मृगाक्षवलये द्वाभ्यां वहन्तं परम्।**
**अङ्कन्यस्तकरद्वयामृतघटं कैलासकान्तं शिवं**
**स्वच्छाम्भोजगतं नवेन्दुमुकुटं देवं त्रिनेत्रं भजे ॥ ९ ॥**
**जपेन्मन्त्रमिमं लक्षमेवं ध्यायन् जितेन्द्रियः।**
**जुहुयाद्दशभिर्द्रव्यैरयुतं घृतसंप्लुतैः ॥ १० ॥**

**तौ इति। घटौ। अत्र ध्यानानन्तरमेता मुद्राः प्रदर्शयेत्। यदाहुः—**

**लिङ्गपञ्चास्यमुष्ट्यम्बुजशक्तिमुद्राः प्रदर्शयेत्। इति ॥ ९-१० ॥**

अब इस मन्त्र के देवता **महामृत्युञ्जय का ध्यान** कहते हैं—जो अपने दो हाथों से अमृतरस पूर्ण दो कलशों के द्वारा शिर पर अमृत रस का आप्लावन कर रहे हैं, दो कलशों को अपने हाथ में धारण किये हुये हैं, और दो हाथों में मृग तथा अक्षवलय धारण किये हुये हैं दो से परशु एवं अभय धारण किये हुये हैं और दो हाथों में धारण किये गये अमृत घट को अपनी गोद में स्थापित किये हुये हैं, ऐसे स्वच्छ कमल पर विराजमान द्वितीया के चन्द्रमा को मुकुट में बाँधे हुयें, कैलाशपति त्रिनेत्र सदाशिव का मैं भजन करता हूँ ॥ ९ ॥

इस प्रकार का ध्यान कर साधक जितेन्द्रिय होकर इस मन्त्र का एक लाख जप करे। पुनः घृत मिश्रित वक्ष्यमाण दश द्रव्यों के द्वारा इस मन्त्र से दश हजार होम करे ॥ १० ॥

**बिल्वं पलाशं खदिरं वटं च तिलसर्षपौ।**
**दौग्धं दुग्धं दधि पुनर्दूर्वान्तानि विदुर्बुधाः ॥ ११ ॥**

**बिल्वं फलम्। ततस्त्रयाणां समिधः। दौग्धमिति। पायसम् ॥ ११ ॥**

विल्व, पलाश, खैर, बट, तिल, सर्षप, घृत, दूध, दही, और दूर्वा उन दश द्रव्यों के नाम बुद्धिमानों ने परिगणित कराया है ॥ ११ ॥

पञ्चाक्षरोदिते पीठे पूजयेद् वृषभध्वजम् ।
मूर्त्तिं मूलेन सङ्कल्प्या वक्ष्यमाणेन वर्त्मना ॥ १२ ॥

**वक्ष्यमाणेन वर्त्मना पीठे वृषभध्वजं पूजयेदित्यन्वयः ॥ १२ ॥**

पञ्चाक्षर में कहे गये पीठ (द्र. १८,१५-१९) पर महामृत्युञ्जय का पूजन इस प्रकार करें—मूल मन्त्र पढ़कर मूर्त्ति की कल्पना करे, पश्चात् आगे कही गई विधि के अनुसार पहले अङ्ग का पूजन करे ॥ १२ ॥

पूर्वमङ्गानि संपूज्य पश्चान्मूर्त्तीः प्रपूजयेत् ।
अर्केन्दुवसुधातोयवह्नीरवियदात्मनः ॥ १३ ॥
द्वितीयावरणे पूज्या मूर्त्तयोऽष्टौ क्रमादथ ।

**संपूज्येति । कर्णिकायाम् । मूर्त्तीः पश्चात् द्वितीयावरणे पूजयेदित्यन्वयः । ता एवाह अर्केति । ईरो वायुः । आत्मा यजमानः । तथा च श्रुतिः—आत्मा वै यज्ञस्य यजमानोऽङ्गानि ऋत्विजः । इति ॥ १३ ॥**

पश्चात् मूर्त्ति की पूजा करे । १. सूर्य, २. चन्द्रमा, ३. पृथ्वी, ४. जल, ५. अग्नि, ६. वायु, ७. आकाश तथा ८. आत्मा (यजमान)—इन शिव के आठ मूर्त्तियों की द्वितीयावरण में एक एक के क्रम से पूजा करे ॥ १३-१४ ॥

रामा राका प्रभा ज्योत्स्ना पूर्णोषा पूरणी सुधा ॥ १४ ॥
अष्टाविमाः क्रमात् पूज्यास्तृतीयावरणे ततः ।
विश्वा विद्या सिता प्रह्वा सारा सन्ध्या शिवा निशा ॥१५॥
चतुर्थावरणे पूज्याः शक्तयोऽष्टौ क्रमादिमाः ।
आर्या प्रज्ञा प्रभा मेधा शान्तिः कान्तिर्धृतिर्मतिः ॥ १६ ॥
पञ्चमावरणे पूज्याः क्रमादेतास्ततः परम् ।
धरा मायाऽवनी पद्मा शान्ताऽमोघा जयाऽमला ॥ १७ ॥
षष्ठावरणगाः पूज्या लोकपालास्ततः परम् ।
एवं कृते प्रयोगार्हो जायतेऽयं महामनुः ॥ १८ ॥

**अष्टमूर्त्यादिपञ्चावरणानि पत्रेषु दलमूल उत्तरोत्तरत्र पूजनीयानि । धरोमा पावनीत्यपि पाठः । ततः परमिति । वज्रादिपूजेत्युक्तम् । यदाहुः—आनुष्टुभमित्यष्टावरणं प्रोक्तं विधानवरमेवम् । इति । कल्पान्तरे तु 'सप्तमी लोकपालैः स्यादष्टम्यर्कादिभिर्ग्रहैः' इत्युक्तेरेतदेव सूचयितुं लोकपालान्ता पूजा ग्रन्थकारेणोक्ता ॥ १४-१८ ॥**

पश्चात् रामा, राका, प्रभा, ज्योत्स्ना, पूर्णा, उषा, पूरणी और सुधा इन आठ शक्तियों की तृतीय आवरण में पूजा करे । तदनन्तर, विश्वा, विद्या, सिता, प्रह्वा, सारा, सन्ध्या, शिवा और निशा—इन ८ शक्तियों की चतुर्थ आवरण में पूजा

करे। पुनः आर्या, प्रज्ञा, प्रभा, मेधा, शान्ति, कान्ति, धृति और मति इन ८ देवियों की पञ्चम आवरण में पूजा करे। इसके बाद धरा, माया, अवनी, पद्मा, शान्ता, अमोघा, जया और अमला की षष्ठ आवरण में पूजा करे। इसके बाद लोकपालों की पूजा करे (पश्चात् वज्रादि आयुधों की ऐसा तन्त्रान्तरों में कहा गया है)। इस प्रकार अनुष्ठान संपन्न कर लेने पर साधक में इस महामन्त्र के प्रयोग की योग्यता आ जाती है ॥ १४-१८ ॥

**अयुतं जुहुयाद् बिल्वसमिद्भिः सम्पदे सुधीः।**
**जुहुयाद् ब्रह्मवृक्षस्य समिद्भिर्ब्रह्मतेजसे ॥ १९ ॥**
**खादिरैरयुतं हुत्वा कान्तिपुष्टिमवाप्नुयात्।**
**वटवृक्षस्य समिधो जुहुयादयुतावधि ॥ २० ॥**
**धनधान्यसमृद्धः स्यादचिरेणैव साधकः।**
**तिलैस्तत्संख्यया हुत्वा सर्वपापैः प्रमुच्यते॥ २१ ॥**

**खादिरैरिति। सप्तसमिद्वरैरिति शेषः ॥ २०-२१ ॥**

अब **प्रयोग विधि** कहते हैं—

संपत्ति की कामना के लिये बुद्धिमान् साधक बिल्व की समिधा से दश हजार होम करे। ब्रह्मवर्चस्व के संप्राप्ति की इच्छा से पलाश वृक्ष की समिधा का होम करना चाहिए ॥ १९ ॥

खैर की समिधा का होम करने से कान्ति तथा पुष्टि प्राप्त होती है। वट की समिधा से दश हजार की संख्या में होम करे तो साधक शीघ्र ही धन धान्य से समृद्ध हो जाता है, दश हजार तिलों की आहुति दे कर समस्त पापों से मुक्त हो जाता है ॥ २०-२१ ॥

**सिद्धार्थैरयुतं हुत्वा शत्रून् विजयते नृपः।**
**अनेनैव विधानेन नश्येन् मृत्युरकालजः॥ २२ ॥**
**पायसेन कृतो होमो रक्षाश्रीकीर्त्तिकान्तिदः।**
**पशुदुग्धेन सि(शु)द्धान्नं हुत्वा कृत्यां विनाशयेत् ॥ २३ ॥**

**पशुदुग्धेन गोदुग्धेन ॥ २३ ॥**

राजा सफेद सरसों से दश हजार होम करे तो शत्रु पर विजय प्राप्त करता है। यदि इसी विधान से सफेद सरसों से होम करे तो अकाल जन्य मृत्यु विनष्ट हो जाती है ॥ २२ ॥

खीर का होम उतनी ही संख्या में करे तो रक्षा होती है और श्री, कीर्त्ति एवं कान्ति प्राप्त होती है। गाय के दूध से मिश्रित सिद्धान्न (खीर) का हवन करने से कृत्या विनष्ट हो जाती है ॥ २३ ॥

अयमेव मतो होमः शान्तिश्रीसम्पदावहः।
दधिहोमेन संवादं(पातं)कुर्याद्विद्वेषिणोर्मिथः॥ २४ ॥
प्रत्यहं जुहुयान्मन्त्री दूर्वामष्टोत्तरं शतम्।
आमयान्निखिलान् जित्वा दीर्घमायुरवाप्नुयात्॥ २५ ॥
जुहुयाज्जन्मदिवसे पायसान्नैर्घृतान्वितैः।
इच्छन्ननिन्दितां लक्ष्मीमारोग्यमतुलं यशः॥ २६ ॥
गव्यदुग्धघृताक्ताभिर्दूर्वाभिर्जुहुयाद्वशी।
सविंशतिशतं सम्यक् स्वजन्मदिवसे सुधीः॥ २७ ॥
आमयैः सकलैर्मुक्तो जीवेद्वर्षशतं सुधीः।

यह होम शान्ति, श्री तथा संपदा प्रदान करता है और दधि होम से दो परस्पर मित्रों में विद्वेष उत्पन्न करता है ॥ २४ ॥

मन्त्रज्ञ साधक यदि इस मन्त्र से १०८ संख्या में दूर्वा का होम करे तो समस्त रोगों पर विजय प्राप्त कर पूर्ण आयु प्राप्त करता है ॥ २५ ॥

विशुद्ध लक्ष्मी, आरोग्य और अतुल यश चाहने वाला गाय के दूध एवं घृत से अभिषिक्त दूर्वा का अपने जन्म के दिन १२० बार होम करे तो वह समस्त व्याधियों से मुक्त होकर सौ वर्ष पर्यन्त जीता है ॥ २६-२८ ॥

काश्मरीसमिधस्तिस्रः पयोऽन्नं त्रिशतं पृथक्॥ २८ ॥
जुहुयाद् ब्राह्मणानन्ते भोजयेन्मधुरान्वितम्।
प्रीणयेद्धनधान्याद्यैरात्मनो गुरुमादरात्॥ २९ ॥
अनामयमवाप्नोति दीर्घमायुः श्रिया सह।
सघृतेन पयोऽन्नेन हुत्वा पर्वणि पर्वणि॥ ३० ॥
राज्यश्रियमवाप्नोति षण्मासान्नाऽत्र संशयः।

**पृथगिति। प्रत्येकम्॥ २८ ॥**
**अनामयमारोग्यम्। 'अनामयं स्यादारोग्यम्' इत्यमरः॥ २९-३० ॥**

पृथक् पृथक् काश्मरी (श्रीपर्णी) की तीन तीन समिधा तथा खीर का तीन सौ होम करे और अन्त में ब्राह्मणों को मधुर पदार्थ का भोजन करावे और धन, धान्यादि से गुरु को श्रद्धा पूर्वक तृप्त करे तो नीरोग रह कर पूर्ण आयु प्राप्त करता है, लक्ष्मी से संपन्न रहता है ॥ २८-३० ॥

पर्व पर्व की तिथियों में घृत युक्त खीर का होम करे तो छः महीने के भीतर राज्य श्री प्राप्त करता है इसमें संशय नहीं ॥ ३०-३१ ॥

लाजैर्विशुद्धैर्जुहुयात्कन्याप्त्यै सा वराप्तये॥ ३१ ॥

क्षीरद्रुमसमिद्धोमाद् ब्राह्मणादीन् वशं नयेत् ।
स्नात्वा सहस्रं प्रजपेदादित्याभिमुखो मनुम् ॥ ३२ ॥
आधिव्याधिविनिर्मुक्तो दीर्घमायुरवाप्नुयात् ।
अनेन मनुना सर्वं साधयेदिष्टमात्मनः ॥ ३३ ॥

सा कन्या वराप्तये जुहुयादित्यन्वयः । क्षीरद्रुमाः । अश्वत्थोदुम्बरप्लक्षवटाः। यथासंख्यं विप्रादिवशकारकाः । ब्राह्मणादिषु यथासंख्यं मधुरत्रययुक्तत्वमपि ज्ञेयम्। 'स्वाद्वक्तस्तनजं तु होमविधिना' इत्याचार्योक्तेः । तन्त्रान्तराद्यन्त्रमुच्यते—

विम्बद्वन्द्वे कृशानोर्विलिखतु मनुमैशं (मेनं) समायं तद-
स्त्रिष्वग्न्यादिव्यञ्जनाख्यान् मृतिहरणमथो सन्धिषट्के सतारम् ।
अष्टारं तारयुग्व्याहृतिकुपरिवृतं नारसिंहास्त्रि चानु
द्वात्रिंशत्पत्रगत्र्यम्बकमनु च जगज्जन्मभूम्याभिवीतम् ॥ इति ॥ ३१-३३ ॥

कन्या वर की प्राप्ति के लिये तथा वर उत्तम कन्या प्राप्त करने के लिये विशुद्ध लाजों से हवन करे । अश्वत्थ, उदुम्बर, प्लक्ष एवं वट इन क्षीरी द्रुमों की समिधा के होम से ब्राह्मणादि समस्त वर्णों को वश में कर लेता है ॥ ३१-३२ ॥

यदि स्नान करके सूर्य के अभिमुख होकर इस मन्त्र का जाप करे तो साधक समस्त आधि, व्याधि से मुक्त होकर दीर्घायु प्राप्त करता है । इस प्रकार इस मन्त्र के द्वारा सारे इष्ट पदार्थों की सिद्धि हो जाती है ॥ ३१-३३ ॥

गायत्रीत्रिष्टुबनुष्टुब्वर्णैः प्रोक्तः शताक्षरः ।
पूर्वोक्ता एव मुन्याद्याः परं तेजोऽस्य देवता ॥ ३४ ॥

शताक्षरमन्त्रमाह—गायत्रीति । शताक्षर इति गायत्र्याश्चतुर्विंशतिवर्णत्वम् । त्रिष्टुभश्चतुश्चत्वारिंशद्वर्णत्वम् । अनुष्टुभो द्वात्रिंशद्वर्णत्वं चाभिप्रेत्योक्तम् । कश्चित्तु वैदिकत्वादस्य मन्त्रस्याद्यन्तयोः प्रणवदानात् शताक्षरतामाह स्म । तदसम्बद्धम् । यतः षडङ्गोक्तौ 'द्वाविंशत्या शिखा प्रोक्ता तावद्भिः कवचं मतम्' इत्यङ्गद्वयमुक्तम् । तदसङ्गतं स्यात् । पूर्वोक्ता इति मन्त्रत्रयस्यापि । तदुक्तम्—ऋष्याद्याः पूर्वोक्तास्त्रिविधाः स्युः । इति ॥ ३४ ॥

गायत्री (२४ अक्षर) त्रिष्टुप् (४४ अक्षर) अनुष्टुप् (३२ अक्षर का महामृत्युञ्जय) यह शताक्षरी मन्त्र कहा जाता है इसके ऋषि आदि पूर्व में कहे गये हैं । परं तेज इसके देवता हैं ॥ ३४ ॥

हृत् त्रयोदशभिः प्रोक्तं रुद्रार्णैः शिर ईरितम् ।
द्वाविंशत्या शिखा प्रोक्ता तावद्भिः कवचं मतम्॥ ३५ ॥
स्यात् पञ्चादशभिर्नेत्रमस्त्रं सप्तदशाक्षरैः ।
वर्णन्यासादिकं सर्वं कुर्यात् पूर्वोक्तवर्त्मना ॥ ३६ ॥

रुद्रार्णैरित्येकादशाक्षरैः । तावद्भिरिति । द्वाविंशत्यक्षरैः ॥ ३५-३६ ॥

तेरह अक्षर से हृदय न्यास, ११ अक्षर से शिरःन्यास, २२ अक्षर से शिखा, २२ अक्षर से कवच, १५ अक्षर से नेत्र तथा १७ अक्षरों से अस्त्रन्यास करना चाहिए । पूर्वोक्त कही गई विधि से इसका वर्णन्यास तथा पदन्यास करना चाहिए ॥ ३५-३६ ॥

ध्यानम्

**सत्यं मानविवर्जितं श्रुतिगिरामाद्यं जगत्कारणं**
**व्याप्तं स्थावरजङ्गमं मुनिवरैर्ध्यातं निरुद्धेन्द्रियैः ।**
**अर्काग्नीन्दुमयं शताक्षरवपुस्तारात्मकं सन्ततं**
**नित्यानन्दगुणालयं गुणपरं वन्दामहे तन्महः ॥ ३७ ॥**

ध्यानमाह सत्यमिति । अरूपस्य ब्रह्मणो भावनरूपं ध्यानमेतत् । सत्यम् । असत्यव्यावृत्तिरूपम् । 'सत्यं ज्ञानमनन्तं ब्रह्म' इति श्रुतेः । मानविवर्जितम् । प्रमाणागोचरीकृतम् । 'यतो वाचो निवर्त्तन्ते' इति श्रुतेः । श्रुतिगिरामाद्यम् । वेदप्रवक्तृ । 'शास्त्रयोनित्वात्' इति वादरायणिसूत्रणात् । जगत्कारणम् । 'जन्माद्यस्य' इति सूत्रणात् । व्याप्तस्थावरजङ्गमम् । 'सहस्रशीर्षा' इत्यादि श्रुतेः । मुनिवरैर्नारदादिभिः। अर्काग्नीन्दुमयमिति गायत्र्यादिदेवताक्रमेण । यद्वा अर्को विष्णुः अग्नी रुद्र इन्दुर्ब्रह्मा तन्मयम् । तत उत्पन्नत्वात् । यद्वा ॐकाररूपत्वं वक्ष्यति । एतेनाऽकारोकारमकारात्मकत्वेनाऽग्नीन्द्वर्करूपत्वम् । शताक्षरवपुरिति । शताक्षरैः परं महः प्रतिपाद्यते। प्रतिपाद्यप्रतिपादकयोरभेदात् शास्त्रयोनित्वेन कार्यकारणाभेदाद्वा शब्दब्रह्मरूपत्वाद्वा तथोक्तिः । यद्वा यतः अर्काग्नीन्दुरूपत्वम् अतएव शताक्षरवपुरिति हेतुहेतुमद्भावेन योजना । ॐकाररूपत्वमस्य ग्रन्थकृदेवाऽन्त्ये पटले वक्ष्यति । नित्यानन्दचित्त्वं तत् स्वरूपमेव । तदालयत्वं च भगवत उपचारात् । गुणेभ्यः सत्वरजस्तमोभ्यः परं तद्रहितम् । तद्वेदशिरसि प्रसिद्धम् । महः । नित्यं प्रकाशकत्वान् मह इव । एते च सर्वे शब्दास्तस्य वस्तुनो लक्षका एव न वाचकाः । एतेषां शब्दानामेकार्थत्वमपर्यायत्वेऽपि अतद्व्यावृत्त्यर्थतया न पौनरुक्त्यम् ।

यद्वा, महस्तेजोरूपा कुण्डलिनी उच्यते । सत्यं नित्यत्वात्तस्याः । 'नित्या शक्तिः परा देवी' इत्युक्तेः । मानमियत्ता तद्वर्जिता । 'सूक्ष्मात् सूक्ष्मतरा विभुः' (१.५५) इत्युक्तेः । व्याप्तस्थावरजङ्गमा । 'सर्वगा विश्वरूपिणी (१.५१) दिक्कालाद्यनवछिन्ना' (१.५२) इत्युक्तेः । निरुद्धेन्द्रियैर्मुनिवरैर्ध्याता । 'योगिध्येया च सर्वदा' इत्युक्तेः । 'योगिनां हृदयाम्भोजे नृत्यन्ती नित्यमञ्जसा' (१.५३) इत्यपि । अर्काग्नीन्दुरूपा । 'त्रिधामजननी देवी' (१.५६) इत्युक्तेः । 'सोमसूर्याग्निरूपा च' इत्यपि । शताक्षरवपुः । 'विश्वात्मना प्रबुद्धा सा सूते मन्त्रमयं जगत्' (१.५७) इत्युक्तेः । तारात्मकम् । तन्मध्ये चिन्तयेद्देवीमृज्वाकारां तडित्प्रभाम् । ॐकाररूपिणीं ज्योत्स्नामात्मरूपां शुभोदयाम् । इत्युक्तेः ।

नित्यानन्दगुणालया । 'नित्यानन्दगुणोदया' (१.५१) इत्युक्तेः । गुणपरा । गुणरूपा परा च । 'शक्तिः कुण्डलिनी गुणत्रयवपुर्विद्युल्लतासन्निभा' इत्युक्तेः । (२५.६६) 'परापरविभागेन परशक्तिरियं मता' इत्युक्तेश्च ॥ ३७ ॥

अब **ध्यान** कहते हैं—अब निरूप ब्रह्मदेव का भावना रूप में ध्यान कहते हैं—जो त्रिकाल में बाधित न होने से सत्य है, प्रमाण से अगोचर है वेद वाणियों का एवं जगत् का मूल कारण है, जो स्थावर एवं जङ्गम में सर्वत्र व्याप्त है, नारदादि मुनि लोग अपनी इन्द्रियों को रोक कर जिसका ध्यान करते हैं जो सूर्य, चन्द्र एवं अग्नि स्वरूप हैं, जिसका परम तेजोमय स्वरूप इस शताक्षर मन्त्र के द्वारा तथा प्रणव के द्वारा प्रतिपादन किया जाता है, जो नित्य आनन्द और चित् रूप गुणों का आलय है एवं सत्त्व, रज तथा तम रूप गुणों से परे हैं ऐसे किसी अनिर्वचनीय तेजः स्वरूप का मैं ध्यान करता हूँ ॥ ३७ ॥

**पुरश्चरणादिकथनम्**

**लक्ष्मानं जपेदेनमयुतं पायसान्धसा ।**
**जुहुयात् घृतसिक्तेन मन्त्रविद्विजितेन्द्रियः ॥ ३८ ॥**

**पायसान्धसा पायसेन ॥ ३८ ॥**

इस मन्त्र का एक लाख जप करे और इन्द्रियों को संयम में रखकर घृत से प्रसिक्त खीर से दश हजार होम करे ॥ ३८ ॥

**सौरे पीठे यजेत्सम्यक् वक्ष्यमाणविधानतः ।**
**आद्यामावृतिमभ्यर्चेत् षडङ्गैर्देशिकोत्तमः ॥ ३९ ॥**
**गायत्रीशक्तिभिस्तिस्रः पूजयेदावृतीः क्रमात् ।**
**आवृतिः पञ्चमी प्रोक्ता त्रिष्टुबुद्भूतशक्तिभिः ॥ ४० ॥**
**अनुष्टप्शक्तिभिः प्रोक्तमावृतीनां चतुष्टयम् ।**
**इन्द्राद्यैर्दशमी प्रोक्ता वज्राद्यैस्तत्परा मता ॥ ४१ ॥**
**एवं सिद्धे मनौ मन्त्री भवेद्भास्करसन्निभः ।**

**अभ्यर्चेदिति । कर्णिकायाम् । देशिकोत्तमः क्रमादित्यनेन दलमूलमध्याग्रेष्वित्युक्तम् । तिस्र इति । अष्टाष्टदेवतात्मिकाः । त्रिष्टुबिति । जागताद्याभिः दिशि दिशि एकादशैकादशभिः । चतुष्टयमिति । अष्टाष्टशक्तिरूपत्वेन । अष्टदिक्षु पुनरिति ज्ञेयम् ॥ ३८-४२ ॥**

सौर पीठ (द्र. १४-४२) पर आगे कही जाने वाली विधि के अनुसार इन शताक्षरी के देवता का जप करे । साधक प्रथमावरण में षडङ्ग की पूजा करे । पुनः गायत्री की आठ आठ शक्तियों की तीन आवृत्ति में पूजा करे (द्र. २१. २३-२५) (यहाँ तक चार आवृत्ति हुई) । तदनन्तर त्रिष्टुप् मन्त्र में कही गई जागतादि ग्यारह ग्यारह शक्तियों की (द्र. २१. ४९-५५) चारों दिशाओ में पञ्चम आवृत्ति में पूजा करें । फिर अनुष्टुप् में कही गई (द्र. २३. १३-१७) शक्तियों की ४ आवरण में पूजा करें । इस प्रकार कुल नव आवरण की पूजा कही गई । इसके बाद इन्द्रादि देवताओं की दशम आवरण में तथा उनके वज्रादि आयुधों की

एकादश आवरण में पूजा करे । इस प्रकार मन्त्र सिद्ध कर लेने पर मन्त्रज्ञ साधक सूर्य के समान तेजस्वी हो जाता है ॥ ३९-४२ ॥

**सुधालतोद्भवैः खण्डैर्जुहुयात्क्षीरसंयुतैः ॥ ४२ ॥**
**दीर्घमायुरवाप्नोति निराधिर्व्याधिवर्जितः ।**
**दूर्वाभिर्घृतसिक्ताभिस्तदेव फलमाप्नुयात् ॥ ४३ ॥**
**मधुरत्रयसंसिक्तैर्जुहुयादरुणाम्बुजैः ।**
**महालक्ष्मीमवाप्नोति षड्भिर्मासैर्विधानवित् ॥ ४४ ॥**
**रक्तोत्पलैस्त्रिमध्वक्तैर्जुहुयात्सर्वसम्पदे ।**
**श्रीप्रसूनैः प्रजुहुयाद्रमाया वसतिर्भवेत् ॥ ४५ ॥**
**सहस्रं जुहुयान्नित्यं मासमेकं तिलैः शुभैः ।**
**भानुसंख्यान् द्विजान्नित्यं भोजयेन्मधुरान्वितैः ॥ ४६ ॥**
**सर्वपापैर्विनिर्मुक्तः सर्वरोगविवर्जितः ।**
**कृत्याद्रोहग्रहद्रोहान् जित्वा दीर्घं स जीवति ॥ ४७ ॥**
**प्रातः स्नानरतो मन्त्री जपेन्नित्यं शतं शतम् ।**
**भानुमालोकयन् सम्यक् स जीवेच्छरदां शतम् ॥ ४८ ॥**

**सुधालता गुडची । भानुसंख्यानिति द्वादश ॥ ४२-४८ ॥**

तदनन्तर दूध मिश्रित गुडूची के टुकड़ों से होम करे । ऐसा करने से आधि तथा व्याधि से रहित होकर साधक दीर्घ आयु प्राप्त करता हैं, इसी प्रकार घृत मिश्रित दूर्वा से होम का भी यही फल होता है ॥ ४२-४३ ॥

मधुरत्रय (दूध घी मधु) से संयुक्त लाल कमल का होम करे, तो इस प्रकार विधान करने वाला छः महीने में महालक्ष्मी प्राप्त कर लेता है ॥ ४४ ॥

सब प्रकार की संपत्ति की प्राप्ति के लिये त्रिमधुर मिश्रित रक्त कमल का होम करना चाहिए, यदि कुरवक के प्रसूनों का होम करे तो श्री का भण्डार हो जाता है ॥ ४५ ॥

उत्तम शुद्ध किये गये तिलों से एक महीने तक निरन्तर एक सहस्र प्रतिदिन होम करे और प्रतिदिन बारह ब्राह्मणों को मधुर भोजन करावें, तो साधक सब पापों से छूट जाता है, समस्त व्याधियों से रहित हो जाता है ॥ ४६-४७ ॥

कृत्या, द्रोह, ग्रह बाधा आदि पर विजय प्राप्त करता है और दीर्घकाल तक जीवित रहता हैं, ॥ ४७ ॥

मन्त्र में श्रद्धा रखने वाला साधक प्रातःकाल स्नान कर सूर्य की ओर देखते हुये नित्य सौ सौ बार इस शताक्षरी मन्त्र का जप करे तो वह सौ वर्ष तक जीता है ॥ ४८ ॥

**तारव्याहृतिसंरुद्धं जपेन्मन्त्रं शताक्षरम् ।**
**नित्यमष्टोत्तरशतं निःश्रेयसफलाप्तये ॥ ४९ ॥**

संरुद्धमिति सम्पुटितम् । तदुक्तमाचार्यैः—

प्रणवव्याहृत्याद्या व्याहृतितारान्तिका च मन्त्रिवरैः ॥ इति ।

केचित्तु संरुद्धशब्देन संरोधनमाहुः । तच्च 'नान आद्यन्तमध्येषु मन्त्रः स्याद्रोधनं स्मृतम्' इति प्रकारेण प्रतिमन्त्रादौ तारव्याहृतीरिच्छन्ति । तदसाम्प्रदायिकं लिखितवचनविरोधात् ॥ ४९ ॥

प्रणव तथा व्याहृतियों से संपुटित इस शताक्षरी मन्त्र का जप परलोक प्राप्ति के उद्देश्य से नित्य १०८ बार करना चाहिए ॥ ४९ ॥

**गायत्र्याद्यं जपेन्मन्त्रं सर्वपापविमुक्तये ।**
**सर्वशत्रुविनाशाय त्रिष्टुबाद्यमिमं जपेत् ॥ ५० ॥**
**अनुष्टुबाद्यं प्रजपेदायुरारोग्यसिद्धये ।**
**शताक्षरो मनुः प्रोक्तः समस्तपुरुषार्थदः ॥ ५१ ॥**

गायत्र्याद्यमिति । यथोक्तम् । त्रिष्टुबाद्यम् । त्रिष्टुबनुष्टुब्गायत्र्यः । अनुष्टुबाद्यमिति । अनुष्टुप् गायत्री त्रिष्टुप् ॥ ५०-५१ ॥

सभी पापों से छुटकारा पाने के लिये प्रथम गायत्री, तदनन्तर त्रिष्टुप्, तब अनुष्टुप मन्त्रों को संयुक्त कर जप करे । संपूर्ण शत्रुओं पर विजय प्राप्त करने हेतु आदि में त्रिष्टुप् (ॐ जातवेदसे) मन्त्र, तदनन्तर अनुष्टुप्, फिर गायत्री मन्त्रों से युक्त कर जप करे। आयु तथा आरोग्य की प्राप्ति के लिये अनुष्टुप् (त्र्यम्बकमित्यादि) मन्त्र को आदि में तदनन्तर गायत्री को, फिर त्रिष्टुप् मन्त्र संयुक्त कर जप करे । यह शताक्षर मन्त्र संपूर्ण पुरुषार्थों को देने वाला है ॥ ५०-५१ ॥

## अथ वरुणप्रकरणम्

**ऋचो विधानं वारुण्या यथावदभिधीयते ।**
**ऋग्वेदे सा समुद्दिष्टा ध्रुवास्वाद्या मनीषिभिः ॥ ५२ ॥**
**वशिष्ठो मुनिराख्यातश्छन्दस्त्रिष्टुबुदाहृतम् ।**
**वरुणो देवता प्रोक्तस्तद्वर्णैरङ्गकल्पना ॥ ५३ ॥**
**अष्टभिर्हृदयं प्रोक्तं सप्तभिः शिर ईरितम् ।**
**शिखा षडर्णैराख्याता वस्वर्णैः कवचं मतम् ।**
**सप्तभिर्नेत्रमाख्यातमस्त्रं षड्भिरुदीरितम् ॥ ५४ ॥**

ध्रुवास्वाद्येति । मन्त्रो यथा—

ध्रुवासु त्वासु क्षितिषु क्षियन्तो व्यस्मतत्पाशं वरुणो मुमोचत् ।

**अवो वन्वाना अदितेरुपस्थाद्यूयं पात स्वस्तिभिः सदा नः ॥**

**इति ॥ ५२-५४ ॥**

अब **वारुणी ऋचा का विधान** कहते हैं—इस ऋचा को मनीषियों ने ऋग्वेद में 'ध्रुवासु' इत्यादि शब्दों से कहा है ।

**विमर्श**—यथा—ध्रुवासु त्वासु क्षितिषु, क्षियन्तो व्यस्मत् पाशं वरुणो मुमोच्चत् । अवो वन्वाना अदितेरुपस्थाद्यूयं पात स्वस्तिभिः सदा नः ॥ इति । पदविभाग । ध्रुवासु । त्वा । आसु । क्षितिषु । क्षियन्तः । वि । अस्मत् । पाशम् । वरुणः । मुमोचत् । अवः । वन्वाना । अदितेः । उपस्थात् । यूयं । पात । स्वस्तिभिः । सदा । नः ।

**अर्थ**—इस दृश्यमान पृथ्वी पर निवास करते हुये हम लोग वरुण देवता की स्तुति करते हैं, वे वरुण हमें पाप तापों अथवा अपने पाशों से छुटकारा प्रदान करें । वरुण देवता के द्वारा दत्त संरक्षण से हम इस अखण्ड पृथ्वी पर निवास करें । हे वरुण ! आप हमारा कल्याण करते हुये रक्षा कीजिए । इस मन्त्र के जप का फल ऋग्वेद भाष्य में इस प्रकार है—'ध्रुवासु त्वासु क्षितिषु जपन् बन्धात् प्रमुच्यते । तिष्ठन् रात्रौ जपेदेतां पिशाचस्तं न गच्छति ॥

**अर्थ**—'ध्रुवासु त्वासु क्षितिषु' इस मन्त्र का जप करने से कारागार से मुक्ति प्राप्त होती है । इस मन्त्र का रात्रि के समय खड़े हो कर जप करना चाहिए, इस मन्त्र का जप करने वाले के पास पिशाच नहीं जाता ॥ ५२ ॥

इस मन्त्र के वशिष्ठ ऋषि हैं, त्रिष्टुप् छन्द हैं और वरुण देवता कहे गये हैं, अब उस मन्त्र के अक्षरों द्वारा षडङ्ग कहते हैं ॥ ५३ ॥

आठ अक्षर से हृदय न्यास, सात अक्षर से शिर, छः वर्णों से शिखा, आठ वर्णों से कवच न्यास, सात वर्णों से नेत्र न्यास तथा छः अक्षरों से अस्त्रन्यास करना चाहिए ॥ ५४ ॥

**साग्रेषु सन्धिषु पदोर्गुदान्ध्वाधारनाभिषु ।**
**कुक्षौ पृष्ठे हृदि कुचे गले बाह्वग्रसन्धिषु ॥ ५५ ॥**
**वक्त्रे कपोलनासाक्षिकर्णभ्रूमध्यमस्तके ।**
**शिरः सर्वाङ्गयोर्न्यस्येन्मन्त्रवर्णान् यथाविधि ॥ ५६ ॥**

**वर्णन्यासमेवाह साग्रेष्विति । पदोः साग्रेषु सन्धिषु दशवर्णाः । गलान्तेषु नववर्णाः । बाह्वग्रसन्धिषु दशवर्णाः । शिष्टेषु त्रयोदश । मस्तकं केशललाटसन्धिः । शिरो ब्रह्मरन्ध्रम् ॥ ५५-५६ ॥**

अब **अक्षर न्यास** कहते हैं—दोनों पैरों की अग्रभाग की दश सन्धियों में दश वर्णों का, पुनः गुदा, लिङ्ग, आधार, नाभि कुक्षि, पृष्ठ, हृदय, कुच और गला में एक एक अक्षर के क्रम से नव वर्णों का, इसके बाद दोनों बाहुओं की

दश सन्धियों में दश वर्णों का, फिर मुख, दो कपोल, दो नासिका, दो नेत्र, दो कान, भ्रूमध्य, मस्तक, शिर और सर्वाङ्ग इन तेरह स्थानों में शेष तेरह वर्णों का न्यास करे ॥ ५५-५६ ॥

वरुणदेवताध्यानम्

**चन्द्रप्रभं पङ्कजसन्निषण्णं पाशाङ्कुशाभीतिवरं दधानम् ।**
**मुक्ताविभूषाञ्चितसर्वगात्रं ध्यायेत् प्रसन्नं वरुणं विभूत्यै ॥ ५७ ॥**

**ध्यानमाह चन्द्रेति । आयुधध्यानं दक्षाद्यूर्ध्वयोराद्ये तदधस्तनयोरन्त्ये ॥ ५७ ॥**

अब **वरुण देवता का ध्यान** कहते हैं—जिनके शरीर की कान्ति चन्द्रमा के समान है, जो पंकज पर आसीन हैं, जो अपने हाथों में पाश, अंकुश, अभय तथा वर मुद्रा धारण किये हुये हैं, जिनका समस्त शरीर मोतियों के आभूषणों से भूषित है ऐसे प्रसन्नमुख श्री वरुण देवता का ऐश्वर्य प्राप्ति के लिये ध्यान करना चाहिए ॥ ५७ ॥

पुरश्चरणादिकथनम्

**लक्ष्मेकं जपेन्मन्त्रं पायसेन दशांशतः ।**
**सर्पिः सिक्तेन जुहुयान्मन्त्री मन्त्रस्य सिद्धये ॥ ५८ ॥**
**धर्मादिकल्पिते पीठे वरुणं सम्यगर्चयेत् ।**
**कृत्वाऽङ्गपूजनं शेषं वासुकिं तक्षकं पुनः ॥ ५९ ॥**
**कर्कोटकं ततः पद्मं महापद्ममनन्तरम् ।**
**शङ्खपालाख्यकुलिकौ सम्यक् पत्रेषु पूजयेत् ॥ ६० ॥**
**इन्द्राद्यानायुधान्येषामर्चयेत्तदनन्तरम् ।**

**धर्मादीति । पीठशक्तिपूजा रहिते । सम्यगित्यनेन पीठशक्तयस्तन्त्रान्तरोक्ताः पूजनीया इत्युक्तम् । ता यथा—**

**सुधा कुमुदिनी पूर्णा वारुणी विश्वतोमुखी ।**
**तरङ्गिणी च सुरसा सुशीताप्यायनी तथा ॥ इति ॥**

**कृत्वाऽङ्गपूजनमिति। केसरेष्वित्यर्थः। सम्यक् पत्रेषु पूजयेदिति । सम्यगित्यनेन शेषादीनां ध्यानं कर्त्तव्यमित्युक्तम् । तत् त्वरितापटले मदुक्तमनुसन्धेयम् ॥५८-६१॥**

इस वरुण मन्त्र का मन्त्रज्ञ को मन्त्र सिद्धि के लिये एक लाख जप करना चाहिए और उसका दशांश घी मिश्रित पायस से होम करना चाहिए ॥ ५८ ॥

धर्मादि से कल्पित पीठ पर वरुण देवता का पूजन करना चाहिए, तदनन्तर केशर पर अङ्ग का पूजन कर शेष, वासुकि, तक्षक, कर्कोटक, पद्म, महापद्म, शङ्खपाल तथा कुलिक की पूजा पत्रों पर करनी चाहिए ॥ ५९-६० ॥

इसके बाद इन्द्रादि दिक्पालों की, तदनन्तर उनके आयुधों की पूजा करना चाहिए ॥ ६१ ॥

**विमर्श**—शेष आदि अष्ट नागों का ध्यान भी करना चाहिए । यह ध्यान त्वरिता (१३) पटल में कहा गया है । अतः पुनः यहाँ नहीं दे रहे हैं ।

**ऋणमुक्त्यै जपेन्मन्त्रं प्रत्यहं साष्टकं शतम् ॥ ६१ ॥**
**जपेनाऽनेन लभते महतीमव्ययां श्रियम् ।**
**सितेक्षुशकलैर्मन्त्री जुहुयाद् घृतसंप्लुतैः ॥ ६२ ॥**
**चतुर्दिनं दशशतमृणमुक्त्यै महाश्रिये ।**
**समिद्भिर्वेतसोत्थाभिः क्षीराक्ताभिर्दिनत्रयम् ॥ ६३ ॥**
**जुहुयाद् वृष्टिसंसिद्ध्यै मन्त्रविद्विजितेन्द्रियः ।**
**अनेन विधिना मन्त्री सूर्ये शतभिषं गते ॥ ६४ ॥**
**चतुःशतं घृतयुतं पायसं जुहुयाद्वशी ।**
**ऋणनाशाय सम्पत्यै वश्यारोग्याभिवृद्धये ॥ ६५ ॥**
**भृगुवारे कृतो होमः पायसेन ससर्पिषा ।**
**महतीं सम्पदं कुर्यान्नाशयेत् सकलापदः ॥ ६६ ॥**
**शालिभिर्घृतसंसिक्तैः सरिदन्तरितः सुधीः ।**
**त्र्यहं चतुःशतं हुत्वा स्तम्भयेत्परसैन्यकम् ॥ ६७ ॥**

**ऋणमुक्त्यै इति। अत्र पाशमित्यस्य पूर्वं ऋणशब्दमधिकमुच्चार्य जपेदित्यर्थः। सितेक्षुशकलैः पवण्डा इति प्रसिद्धैः । सरिदन्तरितः द्वीपस्थः ॥ ६१-६७ ॥**

ऋण से मुक्ति पाने के लिये इस वारुण मन्त्र का एक सौ आठ बार प्रतिदिन जप करना चाहिए ॥ ६१ ॥

इस जप के प्रभाव से महती एवं कभी नष्ट न होने वाली लक्ष्मी की प्राप्ति होती है, मन्त्रज्ञ ऋण से मुक्ति के लिये तथा महती श्री की संप्राप्ति के लिये चार दिन तक लगातार एक एक हजार श्वेत वर्ण के ईख (पवढ़ा) के टुकड़ों को घी में डुबो कर होम करे ॥ ६२-६३ ॥

मन्त्रवेत्ता जितेन्द्रिय हो कर वृष्टि होने के लिये दूध में डुबोई गई वेंत की लकड़ी से तीन दिन तक होम करे तो वृष्टि हो जाती है । इसी प्रकार जब सूर्य शतभिषा नक्षत्र पर हों घी से युक्त खीर का होम चार सौ संख्या में करे तो ऋण का नाश, संपत्ति, वशीकरण तथा आरोग्य की प्राप्ति एवं अभिवृद्धि होती है ॥ ६४-६५ ॥

घी से मिश्रित पायस द्वारा भृगुवार (शुक्रवार) के दिन किया गया होम बहुत बड़ी संपत्ति प्रदान करता है तथा समस्त आपत्तियों को नष्ट कर देता है ॥ ६६ ॥

घी से मिश्रित शालि धान्य से द्वीप में स्थित हो कर तीन दिन पर्यन्त प्रतिदिन चार चार सौ आहुति के क्रम से होम करे तो शत्रु सेना स्तम्भित हो जाती है ॥ ६७ ॥

**सायं प्रत्यङ्मुखो वह्निमाराध्य प्रजपेन्मनुम् ।**
**चतुःशतं विमुच्येत मन्त्री सर्वैरुपद्रवैः ॥ ६८ ॥**
**मन्त्री प्रत्यङ्मुखो भूत्वा तर्पयेद्विमलैर्जलैः ।**
**सर्वोपद्रवनाशाय समस्ताभ्युदयाप्तये ॥ ६९ ॥**
**बहुना किमिहोक्तेन मन्त्रेणाऽनेन साधकः ।**
**साधयेत् सकलान् कामान् जपहोमादितत्परः ॥ ७० ॥**

सायंकाल पश्चिमाभिमुख हो अग्नि की पूजा कर इस मन्त्र का ४०० संख्या में जप करे तो साधक सभी प्रकार के उपद्रवों से मुक्त हो जाता है ॥ ६८ ॥

मन्त्रज्ञ साधक सभी प्रकार के उपद्रवों के विनाश के लिये तथा समस्त अभ्युदयों की प्राप्ति के लिये पश्चिमाभिमुख होकर शुद्ध जल द्वारा इस मन्त्र से तर्पण करे ॥ ६९ ॥

इस विषय में बहुत कहने से क्या लाभ ? साधक इस मन्त्र से जप होम आदि में तत्पर होकर अपनी सभी कामनाओं को पूर्ण करे ॥ ७० ॥

## अथ प्राणप्रतिष्ठाप्रकरणम्

**प्राणप्रतिष्ठामन्त्रस्य विधानमभिधीयते ।**
**येन प्रागीरिता मन्त्राः प्राणवन्तो भवन्ति ते ॥ ७१ ॥**

**येनेति । मन्त्राणां यद्यपि प्राणप्रतिष्ठा नास्ति तेषां स्वत एव समर्थत्वात् तथापि यन्त्रादौ लिखितानां प्रतिष्ठा क्रियत इति तद्द्वारा प्राणवन्त इत्युक्तिः । प्राणप्रतिष्ठया पूर्वोक्तसमस्तमन्त्रविहितयन्त्रप्रयोगपुत्तल्यादि सर्वं प्रतिष्ठितप्राणं क्रियत इति । अवश्यं ज्ञेयोऽयं सर्वसारभूतो मन्त्र इति तत्स्तुतिः । तदुक्तम्—**

**तस्मादृतेऽमी कथिताः प्रयोगा व्यर्था भवेयुर्गतजीवकल्पाः । इति ॥ ७१ ॥**

अब प्राण प्रतिष्ठा मन्त्र का विधान कहता हूँ—इस प्राण प्रतिष्ठा के कारण ही पूर्वोक्त सभी मन्त्र प्राणवान् (जाग्रत्) होते हैं । इसके बिना सभी मन्त्र यन्त्र मरे हुये और समार्थ्य हीन रहते हैं । अतः प्राणप्रतिष्ठा मन्त्रों में और यन्त्रों में अवश्य करनी चाहिए ॥ ७१ ॥

### प्राणप्रतिष्ठामन्त्रोद्धारः

**पाशाङ्कुशपुटा शक्तिर्वाली बिन्दुविभूषितः ।**
**याद्याः सप्त सकारान्ता व्योमसद्येन्दुसंयुतम् ॥ ७२ ॥**
**तदन्ते हंसमन्त्रः स्यात् ततोऽमुष्यपदं वदेत् ।**
**प्राणा इति वदेत्पश्चादिह प्राणास्ततः परम् ॥ ७३ ॥**
**अमुष्य जीव इह च स्थितोऽमुष्यपदं वदेत् ।**
**सर्वेन्द्रियाण्यमुष्यान्ते वाङ्मनश्चक्षुरन्ततः ॥ ७४ ॥**

**श्रोत्रघ्राणपादप्राणा इहागत्य सुखं चिरम् ।**
**तिष्ठन्त्वग्निवधूरन्ते प्राणमन्त्रोऽयमीरितः ॥ ७५ ॥**

मन्त्रोद्धारमाह—पाशेति। प्रथमं पाशबीजं ततः शक्तिबीजं ततोऽङ्कुशबीजम्। वाली यः बिन्दुभूषितः यं । याद्या इति उद्धृतयकारानुवादेन । अतद्गुणसंविज्ञान-बहुव्रीहिणा वा सप्त न तु तद्यमिति बीजं भिन्नम् । पूर्वं पृथगुद्धारस्तु सप्तानामपि सबिन्दुताख्यापनाय अग्रे न्यासावसरे ग्रन्थकृताऽस्य बीजस्य न्यासो नोक्तः । तेनास्य पृथगुद्धारः । तदुक्तमाचार्यैः—

पाशाङ्कुशान्तरितशक्तिमनोः परस्ता
दुच्चार्य यादिवसुवर्णगणं सहंसम् ॥ इति।

अन्यत्रापि—अङ्कुशवाय्वनलावनिवरुणबीजानि । इति ।

व्योम हः सद्य ओ इन्दुः बिन्दुः तेन हीं । प्रपञ्चसारपद्येऽपि गण ओ तेन होमित्येव पद्मपादाचार्यैर्व्याख्यातम् । समन्ते हंसमन्त्र इत्यपपाठः । इह चेति । चकारो न मन्त्रमध्ये । क्वचिदिहत इति पाठः । तदा इहशब्दादित्यर्थः । स्थितोऽमुष्येति । छन्दोऽनुरोधात् सन्धिः । मन्त्रे तु न सन्धिः । सर्वेन्द्रियाणि अमुष्वेत्यत्रापि तथैव । षडधिकषष्ट्यक्षरो मन्त्रः । अमुष्येपदार्थश्चतुर्थे उक्तः । अत्र मन्त्रे इहागत्येत्यत्र इहैवागत्येति एव शब्दो ज्ञेयः । तथा चाचार्याः—सैवेहागमथो त्ययुक् सुखं चिरं तिष्ठन्तु ठद्वन्द्वयुक् । इति । पद्मपादाचार्यैरप्येवमेव पठितम् । आं बीजं क्रीं शक्तिः ॥ ७२-७५ ॥

पाश (आँ) शक्ति बीज (ह्रीँ), तदनन्तर अंकुश बीज (क्रौं) इसके बाद वाली (यः), उसे बिन्दु से विभूषित (इस प्रकार यँ) उसे लेकर सात अक्षर जो बिन्दु युक्त हैं । इस प्रकार (यं रं लं वं शं षं सं) इसके बाद व्योम (हकार) उस को सद्य (औ) तथा बिन्दु से संयुक्त करे इस प्रकार (हौं) इसके बाद हंस मन्त्र (सोऽहम्) तदनन्तर 'अमुष्य' पद, पश्चात् 'प्राणाः' पुनः 'ईह प्राणाः' पद, तदनन्तर 'अमुष्य जीव इह च स्थितः', इसके बाद पुनः 'अमुष्य' पद, तदनन्तर 'सर्वेन्द्रियाणि' के बाद 'वाङ्मनश्चक्षुः' पद, तदनन्तर 'श्रोत्र घ्राण प्राणपादप्राणाः' पद, तदनन्तर 'इहागत्य सुखं चिरम् तिष्ठन्तु स्वाहा' पद, यही प्राण प्रतिष्ठा का मन्त्र है ॥

**विमर्श**—इसका **स्वरूप** इस प्रकार है—आँ ह्रीँ, क्रौं यं रं लं वं शं षं सं हौं सोऽहँ, अमुष्य प्राणा इह प्राणाः अमुष्य जीव इह च स्थितः अमुष्य सर्वेन्द्रियाणि वाङ्मनश्चक्षुः श्रोत्रघ्राणपादप्राणाः इहौगत्य सुखं चिरं तिष्ठन्तु स्वाहा' यह ६६ अक्षर का प्राणप्रतिष्ठा हैं । यहाँ इस बात का ध्यान रखना चाहिए कि जहाँ 'अमुष्य' पद आया हुआ है वहाँ षष्ठ्यन्त साध्य नाम की योजना करे ॥ ७२-७५ ॥

**प्रत्यमुष्यपदं पूर्वं पाशादीनि प्रयोजयेत् ।**
**प्रयोगेषु समाख्यातः प्राणमन्त्रो मनीषिभिः ॥ ७६ ॥**

ब्रह्मविष्णुशिवाः प्रोक्ता मुनयस्तन्त्रवेदिभिः।
उक्तमृग्यजुषोः साम्नश्छन्दश्छन्दोविशारदैः॥ ७७ ॥
चैतन्यरूपा प्राणात्मा देवता शक्तिरीरिता।

प्रयोगकाले विशेषमाह—प्रतीति । पद्मपादाचार्यास्तु । एवं सति प्रयोगमन्त्रो भवतीति यादीनां त्रिरावृत्तिरभिहिता । प्राणजीवसर्वेन्द्रियाकर्षणार्थम् । केचिद्यादीनां चतुरावृत्तिं वर्णयन्ति । प्राणजीवेन्द्रियसामान्य तद्विशेषाणामाकर्षणार्थम् । केचित् पञ्चावृत्तिम् । प्राणसामान्यजीवसामान्येन्द्रियसामान्येन्द्रियविशेषाणामाकर्षणार्थम् । केचिन् नवावृत्तिम् । मन्त्रोक्तानां सर्वेषां प्रत्येकमाकर्षणार्थमित्याहुः । मनीषिभिरित्यनेन हंसमन्त्रादौ ॐ क्षं सं हं सः ह्रीं ॐ स्वाहान्ते च ॐ क्षं सं हं सः ह्रीं ॐ इत्युच्चारणीयमिति सूचितम् । पद्मपादाचार्यैः 'मन्त्रोऽयमित्थमुदितो ग्रहसंख्ययैव' इत्यस्य व्याख्याने ग्रहाः सप्त तत्संख्याक्षरैः युक्तमिति व्याख्यातम् । तेनात्मनि यन्त्रे पुत्तल्यादावपि प्राणप्रतिष्ठासमये प्रत्यमुष्यपदं पाशाद्यानि प्रयोज्याऽमुष्यपदस्थाने षष्ठ्यन्तं साध्यनाम प्रयुज्य मन्त्रमुच्चरेदिति ज्ञेयम् ॥ ७६-७८ ॥

मनीषियों ने इस मन्त्र के प्रयोग काल में प्राणप्रतिष्ठा के समय प्रथम अमुष्य पद के पूर्व पाश, शक्ति तथा अंकुश पद का प्रयोग करना चाहिए तब प्राण मन्त्र होता है—ऐसा कहा है ॥ ७६ ॥

मन्त्रशास्त्र के तत्त्ववेत्ताओं ने इस प्राणप्रतिष्ठा मन्त्र का ब्रह्मा, विष्णु तथा शिव ऋषि कहा है, वेद विशारदों ने ऋग्यजु तथा साम इसका छन्द कहा है । चैतन्य स्वरूप प्राण इसके देवता हैं, आत्मा शक्ति हैं ॥ ७७-७८ ॥

कवर्गेण वियत्पूर्वभूतैर्हृदयमीरितम् ॥ ७८ ॥
शिरश्चवर्गशब्दाद्यैरीरितं तदनन्तरम्।
ज्ञानेन्द्रियैष्टवर्गाद्यैस्तच्छिखा परिकीर्त्तिता ॥ ७९ ॥
कर्मेन्द्रियैस्तवर्गाद्यैः कवचं परिकीर्त्तितम्।
वचनाद्यैः पवर्गाद्यैर्विलोचनमुदीरितम् ॥ ८० ॥
बुद्ध्याद्यैर्यादि संयुक्तैरस्त्रमस्य समीरितम्।
आत्मनेऽन्ताः समाख्याता अङ्गमन्त्राः सजातयः॥ ८१ ॥
नाभेश्चरणपर्यन्तं पाशबीजं प्रविन्यसेत्।
हृदयान्नाभिपर्यन्तं शक्तिबीजं ततः परम् ॥ ८२ ॥
मूर्धादि हृदयं यावदङ्कुशं विन्यसेत्ततः।
हृदये धातुषु न्यस्येद्यादीन् सप्त यथाक्रमम् ॥ ८३ ॥

षडङ्गमाह कवर्गेणेति । अत्र वियत्पूर्वभूतैरित्युक्तेः प्रथमपटलोक्तसृष्टिक्रमो विवक्षितः । तेनाऽक्षराणां तथा व्यत्यास इति ज्ञेयम् । तदुक्तम्—प्रत्येकं कादिवर्गैः प्रतिगतलिपिभिः बिन्दुयुक्तैः । इति ।

**अग्र आत्मनेऽन्ताः सजातय इत्युक्तत्वात् प्रयोगो यथा । ङं कं खं घं गं आकाशवायुवह्निसलिलभूम्यात्मने हृत् । ञं चं छं झं जं शब्दस्पर्शरूपरसगन्धात्मने शिरः । णं टं ठं ढं डं श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणात्मने शिखा । नं तं थं धं दं वाक्पाणिपादपायूपस्थात्मने वर्म । मं पं फं भं बं वचनादानविहरणविसर्गानन्दात्मने नेत्रम् । शं यं रं वं लं हं षं क्षं सं लं बुद्धिमनोऽहङ्कारचित्तज्ञानात्मने अस्त्रम् । पद्मपादाचार्यैर्वर्णानां स्वरपुटितत्वं विपरीतत्वमप्युक्तम् । यथाक्रममिति । होमित्यस्य ओजसि न्यास इत्युक्तम् ॥ ७८-८३ ॥**

अब इसका **षडङ्गन्यास** कहते हैं—कवर्ग से सृष्टिन्यास द्वारा, आकाश पूर्वक पञ्चमहाभूतों में चतुर्थी लगाकर हृदय (नमः) पद का प्रयोग करे । यथा—ङं कं खं घं गं आकाशवायुवह्निसलिलभूम्यात्मने नमः हृत्, ञं चं छं झं जं शब्दस्पर्श रूपरसगन्धात्मने नमः शिरः, णं टं ठं ढं डं श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणात्मने नमः शिखा । नं तं थं धं दं वाक्पाणिपादपायूपस्थात्मने नमः वर्म, मं पं फं भं बं वचनादानविहरणविसर्गानन्दात्मने नमः नेत्रम् । शं यं रं वं लं हं षं क्षं सं लं बुद्धिमनोऽहंकार चित्त ज्ञानात्मने अस्त्रम् ॥ ७८-८१ ॥

नाभि से चरण पर्यन्त पाशबीज, हृदय से नाभि पर्यन्त शक्तिबीज उसके बाद मूर्धा से हृदय पर्यन्त स्थान में अंकुशबीज से न्यास करना चाहिए । हृदय तथा धातु में यकारादि सात अक्षरों से एक एक अक्षर के क्रम से न्यास करना चाहिए ॥ ८२-८३ ॥

**प्राणे जीवे ततो न्यस्येद्धसवर्णद्वयं पृथक् ।**
**कुर्याद्व्यापकमेतेन समस्तेन विधानवित् ।**
**ततो विचिन्तयेद्देवीं जीवभूतां जगन्मयीम् ॥ ८४ ॥**

**प्राण इति । हृदय इत्यनुषज्यते । तेन प्राणजीवयोरपि हृदय एव न्यासः । पृथगिति । प्रत्येकम् । एतेन समस्तेनेति । मूलेनेत्यर्थः । विधानविदित्यनेन मूर्धादि-पादान्तमित्युक्तम् ।**

**तदुक्तम्—'न्यसेन्मूलं व्यापकं मस्तकादि' इति ॥ ८४ ॥**

इसी प्रकार प्राण और जीव का हृदय में न्यास कर प्राण तथा जीव में हंस मन्त्र का न्यास करे । तदनन्तर विधान वेत्ता इस समस्त प्राण प्रतिष्ठा के मन्त्राक्षरों से व्यापक करे । इसके बाद जगन्मयी जीवभूता महादेवीं का ध्यान करे ॥ ८४ ॥

ध्यानम्

**रक्ताब्धिपोतारुण मध्यसंस्थां**
**पाशाङ्कुशाविक्षुशरासबाणान् ।**
**शूलं कपालं दधतीं कराब्जै**
**रक्तां त्रिनेत्रां प्रणमामि देवीम् ॥ ८५ ॥**

**रक्ताब्धीति । रक्तेति पीतविशेषणम् । आयुधध्यानं तु वामाद्यूर्ध्वयोराद्ये । तदधस्तनयोर्मध्ये । तदधस्तनयोः कपालशूले इति ॥ ८५ ॥**

लाल वर्ण के समुद्र में रक्त वर्ण के पोत में संनिवास करने वाली हाथों में पाश, अंकुश, इक्षु का धनुष, बाण, शूल एवं कपाल धारण किये हुये, रक्त वर्ण वाली तीन नेत्रों से विभूषित जीवभूता महादेवी को मैं प्रणाम करता हूँ ॥ ८५ ॥

पुरश्चरणादिकथनम्

**एवं ध्यात्वा जगद्धात्रीं लक्षमेनं जपेन्मनुम् ।**
**जुहुयात्तद्दशांशेन चरुभिर्घृतसंयुतैः ॥ ८६ ॥**

**तद्दशांशेनेत्यस्यायमर्थः । ॐ आं स्वाहा ॐ ह्रीं स्वाहा ॐ क्रीं स्वाहा ॐ यं मृतायै स्वाहा । एवं राद्यक्षरयुताभिः वैवस्वताद्याभिः सकृत् सकृत् हुत्वा ॐ क्षं सं हं सः ह्रीं ॐ इत्यक्षरैरपि तथा हुत्वा मूलेनोक्तसंख्यां जुहुयादिति । अयमर्थः पद्मपादाचार्याणां सम्मतः ॥ ८६ ॥**

देवी का इस प्रकार ध्यान कर इस मन्त्र का एक लाख जप करे । तदनन्तर घृत मिश्रित खीर के द्वारा उसका दशांश होम करें ॥ ८६ ॥

**षट्कोणाढ्ये शक्तिपीठे विधिनाऽनेन पूजयेत् ।**
**अर्चयेत् षट्सु कोणेषु ब्रह्माणं विष्णुमीश्वरम् ॥ ८७ ॥**
**वाणीं लक्ष्मीमुमां पश्चात् षडङ्गानि प्रपूजयेत् ।**
**दलेषु मातरः पूज्यास्तद्बाह्ये लोकपालकाः ॥ ८८ ॥**
**एवं प्रपूजयेद्देवीं सुगन्धिकुसुमादिभिः ।**
**इति संसाधितो मन्त्रः षट्कर्मफलदो भवेत् ॥ ८९ ॥**

**शक्तिपीठ इत्यनेन नवमोक्ताः पीठशक्तयोऽत्र पूज्या इत्युक्तम् । पूजयेदिति । जगद्धात्रीमिति पश्चात्तनेन सम्बध्यते । अनेन वक्ष्यमाणेन । तमेव विधिमाह अर्चयेदिति । तत्र प्रकारः । प्राङ्निर्ऋतिवायुकोणस्थाः ब्रह्मविष्णवीशाः आग्नेय-वारुणेशेषु वाण्याद्या इति परमगुरवः । प्रागुक्तं ब्रह्मादीनां शक्तीनां च बीजमनुसन्धेयम् । प्रपूजयेदिति केसरेषु ॥ ८७-८९ ॥**

षट्कोण से युक्त शक्ति पीठ (द्र. ९,१६-१७) में इस प्रकार की विधि से देवी का पूजन करे । षट्कोणों में ब्रह्मा, विष्णु, महेश्वर, वाणी (सरस्वती), लक्ष्मी और उमा की पूजा करे, (पूर्व, नैर्ऋत्य और वायुकोण में क्रमशः ब्रह्मा, विष्णु और महेश्वर की, आग्नेय, पश्चिम तथा ईशान में वाणी आदि देवियों की) अष्टदलों में मातृकागणों की और उसके बाहर लोकपालों की पूजा करे । इसके बाद केशरों पर सुगन्धित पुष्पादि के द्वारा देवी की पूजा करे । जब इस प्रकार मन्त्र सिद्ध कर लिया जाता है तब उसके द्वारा किये गये षट्कर्म (द्र. २३. १२१-१२३) फलदायी होते हैं ॥ ८७-८९ ॥

**स्थापयेन्मनुनाऽनेन प्राणान् सर्वत्र देशिकः ।**
**बीजान्तेऽमुष्यशब्दानामादौ दूतीः प्रयोजयेत् ॥ ९० ॥**
**मृता वैवस्वता भूयो जीवहा प्राणहा ततः ।**
**आकृष्या ग्रथनी पश्चात् प्रमादा विस्फुलिङ्गिनी ॥ ९१ ॥**
**क्षेत्रज्ञप्रतिहार्येताः प्राणदूत्यो नव स्मृताः ।**

सर्वत्रेति आत्मयन्त्रपुत्तल्यादौ । दूतीमन्त्रानुद्धरति बीजेति । बीजान्ते पाशादिहंसमन्त्रान्ते । केचन बीजान्त इति बीजत्रयान्त इत्याहुः । तदसम्बद्धम् । आचार्यवचनविरोधात् । अमुष्यशब्दानामादाविति चासम्बद्धं स्यात् । अमुष्यशब्दानामादाविति। साध्यनाम्न आदौ ।

तदुक्तम्—अथ यादीन् दूतीश्चोक्त्वा साध्यनामाऽथ मन्त्री । इति ।

आं ह्रीं क्रों यं रं लं वं शं षं सं ह्रीं ॐ क्षं सं हं सः ह्रीं ॐ यं मृते अमुष्य मृतात्मकान् प्राणानिहाहर प्राणा इह प्राणा इति वा इहैवेत्याद्योमन्तमुक्त्वा पुनरामादि ओमन्तमुक्त्वा यं मृते अमुष्य मृतात्मकं जीवमिहाहर जीव इह स्थित इति वा इहैवेत्याद्योमन्तमुक्त्वा पुनरामादि ओमन्तमुक्त्वा यं मृते अमुष्य मृतात्मकानि सर्वेन्द्रियाणि इहाहर सर्वेन्द्रियाणि इह वा पुनरिहेत्यादि ओमन्तमुक्त्वा यं मृते अमुष्य मृतात्मकान् वाङ्मनश्चक्षुःश्रोत्रघ्राणप्राणान् इहाहर वाङ्मनश्चक्षुःश्रोत्रघ्राणप्राणा इह वा । इहैवेत्यादि ओमन्तं वदेत् । एवं वैवस्वतादिमन्त्रा ऊहनीयाः ॥ ९०-९२ ॥

आचार्य इस प्रकार प्राण प्रतिष्ठा मन्त्र से मूर्त्ति में सर्वत्र प्राण प्रतिष्ठा करे । जहाँ मन्त्र में अमुष्य शब्द आया है वहाँ आत्मा में, यन्त्र में और पुतली में प्राण प्रतिष्ठा के समय आदि में बीज मन्त्र का उच्चारण कर दूती मन्त्र का प्रयोग कर तदनन्तर प्राण प्रतिष्ठा करे ।

अब **दूती मन्त्र का उद्धार** कहते हैं—१. मृता, २. वैवस्वता, ३. जीवहा, ४. प्राणहा, ५. आकृष्या, ६. ग्रथनी, ७. प्रमादा, ८. विस्फुलिङ्गिनी और ९. क्षेत्रज्ञ प्रतिहारी—ये नव प्राणदूतियाँ कही गई हैं ॥ ९०-९२ ॥

**विमर्श**—इसके प्रयोग का स्वरूप राघवभट्ट कृत पदार्थादर्श की टीका में देखिये ॥ ९०-९२ ॥

**पाशेन बद्धचेष्टस्य शक्त्या स्वीकृतचेतसः ॥ ९२ ॥**
**अङ्कुशेनाहृतस्याभिः साध्यस्याऽसून् समाहरेत् ।**
**द्वादशाङ्गुलमानेन कृत्वा साध्यस्य पुत्तलीम् ॥ ९३ ॥**
**तस्यां प्राणात्मकं यन्त्रं सकीटं हृदये न्यसेत् ।**
**निशीथसमये साध्ये सुप्ते तस्य हृदम्बुजे ॥ ९४ ॥**

युगपद्वा प्राणप्रतिष्ठाप्रकारमाह पाशेनेत्यादिना सर्वेषु कर्मस्वित्यन्तेन । आभिर्दूतीभिः । प्राणात्मकं यन्त्रं वक्ष्यमाणं सकीटम् । तत्र प्राणप्रतिष्ठारम्भात्

प्रागेव साध्यप्रतिकृतेः हृदये यन्त्रं सजीवं कीटं च निक्षिप्याच्छाद्य प्रयोगमारभेतेत्यर्थः । प्राणप्रतिष्ठायां कर्त्तव्यमाह निशीथेति । पद्मपादाचार्यास्तु कालदण्डेन सन्ताड्य बोधनमाहुः । अन्यथा प्राणप्रतिष्ठायोगादिति ।

बद्धा तं च निपीडमेव सहसा कालस्य यष्ट्या शिर ।
स्याताड्य क्षुभिताखिलेन्द्रियगणं साध्यं स्मरेत् साधकः ॥

इत्युक्तेः ॥ ९२-९४ ॥

ये दूतियाँ शत्रु को पाश में बाँधकर उसकी समस्त चेष्टायें बन्द कर देती हैं, शक्ति के द्वारा उसकी सारी चेतना लुप्त कर देती है और अंकुश के द्वारा उसके प्राणों का अपहरण कर लेती है । इस प्रकार अपने साध्य शत्रु के प्राणों को अपहरण करने की भावना करे, अथवा १२ अङ्गुल की साध्य शत्रु की प्रतिमा बनावें । प्राण प्रतिष्ठा के पहले उसके हृदय में वक्ष्यमाण भृङ्गी नाम के कीट के सहित उक्त प्राणात्मक यन्त्र स्थापित करे । फिर प्रयोग आरम्भ करे ॥ ९२-९४ ॥

आधी रात के समय जब शत्रु सो जावें, उस समय अपने हृदय में, साध्य हृदय में तथा पुत्तली के हृदय में भृङ्गाकार तत्तद् देवताओं का इस प्रकार से ध्यान करे । पूर्वोक्त मृता आदि (द्र. २३. ९१) दूतियों का पुत्तली के हृत् कमल रूप आठ दलों में भृङ्गाकार रूप से, यं रं लं वं शं षं सं हौं रूप (मृतादि दूतियों) का साध्य के हृदय की कर्णिका में भृङ्गाकार रूप से, तथा स्वहृदय कमल में भृङ्गी स्वरूप में ध्यान करे ॥ ९४ ॥

दलेषु वायुवह्नीन्द्रवरुणानामतः परम् ।
ईशराक्षसशीतांशुयमानां कर्णिकान्तरे ॥ ९५ ॥
यादीन् हंससमायुक्तान् भृङ्गाकाराननुस्मरेत् ।
शिरोबिन्दुसमुद्भूत तन्तुसम्बद्धविग्रहान् ॥ ९६ ॥
एवमात्महृदम्भोजे भृङ्गीरूपान् धिया स्मरेत् ।
आत्महृत्पद्मगा भृङ्गीः प्रस्थाप्य श्वासवर्त्मना ॥ ९७ ॥
एकैकात् साध्यहृत्पद्माद् भृङ्गमेकैकमानयेत् ।
पुत्तल्यां स्थापयेन्मन्त्री स्वचित्ते वा विधानवित् ॥ ९८ ॥
तन्तुच्छेदं प्रकुर्वीत वह्निबीजेन संयतः ।
आकृष्टान् साध्यहृद्भृङ्गान् भुवा संस्तम्भयेत्ततः ॥ ९९ ॥
एवमेकादशावृत्तीः कुर्यात् सर्वेषु कर्मसु ।
वश्याकर्षणयोर्यादीनरुणान् संस्मरेत् सुधीः॥ १०० ॥
मोहविद्वेषयोर्धूम्रान् कृष्णान्मारणकर्मणि ।
पीतां संस्तम्भने ध्यायेत् प्राणाकर्षणकर्मणि ॥ १०१ ॥

आकृष्टान् साध्यहृत्प्राणान् स्थापयेदात्मनो हृदि।
क्रूरकर्मसु पुत्तल्यां तेषां स्थापनमीरितम् ॥ १०२ ॥
प्राणान् साध्यस्य मण्डूकानात्मनस्तु भुजङ्गमान् ।
संस्मरेत्तत्र निपुणः सदा क्रूरेषु कर्मसु ॥ १०३ ॥

स्वहृदये साध्यहृदये पुत्तलीहृदये च मृतादिदूतीनां स्थानमाह दलेष्विति । भृङ्गाकाराननुस्मरेदिति। याद्यक्षररूपमृतादीन् साध्यहृत्पद्मपत्रेषु कर्णिकायां भृङ्गरूपान् स्वहृदयपद्मे भृङ्गीरूपान् ध्यायेदित्यर्थः । शिर इति । यकारादिबीजानां शिरसि ये बिन्दवः तत्समुद्भूता ये तन्तवः तैः सम्बद्धविग्रहानिति । तदुक्तमाचार्यैः—'स्वीयबिन्दुप्रबद्धान्' इति । पुत्तल्यामिति । क्रूरकर्मणि । स्वचित्ते इति वश्यादौ । विधानविदिति । स्ववहन्नाड्या प्रवेशनिर्गमनंकुश इत्युक्तम् । वह्निबीजेन रमित्यनेन । संयतः अस्मिन्नस्मिन् दले मृतादिस्थानमिति सावधान इत्यर्थः । भुवा ग्लौमिति बीजेन ।

तत्र प्रकारः—साध्यस्य शक्तिं पाशशक्तितेजोऽङ्कुशमहाभ्रमरकालदण्डरूपेण पञ्चधा निःसार्य पाशबीजमुच्चरन् साध्यं पाशेन गले बद्ध्वा शक्तिबीजतेजसा तं स्ववशे कृत्वाऽङ्कुशेनाकृष्याऽग्रतः संस्थाप्य याद्यष्टकमुच्चरन् साध्यस्य त्वगादीन् व्याप्यापक्रम्य महाभृङ्गेण साध्यं कवलीकृत्य कालदण्डताडनेन सुप्तं तं सम्बोध्य क्षमिति सपरिवारमुन्मूलीकृत्य समिति स्वप्राणशक्तिरूपमहाभ्रमरेण मेलयित्वा हंस इति स्वैक्यं सम्भाव्य ह्रीमीमिति वश्यादौ जीवनाय प्लावनं कृत्वा यं मृते इत्यादिना स्वमृतां सम्बोध्य अमुष्य मृतात्मकाः इह प्राणा इत्यादिना स्वमृताप्राणानितरप्राणैः संयोज्य रमिति साध्यमृतातन्तुच्छेदं विधाय सकीटहृदयायां पुत्तल्यामात्मनि वा साध्यमृताप्राणान् संस्थाप्य ग्लौमिति संस्तभ्य तस्य मृताजीवादिकमप्येवमानयेत् । युगपदेव वा मृताप्राणादीन् स्थापयेत् । ततः स्वहृदि चेत्—आं ह्रीमित्यादि मयि प्राणा इह प्राणा मयि जीव इह स्थित इत्यादिरूपम् । पुत्तल्यां चेत्—पुत्तल्यां प्राणा इह प्राणा पुत्तल्यां जीव इह स्थित इति जपेत् । इत्थं मृताप्रतिष्ठाक्रमः । एवं वैवस्वतादिप्राणा अपि स्थापनीयाः । ततो यादीन् होमन्तानुक्त्वा साध्यस्य धातून् जीवं च सपरिकरं पुनः स्वमण्डले सङ्कोचितं कवलीकृत्य यादीन् दूतींश्च स्वस्य सम्बुद्ध्यन्तान् साध्यस्य चामुष्य प्राणानिहाहर अमुष्य प्राणा इह प्राणा इति चोक्त्वा पुनरपि अमुष्य धातूनिहाहरेत्यादि वदेत् । एवं जीवेऽपि । अयमेव प्रकारः पुत्तल्यामपि । तदुक्तम्—

आकृष्टानां साध्यदेशादसूनां पुत्तल्यादावप्ययं स्यात् प्रकारः ॥ इति ।

एवमिति । पूर्वोक्तं कर्म एकादशावृत्तिं कुर्यात् । अयं च पूर्वावधिः । इत ऊर्ध्वं यदृच्छया कुर्यात् ।

तदुक्तम्—प्राणप्रतिष्ठाकर्मेदं विधायैकादशावरम् । इति ॥ ९५-१०३ ॥

अब अपने हृदय, साध्य के हृदय और पुत्तली के हृदय में मृता आदि दूतियों का स्थान कहते हैं—उसके हृत्कमल के पत्तों पर वायु, अग्नि, इन्द्र तथा

वरुण देवताओं का, इसके बाद ईश्वर, राक्षस, चन्द्रमा तथा यम को हंस मन्त्र (सोऽहम्) से युक्तकर हृतकमल की कर्णिका में और यादि वर्ण, (य र ल व श ष स ह होम्) के रूप में तथा भृङ्ग के आकार रूप में ध्यान करे। इसी प्रकार अपने हृदय में यकारादि बीज मन्त्रों के शिर में रहने वाले जो बिन्दु उस बिन्दु से बने हुये तन्तुओं से बँधे शरीर वाले भृङ्ग का ध्यान करे। तदनन्तर अपने हृदय कमल में रहने वाले भृङ्गी को एक एक के क्रम से श्वास मार्ग से बाहर निकाल कर शत्रु के हृदय पद्म में रहने वाले भृङ्गी को बाहर ला कर पुत्तली में स्थापित करे अथवा अपने चित्त में स्थापित करें। इसके बाद वह्नि बीज (रँ) को पढ़कर तन्तु को जला देवें और साध्य के हृदय से निकाले गये भृङ्गियों को पृथ्वी बीज (ग्लौं) इस मन्त्र से स्तम्भित करे, (इसकी विधि पदार्थादर्श में द्रष्टव्य हैं) इस प्रकार भृङ्गादि विधि का प्रयोग ग्यारह बार सभी कर्मों में करे ॥ ९५-१०० ॥

बुद्धिमान् वश्य तथा आकर्षण कर्म में उपर्युक्त यकारादि वर्णों का अरुण वर्ण स्मरण करे। मोहन और विद्वेष कर्म में धूम्रवर्ण, मारण कर्म में कृष्ण वर्ण तथा स्तम्भन कार्य में पीत वर्ण का ध्यान करे। साध्य के प्राणाकर्षण कर्म करते समय उसके हृदय स्थल से निकाले गये प्राणों को अपने हृदय प्रदेश में स्थापित करे तथा क्रूर कर्म (मारण) करते समय उसके प्राणों को पुत्तली में स्थापित करे— ऐसा कहा गया है ॥ १००-१०२ ॥

क्रूर कर्म में कुशल तन्त्रवेत्ता साध्य के प्राण को मण्डूक रूप में तथा अपने को साँप के रूप में सदा ध्यान करे ॥ १०३ ॥

### प्राणप्रतिष्ठायन्त्रम्

**वाय्वग्निशक्रवरुणेश्वरराक्षसेन्दु-**
**प्रेतेशपत्रलिखितैरथ यादिवर्णैः ।**
**बिन्द्वन्तिकैः क्षगतहंससमेतसाध्यं**
**प्राणात्मयन्त्रमथ वर्णवृतं धरास्थम् ॥ १०४ ॥**
**इत्थं प्रयोगकुशलो मनुनाऽनेन मन्त्रवित् ।**
**वशयेत्सकलान्देवान् किं पुनः पार्थिवान् जनान् ॥ १०५ ॥**

**यन्त्रमाह वाय्विति । यादिवर्णैरिति होमन्तैः । धरास्थमिति । बाह्ये भूगृहावृतमित्यर्थः ।**

**पद्मपादाचार्यास्त्वन्यथा यन्त्रमाहुः । तद्यथा—अष्टदलमध्यगतशक्तौ साध्यादिकमालिख्य पाशाङ्कुशाभ्यां तां संवेष्ट्य याद्यष्टकमष्टदलेषु लिखित्वा अवशिष्टेन बहिः संवेष्ट्य भूपुरद्वये पाशाङ्कुशौ लिखेदिति यन्त्र विधिरिति ॥ १०४-१०५ ॥**

अब **प्राणात्म यन्त्र के निर्माण का प्रकार** कहते हैं—अष्टदल कमल निर्माण करे उसके पत्रों पर, बिन्दु युक्तयकारादि वर्णों (यकार से हौं वर्ण पर्यन्त यं

रं लं वं शं षं सं हौं) से युक्त क्रमशः वायु, अग्नि, शक्र वरुण, ईश्वर, राक्षस, चन्द्रमा तथा यम लिखे, मध्य में क्ष वर्ण तथा हंस मन्त्र (सोहम्) से युक्त साध्य का नाम लिखे। पश्चात् भूपुर से उसे घेर देवे। यही प्राणात्मयन्त्र की रचनाविधि है ॥ १०४ ॥

इस प्रकार इस मन्त्र का कुशल प्रयोक्ता इस मन्त्र के अनुष्ठान से सभी देवताओं को वश करने में समर्थ हो जाता है फिर पार्थिव जनों की बात ही क्या? ॥ १०५ ॥

## अथ मुद्राप्रकरणम्

**आवाहन्यादिका मुद्राः प्रवक्ष्यामि यथाक्रमम्।**
**याभिर्विरचिताभिस्तु मोदन्ते सर्वदेवताः॥ १०६ ॥**
**सम्यक् संपूरितः पुष्पैः कराभ्यां कल्पितोऽञ्जलिः।**
**आवाहनी समाख्याता मुद्रा देशिकसत्तमैः ॥ १०७ ॥**
**अधोमुखी कृता सैव प्रोक्ता स्थापनकर्मणि ।**
**आश्लिष्टमुष्टियुगला प्रोन्नताङ्गुष्ठयुग्मका ॥ १०८ ॥**
**सन्निधाने समुद्दिष्टा मुद्रेयं तन्त्रवेदिभिः ।**
**अङ्गुष्ठगर्भिणी सैव सन्निरोधे समीरिता ॥ १०९ ॥**
**उत्तानौ द्वौ कृतौ मुष्टी सम्मुखीकरणौ स्मृता ।**
**देवताङ्गे षडङ्गानां न्यासः स्यात् सकलीकृतिः॥ ११० ॥**

मुद्रा आह आवाहनीति । रा दाने । मुदं राति ददाति मुद्रेति निर्वचनम् । इदमेव मोदन्ते सर्वदेवता इत्यनेन सूचितम् । अतएव तद्दर्शनेन देवताहर्षोत्पत्तिः । स्वाङ्गुल्यो हि पञ्चभूतात्मिकाऽङ्गुष्ठाद्याः आकाशवाय्वग्निसलिलभूरूपाः । तासां मिथः संयोगरूपसङ्केतात् कोऽपि देवताप्रगुणीभावपूर्वको मोदः सान्निध्यकरो भवति । तदुक्तम्—

पृथिव्यादीनि भूतानि कनिष्ठाद्याः क्रमान् मताः ।
तेषामन्योन्यसंभेदप्रकारैस्तत्रपञ्चता ॥
अर्चने जपकाले तु ध्याने काम्ये च कर्मणि ।
तत्तन्मुद्राः प्रयोक्तव्या देवतासन्निधापिकाः ॥ इति ॥

अन्यत्रापि—मुदं रातीतिमुद्रा स्याद्येनैका मुष्टिरेव तु ।
स्वल्पभेदात् कोपहर्षौ प्राणिनां जनयत्यतः ॥
तेनैव सर्वदेवानां मुद्रा हर्षप्रदा मता ।
पूजाकाले दर्शनीया मुद्रास्ताः सर्वदा शिवे ॥ इति ॥

तथा— खादिमार्गक्रमाद् भूतान्यङ्गुष्ठाद्यङ्गुलिक्रमात् ।
कापि मुत्तन्मिथोयोगात् सान्निध्यप्रह्वताकरी ॥ इति ॥

**अनयाहूतो भवेदिति प्रार्थनपूर्वकमावाहनी कार्या ।**

**तन्त्रान्तरे तु विशेषः—**

**हस्ताभ्यामञ्जलिं कृत्वाऽनामिकामूलपर्वणोः ।**
**अङ्गुष्ठौ निक्षिपेत् सेयं मुद्रा त्वावाहनी स्मृता ॥ इति ।**

**एष एव साम्प्रदायिकः पक्षः ॥ १०६-११० ॥**

**मुद्राओं के लक्षण**—अब मैं क्रमानुसार आवाहनादि मुद्रा का वर्णन करता हूँ, जिन मुद्राओं के करने से सभी देवता प्रसन्न हो जाते हैं ॥ १०६ ॥

**विमर्श**—मुद्रा शब्द दानार्थक रा धातु से निष्पन्न है । मुदं = प्रसन्नता, राति = देती है वह **मुद्रा** कही जाती है ॥ १०६ ॥

दोनों हाथों में अच्छी तरह पुष्प भर कर अञ्जलि बना लेवे तो आचार्यों ने इसे **आवाहनी मुद्रा** कहा है ॥ १०७ ॥

यदि उस अञ्जलि को स्थापन कर्म में अधोमुखी बना लें तो वह **स्थापनी मुद्रा** कही जाती है ॥ १०८ ॥

दोनों अंगूठों को ऊपर उठा कर दोनों मुट्ठियों को एक में सटा दें तो तत्त्ववेदियों ने इस मुद्रा को **सन्निधान मुद्रा** के नाम से कहा है, दोनों अंगूठों को मुट्ठी के भीतर रखकर दोनों मुट्ठी एक में सटा लेने से **सन्निरोधिनी मुद्रा** हो जाती है ॥ १०९ ॥

दोनों मुट्ठी को ऊपर उठाये रखना **सम्मुखीकरणी मुद्रा** होती हैं देवता के अङ्गों में षडङ्गन्यास करने का नाम **सकलीकरण** होता है ॥ ११० ॥

**सव्यहस्तकृता मुष्टिर्दीर्घाधोमुखतर्जनी ।**
**अवगुण्ठनमुद्रेयमभितो भ्रामिता सती ॥ १११ ॥**

**भ्रामितेति वामावर्त्तक्रमेण । साम्प्रदायिका हस्तद्वयेनेमां मुद्रामाहुः । तदुक्तम्—वर्मणा समवगुण्ठ्य दोर्युजा । इति ॥ १११ ॥**

दाहिने हाथ की मुट्ठी बाँध कर अंगूठा तथा तर्जनी को नीचे की ओर कर ले और उसे देवता के चारों ओर वमावर्त्त क्रम से घुमा देवे तो **अवगुण्ठन मुद्रा** कही जाती है ॥ १११ ॥

**अन्योन्याभिमुखाश्लिष्टा कनिष्ठानामिका पुनः ।**
**तथा च तर्जनीमध्या धेनुमुद्रा समीरिता ॥ ११२ ॥**
**अमृतीकरणं कुर्यात्तया देशिकसत्तमः ।**

**धेनुमुद्रामाह अन्योन्येति । कनिष्ठाऽनामिका अन्योन्याभिमुखाश्लिष्टा तर्जनी मध्या तथैवान्योन्याभिमुखाश्लिष्टेत्यर्थः । हस्तद्वयाङ्गुल्यः अन्योन्यान्तरालप्रदेशेन**

पूर्वमध्यतः कृतदक्षकनिष्ठाव्यतिषक्ताः कार्याः । तत्र दक्षकनिष्ठा दक्षानामापृष्ठमुल्लङ्घ्य तद्वामभागमागता वामानामिकया योज्या । वामा कनिष्ठिका तु यथास्थितैव दक्षानामया । एवं वामतर्जनी वाममध्यमापृष्ठमुल्लङ्घ्य तद्दक्षभागागतदक्षमध्यमया योज्या । दक्षतर्जनी यथास्थितैव वाममध्यमया योज्या ।

तदुक्तम्— वामाङ्गुलीर्दक्षिणानामङ्गुलीनां च सन्धिषु ।
प्रवेश्य मध्यमाभ्यां तु तर्ज्जन्यौ द्वौ प्रयोजयेत् ।
कनिष्ठे द्वेऽनामिकाभ्यां युज्यात् सा धेनुमुद्रिका ॥

इति ॥ ११२-११३ ॥

दोनों हाथ की कनिष्ठा और अनामिका अङ्गुलियों के अग्रभाग को परस्पर एक दूसरे से मिला देवें, पुनः तर्जनी और मध्यमा को भी इसी प्रकार परस्पर एक दूसरे में मिला देवे तो वह **धेनुमुद्रा** हो जाती है । आचार्य इसी धेनुमुद्रा से अमृतीकरण करे ॥ ११२-११३ ॥

**अन्योन्यग्रथिताङ्गुष्ठा प्रसारितकराङ्गुली ॥ ११३ ॥**
**महामुद्रेयमुदिता परमीकरणे बुधैः ।**
**प्रयोजयेदिमां मुद्रां देवतायागकर्मणि ॥ ११४ ॥**

महामुद्रामाह—अन्योन्येति । पाण्योरङ्गुष्ठौ परस्परग्रन्थनेन ग्रन्थिरूपौ शेषाः सरलाः । एता मुद्रास्तत्तन्मन्त्रे च मदुक्तविशेषमुद्राश्च न कस्यचिद्दर्शयेत् ।

तदुक्तं महासंहितायाम्—

न जातु दर्शयेन् मुद्रा महाजनसमागमे ।
गुह्यमेतन् मुनिश्रेष्ठ तस्माद्रहसि योजयेत् ॥
नाऽदीक्षितस्य मुद्राणां लक्षणानि प्रकाशयेत् ।
क्षुभ्यन्ति देवतास्तस्य विफलं च भवेदिति ॥

अन्यत्राऽपि— अक्षमालां च मुद्रां च गुरोरपि न दर्शयेत् । इति ॥

अथ चैताः सर्वा रहस्येव कुर्यात् । मोक्षार्थिना मनसैव दर्शयितव्याः ।

तदाहुः— मानसरूपसंकल्पा मुद्रा मोक्षार्थिनां विदुः ।
इतरेषां तु सर्वेषां हस्ताभ्यां शस्यते बुधैः ॥

इति ॥ ११३-११४ ॥

दोनों हाथ के दोनों अगूठों को एक दूसरे में ग्रथित कर मिला दें और शेष अङ्गुलियों को फैलाये रखे, तो इसे महामुद्रा कहते हैं, इस मुद्रा का प्रयोग परमीकरण क्रिया में करना चाहिए । देवता याग कर्म में इस मुद्रा का प्रयोग करना चाहिए ॥ ११३-११४ ॥

अष्ट विष, (द्र. २३, ११४) चिता का अङ्गार और निम्ब के निर्यास का कज्जल बना कर इसे लिखना चाहिए। यह निग्रह नामक यन्त्र है। इसे कौवे के पंखे से प्रेत के कपड़े पर लिखना चाहिए। जब दक्षिण दिशा की वायु बहे उस समय अर्धरात्रि में यदि विभीतक के नीचे इस यन्त्र को गाडे तो शत्रु का मरण, वल्मीक में गाड़ने से महारोग, श्मशान में गाड़ने से पतन तथा चतुष्पथ में गाड़ने में अङ्ग वैकल्यता प्राप्त करता है। यदि यही मन्त्र धोबी के पत्थर अथवा शिवालय के ईंट पर लिखे, तदनन्तर मर्कटी, विष (कुचिला) एवं ब्रह्मदण्डी को पीस कर, उसका लेप कर, अधोमुख करके जिस स्थान में गाड़ देवे, उस ग्राम अथवा नगर में बारम्बार अशुभ होता रहता है (यन्त्र में साध्य नाम के स्थान में जिसका अशुभ करना हो उस (द्र. २४. २३) ग्राम तथा नगर का नाम लिखे) ॥ २६-३० ॥

**लिखेच्चतुःषष्टिपदेषु कालीमीशादिकन्यादि यमात्मकेन।**
**श्लोकेन संवेष्ट्य कृशानुवायु बीजावृतं यन्त्रमिदं विदध्यात् ॥३१॥**
**लिप्तं विषमसीदण्डीमर्कटीभिरधोमुखम्।**
**निखनेद्यत्र तत्र स्यात् नृणामुच्चाटनं सदा।**
**शस्यहानिमनावृष्टिं गवां नाशं करोति तत् ॥ ३२ ॥**

उच्चाटनकृदाह लिखेदिति। त्वरिताचतुःषष्टिपदवदिदमपि। काली मित्यनन्तरोक्तश्लोकरूपकालीमन्त्रम्। यमात्मकेनेत्युत्तरत्र सम्बन्धते। वेष्टनं पूर्वयन्त्रोक्तवत्। अत्र यमवेष्टनात् प्राक् वषडन्तत्वरितावेष्टनमपि। अत्र सम्प्रदायात् रेफवेष्टने साध्यसाधककर्मयुक्तरेफेण वेष्टयेदिति। स्त्रियमुद्दिश्य तु पूर्वोक्तमनुसन्धेयम्।

तन्त्रान्तरे तु— चतुःषष्टिपदे कालीमीशदोषाचरादिकम्।
विन्यस्य मध्ये चतुर्षु हुङ्काराद्यक्षराणि च ॥
अन्तराले तु तेषां च साध्यानां नाम कर्म च।
शिखान्तविद्यया याम्यमनुना दहनेन च ॥
वायुना च समावेष्ट्य क्लृप्तमेतत् सुसाधितम्।
मारणोत्सादनादीनि कर्माण्याशु प्रसाधयेत् ॥ इति।

मसी पूर्वोक्तं कज्जलम्। दण्डी ब्रह्मदण्डी। मर्कटी कपिकच्छु। उभयोस्त्वरिता देवता ॥ ३१-३२ ॥

**उच्चाटन मन्त्र** कहते हैं—पूर्व से पश्चिम, उत्तर से दक्षिण, पर्यन्त नव नव रेखा खींच कर ६४ कोष्ठक का निर्माण करें। पुनः उसमें ईशान कोण से नैर्ऋत्य कोण तथा नैर्ऋत्य से ईशान कोण पर्यन्त पूर्वोक्त (द्र. २४. २४) काली मन्त्र लिखे। पुनः उसे यमात्मक मन्त्र (द्र. २४. २५) से परिवेष्टित कर देवें उसको साध्यनामाक्षर से संयुक्त अग्निबीज (रँ) तथा वायु बीज (यँ) से आवृत कर यन्त्र निर्माण करे ॥ ३१ ॥

उसको विष (कुचिला) के काजल, ब्रह्मदण्डी तथा मर्कटिका के लेप से युक्त

कर अधोमुख करके जिस ग्राम तथा नगर में गाड़े वहाँ मनुष्यों का उच्चाटन होता रहता है, शस्य की हानि होती है तथा अनावृष्टि एवं गौओं का विनाश होता रहता है ॥ ३२ ॥

वश्यकृद्यन्त्रम्

**आख्यां तुम्बुरुमध्यतः स्मरगतामालिख्य जम्भादिकां**
**विद्यां दिग्गतपत्रकेष्वथ लिखेत् देवीर्दलेषु स्मरम्।**
**कोणस्थेषु सनामकं बहिरतः पाशाङ्कुशाभ्यां वृतं**
**यन्त्रं वश्यकरं ग्रहादिभयहृत् क्षुद्राभिचारापहम्॥ ३३ ॥**
**जम्भे जम्भिनि ठद्वन्द्वं मोहे मोहिनि ठद्वयम् ।**
**अन्धे अन्धिनि ठद्वन्द्वं रुन्धे रुन्धिनि ठद्वयम्॥ ३४ ॥**

**वश्यकृदाह—आख्यामिति । आख्यां कर्मसहितं साध्यसाधकनाम । तुम्बुरुमध्यतः कर्णिकास्थतुम्बुरौ । अथ देवीरिति तुम्बुरुमन्त्रोक्तदेवीबीजचतुष्टयं सनामकं स्मरञ्च विदिग्दलेषु लिखेत् । तेनायमर्थः सम्पन्नः । देवीबीजमध्ये कामबीजं तन्मध्ये नाम एवं कोणचतुर्दलेष्विति । तुम्बरुः देवता ॥ ३३-३४ ॥**

अब पुनः **वशीकरण मन्त्र** कहते हैं—कर्णिका में दो तुम्बुरु के मध्य में साध्य साधक का नाम तथा जिस काम को करना हो वह काम लिखे । फिर कोणों में तुम्बुरु मन्त्रोक्त देवी बीज चतुष्ट्य के मध्य में नाम सहित काम बीज लिखे । फिर उसको बाहर से पाश (हुं फट्) और अंकुश (क्रौं) मन्त्र से घेर देवें । इस प्रकार का निर्मित यन्त्र वश में करने वाला, ग्रह बाधा दूर करने वाला तथा क्षुद्रमारण प्रयोगों को नष्ट करने वाला होता है ॥ ३३ ॥

'जम्भे जम्भिनि स्वाहा' के बाद 'मोहे मोहिनि स्वाहा', तदनन्तर 'अन्धे अन्धिनि स्वाहा', पुनः 'रुन्धे रुन्धिनि स्वाहा' ऊपर कही गई यह जम्भिनि विद्या है ॥ ३४ ॥

**हित्वा कामं लिखेत् शान्तिं यन्त्रेऽस्मिन् नृकपालके ।**
**सन्ध्यासु तापयेदेतदुच्चैः साध्यं वशं नयेत् ॥ ३५ ॥**

**हित्वा काममिति । कामबीजपञ्चकं हित्वा त्यक्त्वा शान्तिं दीर्घमीकारं सबिन्दुकं लिखेत् । अन्यत् पूर्ववत् । उच्चैरित्यतिशयेन ॥ ३५ ॥**

इस मन्त्र को लिख कर पुनः काम के पाँच बीजों को छोड़कर बिन्दु युक्त ईकार इतना मन्त्र मनुष्य की कपालास्थि पर लिखें, फिर उसे सायंकाल के समय आग में तपा देवें तो उससे साध्य वश में हो जाता है ॥ ३५ ॥

**हित्वा शान्तिं लिखेद्वर्म पटे वा नरचर्मणि ।**
**वह्निवायुगृहावीतं श्मशानस्थं रिपून् हरेत् ॥ ३६ ॥**

लिखेदिति शान्तिस्थाने । वर्म हुं । पटे प्रेतपटे । वह्निवायुगृहावीतमिति शेषः । अन्यत् पूर्ववत् ॥ ३६ ॥

इसप्रकार प्रेतवस्त्र पर उक्त मन्त्र को षट्कोण के मध्य में रहने वाले त्रिकोण में लिखकर शान्ति (दीर्घ) ईकार न लिख कर उसके स्थान पर हुं अस्त्र मन्त्र लिखे और उसे श्मशान में गाड़ दे तो वह शत्रु को विनष्ट कर देता है ॥ ३६ ॥

हित्वा वर्म लिखेदस्त्रं फलकेऽक्षतरुद्भवे ।
वह्निवायुयुतं नाम विषाढ्यरुधिरेण तत् ॥ ३७ ॥

अक्षतरुर्बिभीतकः । चत्वरे अङ्गणे । अत्रापि वह्निवायुगृहावीतमिति ज्ञेयम् ॥ ३७ ॥

विभीतक वृक्ष से बने हुये काष्ठ फलक पर षड्कोण के मध्यस्थ त्रिकोण में वर्म के स्थान पर अस्त्र (फट्) मन्त्र को वह्नि बीज (रँ) और वायु (यं) से युक्त कर विभमिश्रित रुधिर से लिखे तदनन्तर तुम्बुरु मन्त्र का जप कर आँगन में गाड़ देवे तो दो परस्पर मित्र शत्रुओं में आपस में विद्वेष हो जाता है ॥ ३७ ॥

चत्वरे निखनेत् जप्तं विद्वेषं कुरुते मिथः ।
हित्वा रेफयकारौ द्वौ लकारं मध्यतो लिखेत् ॥ ३८ ॥
धरापुरेण वीतं तदिष्टकान्तर्निवेशितम् ।
सर्वेषां स्तम्भनं कुर्यान्नाऽत्र कार्या विचारणा ॥ ३९ ॥

जप्तमिति तुम्बुरुबीजेन । हित्वेति तुम्बुरुबीजमालिख्य तत्र लकारं लिखेत् । धरापुरेणेति । वह्निवायुनिवृत्तिः । शेषं पूर्ववत् । इष्टकान्तः इष्टकाद्वयान्तः । अग्रिमभेदत्रये धरापुरमेव कार्यम् ॥ ३८-३९ ॥

षट्कोण के मध्य में स्थित त्रिकोण में रेफ यकार न लिख कर तुम्बुरु बीज लिख कर उसके पश्चात् लकार लिखे, उसे भूपुर से परिवेष्टित करें, पुनः दो ईटों के मध्य में उसे रख देवे तो वह सभी का स्तम्भन कर देता है, इसमें विचार की आवश्यकता नहीं । इसी प्रकार आगे के कहे गये सभी पत्रों को भूपुर से आवृत करना चाहिए ॥ ३८-३९ ॥

हित्वा लकारं तन्मध्ये वायुबीजं समालिखेत् ।
विषरक्तमसीकाकपुरीषैर्ध्वजवाससि ॥ ४० ॥
श्मशाने निहितं कुर्यात् कुलोच्छेदं स्ववैरिणाम् ।
मुक्त्वा वायुमयं बीजं तत्र फट्कारमालिखेत् ॥ ४१ ॥
परेतवस्त्रे काकस्य रुधिरेण यथाविधि ।
इप्सिते निखनेत् स्थाने विद्वेषं कुरुते नृणाम् ॥ ४२ ॥

तन्मध्ये तुम्बुरुमध्ये वायुबीजं यं लिखेत् । अन्यत् समानम् । रक्तमजारक्तम् । मसी पूर्वोक्तकज्जलम् । ध्वजवाससि । प्रेतपताकावस्त्रे ॥ ४० ॥

**यथाविधीति । काकपक्षलेखन्येत्युक्तम् । ईप्सित इति । ययोर्विद्वेषणं क्रियते ताभ्यां यत्रोल्लङ्घ्यते तत्र देश इत्यर्थः ॥ ४१-४२ ॥**

उक्त त्रिकोण में तुम्बुरु बीज लिख कर लकार के स्थान में वायु बीज (यँ) विष रक्त की मसी बना कर उसमें काक का विष्टा मिलाकर प्रेत के लिय बनाये गये ध्वज पर लिखे और उसे श्मशान में गाड़ देवे तो वैरियों के कुल का उच्छेद हो जाता है यदि उक्त स्थान पर वायु बीज (यँ) को हटा कर 'फट्कार' प्रेतवस्त्र पर काक के रुधिर से यथाविधि लिखें पुनः उसे जिसका अनिष्ट करना हो उसके घर में गाड़ देवे तो मनुष्यों में परस्पर विद्वेष हो जाता है ॥ ४०-४२ ॥

**अस्त्रबीजमपास्याऽस्मिन् ऌकारं सोर्णसंयुतम्।**
**विलिखेत् यन्त्रमेतत् स्यात् लोहत्रयसमावृतम् ॥ ४३ ॥**
**सर्वरोगप्रशमनं कृत्याद्रोहादिशान्तिदम्।**
**विहाय बीजं ऌङ्कारं ग्लौङ्कारं तत्र संलिखेत् ॥ ४४ ॥**
**क्षकारेणावृतं बाह्ये पाशाङ्कुशवृतं पुनः।**
**टपरेण वृतं भूयो भूमिमण्डलमध्यगम् ॥ ४५ ॥**
**लकारैर्बिन्दुसुयुक्तैर्वेष्टितं तद्बहिः क्रमात्।**
**सर्गान्तमातृकाबीजं सर्वं वृत्तेन वेष्टितम् ॥ ४६ ॥**
**कौशेयकर्पटे क्लृप्तमिष्टकाद्वयमध्यगम्।**
**सेनाग्रे निखनेद्यन्त्रं स्तम्भनं कुरुते ध्रुवम् ॥ ४७ ॥**

**बाह्ये इति । पश्चाद् बहिः । टपरेण ठकारेण । सर्गान्तेति । विसर्गान्ता ॥ ४३-४७ ॥**

उक्त त्रिकोण में अस्त्र हटा कर सकार अक्षर के सहित ऌकार लिखे । पुनः उसे लौहत्रय (ताम्र, रजत तथा सुवर्ण) मिश्रित यन्त्र में स्थापित कर धारण करे तो वह सारे रोगों को शान्त कर देता है । कृत्याजन्य उपद्रव तथा शत्रु कृत द्रोह विनष्ट हो जाते हैं, यदि उक्त त्रिकोण में ऌकार को हटा कर ग्लौंकार लिखे और उसे क्षकार से आवृत करे, पुनः बाहर उसे पाशांकुश (आं क्रों) से आवृत करे, उसे भी 'ठ' से आवृत करे पश्चात् उसे भूमि मण्डल के वर्ण (द्र) से आवृत करे, उसके भी बाहर बिन्दु संयुक्त सकार लिख कर वेष्टित करे, पुनः उसके बाहर विसर्ग युक्त मातृका बीज लिख कर उसके चारों ओर वृत्त का आकार बनाकर वेष्टित कर देवें । इस मन्त्र को रेशमी वस्त्र पर लिख कर दो ईंटों के बीच में स्थापित कर शत्रु सेना के आगे गाड़ देवे तो उस सेना का निश्चित रूप से स्तम्भन हो जाता है ॥ ४३-४७ ॥

### गारुडयन्त्रम्

**मध्ये श्रीनरसिंहबीजमथ तद्बाह्ये स्वरान् केसरे**
**वारीट्चन्द्रयमेन्द्रदिक्षु विलिखेन् मध्ये मनुं गारुडम्।**

**अन्तस्थान् मरुदग्निनिर्ऋतिशिवेष्वालिख्य वर्णावृतं**
**यन्त्रं सर्गिभिरष्टभिः परिवृतं संवर्त्तकैगारुडम् ॥ ४८ ॥**

गारुडयन्त्रमाह—मध्य इति । मध्ये कर्णिकायां श्रीयुक्तं नरसिंहबीजं षोडश-पटलोक्तम् । श्रीशब्देन चैकदेशो रेफो गृहीतः । स ऊर्द्ध इति ज्ञेयम् । तदुक्तं नारायणीये—बिन्दुमद्वह्निरूर्ध्वान्त्यकर्णिकायाम् । इति ।

वारीडिति पश्चिमदिक् । चन्द्रेति उत्तरदिक् । यमेति दक्षिणदिक् । इन्द्रेति पूर्वदिक् । विलिखेन् मध्य इति । गारुडमन्त्रान्त्यं कर्णिकायां लिखेदित्यर्थः । अन्त-स्थान् यरलवान् सबिन्दून् । वर्गावृतमिति प्रामादिकः पाठः। वर्णावृतमिति पाङ्कपाठः साम्प्रदायिकः । सर्गिभिर्विसर्गयुक्तैः। संवर्त्तकैः क्षकारैः। परिवृतमित्यष्टदिक्षु । तदुक्तं नारायणीये—वृतं लिप्या सर्गि कषाष्टकावृतमिदं यन्त्रं फणिभ्योऽवति । इति ।

अपेक्षितार्थद्योतनिकायां व्याख्यायते । लिप्यक्षरैर्मालेव वेष्टयित्वा सविसर्ग-मन्त्यमष्टदिक्षु लिखेदित्यर्थः इति । गरुडो देवता ॥ ४८ ॥

अब **गारुड़ यन्त्र** कहते हैं—अष्टदल कमल की कर्णिका में श्री (रं) युक्त नरसिंह बीज (क्ष्रौम्) लिखें । उसके बाहर केशरों पर षोडश स्वरों को लिखे । पश्चिम, उत्तर, दक्षिण तथा पूर्व की दिशाओं के मध्य में वक्ष्यमाण गारुड़ मन्त्र (द्र. २४-५०) लिखे । तदनन्तर वायव्य, आग्नेय, नैर्ऋत्य तथा ईशान कोणो में क्रमशः अन्तस्थ वर्णों 'य र ल व' को लिखे । पुनः उसे आठ विसर्ग युक्त क्षकार लिख कर चारों ओर से घेर देवे, यही गारुड़ मन्त्र हैं ॥ ४८ ॥

गारुडमन्त्रः

**संवर्त्तको नेत्रयुतः पार्श्वस्तारोऽग्निसुन्दरी ।**
**गारुडो मनुराख्यातो विषद्वयविनाशनः ॥ ४९ ॥**
**स्मरन् गरुडमात्मानं मन्त्रमेनं जपेन्नरः ।**
**विषमालोकनेनैव हन्यात् नागकुलोद्भवम् ॥ ५० ॥**

गारुडमन्त्रमाह संवर्त्तक इति । संवर्त्तकः क्षः नेत्रमिकारस्तद्युतः तेन क्षि । पार्श्वः पकारः तारः प्रणवः अग्निसुन्दरी स्वाहा । विषद्वयविनाशन इत्यनेन केवलमन्त्रस्यापि स्वतन्त्रतोक्ता । इदमेव यन्त्रफलम् । विषद्वयं स्थावरजङ्गमम् । मन्त्रस्य ऋष्यादिकं तन्त्रान्तराद्यथा—

ऋष्यादिका रुद्रपङ्क्तिगरुडाः परिकीर्त्तिताः ।
हृदयं ज्वलयुग्मान्ते महामतिपदं शिरः ॥
गरुडं चूडाननं स्याद्गरुडान्ते शिखि शिखा ।
कवचं प्रोच्य गरुडान् प्रभञ्जनयुगं ततः ॥
प्रभेदयुगं वित्रासयुक् युग् विमर्दय ।
नेत्रमन्त्रस्तूग्ररूपधर सर्व (र्प) विषं हर ॥
भीषयद्वयसर्वं स्याद्दहभस्मीकुरुद्वयम् ।

अस्त्रमन्त्रोऽप्रतिहतबलाप्रतिहतेति च ॥
शासनान्ते हुं फडन्तः स्वाहान्तैरेभिरङ्गकम् ।
नेत्रान्तमर्णकान् पादकटिहृद्वक्त्रमूर्धसु ।
अङ्गुष्ठादिष्वङ्गुलीषु न्यस्य देवं विचिन्तयेत् ॥
वर्गा (र्मा)न्तर्वह्नियुग्माक्षरकमलगतं पञ्चभूताद्यवर्णं
क्लृप्ताकल्पं फणीन्द्रैरभयवरकरं पद्मनेत्रं सुवक्त्रम् ।
दुष्टाहिच्छेदतुण्डं स(स्म)रदखिलविषप्रोषणं प्राणभूतं
प्राणिश्रेण्यास्त्रिवेदीतनुममृतमयं पक्षिराजं भजेऽहम् ॥ इति ।

एतदनन्तरं गरुडमुद्रा दर्शनीया । तल्लक्षणं चतुर्थपटले मदुक्तमनुसन्धेयम् । वर्णलक्षं जपेन्मन्त्रं जुहुयात्तद्दशांशतः । घृताक्तैः कृष्णकुसुमैर्मातृकाब्जे यजेदमुम् ॥ अङ्गाष्टनागदिक्पालतदस्त्राणि च पूजयेत् ॥ इति । बीजस्याऽपीदमेव ।

नारायणीये तु—एवमुक्तानि नेत्रान्तान्यङ्गानि वियतेश्च षट् ।
आजानुतः सुवर्णाभमानाभेस्तुहिनप्रभम् ॥
कुङ्कुमारुणमाकण्ठादाकेशान्तात् सितेतरम् ।
ब्रह्माण्डव्यापिनं तार्क्ष्यं रक्ताक्षं नागभूषणम् ॥
नीलाग्रनासमात्मानं हेमपक्षं स्मरेद् बुधः ।
कृष्णं विषस्य संग्रामे रक्ताभं स्तोभकर्मणि ॥
पीतं स्तम्भे शशिप्रख्यं नाशे तार्क्ष्यं विचिन्तयेत् ॥ इति ॥४९-५०॥

संवर्त्तक (क्षकार) उसे नेत्र (इकार) युक्त करे । पार्श्व (पकार) तार (प्रणव) तदनन्तर अग्निसुन्दरि (स्वाहा) यह गारुड़ मन्त्र का उद्धार कहा गया । इसका स्वरूप क्षिप्र ॐ स्वाहा हुआ । यह गारुड़ मन्त्र स्थावर तथा जङ्गम दोनों प्रकार के विषों का विनाशक है ॥ ४९ ॥

अपने को गरुड़ रूप में ध्यान कर साधक को इस मन्त्र का जप करना चाहिए । इस प्रकार का साधक विष को देखते ही उसे नष्ट कर देता है ॥ ५० ॥

### सञ्जीवनयन्त्रम्

**मध्ये वार्णं भृगुस्थं विलिखतु विधिवत्साध्यनाम्ना समेतं**
**किञ्जल्केषु स्वराः स्युर्वसुदलविवरेष्वालिखेन्मध्यबीजम् ।**
**काद्यर्णान् केसरेषु द्विगुणवसुदलेष्वर्पयेत् मध्यबीजं**
**यन्त्रं सञ्जीवनाख्यं सलिलपुरगतं क्षुद्ररोगापहारि ॥ ५१ ॥**

सञ्जीवनयन्त्रमाह मध्य इति । मध्ये इति कर्णिकायाम् । भृगुस्थं सकारस्थम् वार्णं वकारम् । तेन स्वमिति बीजं लिखेत् साध्यनाम्ना विधिवत्समन्वितमिति । विदर्भितमित्यर्थः । उक्तञ्च नारायणीये—

जीवं (बीजं) नामविदर्भितं कलशगं मध्ये लिखेत् । इति । मध्यबीजं स्वं । काद्यर्णान् सान्तान् । द्विगुणवसुदले षोडशदले । मध्यबीजं स्वं । सलिलपुरं प्रथमपटलोक्तम् । अत्र मृत्युञ्जयो देवता ॥ ५१ ॥

अब **सञ्जीवन मन्त्र का विधान** करते हैं—अष्टदल की कर्णिका में साध्य के नाम से संयुक्त सकार से युक्त वकार (स्वं) लिखे । केशरों पर स्वरों को लिखे और अष्टदल कमल पर मध्यबीज (स्वं) लिखे । पुन: उसके बाहर के षोडशदल कमल के केशरों पर ककार से लेकर सकारान्त वर्णों को लिखे । षोडश दलों पर जल मण्डल (प्रथम पटलोक्त) के वर्णों से युक्त मध्य बीज (स्वं) लिखे, तो इस प्रकार का यन्त्र समस्त क्षुद्ररोगों को विनष्ट कर जीवन प्रदान करता है ।' ५१ ॥

पिण्डयन्त्रम्

**मध्ये पिण्डमचो दलादिषु लिखेद्वारीशताराधिप-**
**प्रेताधीश्वरशक्रदिक्षु वियतेर्मध्ये च वर्णान् लिखेत् ।**
**यादीन्मारुतवह्निराक्षसशिवेष्वर्णान् बहिर्वेष्टयेत्**
**काद्यैर्वामविलोचनेन कलितं पिण्डाख्ययन्त्रं परम् ॥ ५२ ॥**

**पिण्डयन्त्रमाह मध्य इति । मध्ये अष्टदलकर्णिकायाम् । पिण्डं वक्ष्यमाणं विलिख्य तन्मध्ये तत्तद्बीजाढ्यं विदर्भितं नाम लिखेत् । वश्ये पाशबीजं, शान्तौ वरुणबीजम्, उच्चाटने क्रोधाग्निबीजमिति नारायणीय उक्तेः । दलादिषु केसरेषु । अचः स्वरान् । द्विद्विक्रमेण । वारीशेति पश्चिमदिक् । ताराधिपेति उत्तरदिक् । प्रेताधीश्वरेति दक्षिणदिक् । शक्रेति पूर्वदिक् । वियतेर्गरुडमन्त्रस्य मध्ये कर्णिकान्तरन्त्यमक्षरम् । यादीन् यरलवान् । वामविलोचनेन दीर्घेकारेण । सबिन्दुना त्रिरिति ज्ञेयम् । 'त्रिर्बहिर्मायया पद्मं वेष्टयेद् बिन्दु युक्तया' इति नारायणीय उक्तेः अत्र पिण्डात्मा देवता ॥ ५२ ॥**

अब **पिण्ड मन्त्र** कहते हैं—अष्टदल की कर्णिका में वक्ष्यमाण पिण्ड (२४,५३) मन्त्र के मध्य में षट्कर्म के अनुसार तत्तद् बीजाक्षरों से विदर्भित साध्यनाम, कर्म तथा साधक का नाम लिखे । जैसे वश्य कर्म में पाश बीज (आँ) शान्ति कर्म में वरुण बीज (वँ) और उच्चाटन कर्म में क्रोधाग्नि बीज (क्षौँ) का प्रयोग करे । पुन: दलों पर दो दो के क्रम से १६ स्वरों को लिखे, पश्चात् पश्चिम, उत्तर, दक्षिण तथा पूर्व की दिशाओं में गरुड़ मन्त्र के चार अक्षरों को लिखे । शेष एक अक्षर को कर्णिका में लिख देवे, तदनन्तर ककारादि सहित य र ल व इन वर्णों को वायव्य, आग्नेय, नैर्ऋत्य तथा ईशान कोणों में लिखे, उसके बाहर बिन्दु से संयुक्त दीर्घ ईकार (ईं) लिख कर उसे घेर देवे । यह सर्वोत्कृष्ट पिण्ड मन्त्र कहा जाता है ॥ ५२ ॥

पिण्डबीजम्

**मनुस्वरन्द्वजेशाग्निसंयुतश्चतुराननः ।**
**पिण्डबीजमिदं प्रोक्तं पुंसां सर्वार्थसाधकम् ॥ ५३ ॥**
**बीजेनाऽनेन सञ्जप्तं यन्त्रं रक्षाकरं परम् ।**
**आयुरारोग्यजननं लक्ष्मीसौभाग्यवश्यदम् ॥ ५४ ॥**

चौरसर्पमृगव्यालभूतामयनिकृन्तनम् ।
गर्भरक्षाकरं स्त्रीणां पुत्रदं क्षुद्रनाशनम् ।
धृतं मूर्ध्नि करोत्येतत् लोकवश्यमनुत्तमम् ॥ ५५ ॥

पिण्डबीजमुद्धरति मन्विति । मनुस्वर और इन्दुर्बिन्दुः अजेशो झकारः अग्नी रेफ एतद्युतश्चतुराननः जकारः। सर्वार्थसाधकमिति ।

तत्र प्रकारो नारायणीयेऽपि—

पिण्डं चन्द्रेन्द्रगेहस्थं कुलिशाकारमुज्ज्वलम् । पीतं चिन्तितमश्वादौ सैन्यस्तम्भकरं भवेत् ॥ सोमेन्द्रवह्निपुरगं मूर्ध्नि ध्यातं तथाकृति । विद्विषत्सर्वमत्तेभमहिषादिनिवारणम् ॥ तदेवाऽग्निसमप्रख्यं परसैन्ये विचिन्तयेत् । यायात् पराङ्मुखा पिण्डज्वालादग्धाऽरिवाहिनी ॥ भेदं परकृते स्तम्भे करोत्येव विचिन्तिते । अनिलानलसंयुक्तं ध्यानात् स्तोभं करोति तत् ॥ प्रयान्ति हित्वा स्वग्रस्तमार्त्तनादा ग्रहादयः । एतद्रोचनया लिख्य पटादौ यत्र पूज्यते ॥ त्यजन्ति गेहं तच्चौरक्षुद्रभूतोरगादयः । उद्यन्तं स्तम्भयत्यस्त्रमैन्द्रस्थं तदहीनपि ॥ वारुणान्तर्गतं पिण्डं तेजोऽनुग्रहवर्जितम् (वर्धनम्) । दष्टोत्तमाङ्गे विन्यस्तं विषनाशं करोति तत् ॥ इति ।

मृगो व्याघ्रः । व्यालो दुष्टगजः । क्षुद्राः सप्त । लोकवश्यमिति । तत्र विशेषः—

पद्ममध्ये लिखेदिन्दौ पिण्डान्तर्नामबीजयुक् । वियतिस्ताक्ष्र्ययन्त्रोक्ता लेख्या यरलवास्तथा ॥ त्रिर्महामायया पद्मं वेष्टयेदिन्दुयुक्तया । गोमयाम्बुयुजा यन्त्रमेतद्रोचनया लिखेत् ॥ भूर्जे सुवर्णलेखन्या जतुरौप्येण वेष्टयेत् । हेम्ना च जपपूजाभ्यां हवनेन च साधयेत् ॥ आयुष्यं पावनं पुष्टिलक्ष्मीसौभाग्यवश्यकृत् । चौरव्यालमगारण्यसलिलादिभयापहम् ॥ पुत्रदं गर्भरक्षाकृद् ग्रहसर्पभ(र्वामि)यादिहृत् । क्षुद्रोपशमनं यन्त्रं विद्यात् सर्वार्थसाधकम् ॥ उत्तमाङ्गस्थितं तत् स्याल्लोकवश्यमनुत्तमम् । शिखान्तं पाशपुटितं पिण्डं वश्ये सदा जपेत् ॥ वातानीतापतत्पत्रे काकपक्षेण कल्पितम् । बिन्द्वन्तस्थेन्दुरहितं यन्त्रमुच्चाटनं रिपोः ॥ क्रोधाग्निपुटितं मन्त्री पिण्डमुच्चाटने जपेत्। आकाशः साग्निकर्णार्द्धचन्द्रः क्रोधाग्निरुच्यते ॥ इति ॥ ५३-५५ ॥

मनुस्वर (औ) उसे इन्दु (बिन्दु) से युक्त करे, तदनन्तर अजेश (झकार) तदनन्तर अग्नि (रेफ) से संयुक्त चतुरानन (जकार) वर्ण, इस प्रकार पिण्ड बीज मन्त्र का उद्धार कहा गया । इसका स्वरूप औम्, झः रः जः हुआ । यह पिण्ड बीज पुरुषों की समस्त अभिलाषाओं को पूर्ण करता है ॥ ५३ ॥

उक्त पिण्ड बीज का जप सभी प्रकार से मनुष्यों की रक्षा करता है, आयु आरोग्य तो देता ही है, लक्ष्मी, सौभाग्य तथा वशीकरण की शक्ति भी प्रदान करता है ॥ ५४ ॥

यह जप १. चोर बाधा, २. सर्पबाधा, ३. व्याध्र बाधा, ४. दुष्टगज बाधा, ५. भूतबाधा तथा ६. रोग एवं शोक को विनष्ट करता है । स्त्रियों के गर्भ की रक्षा करता है, पुत्र प्रदान करता है, क्षुद्र सात रोगों को विनष्ट करता है । इसे शिर पर धारण करने से सभी लोगों को वश में करने की क्षमता प्राप्त होती है ॥ ५५ ॥

**मध्ये तोयगृहे लकारविवरे सार्णाढ्यसाध्यं**
**लिखेत् पत्रेष्वष्टसु हंसमन्त्रमभितो हंसार्णसंवेष्टितम् ।**
**यन्त्रं भूमिगृहेण वेष्टितमिदं मूर्ध्ना सदा धारितं**
**हन्यात् क्षुद्रमहाज्वरामयरिपून् दद्यात् यशः सम्पदः ॥ ५६ ॥**

यन्त्रान्तरमाह मध्य इति । मध्यो तोयगृह इति व्यधिकरणे सप्तम्यौ । मध्ये कर्णिकायाम् । तोयगृहं च प्रथमपटलोक्तम् । लकारविवरे लकारान्तः सार्णाढ्य-साध्यं सकारसहितसाध्यसाधककर्मनाम लिखेत् । हंसो देवता ॥ ५६ ॥

अष्टदल की कर्णिका में जहाँ जल मण्डल के अक्षर (द्र. प्रथम पटल) लिखे गये हों यहाँ सकार सहित साध्य, साधक नाम और कर्म लिख कर अन्त में लकार लिख देवें, आठों पत्रों पर हंस मन्त्र (सोऽहम्) लिख कर उसे हं सं इन अक्षरों को घेर देवे, पश्चात् भूपुर से उसे घेर देवे । इस प्रकार से लिखा हुआ यह मन्त्र शिर पर धारण करने से सप्त क्षुद्र रोग, महाज्वर, अन्य रोग तथा शत्रुओं का विनाश तो करता ही है, यश और संपत्ति भी प्रदान करता है ॥ ५६ ॥

वश्यकृद्यन्त्रम्

**ईकारमध्ये विलिखेत् स्वसाध्यं तमष्टपत्रेषु पुनर्विलिख्य ।**
**संवेष्टयेत् तेन धरापुरस्थं यन्त्रं भवेत् वश्यकरं नराणाम्॥ ५७ ॥**
**ताम्रपत्रे समालिख्य यन्त्रमेतत् प्रपूजयेत् ।**
**वशयेत् सकलान्मर्त्यान् नात्र कार्या विचारणा ॥ ५८ ॥**

वश्यकृदाह ईकारेति । तम् ईकारम् । तेनेकारेण । माया देवता ॥५७-५८॥

ईकार के मध्य में (दो ईकार के बीच में) साध्य नाम, कर्म तथा साधक का नाम लिखे । पुनः उसे अष्टपत्रों पर लिख कर चारों ओर से घेर देवे, उस अष्टदल कमल को भूपुर से घेर देवे तो यह मनुष्यों को वश में करने वाला वशीकरण यन्त्र कहा जाता है ॥ ५७ ॥

इस यन्त्र को ताम्र पत्र पर लिख कर नित्य पूजा करे तो यह सभी मनुष्यों को वश करने में समर्थ हो जाता है, इसमें विचार की आवश्यकता नहीं ॥ ५८ ॥

सञ्जीवनाख्ययन्त्रम्

**मध्ये भान्तं भृगुविनिहितं नामवर्णैः प्रवीतं**
**टान्तं लान्तान्वितमथ विलिखेदष्टपत्रेषु भूयः ।**
**भूविम्बस्थं निगदितमिदं साधु सञ्जीवनाख्यं**
**शस्त्रो(त्र्)द्भूतं भयमपहरेत् धार्यमाणं भुजेन॥ ५९ ॥**

अस्त्रभयहृदाह मध्य इति । मध्ये अष्टदलकर्णिकायाम् । नामवर्णैः साध्य साधक कर्मनामाक्षरैः प्रवीतं भृगुविनिहितं सकारस्थं भान्तं मकारं लिखेदित्यर्थः । टान्तं ठकारं लान्तान्वितं च । मृत्युञ्जयो देवता ॥ ५९ ॥

अस्त्र **भयहृत् मन्त्र** कहते हैं—अष्टदल कमल की कर्णिका में साध्य नाम तथा कर्म से प्रवीत (संपुटित) सकार से मिला हुआ मकार अक्षर लिखे पुनः अष्टपत्रों पर लकार अक्षर से युक्त ठकार लिखे, पुनः उसे चारो ओर भूपुर से घेर देवें तो यह उत्तम सञ्जीवन नामक यन्त्र हो जाता है, यह भुजा पर धारण करने से शस्त्र के क्षत होने से उत्पन्न समस्त भय को दूर करता है ॥ ५९ ॥

ज्वरघ्नयन्त्रम्

**वार्णावृतं साध्ययुतं सकारं टान्ते लिखेदष्टदलेषु हंसम् ।**
**आवेष्टयेदम्बुगृहेण बाह्ये लान्तावृतं यन्त्रमिदं ज्वरघ्नम् ॥ ६० ॥**

**ज्वरघ्नमाह वार्णेति । वार्णावृतं वकारेण वृतम् । टान्ते ठकारे । लान्तावृतं बाह्ये अम्बुगृहेण वेष्टयेदिति सम्बन्धः । अम्बुगृहेण प्रथमपटलोक्तेन । हंसो देवता ॥ ६० ॥**

अब **ज्वरघ्न यन्त्र** कहते हैं—अष्टदल की कर्णिका में वकार अक्षर से संपुटित साध्याक्षर से युक्त सकार लिखे, पुनः अष्टदल के प्रत्येक दल में ठकार लिखकर हंस मन्त्र (सोऽहम्) लिखें, पुनः बाहर से उसे लकार वर्ण से संपुटित जल मण्डल ह (द्र. प्रथम पटल) के वर्णों से घेर देवे, तो इस प्रकार का यन्त्र ज्वर का विनाश करता है ॥ ६० ॥

रोगाभिचारघ्नयन्त्रम्

**टान्ते नाम लिखेत् क्षकारविवरे मृत्युञ्जयत्र्यक्षरी-**
**रुद्धं तद्बहिरष्टपत्रविवरे साध्याह्वयं पूर्ववत् ।**
**अच्किञ्जल्कयुते वसुद्वयदले पद्मे तथैवाह्वयं**
**द्वात्रिंशद्दलपङ्कजेऽपि च तथा काद्यर्णयुक्केसरे ॥ ६१ ॥**
**ईकारेण समावीतं यन्त्रं मृत्युञ्जयाह्वयम् ।**
**सर्वरोगाभिचारघ्नं सर्वसौभाग्यसिद्धिदम् ॥ ६२ ॥**

**रोगाभिचारघ्नमाह टान्त इति । टान्ते क्षकारविवर इति व्यधिकरणे सप्तम्यौ। मृत्युञ्जयत्र्यक्षरीरुद्धं नाम लिखेदिति अन्वयः । पूर्ववन् मृत्युञ्जयपुटितं नामेत्यर्थः । अच्किञ्जल्कयुते वसुद्वयदले षोडशदले । तथैवेति। पूर्ववन्नामेत्यर्थः । काद्यर्णयुक्केसरे द्वात्रिंशद्दलपङ्कजे तथा पूर्ववन्नामेत्यर्थः । मृत्युञ्जयो देवता ॥ ६१-६२ ॥**

अब **रोगाभिचार यन्त्र** कहते हैं—अष्टदल की कर्णिका में जहाँ क्षकार लिखा हुआ हो वहाँ ठ अक्षर के अन्त में त्र्यक्षरी मृत्युञ्जय के अक्षर ॐ जूँ सः (द्र. १८. १०५) से संपुटित साध्य के नामाक्षरों को लिखें, पुनः अष्टदल में भी इसी प्रकार पूर्ववत् त्रयक्षरी मन्त्र संपुटित साध्य नामाक्षरों को लिखे । पुनः षोडश दल की कर्णिका में १६ स्वरों को लिखे, फिर षोडश पत्रों पर भी इसी प्रकार त्रयक्षरी मृत्युञ्जय संपुटित साध्य नामाक्षरों को लिखे और कमल के बत्तीस दल पर भी ककारादि सान्त वर्णों को लिखे ॥ ६१ ॥

इस प्रकार लिखे गये १६ दलों के अक्षरों को ईकार से घेर देवे तो यह मृत्युञ्जय नामक यन्त्र सभी रोगों को तथा सभी प्रकार के अभिचार जन्य उपद्रव को नष्ट करता है तथा सभी प्रकार की सिद्धि भी प्रदान करता है ॥ ६२ ॥

स्तम्भनकृद्यन्त्रम्

**ग्लौं रुद्धं प्रणवद्वयं प्रविलिखेत् साध्यस्य नामान्वितं**
**बाह्ये भूपुरमष्टवज्रविलसत्तारं लिखित्वा पुनः ।**
**क्षङ्कोणेषु दिशासु लं प्रविलिखेत् पाशाङ्कुशत्र्यक्षरी-**
**वीतं स्तम्भनयन्त्रमावृतिलसज्जम्भादिदिविद्याष्टकम् ॥ ६३॥**
**जम्भे वह्निवधूः पूर्वं पश्चाज्जम्भिनि ठद्वयम् ।**
**मोहे पावकजाया स्यात्ततो मोहिनि ठद्वयम् ॥ ६४ ॥**
**अन्धे हुतभुजो जाया ततोऽन्धिनि ठयुग्मकम् ।**
**रुन्धे कृशानुपत्नी स्यात् रुन्धिनि द्विठसंयुतम् ॥ ६५ ॥**

स्तम्भनकृदाह ग्लौमिति । प्रविलिखेदिति । वृत्तान्तरित्यर्थः । अष्टवज्रविलसत्तारं बाह्ये भूपुरं लिखित्वेत्यन्वयः । तदुक्तमाचार्यैः—

प्रणवयुगलं भूयुग्मान्तस्थितं ठगतश्च तद् वसुकुलिशगं तेषां मध्ये ध्रुवं भुवमन्तरा ।
अमरपतिदिक्कोणे ग्लौं पाशाङ्कुशान्तरमायया ।
वलयितमथो जम्भाद्यष्टौ लिखेत् कुरुते जयम् ॥ इति ।

कोणेष्विति भूपुरस्य । पाशाङ्कुशत्र्यक्षरीति । पाशमायाङ्कुशत्र्यक्षरीत्यर्थः । भूमिर्देवता ॥ ६३-६५ ॥

**स्तम्भनकृद् यन्त्र** कहते हैं—वृत्ताकार कमल के मध्य में साध्य के नाम से युक्त ग्लौं वर्ण सं संपुटित दो प्रणव लिखे । उसके बाहर भूपुर का निर्माण कर, उन के वज्रों पर प्रणव लिखे । भूपुर के तथा कोणों पर क्ष वर्ण लिखे और चारों दिशाओं में लं लिखे । फिर उसे पाश (आँ) अंकुश्या (क्रोँ) त्रयक्षरी (ॐ जूँ सः) से परिवेष्टित कर देवे । पुनः उस वृत्त के चारों ओर जम्भादि अष्टविद्या को लिखे तो वह स्तम्भन यन्त्र कहा जाता है ॥ ६३ ॥

अब **जम्भिनि अष्ट विद्या** कहते हैं—(१) जम्भे स्वाहा (२) जम्भिनि स्वाहा (३) मोहे स्वाहा (४) मोहिनि स्वाहा (५) अन्धे स्वाहा (६) अन्धिनि स्वाहा (७) रुन्धे स्वाहा (८) रुन्धिनि स्वाहा—यह जम्भादि अष्टविद्या का मन्त्र है ॥ ६४-६५॥

वाक्स्तम्भनकृद्यन्त्रम्

**लान्ते नाम विलिख्य दिक्षु विलिखेत् भूयस्तमेवाऽष्टसु**
**क्षोणीविम्बमथो नरेन्द्रभुजगावन्योन्यबद्धौ लिखेत् ।**
**आख्यां तन्मुखयोर्बिभीतफलके यन्त्रं समापादितं**
**निर्माल्ये निहितं सदा वितनुते वाचां द्विषां स्तम्भनम् ॥ ६६॥**

वाक्स्तम्भनकृदाह लान्त इति । लान्ते क्षकारे नाम विलिखेत् । सम्प्रदायात् लकारविदर्भितमिति ज्ञेयम् । तमिति । लकारम् । अथवा लान्ते नाम लकारदर्भमभितो भूस्तमिति पठनीयम् । अभित इति । कर्णिकायामेवाष्टकलिखनम् । मूलपाठे दिक्ष्वित्यस्याप्ययमेवार्थः । अष्टसु शङ्खपालौ । स्वचिह्नयुतौ । लिखेदिति गैरिकेण । निर्माल्ये इति । शिवनिर्माल्ये । अपेक्षितार्थद्योतनिकोक्तेः । द्विषां वाचां स्तम्भनं वितनुते शिलाक्रान्तमिति ज्ञेयम् । तदुक्तं नारायणीये—

मांसाष्टकवृतेर्णान्ते नाम मांसविदर्भितम् ।
साष्टाशावज्रमैन्द्रं च पार्थिवाहिवृतं लिखेत् ॥
आस्ये च फणिनोराख्यां बिभीतफलकेऽर्पितम् ।
गैरिकेण शिलाक्रान्तं निर्माल्ये स्तम्भकृत् खनेत् ॥ इति ॥६६॥

अब **वाक्स्तम्भन यन्त्र** कहते हैं—कर्णिका में लकार से विदर्भित साध्य नाम दो दो लकार के बीच साध्य नाम का एक एक अक्षर) लिखे, पुनः कर्णिका की आठों दिशाओं में केवल लकार लिखें, इसके बाद भूपुर बनाकर वासुकि तथा शङ्खपाल के नाम को आकृति सहित गैरिक वर्ण से परस्पर संबद्ध कर लिखे । यह यन्त्र विभीतक के फलक (पटरे) पर लिखना चाहिए तथा जहाँ वासुकि शङ्खपाल की आकृति बनी हो वहीं उनके मुख में साध्य के नामाक्षरों को लिख देना चाहिए । इस प्रकार से लिखे यन्त्र को शिव निर्माल्य में स्थापित करने से शत्रु की वाणी का स्तम्भन हो जाता है ॥ ६६ ॥

**साध्याढ्यं कवचं लिखेत् बहिरथो दिक्पत्रमध्येषु तत्**
**ग्लौमन्येषु महीपुरस्य विलिखेत् कोणेषु गं लान्वितम् ।**
**वज्रेष्वष्टसु वर्म तोयपुरगं भूविम्बमध्ये स्थितं**
**यन्त्रं रात्रिविनायकान्तरगत न्यस्येच्छरावद्वये ॥ ६७ ॥**
**रहस्यस्थाननिक्षिप्तं पूजितं प्रतिवासरम् ।**
**स्तम्भनं कुरुते वाचां सेनादीनां च वैरिणाम् ॥ ६८ ॥**

अन्यश्च वाक्स्तम्भनकृदाह साध्येति । लिखेदित्यष्टदलकर्णिकायाम् । तदिति हुम् । अन्येषु विदिक्पत्रेषु । गं लान्वितमिति ग्लं महीपुरस्य कोणेषु लिखेदिति । वस्त्रे निशारसैरिति ज्ञेयम् । रात्रिविनायकान्तरगतं हरिद्रागणपतिमूर्त्तिं कृत्वा तदुदरे यन्त्रं स्थापनीयमिति सम्प्रदायविदः । केचित् तु हरिद्रागणपतिमन्त्रेण संवेष्टितमिति वदन्ति । तदसाम्प्रदायिकम् । मन्त्रस्याऽनुद्धृतत्वादत्र । पूजितमिति । पीतपुष्पैः । विनायको देवता । वैरिणां वाचामिति व्यधिकरणे षष्ठ्यौ । वैरिणां सेनादीनामित्यपि । आदिशब्देन विवादगत्यादि । तदुक्तं नारायणीये—

लिखेद्वस्त्रं निशारसैः ।
विघ्नस्य कुक्षौ निक्षिप्य निशापिष्टमयस्य तत् ॥
शरावसंपुटे स्थाप्य पीतपुष्पैश्च पूजयेत् ।
स्तम्भः स्याद्वृष्टिसेनावाग्विवादागमनादिषु ॥ इति ॥६७-६८ ॥

अन्य प्रकार का **वाक्स्तम्भन यन्त्र**—अष्टदल की कर्णिका में साध्य के नाम के सहित कवच (हुं) लिखे । उसके बाहर चारों दिशाओं के पत्र में वही कवच (हुं) लिखे । पुनः चारों कोनों में ग्लौं लिखे, तदनन्तर बने हुये भूपुर के कोणों में ग्ल यह वर्ण लिखे । भूपुर के मध्य में आठों वज्रों पर जलमण्डल के वर्णों के सहित (द्र.) हुं यह कवच लिखे, इस मन्त्र को हरदी के रस से लिखना चाहिए और लिखने के बाद हरिद्रा निर्मित गणपति के उदर में यन्त्र स्थापित कर दो मिट्टी के पात्र में रखकर स्थापित कर देना चाहिए ॥ ६७ ॥

पुनः उस मूर्त्ति को किसी एकान्त स्थान में स्थापित कर नित्य पूजा करते रहने से वाणी का, सेना का तथा शत्रुओं का स्तम्भन हो जाता है ॥ ६८ ॥

ज्वरघ्नयन्त्रम्

**कृत्वा रेखाष्टकमृजु पुनस्तिर्यगालिख्य षट्कं**
**बाह्यावृत्या लिखतु विधिवत् बिन्दुयुक्तं क्षकारम् ।**
**अन्तःपङ्क्तौ लिखतु धरणीं शिष्टकोष्ठत्रयान्तः**
**कृत्वा नाम प्रथितमुदितं यन्त्रमेतज् ज्वरघ्नम् ॥ ६९ ॥**
**यन्त्रमेतत्समभ्यर्च्य दत्त्वा भूतबलिं ततः ।**
**साध्यस्य मूर्ध्नि बध्नीयात् सर्वज्वरविमुक्तये ॥ ७० ॥**

ज्वरघ्नमाह कृत्वेति । बाह्यावृत्येति । विंशतिकोष्ठेषु । विधिवदिति । प्रादक्षिण्येन । अन्तः पङ्क्तौ द्वादशसु कोष्ठेषु धरा लं बिन्दुयुक्तमिति सम्बध्यते । कोष्ठत्रयान्तः कोष्ठत्रयमेकीकृत्य तत्र नाम लिखेत् । दत्त्वा भूतबलिमिति । पञ्चवर्णौदनेनेति ज्ञेयम् । तदुक्तं नारायणीये—

ऋजुरेखा लिखित्वाऽष्टौ षट्तिर्यक् चावृतिद्वये ।
नारीबाह्यपुटे क्षेन्द्रौ लेख्यौ नाम पदत्रये ॥
पाञ्चवर्णं बलि दत्त्वा कलयेच्च क्रमार्चितम् ।
आ(त्र्या)हिकं ज्वरदेवादि ज्वराभासप्रशान्तये ॥ इति ।

अपेक्षितार्थद्योतनिकायां पञ्चवर्णौदनबलिं दत्त्वेति व्याख्यातम् ।

भूर्देवता ॥ ६९-७० ॥

**ज्वरघ्न यन्त्र** कहते हैं—आठ सीधी रेखा खीचें उस पर तिरछी रेखा खींचे इस प्रकार ३५ कोष्ठक बन जाते हैं, उन में बाहर के सभी कोष्ठों में (२० कोष्ठकों) में बिन्दु युक्त क्षकार (क्षं) लिखे, पुनः भीतर के १२ कोष्ठकों में 'लं' लिखे । पुनः शेष तीन कोष्ठकों को एक कर उसमें साध्य नाम का लिखे, तो इस प्रकार बने हुये यन्त्र से शीघ्र ही ज्वर का शमन हो जाता है ॥ ६९ ॥

उसकी प्रक्रिया इस प्रकार है—उपर्युक्त मन्त्र लिखकर उसकी अर्चना करे, भूतबलि देवे । तदनन्तर सभी प्रकार के ज्वरों की शान्ति के लिये रोगी के शिर में इसे बाँध देवे ॥ ७० ॥

तारं लिखेद्वह्निपुरस्य युग्मे
तत्पार्श्वयोर्लार्णमथाऽग्निबीजम् ।
कोणेषु पूर्वापरयोश्च यन्त्रं
पाशाङ्कुशावीतमिदं ज्वरघ्नम् ॥ ७१ ॥
यन्त्रमभ्यर्च्य मन्त्रेण तारपाशाङ्कुशात्मना ।
निबध्नीयाज्ज्वरार्त्तस्य हस्तादौ ज्वरशान्तये॥ ७२ ॥

**अन्यज्ज्वरघ्नमाह तारमिति । वह्निपुरस्य युग्मे दक्षिणोत्तररूपेण लिखिते । तत्पार्श्वयोस्तारपार्श्वयोः लार्णम् अथ कोणेष्वग्निबीजं सर्वेषु कोणेष्वित्यर्थः । पूर्वापरयोश्च दिशोर्बहिर्भागस्थयोः । पाशाङ्कुशेति । अन्ये तु गुणाङ्कुशावीतमिति पाठमपठन् । गुणशब्देन त्रिसंख्या तेन पूर्वापरभागयोः प्रत्येकमङ्कुशत्रयं लिखेदित्यर्थः । तदुक्तं नारायणीये—**

**सौम्ययाम्यमुखे तारं लिखेद्वह्निगृहद्वये ।**
**तारस्य पार्श्वयोरिन्द्रं कोणकोष्ठेषु चाऽनलम् ।**
**प्राक्प्रतीच्योर्बहिश्चक्रमङ्कुशत्रयभूषितम् ॥ इति ।**

**अत्र प्रणवपाशाङ्कुशात्मैव देवता ॥ ७१-७२ ॥**

अब दूसरा **ज्वरघ्न यन्त्र** कहते हैं—षट्कोण मन्त्र के मध्य में प्रणव लिखे, फिर उसके दोनों पार्श्व में लकार लिखे । तदनन्तर सर्वत्र कोणों में अग्निबीज लिखे, पूर्व और पश्चिम के दिशाओं में कोणों के बाहर पाश (आँ) अंकुश्या (क्रोँ) लिखकर घेर देवें तो यह मन्त्र ज्वर का विनाश कर देता है ॥ ७१ ॥

उसकी प्रक्रिया इस प्रकार है—तार (ॐ) पाश (आँ) अंकुश (क्रोँ) (अर्थात् ॐ आँ क्रोँ)। इस मन्त्र से उस यन्त्र की पूजा कर ज्वर की शान्ति के लिये ज्वरार्त्त रोगी के हाथ, कण्ठ अथवा कटि में बाँध देवे तो ज्वर शान्त हो जाता है ॥ ७२ ॥

पिण्डे लिखेन्नाम ससर्गटान्तविदर्भितं सस्वरकेसराढ्यम् ।
टान्ताष्टपत्रं वसुधापुरस्थं कान्तिप्रदं यन्त्रमिदं ज्वरघ्नम् ॥ ७३ ॥

**अन्यज्ज्वरघ्नमाह पिण्ड इति । पिण्डे पूर्वोक्ते । ससर्गटान्तं सविसर्गठकारम् । तद्विदर्भितं नामेत्यन्वयः । अत्र पिण्डात्मा देवता ॥ ७३ ॥**

अब तीसरे प्रकार का **ज्वरघ्न यन्त्र** कहते हैं—अष्टदल कमल की कर्णिका के मध्य में पिण्ड के बीजाक्षरों को (द्र. २४. ५३) लिखकर विसर्ग युक्त ठकार (ठः) से विदर्भित (दो ठः उसके अनन्तर एक एक साध्य नाम) साध्य के नामाक्षर लिखे, केशरों पर दो दो के क्रम से १६ स्वर लिखे, अष्टदलों पर ठकार लिखे । पश्चात् भूपुर से उसे घेर दे, तो इस प्रकार का यन्त्र पूजा कर धारण करने से ज्वर को विनष्ट करता है ॥ ७३ ॥

शिशुरोदनहृद्यन्त्रम्

तारादि लुद्वयजलद्विठवर्णवीता
टान्तान्तरे विलिखिता विधिनैव माया।
साध्यावृता बहिरधो वदनार्द्धचन्द्रै-
र्यन्त्रं शिशो रुरुदिषां विनिहन्ति सद्यः ॥ ७४ ॥

शिशुरोदनहृदाह तारेति । लुद्वयं लुलु । जलं वं । द्विठः स्वाहा । विधिनैव साध्या साध्योऽस्यामस्तीति साध्या । अर्श आदित्वादच् । मध्यवृत्ते साध्यनाम युक्तां एतन्मन्त्रावृतां च मायां विलिख्य बहिर्वृत्तद्वयं कृत्वा तत्राऽधोमुखैरर्द्धचन्द्रैः संवेष्ट्य बध्नीयात् । अधोवदनैरधोमुखैरर्द्धचन्द्रैर्वृतं द्विरिति शेषः । द्वेधा शिशो रुरुदिषां विनिहन्ति यन्त्रमिति वा पठनीयम् । उक्तञ्च नारायणीये—

तारं लुयुग्ममुदकं शिर एभिरर्णैः
शक्तिर्वृता च शिशुनामवती शशाङ्कौ ।
अर्द्धेन्दुकैर्बहिरधोवदनैः परीतौ
यन्त्रं तदाशु शिशुरोदनमुत्क्षिणोति ॥ इति ।

व्याख्यातञ्चाऽपेक्षितार्थद्योतनिकायाम् । देवीं लिखित्वा तन्मध्ये शिशुनाम लिखित्वा ॐ लुलु वं स्वाहेति मन्त्रेण तां मालेव वेष्टयित्वा तद्बहिश्चन्द्रमण्डलद्वयं विलिख्य एकैकमधोमुखार्द्धेन्दुभिः सम्भूष्य बध्नीयादिति । शक्तिर्देवता ॥ ७४ ॥

**शिशु रोदनहृद यन्त्र** कहते है—तीन वृत्त का निर्माण कर मध्य वृत्त में साध्यनाम लिख कर उसके पश्चात् तार (ॐ), उसके पश्चात् दो लु (लु लु), फिर जल (वं), उसके पश्चात् दो ठ (स्वाहा), इस प्रकार ॐ लुलु वं स्वाहा' इस मन्त्र से संपुटित माया (ह्रीँ) मन्त्र लिखें । तदनन्तर बाहर के बने हुये दोनों वृत्तों को अर्ध चन्द्राकार अधोमुख दो वृत्तों से घेर देवें, इस प्रकार से बने यन्त्र को पूजित कर रोने वाले लड़के को बाँध देवे तो लड़के का रोना बन्द हो जाता है ॥ ७४ ॥

ज्वरघ्नयन्त्रम्

व्योमार्णमालिख्य सबिन्दुमाख्याविदर्भितं लुत्रययुक्तकोणे ।
वसुन्धरागेहयुगे निबद्धं यन्त्रं समस्तज्वरनाशनं स्यात् ॥ ७५ ॥

ज्वरघ्नमाह व्योमेति । व्योमार्णं हकारम् । कीदृशम् । बिन्दुश्च मश्च बिन्दुमौ ताभ्यां सहितं सबिन्दुमं तच्च तदाख्याविदर्भितं च सबिन्दुमाख्याविदर्भितमालिख्य मध्य इति शेषः । तेन लं साध्यसाधकनामाक्षरविदर्भितं मध्ये लिखेदित्यर्थः । एकैकस्मिन् कोणे लुत्रयं लिखेत् । निबद्धं हस्तादाविति शेषः । तदुक्तं नारायणीये—

लुत्रयं तस्य कोणेषु मध्ये च सविषं वियत् ।
आख्याविदर्भितं यन्त्रमेतत् सर्वज्वरापहम् ॥ इति ।

व्योम देवता ॥ ७५ ॥

अब चतुर्थ प्रकार का अन्य **ज्वरघ्न यन्त्र** कहते हैं—त्रिकोण की कर्णिका में हकार लिखकर बिन्दु सहित मकार (मं) को साध्य नामाक्षर से विदर्भित (दो नाम के अक्षर तदनन्तर मं) कर लिखे । पुनः त्रिकोण के कोणों पर तीन लु अक्षर लिखे । पुनः उसे भूपुर से परिवेष्टित कर रोगी को बाँध देवें तो उसके ज्वर का विनाश हो जाता है ॥ ७५ ॥

**सार्णं नाम विदर्भितं परिलिखेत् बाह्येऽष्टपत्रे भृगुं**
**पद्मं स्यादथ कादिशान्तलिपिमत्रिंशद्दलं बाह्यतः ।**
**वीतं तोयपुरेण यन्त्रसुदितं भूर्जोदरे कल्पितं**
**भूतव्याधिमहाज्वरप्रशमनं कृत्यापहं श्रीप्रदम् ॥ ७६ ॥**

**यन्त्रान्तरमाह सार्णमिति । परिलिखेदित्यष्टदलकर्णिकायाम् । अष्टपत्रेष्विति वक्तव्ये बाह्य इति वदति । तेन व्यधिकरणे सप्तम्यौ । तेनाऽष्टपत्रेषु बहिर्भागे भृगुं सकारं लिखेत् । पत्रमूले केसरस्थाने द्विद्विक्रमेण स्वरा लेख्या इत्यभिप्रायः । तदत्र केचिद्वर्णाष्टपत्र इति पठन्ति । अन्ये द्व्यष्टपत्र इति पठन्ति । अत्र मातृका देवता ॥ ७६ ॥**

अब पाँचवें प्रकार का **ज्वरघ्न यन्त्र** कहते हैं—अष्टदल कमल की कर्णिका में साध्य नाम से विदर्भित (दो दो नामाक्षर के बाद एक सकार) सकार लिखे । तदनन्तर अष्टपत्र के बहिर्भाग में सकार लिखें, पत्र के मूल (केशरों) पर स्वरों को लिखे । पुनः उस पद्म को ककार से लेकर शकार वर्ण पर्यन्त ३० अक्षरों से घेर कर लिखे फिर उसे जलमण्डल के वर्णों से (द्र. प्रथम पटल) घेर देवे । उक्त यन्त्र भोज पत्र पर लिखें तथा अर्चित कर रोगी को पहना दे तो भूतबाधा रोगबाधा एवं महाज्वर शान्त हो जाता है । इससे कृत्याजन्य अभिचार एवं मारण विफल हो जाते हैं और लक्ष्मी की प्राप्ति होती है ॥ ७६ ॥

**चक्रे चतुःषष्टिपदे सबिन्दूनन्तस्थवर्णान् क्रमशो विलिख्य ।**
**रेखाशिरःकल्पितशूलयुक्ते यन्त्रेऽथ पीतज्वरशान्तिहेतोः ॥७७॥**

**ज्वरघ्नमाह चक्र इति । अन्तस्थवर्णान् यरलवान् विलिख्य । क्रमशः इत्यनेननैतदुक्तम् । प्रथमावृत्तौ अष्टाविंशतिकोष्ठेषु सबिन्दुं यं द्वितीयावृत्तौ विंशतिकोष्ठेषु सबिन्दुं रं तृतीयावृत्तौ द्वादशसु कोष्ठेषु सबिन्दुं लं अन्तः कोष्ठचतुष्टये वं इति । लिखनं च तत्तद्भूतवर्णद्रव्येण भूमाविति ज्ञेयम् । तदुक्तं नारायणीये—**

**चतुःषष्टिपुटे क्षेत्रे षट्त्रिंशच्छूलदीपिते ।**
**ज्वरनाशत्रयीभानुकोष्ठेषु वृत्तिषु क्रमात् ॥**
**लिखेत् सबिन्दूनन्तस्थान् चक्रं तद्भूस्थमर्चयेत् ।**
**नश्यन्त्यस्य श्यानस्य ज्वराः सर्वे विधानतः ॥ इति ।**

**अपेक्षितार्थद्योतनिकायां तत्तद्वर्णद्रव्येण भूमौ लिखित्वा तच्च शय्यायामापाद्येति व्याख्यातम् । वाय्वग्निभूजलानि देवताः ॥ ७७ ॥**

अब छठवें प्रकार का **ज्वरघ्न यन्त्र** कहते हैं—नव रेखा पूर्व पश्चिम, तथा नव रेखा उत्तर दक्षिण से खींचकर ६४ कोष्ठकों का निर्माण करे, पुनः उन कोष्ठकों की प्रथम पंक्ति में (२८कोष्ठकों में) यँ इस वर्ण को लिख देवे, द्वितीय पंक्ति (२० कोष्ठकों) में रँ लिखे तृतीयावृत्ति में (१२ कोष्ठ) में लँ लिखे. पुनः चतुर्थ आवृत्ति में (शेष ४ कोष्ठों में) वँ लिख देवे, इस प्रकार का यन्त्र भूर्ज पत्र पर लिखकर एवं पूजित कर पित्तज्वर के नाश के लिये रोगी को पहना दे तो उसके पित्तज्वर का नाश हो जाता है ॥ ७७ ॥

**पुटितभूमिपुरद्वयमध्यतः प्रविलिखेत् वनितां गिरिजापतेः।**
**प्रणवमस्य लिखेत् वसुकोणगं ज्वरहरं परमेतदुदीरितम्॥ ७८ ॥**

**अन्यदप्याह पुटितेति । गिरिजापतेर्वनितां मायाम् । शक्तिर्देवता ॥ ७८ ॥**

अब सातवें प्रकार का **ज्वरघ्न यन्त्र** कहते हैं—भूपुर से परिवेष्टित दो चतुर्भुज के मध्य में ह्रीँ (माया), लिखे तथा उसके आठो कोणों पर प्रणव लिखे तो यह यन्त्र ज्वर को विनाश करने के लिये सर्वश्रेष्ठ उपाय कहा गया है ॥ ७८॥

वश्यकृद्यन्त्रम्

**वार्णे लिखेन् नाम शशाङ्कमध्ये टान्तं बहिर्भूमिपुरं पुरस्तात् ।**
**वृत्तावृतं यन्त्रमिदं समुक्तं वश्याय नृणां सकलार्त्तिशान्त्यै ॥ ७९॥**

**वश्यकृदाह वार्ण इति । शशाङ्कमध्ये ठकारमध्ये वार्णे इति व्यधिकरणे सप्तम्यौ । टान्तं बहिरिति । ठकारेण वेष्टयेत् । चन्द्रो देवता ॥ ७९ ॥**

भूपुर के मध्य में 'व' लिख कर दो ठकार के मध्य में साध्य के नामाक्षरों को लिखें । पुनः भूपुर के बाहर ठकार लिख कर उसे वेष्टित कर देवे । उस भूपुर के चारों ओर वृत्त बना कर उसे घेर देवे तो इस प्रकार का यन्त्र वशीकारक तो होता ही है, रोगी के रोग को भी शान्त करता है ॥ ७९ ॥

स्त्रीवश्यकृद्यन्त्रम्

**सस्वस्तिके दहनगेहयुगे ससाध्यां**
**मायां लिखेत् ललितनागलतादलान्तः ।**
**पाशाङ्कुशावृतमिदं निशि तापयेत् यो**
**मन्त्रं जपन् व्रजति तं स्वयमेव साध्या ॥ ८० ॥**

**स्त्रीवश्यकृदाह सेति । पाशाङ्कुशावृतमिति षट्कोणान्तः । ललितेति । अखण्डताम्बूलपत्रे । मन्त्रमिति पाशाङ्कुशपुटा शक्तिः । एष पक्षः साम्प्रदायिकः । तापयेदिति । दीपशिखायाम् । तदुक्तमाचार्यैः—**

**हल्लेखाग्निस्थसाध्याह्वयमथ बहिरांक्रोंवृतं वह्निगेह-**
**द्वन्द्वाश्रिस्वस्तिकाढ्यं प्रविलिखतु दले यन्त्रकं नागवल्ल्याः ।**

जप्त्वा शक्तिं तु पाशाङ्कुशलिपिसहितां तापयेद्दीपवह्नौ
नक्तं भक्त्या नताङ्गी स्मरशरविवशा प्रेमलोलाऽभियाति ॥ इति ।

शक्तिर्देवता ॥ ८० ॥

अखण्ड ताम्बूल पत्र पर षट्कोण लिखे उसमें स्वस्तिक का चिन्ह बना कर साध्य अक्षरों के साथ माया (ह्रीँ) लिखे, तदनन्तर उसे पाश (आँ) एवं अंकुश (क्रोँ) से आवृत करे । पुनः उसे दीपक की शिखा में तपावे, साथ में मन्त्र एवं माया मन्त्र का जप करता रहे, तो अभिलषित स्त्री स्वयं आकृष्ट हो कर उसके पास चली आती है ॥ ८० ॥

**षट्कोणे निजसाध्यनामसहितां मायां लिखेन्मध्यत-**
**स्तत्कोणेषु विदर्भितामभिलिखेत् शक्तिं स्वसाध्याख्यया।**
**बाह्ये भूमिपुरं सकोणसदनं ताम्बूलपत्रे कृतं**
**जप्तं खादयतु प्रियां निशि भवेत् सा तस्य वश्या चिरम्॥ ८१ ॥**

अन्यदप्याह षडिति । अत्रापि शक्तिर्देवता । ताम्बूलपत्रे कृतमिति । कोकिलाक्षकण्टकैरिति शेषः । जप्तं माययेति शेषः । अन्यत्र तु विशेषः । कामस्य षट्कोणेषु लेखनं साध्याविदर्भिशक्त्या बहिर्वेष्टनमिति । मूले वा लिखेच्च स्मरमिति पाठः साम्प्रदायिकः । तदुक्तमाचार्यैः—

शक्तिस्थं निजनाम वह्निभवनद्वन्द्वोदरे मान्मथं
बीजं साध्यविदर्भया परिवृतं शक्त्या बहिः पार्थिवम् ।
तत्कोणस्मरमन्यपुष्टनयनप्रोत्थैः पुनः कण्टकै-
स्ताम्बूले लिखिताभिजप्तमदयेद् योषिन्मनोमोहनम् ॥ इति ।

खादयत्वित्यज्ञातमेव । स्त्रिया विदितं भक्षितं न वशयत्येव । एवमन्यथा प्रयोगेष्वपि साध्यामज्ञाप्यैव देयमिति रहस्यम् । तन्त्रान्तरे—

वायोरष्टममग्निबिन्दुसहितं संरूढमायाक्षरं
मध्ये संस्थितसाध्यनामवलयद्वन्द्वावृतं बाह्यतः ।
तद्बाह्ये दलषोडशस्वरयुतं पश्चान् महीमण्डलं
कोणे कल्पितकामबीजकमिदं यन्त्रं जगद्वश्यकम् ॥ इति ।

अन्यत्र तु— हल्लेखामध्यसाध्यवलययुगयुतं चाऽष्टपत्रं सरोजं
यन्त्रे तद्बीजसंस्थं बहिरपि च दलैः षोडशैराढ्यमब्जम् ।
अब्जस्यालिख्य पत्रे स्वरगणनमितं मण्डलं पार्थिवाख्यं
कोणे क्षिंकारयुक्तं सकलजनमनोहारि कूष्माण्डयन्त्रम् ॥ इति ।

अन्यत्र तु— शक्तिस्थं निजनाम वह्निभवने षट्कोणयुक्ते लिखेत्
ह्रींकारं परितो विदर्भ्य मतिमान् साध्येन नाम्नाऽङ्कुशम् ।
एतत्कण्टकसूचितं सुविपुले नागस्य पृष्ठे लिखेत्
पश्चान्मारुतवेश्मना परिवृतं योषिन्मनोमोहनम् ॥ इति ।
कृत्वा षट्कोणमध्यं वियदनलयुतं बिन्दुमायाविचित्रं

तत्कोणेष्वङ्कुशास्त्रं पुनरपि कमलं शक्तिगर्भाष्टपत्रम् ।
पश्चात्तद्युग्मपत्रं रजनिकरकलालङ्कृतं गोपुरस्थं
भूर्जे गोरोचनासद्गजमदरचितं वश्यमाहुर्मुनीन्द्राः ॥ इति ।

तन्त्रान्तरे आचार्याश्च—सान्तं शिखीलवयुतं दहनांशसाध्यं
मायांशसाधकमथाऽभिवृतं कलाभिः ।
मध्योल्लसद्द्विमुखशूलमिदं तु भर्तु-
र्यन्त्राह्वयं नरनताङ्गिवशीकरं स्यात् ॥

मृत्काराङ्गुलिकात्तया सकृकलासान्तर्वसायुक्तया
साध्यस्याऽङ्घ्रिरजोयुजा मृदुमृदा क्लृप्तस्य शक्तिं हृदि ।
रूपस्याऽभिविलिख्य तद्विवरके साध्यं तदीरान् प्रति-
ष्ठाप्याजप्य निखन्य तत्र दिनशो मेहेच्चिरं वश्यकृत् ॥ इति ॥८१॥

ताम्बूल के पत्र पर कोण बनावे । उसके मध्य में अपने साध्य के नामाक्षरों सहित माया (ह्रीँ) लिखे । उसे कोणों पर साध्याक्षर से विदर्भित (दो-दो नामाक्षर बीच में एक-एक शक्ति) शक्ति लिखे । उस षट्कोण को बाहर भूपुर से घेर देवे । इस प्रकार के लिखित मन्त्र सहित उस ताम्बूल पत्र को अज्ञात रूप से अभिलषित स्त्री को खिला देवे तो वह बहुत काल के लिये वशीभूत हो जाती है ॥ ८१ ॥

वश्यकृद्यन्त्रम्

**शक्तौ नाम लिखेत् चतुर्भिरभितो बीजैः समावेष्टयेत्**
**वीतं शक्तिमनोभवाङ्कुशमनुप्रोंबीजकैः पिष्टजे ।**
**रूपे साध्यनरस्य जप्तपवने त्रिस्वादुना भर्ज्य तत्**
**खादेत् तस्य वशं प्रयाति नियतं साध्यः सदा दासवत् ॥ ८२ ॥**

वश्यकृदाह शक्ताविति । साध्यनरस्य पिष्टजे रूपे प्रतिकृतिहृदय इत्यर्थः । शक्तिं विलिख्य तत्र कर्मसहितं साध्यनामाऽऽलिख्य तां शक्तिं चतुर्भिर्बीजैर्वेष्टयेत् । तत्र केचनोपदेशान् नृसिंहचिन्तामणिशक्तिदुर्गाबीजानीत्याहुः । अन्ये तु चतुर्भिर्बीजैः समावेष्टयेदित्युक्तम् । तदेव विशदयति वीतं शक्तित्यादिना । पुनः श्लोकोक्तै-श्चतुर्भिर्बीजैर्वीतं कुर्यात् । अत्र केचन मरुत्प्रोंबीजकैरिति पठित्वा यमिति पञ्चमं वदन्ति । तदसङ्गतम् । तन्त्रान्तरविरोधात् । यदाहुराचार्याः—

शक्त्यन्तःस्थितसाध्यनामपरितो बीजैश्चतुर्भिः समा-
बद्धं शक्तिमनोभवाङ्कुशलिपिप्रोंभिः समावेष्टितम् ॥ इति ।

अत्र पद्मपादाचार्यैर्व्याख्यातं समावेष्टितमिति समाबद्धमित्यस्य व्याख्येति । केचिच्चतुर्भिः शक्तिबीजैरित्याहुः । जप्तपवनं प्रतिष्ठितप्राणम् । शक्तिर्देवता ॥ ८२॥

शत्रु की पिष्ट से प्रतिकृति निर्माण करे पुनः भूर्जपत्र पर उसके हृदय में शक्ति से संपुटित साध्यनाम लिखकर उसे शक्ति (ह्रीँ), मनोभव (क्लीँ), अंकुश (क्रोँ) तथा प्रोँ बीज से वेष्टित करे । पुनः उसमें शत्रु की प्राण प्रतिष्ठा कर

त्रिमधुर से उसे भूँज देवे। तदनन्तर उसे खा जावे तो साध्य सदा दास के समान वशीभूत रहता है ॥ ८२ ॥

मन्मथयन्त्रः

**कामं लिखेत्साध्ययुतं सरोजे स्वरोल्लसत्केसरवर्गपत्रे।**
**उदीरितं मन्मथयन्त्रमेतत्सौभाग्यलक्ष्मीविजयप्रदायि ॥ ८३ ॥**

यन्त्रान्तरमाह काममिति। अत्र कामो देवता।

कानिचित् सिद्धयन्त्राणि सिद्धयोगेश्वरीमतात्।
सर्वलोकानुग्रहाय लिख्यन्तेऽत्र मया स्फुटम् ॥
कर्णिकायां लिखेन्नाम पुटितं मायया बहिः।
अष्टपत्रेषु विन्यस्य नाऽघोरेश्वरीवृतम् ॥
अघोरेश्वरि हुं फट् मन्त्रः प्रोक्तोऽथ वैदिकः।
द्वात्रिंशदक्षराघोरं द्व्यष्टपत्रेषु बाह्यतः ॥
त्रि(द्वि)गुणं मायया वेष्ट्य रेखान्ते क्रों नियोजयेत्।
भूतप्रेतपिशाचानां शाकिनीग्रहरक्षसाम्।
दोषं बाहुस्थिता हन्ति रक्षेयं विधिना कृता ॥ १ ॥
कर्णिकायां लिखेन्नाम तदधस्त्र्यक्षरं मनुम्।
अष्टपत्रेषु मायां च कांस्यपात्रे सुनिर्मले ॥
रोचनालिखिते यन्त्रे क्षीरमध्ये निवेशिते।
स वशो जायते तस्य माया तारपुटा मनुः ॥ २ ॥
क्षमाबीजपुटितं नाम लिखेत्पत्रचतुष्टये।
तस्मिन्नाज्ये विनिक्षिप्ते गृहान्तर्वा विलम्बिते ॥
शान्तिर्लक्ष्मीर्यशः पुष्टिः सततं तस्य जायते।
न व्याधिर्न भयं शत्रु (त्रो) र्यन्त्रसामर्थ्ययोगतः ॥ ३ ॥
ज्वालावृतं त्रिकोणेषु हुंयुतं वनिमण्डलम्।
रेफेण पुटितं नाम मध्ये शक्त्या बहिर्वृतम् ॥
श्मशानकर्पटे किंवा कपाले लिखितं द्रुतम्।
तापितं (नं) वैरिणः कुर्याज्ज्वरं रौद्रं न संशयः ॥ ४ ॥
पद्ममष्टदलं मध्ये नाम संलिख्य दिक्ष्वधः।
हुं विदिक्षु स्थिता क्षीरे रक्षा द्यूते जयावहा ॥ ५ ॥
नभोमण्डलमध्यस्थं नाम बाह्योऽथ षोडश।
स्वरास्तद्बाह्यतो ज्वालाजटिलं वह्निमण्डलम् ॥
श्मशानकर्पटे लेख्यं धत्तूरस्य रसेन च।
प्रेतभूनिहितं यन्त्रमिदं सौभाग्यनाशनम् ॥ ६ ॥
कर्णिकायां लिखेन्नाम चतुःपत्रे तु ह्रीं कजे।
रोचनाहस्तिदानाभ्यां कुङ्कुमेन शुभे दिने ॥
वेष्टयित्वाऽथ सिक्थेन घृते यन्त्रे धृते सति।
सौभाग्यमतुलं स्त्रीणां जायते जीवितावधि ॥ ७ ॥

अष्टपत्राम्बुजे मध्ये सविसर्गमवेष्टितम् ।
नाम तद्बाह्यपत्रेषु सपरः सविसर्गकः ॥
रोचनाकुङ्कुमेनेदं यन्त्रं संलिख्य दापयेत् ।
कारागृहगतो यस्तु तस्य मोक्षः प्रजायते ॥ ८ ॥
अष्टपत्राम्बुजे मध्ये नाम ह्रीं दिग्दलेषु च ।
क्रोमन्यतो लिखित्वा तु यन्त्रं देवकुले धृते ।
व्याधिना मुच्यते प्राणी बलं चाप्नोति दुर्बलः ॥ ९ ॥
चतुरस्त्रे शिरोहीनहु(ह)ङ्कारोदरसंस्थितम् ।
नाम तद्बाह्यतो लेख्यं (भूयो) भूपुरं कोणशक्तिगम् ॥
काकपिच्छस्य लेखन्या लिखित्वेदं शरावके ।
संपूर्याऽधोमुखं भूमौ मूर्च्छिते तस्य चोपरि ॥
विवादे दुष्टचित्तानां विपरीतार्थभाषिणाम् ।
मुखस्तम्भो भवेत् पुंसां सभायां वा जयो ध्रुवम् ॥ १० ॥
लकारपुटितं नाम तस्योर्ध्वाधश्च लद्वयम् ।
चतुरस्त्रद्वयं बाह्ये वृतं सर्वत्र शक्तिभिः ॥
भूर्जे रोचनया लिख्य गुप्तदेशे धृते सति ।
शतयोजनमध्वानं गच्छतो न भयं भवेत् ॥ ११ ॥
अष्टपत्राम्बुजे मध्ये नाम ह्रीं दलसञ्चये ।
बहिर्वृत्तद्वयं भूर्जे लिखेत् कुङ्कुमगोमृदा ॥
अजितानाम विद्येयं संग्रामे विषमेऽध्वनि ।
भूपालादिभये रक्षां कुरुते बाहुसंस्थिता ॥ १२ ॥
प्रणवद्वयमध्यस्थं नाम मध्ये चतुर्दले ।
त्रयः पश्चिमदिक्पत्रे प्रणवाः पूर्वतस्त्रयः ॥
एकैकमुत्तरे दक्षे भूर्जे रोचनया लिखेत् ।
जीवरक्षेयमाख्याता व्याधौ जातेऽतिदुःसहे ॥ १३ ॥
ठं (वं) चतुष्टयमध्यस्थं नाम मध्ये ततो बहिः ।
अष्टपत्रेषु रं लेखं रोचनाचन्द्रकुङ्कुमैः ॥
इयं वैश्वानरी रक्षा बालानां कण्ठसंस्थिता ॥ १४ ॥
वृत्तमध्यस्थितं नाम तद्बहिश्चतुरस्त्रकम् ।
तद्बाह्ये स्युः स्वराः सर्वे तद्बहिर्वृत्तमालिखेत् ॥
तत्र द्वादशपत्राणि कल्पयेदेतदन्तरे ।
वञ्चीवञ्चीति रक्षेयं पञ्चदिव्यनिरोधिनी ॥ १५ ॥
ज्वालावृतत्रिकोणान्तर्नाम ज् झ्रूं पुटितं बहिः ।
वेष्टितं सविसर्गैर्वैस्तद्बहिर्वह्निमण्डलम् ॥
ज्वालाकुलमिदं भूर्जे गोमृदा कुङ्कुमेन च ।
लिखित्वा स्वकरे बद्धं ज्वरं चातुर्थिकं हरेत् ॥ १६ ॥
वृत्तान्तः संस्थितं नाम बहि (वह्नि) रोंह्रींनमोऽक्षरैः ।
वेष्टितं त्वथ तद्बाह्ये कोणे लं वह्निमण्डले ॥
तद्बाह्ये क्ष्मापुरं वीतं चतुःकोणेषु शक्तिभिः ।

एकान्तरं ज्वरं हन्ति रक्षेयं बाहुसंस्थिता ॥ १७ ॥
कर्णिकायां लिखेन्नाम रूं (वलं) बीजानि दलाष्टके ।
रोचनाचन्दनेनेदं द्व्याहिकज्वरनाशनम् ॥ १८ ॥
षट्कोणमध्यतो नाम रूं कोणेषु समालिखेत् ।
भित्तौ खटिकया दृष्टं सततज्वरनाशनम् ॥ १९ ॥
वसमेतिपदं वायुदीर्घान्त्य(क्षाप्त)मनिलं शिरः ।
एतत् स्तम्भनकृन्मन्त्रमैन्द्रस्थाब्जदलार्पितम् ॥ २० ॥
तालेनेन्दौ लिखेद्वस्त्रे वैरिनामेन्दुदर्भितम् ।
सेनामार्गे खनेदेतत् सैन्यस्तम्भनमुत्तमम् ॥ २१ ॥ इति ॥ ८३ ॥

अष्टदल कमल की कर्णिका में काम (क्लीँ) मन्त्र लिखे । तदनन्तर केशर पर स्वरों को लिखे । यह मन्मथ यन्त्र का प्रकार हमने कहा है जो सौभाग्य, लक्ष्मी तथा विजय प्रदान करने वाला है ॥ ८३ ॥

नारायणीय यन्त्रलिखनद्रव्याणि

**काश्मीररोचनालाक्षामृगेभमदचन्दनैः ।**
**विलिखेत् हेमलेखन्या यन्त्राण्येतानि देशिकः ॥ ८४ ॥**

नारायणीययन्त्रलिखनद्रव्याण्याह काश्मीरेति । काश्मीरं कुङ्कुमम् । रोचना गोरोचना । लाक्षा यावकः । अनेनैव सर्वेषां घर्षणम् । मृगमदः कस्तूरी । इभमदो गजमदः । एभिर्मिलितैरेव लेखनम् । यदाहुः—

गजमृगमदकाश्मीरैर्मन्त्रितमः सुरभिरोचनायुक्तैः ।
विलिखेदलक्तकरसालुलितैर्यन्त्राणि सकलकार्यार्थी ॥ इति ।

अन्यत्र द्रव्यविशेषोऽपि उक्तः—

नागेन्द्रमदयुक्ता वै तथा वश्ये च रोचना ।
विषधत्तूरयुक्तेन चिताङ्गारेण सप्नुषा ॥
ताडनोच्चाटनादीनि क्षुद्रकर्माणि साधयेत् ।
विषार्कक्षीरगुञ्जायाः संयोगे मारणं स्मृतम् ॥ इति ।

हेमलेखन्येति शुभकर्मादौ । अन्यकर्मणि तु षट्कर्मोक्ता लेखन्यो द्रष्टव्याः । लिखनं च साक्षादुपात्ताधारस्थलं विना अन्यत्र काञ्चनरजतताम्रपत्रभूर्जादिषु ज्ञेयम् । तत्र कालविशेषोऽपि पूर्वोक्तोऽनुसन्धेयः । अन्यत्राधारविशेषा अप्युक्ताः—

शान्तिके पौष्टिके चैव आयुःकामविधौ तथा ।
सर्पोपशमने चैव जल्पसंस्तम्भने तथा ॥
विभ्रमोत्पादने चैव शिलायान्तु प्रशस्यते ।
खर(ङ्ग) चर्मणि विद्वेषे महदुच्चाटनं ध्वजे ॥
ज्वरसन्तापशोकञ्च शत्रूणां मारणं तथा ।
लिखित्वा साधयेत् सर्वं पीतवस्त्रे तु नान्यथा ॥ इति ।

तथा मुहूर्त्तादि विशेषोऽपि तन्त्रान्तरोक्तो लिख्यते—

सुदिने शुभनक्षत्रे सुदेशे शल्यवर्जिते ॥
सशिष्यस्तत्र आचार्यः शिष्यो वा तदभावतः ।
उदङ्मुखः प्राङ्मुखो वा उपविश्य प्रणम्य च ॥
गुरुं विश्वेश्वरं देवं ततो यन्त्रं समालिखेत् ॥ इति ।

**कामनाविशेषे नक्षत्रविशेषोऽपि तत्रैवोक्तः—**

वश्याकृष्टौ लिखेत् पुष्येऽहिभे विद्वेषणं स्मृतम् ।
आर्द्रायां मारणं प्रोक्तं मघासूच्चाटनं भवेत् ॥ इति ।

**अहिभे अश्लेषायाम् । तत्रैव धारणे स्थानविशेषोऽपि—**

करे कण्ठे शिखायां च यथा सन्निहितं भवेत् । इति ।

**इमानि पूर्वोक्तान्यपि यन्त्राणि यस्मै कस्मै यथाकथंचिन्न देयानि । तदुक्तं हिरण्यगर्भसंहितायां—**

त्वया पुत्र न दातव्यं यन्त्रमेतन्महोदयम् ।
नाऽशिष्याय न पापाय नाऽशान्तायाऽप्रियाय च ॥
शिष्याय मन्त्रनिष्ठाय शुभभक्तियुताय च ।
वसुप्रदाय दातव्यमन्यथा नरकं व्रजेत् ॥ इति ॥ ८४ ॥

अब **यन्त्र लिखने का द्रव्य** कहते हैं—काश्मीर (कुंकुम), रोचना (गोरोचन), लाक्षा (यावक) मृग (कस्तूरी) इभमद (हाथी का मदजल) और रक्त चन्दन से यन्त्र लिखने के द्रव्य है । आचार्यों को इन वस्तुओं से मन्त्र लिखना चाहिए । शुभकर्म में हेममयी लेखनी का प्रयोग करना चाहिए । जहाँ कोई आधार न कहा गया हो वहाँ काञ्चन रजत तथा ताम्रपट्ट एवं भूर्जादि पत्र का व्यवहार करना चाहिए । अशुभ कर्म में रुधिर एवं काकपक्ष की लेखनी का प्रयोग उन उन स्थलों में कहा गया है । इसी प्रकार कामना विशेष में मुहूर्त्तादि का भी वर्णन किया जा चुका है । यह सब तान्त्रिक प्रक्रियायें जिस किसी को नहीं बताना चाहिए । विशेष कर पापी शत्रु तथा अव्यवस्थित चित्त वालों को एवं कुशिष्य को भी न बतावे ॥ ८४ ॥

### दोषस्पृष्टयन्त्रम्

**भूमिस्पृष्टं शवस्पृष्टं दग्धं निर्माल्यसङ्गतम् ।**
**विशीर्णं लङ्घितं मन्त्री यन्त्रं जातु न धारयेत् ॥ ८५ ॥**

**भूमिस्पृष्टमिति साक्षात् ॥ ८५ ॥**

तन्त्र शास्त्र का तत्त्वज्ञपुरुष साक्षात् पृथ्वी पर पड़ा हुआ, शव से स्पृष्ट, जला हुआ या निर्माल्य से मिश्रित, विनष्ट, तथा लाँघा गया यन्त्र कभी धारण न करे ॥ ८५ ॥

### देवीस्तुतिः

**अथानन्दमयीं देवीं शब्दब्रह्मस्वरूपिणीम् ।**
**ईडे सकलसम्पत्यै जगत्कारणमम्बिकाम् ॥ ८६ ॥**

**ईडे स्तौमि ॥ ८६ ॥**

अब मैं आनन्दस्वरूपा, शब्दब्रह्मस्वरूपिणी, समस्त जगत् की कारणभूता, अम्बिका देवी की सर्वविध संपत्ति की प्राप्ति के लिये स्तुति करता हूँ ॥ ८६ ॥

**आद्यामशेषजननीमरविन्दयोने-**
**र्विष्णोः शिवस्य च वपुः प्रतिपादयन्तीम्।**
**सृष्टिस्थितिक्षयकरीं जगतां त्रयाणां**
**स्तुत्वा गिरं विमलयाम्यहमम्बिके त्वाम् ॥ ८७ ॥**

**वपुः प्रतिपादयन्तीमिति । एषां विग्रहत्वे कारणम् । अतएवाग्रिमे विशेषणम् । अहं त्वां स्तुत्वा गिरं विमलयामीति सम्बन्धः ॥ ८७ ॥**

हे आद्ये ! आप समस्त जगत् की जननी हो । आप ब्रह्मा, विष्णु तथा शिव को शरीर धारण कराने में प्रधान कारणभूता हो । आप तीनों जगत् की सृष्टि, स्थिति तथा क्षय करने वाली हो । अतः हे अम्बिके ! मैं आपकी स्तुति कर अपनी वाणी को निर्मल कर रहा हूँ ॥ ८७ ॥

**पृथ्व्या जलेन शिखिना मरुताऽम्बरेण**
**होत्रेन्दुना दिनकरेण च मूर्त्तिभाजः।**
**देवस्य मन्मथरिपोरपि शक्तिमत्ता**
**हेतुस्त्वमेव खलु पर्वतराजपुत्रि ॥ ८८ ॥**
**त्रिस्रोतसः सकललोकसमर्चिताया**
**वैशिष्ट्यकारणमवैमि तदेव मातः।**
**त्वत्पादपङ्कजपरागविचित्रितासु**
**शम्भोर्जटासु सततं परिवर्त्तनं यत् ॥ ८९ ॥**

**पृथ्व्येत्यष्टमूर्त्त्यूपन्यासः । शक्तिमत्तेति । अन्यथाऽसङ्गस्योदासीनत्वात् ॥८८॥**

हे पर्वत राजपुत्रि ! पृथ्वी, जल, अग्नि, वायु, आकाश होता, चन्द्रमा तथा सूर्य रूप से अष्टमूर्त्ति धारण करने वाले, काम के शत्रु भगवान् शिव में शक्ति का सञ्चार करने वाली आप ही हैं । अन्यथा असङ्ग तथा उदासीन शिव कभी अष्ट-मूर्त्ति स्वरूप न होते और न तो काम का विजय करने में ही समर्थ होते ॥ ८८ ॥

हे मातः ! आपके पाद कमल के पराग से विचित्रित सदाशिव की जटा में यतः गङ्गा निरन्तर घूमती रहती है, इसलिये उन त्रिस्रोतस गङ्गा में ऐसी म।हेमा आ गई है कि वे त्रिलोकी से अर्चित हो रही हैं ॥ ८९ ॥

**आनन्दयेत् कुमुदिनीमधिपः कलानां**
**नाऽन्यामिनः कमलिनीमथ नेतरां वा।**

एकस्य मोदनविधौ परमेक इष्टे
त्वन्तु प्रपञ्चमभिनन्दयसि स्वदृष्ट्या ॥ ९० ॥

**नान्यां कमलिनीम् । नेतरां कुमुदिनीम् ॥ ९० ॥**

चन्द्रमा कुमुदिनी को आनन्दित करता है कमलिनी को नहीं और सूर्य कमलिनी को आनन्दित करता है कुमुदिनी को नहीं। इससे ज्ञात होता है कि एक ही को एक प्रसन्न करने में समर्थ हो सकता है अन्य को नहीं। किंतु हे मातः ! आप तो इस सारे प्रपञ्च को अपनी दृष्टिमात्र से ही आनन्दित करती हैं ॥ ९० ॥

आद्याऽप्यशेषजगतां नवयौवनाऽसि
शैलाधिराजतनयाऽप्यतिकोमलाऽसि ।
त्रयाः प्रसूरपि तया न समीक्षिताऽसि
ध्येयाऽसि गौरि मनसो न पथि स्थिताऽसि ॥ ९१ ॥

**आद्येत्यादि विरोधाभासचतुष्टयम् । न समीक्षिता इयत्तया न ज्ञातेति परिहारः। मनसो न पथि स्थितेति । अचिन्त्यरूपेति परिहारः ॥ ९१ ॥**

हे मातः ! आप इस जगत् में सबको उत्पन्न करके भी नव यौवन से परिपूर्ण हो। पर्वतराज की पुत्री होकर भी सौकुमार्य से युक्त हो, तीनों वेदों को उत्पन्न कर भी आप उसके द्वारा इयत्ता के रूप से ज्ञात नहीं होती। हे गौरि ! आप ध्यान के योग्य हो कर भी मन के रास्ते से सर्वथा परे हैं ॥ ९१ ॥

आसाद्य जन्म मनुजेषु चिराद् दुरापं
तत्रापि पाटवमवाप्य निजेन्द्रियाणाम् ।
नाऽभ्यर्चयन्ति जगतां जनयित्रि ये त्वां
निःश्रेणिकाग्रमधिरुह्य पुनः पतन्ति ॥ ९२ ॥

**मनुजेष्विति । मनुष्याधिकारत्वाच्छास्त्रस्य ॥ ९२ ॥**

हे मातः ! जगत् में सब से दुर्लभ मनुष्य रूप में जन्म पाकर किं बहुना इन्द्रियों को सभी प्रकार की शक्ति की पटुता उपलब्ध कर भी जो अभागे सारे जगत् की जनयित्री आपकी अर्चना नहीं करते, वे मानो मुक्ति की सीढ़ी पर चढ़ कर भी फिसल कर गिर रहे हैं ॥ ९२ ॥

कर्पूरचूर्णहिमवारिविलोलितेन
ये चन्दनेन कुसुमैश्च सुजातगन्धैः।
आराधयन्ति हि भवानि समुत्सुकास्त्वां
ते खल्वशेषभुवनाधिभुवः प्रथन्ते ॥ ९३ ॥

**आधिभुवो नायकाः । 'आधिभूर्नायको नेता' इति कोशः ॥ ९३ ॥**

